श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ हरिः ॐ ॥ पूर्णानंदमहाविबोधमखिलंसंभासयंतंरु चासर्वत्रप्रभुमीश्वरंगुणनिधिंदिव्याकृतिंकेशवं ॥ जन्माद्यस्ययतोहिसर्वजगतोजन्मादिदोषोज्झितंनित्यंपूर्णविबोधशर्वगुरुणोपा स्यंभजेनित्यदा ॥ १ ॥ वेदभेदसुशाखेतंबोधादिफलसंयुतं ॥ भजतामिष्टदंव्याससुरद्रुममहंभजे ॥ २ ॥ हृत्तमोनाशकंशास्त्रप्र भयातत्वभासकं ॥ फलदंपूर्णबोधाख्यचिंतामणिमहंभजे ॥ ३ ॥ प्रणम्यचरणौवाणियाचयामितवान्वहं ॥ सन्निधिर्ममवाच्य स्तुमानसेचनिरंतरं ॥ ४ ॥ यत्प्रसादंविनातत्वमार्गेनगमनंभुवि ॥ तंवंदेपद्मनाभाख्यगुरुंसज्जनसेवितं ॥ ५ ॥ वेददुग्धाब्धिमा मथ्यसूत्रमंदरभूभृता ॥ प्राप्तान्यायसुधायेनतंजयेंद्रमहंभजे ॥ ६ ॥ श्रीमध्वकृतवेदांतभाष्यंयेनप्रकाशितं ॥ तंवंदेव्यासतीर्था र्यंजयराजनिषेवकं ॥ ७ ॥ विद्याधिराजादिमहामुनींद्राहृद्येवसंचिंतितविष्णुतत्वाः ॥ उद्योगयुक्ताभगवत्कथायांसद्योममानुग्रह मेवकुर्युः ॥ ८ ॥ ब्रह्मण्यतीर्थवार्द्ध्युत्थंव्यासतीर्थसुधाकरं ॥ तात्पर्यचंद्रिकायुक्तंवंदेतापत्रयापहं ॥ ९ ॥ रघूत्तममुनीन्विद्यागु रून्परगुरूंस्तथा ॥ वंदेश्रीमध्वशास्त्रोत्थविनिर्मलमतीनहं ॥ १० ॥ निरस्तंहृत्तमोयेनप्रशस्तंसन्मनोंबुजं ॥ समस्तंभासितंवंदेवेद व्यासदिवाकरं ॥ ११ ॥ अथतत्कृपयाश्रीमदाचार्यमुखनिःसृतं ॥ छांदोग्योपनिषद्भाष्यंव्याकरिष्येयथामति ॥ १२ ॥ नमात्स र्यादिदोषेणनवाविद्यातिगर्वतः ॥ किंतुवाचांविशुद्ध्यर्थंयत्नोयंनहिदोषभाक् ॥ १३ ॥ इहहिनानाविधसांसारिकक्लेशसंदर्शनेन कुपितफणिफणच्छायासमीकृतापरसुखानांशमदमादिमतामधिकारिणामात्यंतिकानिष्टनिवृत्तीष्टप्राप्तिसाधनंभगवत्स्वरूपंयथाव ज्ज्ञापयितुंप्रवृत्तापिछांदोग्योपनिषदविद्यापटलपिहितनयनैरन्यैरन्यथाव्याख्यातत्वेननतज्ज्ञापनसमर्थेतिमन्यमानोभगवानानंद

तीर्थमुनिस्तांयथावद्व्याचिख्यासुःस्वयमंतरायविधुरोप्यविगीतशिष्टाचारपरंपराप्राप्तंप्रारिप्सितपरिसमाप्त्यादिप्रयोजनमेतदुपनिष
दुक्तगुणवद्भगवदुपास्तिलक्षणंमंगलंशिष्यशिक्षार्थंग्रंथादौनिबध्नाति ॥ अत्युद्रिक्तेति ॥ हरिमुपास्महइतिक्रियाकारकयोजना।
श्रुतावोमित्येतदक्षरमुद्गीथमुपासीतेतिप्रथमतोभगवदुपास्तिविधानादुपास्तिरूपंमंगलमादावनुष्ठितं । अतएवानेनश्लोकेनतद्वा
क्यंव्याख्यायते ॥ तथाहि । तत्रगुणपूर्णत्वार्थकोंकारार्थोत्युद्रिक्तेत्यादिप्रथमविशेषणेनविव्रियते । तत्रात्युद्रिक्तविदोषसत्त्वंसुख
विशेषणं। सुखस्यसत्त्वंनामसाधुभावः । सद्भावेसाधुभावेचेतिवचनात् । तत्रहेतुरत्युद्रिक्तविदोषेति । साधुभावःशोभनत्वमिति
नसाध्याविशिष्टता । यद्वासत्त्वमुत्तमत्वं । सच्छब्दउत्तमंब्रूयादित्युक्तेः । तत्रचपूर्वोक्तंहेतुद्वयं । अत्युद्रिक्तत्वंचातिपूर्णत्वं । नो
त्तमत्वमतोनसाध्याविशिष्टता । एवंचविदोषसच्छब्दयोर्भिन्नार्थत्वेननपौनरुक्त्यं । यद्वा सदितिसुखस्यनित्यत्वमुच्यते । तद्य
त्सत्तदमृतमितिश्रुतेः । विदोषपदेनानित्यत्वातिरिक्तादोषाव्यावर्त्यंते । एवंचकुरुपांडवन्यायेननपुनरुक्तिः । विदोषसत् विदो
षभूतमिति सुखविशेषणंवा । अत्युद्रिक्तविदोषेति सत्सुखमहाज्ञानयोरेकतानप्रभायावाविशेषणमित्यप्याहुः। सुखस्यविदोषत्वमु
त्पत्त्यादिरहितत्वं । सत्त्वं(स)तत्स्वरूपत्वमित्यन्ये। ज्ञानस्यमहत्त्वंस्वपरगताखिलविशेषविषयत्वं। एकतानानन्यवृत्तिश्चसाप्रभाचे
तितथोक्तं । सर्वेतिप्राभवशक्तिभोगबलानांविशेषणं । सर्वस्मिन्विषयेप्राभवशक्तिभोगबलानीतितथोक्तानि । अत्रशक्तिशब्देन

---

भा० । अत्युद्रिक्तविदोषसत्सुखमहाज्ञानैकतानप्रभासर्वप्राभवशक्तिभोगबलसत्सारात्मदिव्याकृतिं । सृष्टिस्थाननिरोधनित्यनियतिज्ञानप्रकाशावृतिध्वांतामोक्षविमोक्षदंह
रिमजंनित्यंसदोपास्महे ।

क्रियाशक्तिरिच्छाशक्तिश्चग्राह्या । स्वाभाविकीज्ञानबलक्रियाचेतिश्रुतौइच्छाशक्तिर्ज्ञानशक्तिःक्रियाशक्तिरितित्रिधेतिस्मृतौच त्रयाणामपिशक्तित्वोक्तेरत्रचज्ञानबलयोःपृथग्ग्रहणात् । अत्युद्रिक्तविदोषसत्सुखंचमहाज्ञानंचैकतानप्रभाचसर्वप्राभवशक्तिभोग बलानिचेतिद्वंद्वः । तैःसन्ध्योब्रह्मादिभ्यःसाराश्रेष्ठेतिविग्रहः । अथवासुखादीन्येवसतीनिर्दुष्टासाराश्रेष्ठाआत्मास्वरूपभूतादि व्याआकृतिर्यस्येतिविग्रहः । प्रणवांशाकारोकारमकारार्थोवानेनविविच्यते । तथाहि । तत्रसुखमकारार्थः । आनंदत्वादइत्युक्त इतिस्मृतेः । ज्ञानंमकारार्थः । माङ्मानइतिधातोः । प्रभापिमकारार्थः । धातूनामनेकार्थत्वात् । सर्वप्राभवशक्तिभोगाउशब्दा र्थाः । उत्कृष्टत्वादुनामकइत्युक्तेः । बलंचमकारार्थः । मानंज्ञानंलयश्चैवमर्यादाचेतिकथ्यते । उत्पादनंचसंख्यानंबलंचक्वचिदु च्यतइत्युक्तेः । प्रणवोपास्यस्यसूर्यस्थेदेहस्थेवावायौविद्यमानस्यभगवतोयएषोंतरादित्येहिरण्मयःपुरुषोदृश्यतेहिरण्यश्मश्रुर्हिर ण्यकेशआप्रणखात्सर्वएवसुवर्णः । इतितस्यैतस्यैतदेवरूपंयदमुष्यरूपमितिचाप्राकृतविग्रहत्वोक्तेःसत्सारात्मदिव्याकृतिमित्युक्तं। एतेनहरेर्देहित्वेदुःखित्वापत्तिरदेहत्वेसृष्ट्यादिकर्तृत्वानुपपत्तिरित्यपिपरास्तं । प्राकृतदेहस्यैवदुःखादिहेतुत्वेनहरेस्तदभावेनतद भावात् । एवंप्रथमार्धेनप्रणवार्थमुक्त्वोद्गीथशब्दार्थमाह ॥ **सृष्टीत्यादिना** ॥ अत्रसृष्टिप्रदत्वमुदित्यस्यार्थः । तथाहिवक्ष्यति । प्राणएवोत् प्राणेनह्युत्तिष्ठतीति । स्थानप्रदत्वंथशब्दार्थः । अन्नंथमन्नेहीदंसर्वंस्थितमितिश्रुतेः । निरोधदत्वंगीत्यस्यार्थः । गृनिगरणइतिधातोः । नित्यंनियतिर्नित्यंनियमनं । स्यादनित्यपदार्थस्यनियमनंभगवता तस्यस्वरूपलाभादौपरापेक्षत्वात् । नतु नित्यस्य। तस्यपरानपेक्षत्वादित्याशंकापरिहारायनित्यानामपिनियतिर्नित्यनियतिरितिवा । नित्यंनित्यात्मनायतइत्यादिश्रुतेरिति

भावः । उन्नयतीतिव्युत्पत्त्याऽयमप्युच्छब्दार्थः । उद्गमयत्युद्भासयतीतिव्युत्पत्त्याज्ञानप्रकाशदत्वमपि । आवृतिरज्ञानं । ध्वांतंबा
ह्यतमः । अमोक्षःसंसारः । एतत्रितयप्रदत्वंथशब्दार्थः । ष्ठागतिनिवृत्ताविति धातुः । अज्ञानसंसारदानेचमोक्षगतिनि
वृत्तेः । ध्वांतदानेचप्रसिद्धगतिनिरोधात् । उद्गमयतिसंसारादितिव्युत्पत्त्याविमोक्षदत्वमप्युच्छब्दार्थः । सर्वसृष्ट्यादिप्रदत्वो
त्त्यासर्वसन्निहितत्वलाभादेतच्छाब्दार्थोप्यनेनोक्तः । अजमित्युपलक्षणयोत्पत्तिप्रभृतिदोषशून्यत्वमुक्तं । अयमप्युच्छब्दार्थः ।
त( स्यवाएत )स्योदितिनामसएषसर्वेभ्यःपाप्मभ्यउदितइतिश्रुतेः । नित्यमित्यक्षरशब्दार्थकथनं । सदोपास्महइत्यनेन नम
मनारायणोपासनंप्रत्यूहविरहादिप्रयोजनोद्देशेनेतिसूचयति । श्रुतावुपासीतेतिविधिश्रवणेप्युपास्महइत्युत्तमपुरुषंप्रयुंजानःस्वोपा
सनस्यस्वेच्छानियतत्वंसूचयति।भविष्यद्ब्रह्मणःस्वस्यमनुष्यवत्‌विधिनियतत्वाभावात् । तथाहिश्रुतिः । विधिनियतामनुष्याः अनि
यतादेवाः ब्रह्मैवस्वेच्छानियतइति ॥१॥ योहवाअविदितार्षछंदोदैवतब्राह्मणेनमंत्रेणयजतियाजयतिवाध्यापयतिवास्थाणुंवर्च्छति
गर्तेवापद्यतेप्रवामीयतइतिश्रुतेर्दैवतादिज्ञानएवविद्याफलतीतिज्ञायते । तत्रब्राह्मणपदोपलक्षितार्थज्ञानंव्याख्यानादेवभविष्यति
॥ प्रायश्छंदोबद्धत्वंनास्त्येव ॥ क्वचित्तदुपनिबद्धत्वेत्वक्षरपरिगणनेनतज्ज्ञानंसुकरमेव । अतःऋषिदेवतेज्ञापयन्नाहभगवान्भाष्य
कारः ॥ हयग्रीवेति ॥ विस्तृतायाअप्यस्याउपनिषदोभगवत्परत्वंनानुपपन्नमितिभावेनविस्तृतगुणमित्युक्तं । एतदुपनिषत्प्रति
पाद्यमूर्तिविशेषमाह ॥ भोगीति ॥ अनेनास्याहयग्रीवोमुख्यऋषिः । रमात्ववांतरऋषिः । शेषशायीदेवतेत्युक्तंभवति । एतेना

भा० । हयग्रीवमुखोद्गीर्णगीर्भिर्देवीरमापतिं । अस्तुवद्विस्तृतगुणंभोगिप्रस्तरशायिनं ।



द्वैतज्ञानंसंसारहेतूपमर्देनवक्तव्यमित्युपनिषदारभ्यतइति परोक्तमसदित्युक्तंभवति । यथाचैतत्तथाग्रेवक्ष्यते । देवसवितःप्रसु
व । यज्ञंप्रसुव । यज्ञपतिंभगायेत्यादिपूर्वाध्यायद्वयेंतःकरणशुद्धिद्वाराब्रह्मविद्याधिकारार्थंकर्मस्वरूपंनिरूपितं । इदानींकर्मणाशु
द्धांतःकरणस्यसुविरक्तस्यब्रह्मस्वरूपंनिरूपयति ॥ओमित्येतदक्षरमित्यादिकयासमग्रोपनिषदा ॥ ननुतदप्यध्यायद्वयंकु
तोनव्याख्यातमितिचेत् । न । तस्यकर्मकांडत्वेनाब्रह्मविद्यात्वात् । परैरव्याख्यातत्वेनविप्रतिपत्त्यभावाच्च । तत्रोद्गीथलक्षणसा
मैकदेशप्रतिपाद्यस्यसर्ववेदार्थप्रणवप्रतिपाद्यस्यचभगवतउपास्तिमादावाह ॥ ओमित्येतदक्षरमित्यादिना ॥ तत्रेदंवाक्यंपरे
णैवंव्याख्यातं । ओमित्येतदक्षरंवर्णात्मकमुद्गीथभक्त्यवयवत्वादुद्गीथशब्दवाच्यमुपासीतेति । तदसत् ॥ प्रणवस्यजडत्वेनतदु
पासनवैयर्थ्यस्यवक्ष्यमाणत्वात् । नचपरमात्मप्रतीकत्वेनतदुपासनंविधीयतइतिवाच्यं । परमात्मप्रधानकेवेदांतेआदौतदुपास्ति
मनभिधायतत्प्रतीकोपास्तिविधानायोगात् । नचैतान्युपासनानिसत्त्वशुद्धिकरत्वेनवस्तुतत्वावभासकत्वादद्वैतज्ञानोपकारका
णीतिपूर्वमुपन्यस्यतइतिवाच्यं । तथासतिकर्मकलापस्यापिसत्त्वशुद्धिसंपादकत्वेनतत्परपूर्वाध्यायद्वयस्यापिव्याख्येयत्वापाता
त् । नचतत्रसाक्षादद्वैताप्रतिपादनात्तदव्याख्यातमितिवाच्यं । तर्ह्येतस्यापित्वन्मतेसाक्षादद्वैताप्रतिपादकत्वेनाव्याख्येयत्वा
पातादितिभावेनतद्वाक्यंभगवत्परतयैवव्याचष्टे ॥ ओमितिनामकमिति ॥ अक्षरशब्दव्याख्यानंकरिष्यति । सन्निकृ
ष्टतरवस्तुवाचकोह्येतच्छब्दः । अतोभगवान्सर्वसन्निहितत्वादेतदित्युच्यतइत्यर्थः । उक्तंचान्यत्र । एतत्सन्निहितत्वाच्चेति ।

भा० । ओमितिनामकमक्षरं । सर्वसन्निहितत्वादेतत् । उच्चत्वाद्गीतत्वात्सर्वस्थानत्वाच्चोद्गीथंभगवंतमुपासीत ।

उच्चत्वादित्युच्छब्दार्थः । गीतत्वादितिगीत्यस्यार्थः । सर्वस्थानत्वादितिथशब्दार्थः । भगवंतमितिविशेष्याध्याहारः । ननुहय ग्रीवमुखोद्गीर्णगीर्भिरित्यनेनास्याउपनिषदोहयग्रीवादिर्नऋष्यादित्वेनज्ञातुंशक्यते । हयग्रीवमुखोद्गीर्णगिरांबह्वीनांसत्त्वादियमे वसेत्यनिश्चयादित्यतस्तत्रप्रमाणमाह ॥उक्तंचेति॥ नकेवलमस्माभिरेवोक्तंकिंतुमहासंहितायांचेतिचशब्दार्थः। किंतत्रोक्तमित्यत स्तद्वचनंपठति ॥ हयग्रीवेति ॥ ओमित्येतदक्षरमिदंसर्वंतस्योपव्याख्यानमित्याद्युपनिषदंतरव्यावृत्त्यर्थंसामवेदगैरित्युक्तं । अग्नआयाहिवीतयइत्यादिसामवेदसंहितायांमहन्मेवोचोभर्गोमेवोचइत्यादिब्राह्मणस्यारण्यकेपिदेवसवितःप्रसुवेत्यादिपूर्वाध्याय द्वयस्यचव्यावृत्त्यर्थमोमित्येतन्मुखैरित्युक्तं । अतएवैतदारभ्यैवव्याख्यानंक्रियते । अत्रोंनामकस्यभगवतएवोपास्यत्वमुच्यतइति व्याख्येयं नत्वोंकारस्य । तथासतिप्रमाणविरोधादितिभावेनप्रमाणमाह ॥ ॐनामानमिति ॥ अश्वकर्णादिनामकत्वमिवनसं ज्ञामात्रेणेत्याह ॥ तदर्थेति ॥अतएवश्रुतौतस्योपव्याख्यानमित्यादिनोंकारोव्याख्यायते। केतेॐनामार्थभूतागुणायैर्युक्ततयाभ वानुपास्यइत्यतआह ॥ ओतत्वादिति ॥ ओतत्वात् गतत्वात् प्रविष्टत्वाद्वा गुणपूर्णत्वादितियावत् । गत्याद्यर्थस्यावतेःखलु रूपमेतत् । अवतेष्टिलोपश्चेतिसूत्रात् । अवतेर्मन्प्रत्ययःप्रत्ययस्यटिलोपश्चेतिसूत्रार्थः ॥ ओमितिपुनःकस्यवक्तेतिप्रश्नपूर्व कमवतिर्नामायंधातुर्गतिकर्माप्रवेशनकर्माचेत्यन्यत्राप्येवमेवनिरुक्तत्वाच्च । तथाचयद्यसौकर्मणितदाकर्तु र्यदिवाकर्तरितदाकर्म

भा० । उक्तंचमहासंहितायां । हयग्रीवोद्गीतवाक्यैरमादेवीरमापतिं । ओमित्येतन्मुखैर्देवमस्तुवत्सामवेदगैरिति । ओंनामानमुपासीततदर्थंगुणपूर्वकं । ओतत्वाद्वनान्मा नादधिकोच्चत्वकारणात् । आनंदादोजसश्चैवभरणादोमुदाहृतइतिसमन्वये ।

णोपेक्षायामुपपदाद्यभावेपियोग्यतयाश्रुत्यंतरबलाद्वागुणैर्गुणान्वाओतत्वंवक्तीत्यनंतानवद्यगुणपूर्णतैवॐकारार्थइतिभावः ॥ अवनाज्ज्ञानात्रक्षणाद्वेतिव्याख्यानांतरं । अवतेर्गत्यर्थत्वेनज्ञानार्थत्वात् । रक्षणार्थत्वाच्च । मानादधिकोच्चत्वकारणादित्येकंव्याख्यानं । गुणसंख्यानादधिकोच्चत्वहेतोरित्यर्थः । तत्राकारार्थोऽधिकेति । उकारार्थउच्चेति । मकारार्थोमानादिति । आकांक्षाक्रमेणव्याख्याख्यानायक्रमोल्लंघनं । यद्वा । अवनाद्रक्षणादितिओइत्यस्यार्थः । अवतेःक्विपिउपधावकारयोरूकारः । मकारार्थोमानादिति । ज्ञानादित्यर्थः । अवनान्मानादित्येकंव्याख्यानमितिश्रुतेरर्थइत्याहुः । अधिकोच्चत्वकारणादित्यपरं । अधिकोच्चत्वकारणादित्यकारोकारयोरर्थः । यद्वा । अधिकेत्यकारस्यउच्चत्वेत्युकारस्यकारणेतिमकारस्यार्थउक्तः । मानिर्माणइतिधातोः । मानंज्ञानमित्यन्यत्रोत्पादनस्यापिमानशब्दार्थत्वोक्तेश्च । प्रणवावयवाकारादेःप्रकारांतरेणार्थमाह ॥ आनंदादिति ॥ आनंदादित्यकारस्यार्थः । आनंदत्वादइयुक्तइतिवचनात् । ओजसइत्युकारार्थः । भरणादितिमकारार्थः । धातूनामनेकार्थत्वात् । चशब्दोव्याख्यानांतरसमुच्चयार्थः । एवशब्देनाकारवाच्येनतत्पदार्थेनोकारवाच्यस्यत्वंपदार्थस्याभेदोमकारेणोच्यतइतिपरव्याख्यानंव्यावर्तयति । अप्रामाणिकत्वात्प्रमाणविरुद्धत्वाच्च । ॐकारस्यार्थांतराभिधानायस्वकृतसमग्रवाक्यव्याख्यानदार्ढ्यायचस्पष्टंप्रमाणमाह ॥ ओतमिति ॥ ओतं प्रविष्टं । समस्तोंकारार्थकथनमेतत् । व्यस्तस्यतस्यार्थमाह ॥ अत्युच्चश्चेति ॥ आधिक्यार्थकाकारस्यार्थोऽतीति । उकारस्यार्थउच्चइति । गुणसंख्यानार्थकमकारार्थोऽखिलैर्गुणैरिति । ननु

भा० । ओतमस्मिञ्जगत्सर्वमत्युच्चश्चाखिलैर्गुणैः । इत्योमितिसदोपास्यःसोक्षरः(यः)पुरुषोत्तमः ।

ओमितिनामकंभगवंतमुपासीतेतिव्याख्यानमयुक्तं । तथासत्योमितिह्युद्गायतीत्युत्तरवाक्यासंगतेः । तत्रोमित्यारभ्यहियस्मादु द्गायतितस्मादुद्गीथओंकारइत्योंकारस्योद्गीथशब्दवाच्यत्वेहेतुरुच्यते । तच्चमत्पक्षएवसंगतं नत्वत्पक्षइतिचेत् । न । भगवतॐ नामकत्वसमर्थनार्थत्वेनास्मत्पक्षेपिसंगतत्वादितिभावेनतद्वाक्यंव्याचष्टे ॥ **ओमित्येनमिति** ॥ हियस्मादेनमुद्दिश्योद्गातास्फु टमोमित्युच्चार्यसंगायति । तस्मादोंनामकत्वंभगवतःसिद्धं । अन्यथा तद्वाचकशब्दस्यैवोच्चार्यत्वेनातथाभूतोंकारोच्चारणस्या संगतत्वादितिभावः । तस्योपव्याख्यानमित्येतद्व्याचष्टे ॥ **विष्णोरिति** ॥ अस्यविष्णोर्यदोमितिनामतस्यव्याख्यानमधिकोच्च तेत्यर्थः । तेनतस्याक्षरस्योद्गीथस्यविष्णोरुपसमीपेवर्तमानंयदोमितिनामतस्यव्याख्यानंक्रियतइत्यर्थउक्तोभवति । कथमयमों कारार्थइत्यतआह ॥ **अकारेणेति** ॥ कस्तर्हिमकारार्थइत्यतआह ॥ **तथेति** ॥ अधिकोच्चत्वेनेत्यर्थः । नेदंशब्दार्थांतर्गतं । स तिचैवंत्र्यक्षरात्मकोंकारस्यकोर्थःसंपन्नइत्यतआह ॥ **अधिकेति** ॥ १ ॥ यद्यधिकोच्चत्वेनप्रमितत्वमोंकारार्थतयाविवक्षितं तर्ह्युत्तरत्रतदेववक्तव्यं । नचतदुच्यते । सएषरसानांरसतमइत्यादावधिकोच्चत्ववचनेप्यधिकोच्चत्वेनप्रमितत्वस्यावचनात् । नचों करावयवार्थभूतमधिकोच्चत्वमेवश्रुत्योच्यते । अतएवव्याख्यानमधिकोच्चतेत्येवोक्तमितिवाच्यं । तथाप्येषांभूतानांपृथिवीरस इत्यादिनादेवतातारतम्योक्तेरसंगतत्वादित्यतस्तस्यसंगतिमाह ॥ **तदेतदिति** ॥ ॐकारावयवार्थभूतमित्यर्थः ॥ अधिकोच्चत्व



भा० । ओमित्येनंसमुद्दिश्यह्युद्गातागायतिस्फुटं । विष्णोरोमितिनाम्नोस्यव्याख्यानमधिकोच्चता । अकारेणाधिकंप्रोक्तमुकारेणोच्चमुच्यते । तथामितंसर्ववेदैर्मकारे णाभिधीयते । अधिकोच्चमितिज्ञातमोमित्यस्यार्थईरितः ॥ १ ॥ तदेतत्परमत्वंतुयथाक्रममुदीर्यते ।

मितिवक्तव्ये सएषरसानांरसतमःपरमःपराध्यइतिश्रुतौपरमत्वस्याभिधाना त्परमत्वमित्युक्तं । यथाक्रमं देवतातारम्यक्रमनुसृत्ये त्यर्थः । उदीर्यते एषांभूतानामित्यादिनेतिशेषः । नन्वोंकारार्थभूतंविष्णोःपरमत्वमेवश्रुत्यावक्तव्यं । देवतातारतम्यंकिमर्थ मुच्यते तज्ज्ञानस्यव्यर्थत्वादित्यतआह ॥ **देवतेति** ॥ यथाक्रमपराः यथाक्रमज्ञानेतात्पर्यवंतः । ननुविष्णोःपरमताविदएवै कांतिनइत्यस्तु । किंदेवतानुक्रमज्ञानामप्येकांतित्वकथनेन । तथाचश्रुतौतदुक्तिर्व्यर्थैवेत्यतएकांतिशब्दंनिर्वक्ति ॥ **अस्मा दिति** ॥ एकएवांतेवर्त्ततइत्येकांतोहरिः । एकांतएषामस्तीत्येकांतिनः । षष्ठ्यर्थस्तुतज्ज्ञानविषयत्वमितिभावेनयेविद्युरित्युक्तं । अस्त्वेवंदेवतानुक्रमज्ञत्वमप्येकांतिशब्दार्थः । तेनैकांतित्वेनापिकिंफलं । येनतदर्थमिदंज्ञातव्यंस्यादित्यतआह ॥ **एवमिति** ॥ एकांतिशब्दार्थानुवादोयं । एकएवांतेऽवसितइत्येकांतोभगवान्परमयनमाश्रयोयेषांतेतथोक्ताः । यद्यपिदेतातारतम्यज्ञान पुरःसरंभगवत्सर्वोत्तमत्वज्ञानस्यभगवत्प्रवेशाख्यमोक्षहेतुत्वात्तदेतत्परमत्वंयथाक्रममुदीर्यतइत्येववक्तव्यं । तथाप्येकांतित्वस्यै वान्यत्रमोक्षसाधनत्वेनोक्तत्वात्कथमेतदित्यतस्तद्विरोधपरिहारायैतदेवैकांतित्वमित्युक्तमितिमंतव्यं । नकेवलंदेवतातारतम्यज्ञान पूर्वंभगवत्सर्वोत्तमत्वज्ञानमेवमोक्षहेतुरपितुतथाज्ञात्वातत्पूजाचेतिभावेनाह ॥ **उच्चेति** ॥ अंतगत्वेनज्ञात्वेत्यपिसंबंधः । कुर्युरित्य

भा० । देवतानुक्रमज्ञाश्चविष्णोःपरमताविदः । एकांतिनस्तेविज्ञेयायथाक्रमपरास्तथा । अस्मादसावुच्चइतिक्रमस्यांतगतंहरिं । एकमेवतुयेविद्युस्तेह्येकांतिनईरिताः । एवं यथाक्रमज्ञाश्चसदैकांतपरायणाः । प्रविशंतिपरंदेवंनारायणमनामयं । उच्चक्रमांतगत्वेनकुर्युःपूजांहरेस्सदा । लक्ष्म्यादेःक्रमशःपूजांज्ञात्वाभागवताइति ।

स्योत्तरत्रापिसंबंधः । तर्हिपूजयेन्नान्यदेवताइत्यादेःकागतिरित्यतउक्तं ॥ **भागवताइतिज्ञात्वेति** ॥ एवंसतिनिषेधविषयः कइत्यतआह ॥ **स्वतंत्रेति** ॥ ननुदेवतानामप्रधानतयापिपूज्यत्वेकथं विप्रक्षत्रियविट्शूद्रवर्णभेदेनसर्वशः । मनवोमानवाश्चैवसंपूज्यानैवदेवताइत्येवंरूपंक्वचिद्वचनमित्यतस्तद्घटयन्नाह ॥ **ब्रह्माद्याइति** ॥ वर्णत्वेनविप्रादिवर्णभेदेनेत्यर्थः । येश्रुतौ वर्णत्वेनोदितामनुसंज्ञास्तेब्रह्माद्याएवेत्यन्वयः । चशब्दोऽवधारणे। मुनयोमरीच्याद्याः । उक्तंच मनवोबोधवैशेष्याद्देवाब्रह्मादयःस्मृताः । विप्रादिवर्णभेदेनचत्वारोबहवोपिते। मरीच्याद्यास्तुतत्पुत्रामानवानामतःस्मृताइति। तेषामपिनदेवत्वेनपूज्यत्वं । किंतु प्रकारांतरेणैवेत्यभिप्रेत्याह ॥ **पितृत्वेनेति** ॥ इदंतुकार्तयुगजनप्रवृत्तिमभिप्रेत्य । यथोक्तमन्यत्र । देवतात्वेनचेज्यःसब्रह्माद्यामनुनामकाः । वक्तृत्वेनपितृत्वेनकारित्वेनैवचादरात् । इज्यंतेदेवताःसर्वानतुदेवतयाक्वचित् । अनन्ययाजिनस्तेतुतस्मात्कार्तयुगाजनाइति ॥ तर्हिसंपूज्यानैवदेवताइत्युक्तेःकागतिरित्यतो नचेतरानित्युक्तंविवृणोति ॥ **अपभ्रष्टाइति** ॥ ब्रह्माद्याख्यायुताअपीत्यनेनब्रह्माद्यानसंपूज्याइत्युक्तेरपिगतिरुक्ता । एतेनदेवाइतिब्रह्माद्याइतिवाप्रसिद्धप्रयोगंविहायकिमप्रसिद्धप्रयोगेणेत्यपिपरास्तं । देवादिशब्दानामसुरादिसाधारणत्वान्मनुशब्दस्यैवदेवेष्वसाधारणत्वात्तस्यैवप्रयोगइतिभावः । द्विविधदेवानांकुत्रविनियोगइत्यतआह ॥ **यदिति** ॥ ननुदेवानामसुराणांचब्रह्मादिनामित्वेब्रह्मादिभ्यःस्वाहेत्युक्तावसुराणामपिप्राप्तेःकथंकर्मप्रवृ

भा० । स्वतंत्रपूज्यताबुद्ध्यानदद्युःकिंचकस्यचित् । ब्रह्माद्यामनुसंज्ञायेवर्णत्वेनोदिताःश्रुतौ । मानवाख्याश्चमुनयस्तान्यजंतिनचेतरान् । पितृत्वेनगुरुत्वेनसाक्षाद्भागवतत्वतः । अपभ्रष्टाअदेवाश्चब्रह्माद्याख्यायुताअपि । देवसंज्ञाश्चदीनत्वात्पूजयेयुर्नतान्क्वचित् । यद्भागवतबुद्ध्यैवदत्तंब्रह्मादयस्सुराः । वैदिकाःप्रतिगृह्णीयुरपभ्रष्टास्तथेतरत् ।

त्तिनिर्णयइत्यतोवाह ॥ यदिति ॥ यदितिश्रवणात्तदितिलभ्यते । यदुक्तंदेवतातारतम्यज्ञानंभगवत्परायणत्वलक्षणमेकांतित्वं चमोक्षसाधनमिति तदयुक्तं । कदाचित्तदुभयसद्भावेपिमोक्षानुपलंभादित्यतआह ॥ यथाक्रमेति ॥ अच्छिद्रत्वाच्च अच्छिद्रादेव । अन्यत् कादाचित्कंदेवतातारतम्यज्ञानमेकांतिकत्वंच । विडंबनमेव नमोक्षसाधनमित्यर्थः । एवमेकंमोक्षसाधनमुक्त्वा द्वितीयमपितदाह ॥ विष्णोरिति ॥ विशेषेण सर्वोत्तमत्वेन । विशेषेणकारणमित्यपिसंबंधः । तेनज्ञानस्यभक्तिव्यापकत्वं सिध्यति । नकेवलंविष्णावेवभक्तिर्मोक्षकारणं । किंत्वित्यतआह ॥ तद्भक्तेष्वेति ॥ विष्णोरनंतरंरमाद्येषुतद्भक्तेषुक्रमेणैवभक्तिश्चमोक्षावाप्तौकारणमित्यन्वयः । मोक्षसाधनांतरमाह ॥ तृतीयमपीति ॥ वैराग्यमपिमोक्षावाप्तौकारणमित्यन्वयः । ज्ञानभक्तिसमकक्ष्यतानिरासायतृतीयमित्युक्तं । ज्ञानंभक्तिंवाप्रतीदंसाधनमितिभावः । एवमेवसाधनांतरमस्तिकिं नेत्याह ॥ नचेति ॥ कथंतर्हिमुमुक्षोर्यज्ञादिकंविधीयतइत्यतआह ॥ एतत्साधनतेति ॥ ननुतर्हि तद्धेतोरेवास्तुतद्धेतुत्वं किंतेनेतिन्यायेन ज्ञानभक्तिवैराग्यसाधनयज्ञादीनामेवमोक्षसाधनत्वोपपत्तेःकिंज्ञानादिभिरित्यतोज्ञानादीनामेवमोक्षसाधनत्वमनन्यथासिद्धान्वयव्यतिरेकाभ्यांसाधयति ॥ अतइति ॥ ज्ञानादिकंपरित्यज्येत्यर्थः । तमश्चेतिचशब्दान्वयः । तेननकेवलंमोक्षंनगच्छेदित्यस्य समुच्चयः । अनेनव्यतिरेकउक्तोभवति । तस्यान्यथासिद्धिपरिहारायसर्वकृदपीत्युक्तं । अस्मिन्नित्यनेनान्वयउच्यते । अत्राप्य

---

भा० । यथाक्रमपरिज्ञानादेकांतित्वाच्चकेवलं । अच्छिद्रत्वाच्चनियतोमोक्षोन्यत्तुविडंबनं । विष्णोर्भक्तिर्विशेषेणमोक्षावाप्तौहिकारणं । तद्भक्तेषुक्रमेणैवरमाद्येषुत्वनंतरं । तृतीयमपिवैराग्यंनचान्यन्मोक्षकारणं । एतत्साधनताहेतोस्तदन्यद्धिविधीयते । अतोन्यसर्वकृच्चापिगच्छेदेवाधरंतमः । अस्मिन्सुनिष्ठितोनित्यंमोक्ष्येवान्योज्झकोपिसन् ।

न्यथासिद्धिपरिहारायान्योज्झकोपीत्युक्तं । एतच्चज्ञानयोगिषुसनकादिषुद्रष्टव्यं । नन्वस्त्वेवंदेवतातारतम्यज्ञानंमोक्षसाधनं । किंततइत्यतआह ॥ **अतइति** ॥ देवतातारतम्यज्ञानस्यमोक्षसाधनत्वादित्यर्थः । एवमेषांभूतानांपृथिवीरसइत्यादेःसंगतिमभिधायतद्वाक्यंव्याचष्टे ॥ **पृथिवीति** ॥ एषांभूतानांसकाशादित्यध्याहारमभिप्रेत्यसर्वभूतेभ्यइत्युक्तं । ऋभ्वादिभ्यइत्यर्थः । पृथिव्यामृभवोविलीयंतइतिश्रुतेः । सर्वगुणैरित्यस्ययोग्यतयासंबंधः । रसशब्दार्थोवरेति । तदुपपादयति ॥ **रसइति** ॥ पृथिव्याआपोरसइतिवाक्यंव्याचष्टे ॥ **पृथिव्याइति** ॥ अपामोषधयोरसइतिवाक्यंव्याचष्टे ॥ **तस्मादिति** ॥ ओषधीनांपुरुषोरसइत्येतद्व्याचष्टे ॥ **तस्मात्त्विति** ॥ रुद्रस्यपुरुषनामकत्वमुपपादयति ॥ **यत्पौंस्यदेवतेति** ॥ शिश्नदेवतेतियावत् ॥ पुरुषस्यवाग्रसइतिवाक्यंव्याचष्टे ॥ **तस्मादिति** ॥ वाक्सर्ववेदाभिमानिनी । वाचऋग्रसइतिवाक्यंव्याचष्टे ॥ **अस्याइति** ॥ वागभिमानिन्याः । ऋचःसामरसइत्येतद्व्याचष्टे ॥ **ततइति** ॥ वायौसामशब्दंनिर्वक्ति ॥ **समत्वादिति** ॥ निमित्तांतरमाह ॥ **साम्नांदेवताचेति** ॥ साम्नउद्गीथोरसइत्येतद्व्याचष्टे ॥ **ततइति**॥ यद्यपिश्रुतौतमन्नश्रूयते। तथापिप्राणादीनांभूतादिभ्यःश्रेष्ठत्ववदस्यश्रेष्ठत्वंनभवतीतिभावेनतमप्प्रयोगः । ऐतेनपृथिव्यादिशब्दाःप्रसिद्धार्थाएवेतिपरकीयंव्याख्यानमपास्तं । सएषरसानां

भा० । अतस्तेषांक्रमंवक्ष्येदेवानांयःश्रुतौश्रुतः । पृथिवीसर्वभूतेभ्यःसदासर्वगुणैर्वरा । रसःसारोवरश्चेतिशब्दाएकार्थवाचकाः । पृथिव्यावरुणःश्रेष्ठस्तस्मादोषधिदेवता । सोमस्तस्मात्तुपुरुषोरुद्रोयत्पौंस्यदेवता । तस्मात्सरस्वतीवाग्धिश्रेष्ठास्याऋक्स्वरूपिणी । सैवश्रेष्ठाततोवायुर्वरिष्ठस्सामनामकः । समत्वात्सर्वभूतेषुसामसाम्नांचदेवता । ततःश्रेष्ठतमोविष्णुःश्रेष्ठश्रेष्ठतमस्सदा ।

॥ ७ ॥

रसतमःपरमःपरार्ध्योऽष्टमोयउद्गीथइतिवाक्ये योऽष्टमउद्गीथःसएषरसानांरसतमः सएषपरमः सएषपरार्द्ध्य इतिवाक्यत्रयमंगीकृत्य सएषरसानांरसतमइतिवाक्यंतावद्व्याचष्टे ॥ **श्रेष्ठश्रेष्ठतमस्सदेति** ॥ श्रेष्ठानांवाय्वादीनांसकाशाच्छ्रेष्ठतमइत्यर्थः । सएषपरमइतिवाक्यं परमत्वस्यसावधिकत्वादवधिप्रदर्शनपूर्वकंव्याचष्टे ॥ **श्रेष्ठादिति** ॥ श्रेष्ठादपिसरस्वत्यादेःश्रेष्ठतमोयोवायुस्तस्मादपिपरमंयच्छ्रीतत्वंतस्मात्परमइत्यर्थः । सएषपराध्र्यइतिवाक्यंव्याचष्टे ॥ **परमर्द्धियुतत्वाचेति** ॥ पराध्र्यइतिचेतिचशब्दान्वयः । ननुपरमर्द्धियुतत्वेनपरर्ध्यइतिस्यात् । पराचसाऋद्धिश्चपरर्द्धिस्तयायुतःपरर्ध्यइत्येवप्राप्तेः । नतुपराध्र्यइति । तत्कथंपरमर्धियुतत्वाच्चपराध्र्यइतिकीर्तितइतिव्याख्यानमित्यतःस्मृत्यभिप्रायप्रकटनायपराध्र्यशब्दंस्वयंव्याचष्टे ॥ **अतिशयेनेति** ॥ पराध्र्यइत्यत्रदीर्घस्यार्थोऽतिशयेनेति । परशब्दस्यार्थःपरमेति । परमर्द्धिरेवगुणोयस्यसपरमर्द्धिगुणइतिबहुव्रीहिसमासकरणेनपरार्द्ध्यायुतःपरार्द्ध्यइत्यर्थउक्तोभवति । स्मृतौपरमोविभुरित्येतदुत्तरत्राप्यनुवर्ततइतिभावेनपरमइत्युक्तं । परमोविभुरतिशयेनपरमर्धिगुणोयतोतःपरार्द्ध्यइत्युच्यतइत्यर्थः । तथाचस्मृतावप्यतिशयेनेतिग्राह्यमितिनानुपपत्तिरितिभावः । यद्वा पूर्वंसएषरसानांरसतमःपरमःपरार्द्ध्यइत्यत्रवाक्यत्रयमंगीकृत्यव्याख्यातं । इदानींसएषरसानांरसतमइत्येकंवाक्यं । परमःपरार्ध्यइत्यपरंवाक्यमितिवाक्यद्वयमेवेदमित्यंगीकृत्यप्रथमवाक्यस्योक्तएवार्थः । द्वितीयवाक्येतुपरमत्वंनपृथग्भगवद्विशेषणं ।

भा० । श्रेष्ठाच्छ्रेष्ठतमाच्चापिपरमात्परमोविभुः । परमर्धियुतत्वाच्चपराध्र्यइतिकीर्तितइतिसारनिर्णये । अतिशयेनपरमर्धिगुणःपरमःपराध्र्यः ।

किंतुऋद्धिलक्षणगुणविशेषणमितिभावेनपरमःपराद्ध्यइत्येतद्व्याचष्टे ॥ अतिशयेनेति ॥ परेत्यस्यार्थोतिशयेनेति ॥ परमशब्दस्य तुपरमेत्येवानुवादः । अतिशयेनपरमर्द्धिगुणोभगवान्परमःपराद्ध्यइत्युच्यतइत्यर्थः । ननुपरमःपराद्ध्यइत्यत्रपरमत्वंयदिऋद्धिल क्षणगुणविशेषणंतर्हिपरमपराद्ध्यइत्येवस्यात् । नतुपरमःपराद्ध्यइतिपरमशब्दस्यविभक्त्यंततयानिर्देशः इतिचेत् । न । अहमेवेदं सर्वोस्मीतिश्रुतौ अजानतामहिमानंतवेदमितिस्मृतौचेदंत्वस्यसर्वशब्दार्थपूर्णत्वमहिमत्वविशेषणत्वेपीदंशब्दस्यविभक्त्यंततयानि र्देशदर्शनात् ॥ उक्तंच । इदमितिपूर्णत्वविशेषणं ।अजानतामहिमानंतवेदमितिवदिति। अथवासएषरसानांरसतमःपरमःपराध्र्यइत्ये कमेववाक्यं । संभवत्येकावाक्यत्वेवाक्यभेदाश्रयणायोगादितिभावेनतद्वाक्यंतात्पर्यतोव्याचष्टे॥उत्तमेभ्योपीति॥रसानामित्य स्यार्थउत्तमेभ्योपीति।रसतमःपरमःपराद्ध्यइत्यस्यार्थोतिपरमोत्तमोत्तमइति । उत्तमेभ्योपियोतिपरमस्तस्मादपियउत्तमःतस्मादप्यु त्तमइत्यर्थः।रसानांरसतमःपरमःपराद्ध्यइत्युच्यतइतिशेषः।ननुरसानामितिषष्ठ्याःकथमुत्तमेभ्यइतिपंचम्याव्याख्यानं । रसतमःप रमःपराद्ध्यइतिप्रत्येकंविशेषणत्वप्रतीतेःकथमतिपरमोत्तमोत्तमइतिव्याख्यानंचेत्यतोरसानांरसतमःपरमःपराद्ध्यइतिवाक्ययोज नामाह॥ रसानामिति॥तथाचरसानामितिषष्ठ्याःसकाशादितिपूरणेपंचम्यर्थस्यैवलाभादुत्तमेभ्यइत्युपपन्नं । रसतमःपरमःपरा द्ध्यइतितुनपृथग्विशेषणं । किंतुपरमपराद्ध्यरसतमइत्येकमेव । तस्यचातिपरमोत्तमोत्तमइतिव्याख्यानंचयुज्यतएवेतिभावः। ननु सएषरसानांरसतमःपरमःपराध्र्यइत्यत्रवाक्यत्रयमंगीकृत्यरसतमत्वादीनांप्रत्येकंभगवद्विशेषणत्वांगीकारपक्षेविशेषणत्रयोपादानं

भा० । उत्तमेभ्योप्यतिपरमोत्तमोत्तमोरसानांरसतमःपरमःपराध्र्यः । रसानांसकाशादपिपरमपराध्र्यरसतमइत्यर्थः ।

व्यर्थमेकेनैवचारितार्थ्यादित्यतआह ॥ प्राणादीनामिति ॥ परमपराध्यर्रसतमइत्यस्यातिपरमोत्तमोत्तमइतितात्पर्यतोव्याख्यानंकृतं । इदानींपरमपराध्यर्रसतमइत्यस्याक्षरार्थमाह॥भूतेभ्यइत्यादिना ॥ ननुयदिप्राणस्यपरमपरर्द्धरसतमत्वं तर्हिभगवतःपरमपरार्द्धरसतमत्वंस्यात् । दीर्घस्यातिशयार्थकत्वात्।नतुपरमपराध्यर्रसतमत्वमित्यतआह॥अयंत्विति॥प्राणस्यापिरसभूतायाअतएवपरमपरार्द्धरसतमशब्दवाच्यायाइतिशेषः। ननुपरमपरार्द्ध्यरसतमशब्देनपरमपरार्द्धरसतमशब्दवाच्यायारमायाउत्तमत्वंभगवतःकथंलभ्यते । तद्वाचकपदाभावात्। नचयकारस्योत्तमार्थत्वंकुत्रचिदुपलब्धमित्यतःपरार्द्ध्यशब्दंनिर्वक्ति॥अस्मादिति॥परार्द्धेन परार्द्धनामकश्रीतत्वेनज्ञेयंहिपराध्यं । यातेर्गत्यर्थात्कर्मणिकप्रत्ययेयकारस्यज्ञेयवाचकत्वात् । अकारलोपोनिर्वचनत्वात्। नन्वेवंतर्हिकथंपरार्द्धयोंभगवान्स्यात् । परार्द्धज्ञेयत्वस्यब्रह्मादिसाधारणत्वादित्यतउक्तमस्मादप्यतिशयेनपरमिति। अस्मात्स्वस्माच्छ्रीतत्वादप्यतिशयेनपरमित्यनेनप्रकारेणपरार्द्धेनज्ञेयमित्यर्थः । ननुयथासरस्वत्याःप्राणःस्वस्मादप्यतिशयेनपरमइतिज्ञेयःप्राणेनवाश्रीतत्वंयथापरमितिज्ञेयं तथापरार्द्धेनश्रीतत्वेनापिस्वस्मादेतावत्संख्याकगुणविशिष्टत्वेनपरमितिज्ञेयंचेत् भगवतोतिमाहात्म्यंनलभ्यतइत्यतउक्तमसंख्यागोचरत्वेनेति । असंख्यागोचरत्वेनपरार्द्धेनज्ञेयत्वंजीवराशावप्यस्ति। अतोस्मादप्यतिशयेनेत्यु

---

भा० । प्राणादीनांभूतादिभ्यःश्रेष्ठत्ववदस्यश्रेष्ठत्वंनभवति । किंतुमहान्विशेषइतिज्ञापयितुंरसानांरसतमइत्यादिबहुविशेषणं । भूतेभ्यःपृथिव्यारसत्वंतेभ्योवरुणस्यरसतरत्वं सोमस्यरसतमत्वं रुद्रस्यपरमरसतमत्वं वाचःपरमर्द्धरसतमत्वं प्राणस्यपरमपरर्द्धरसतमत्वं। अयंतुभगवान्प्राणादपिपरमपरार्द्धरसतममात्रोनभवति। किंतुप्राणस्यापिरसभूतायारमायाअपिपरमपरार्द्ध्यरसतमः । अस्मादप्यतिशयेनपरमित्यसंख्यागोचरत्वेन परार्द्धेनज्ञेयंहिपरार्द्ध्यं ।

क्तं । यद्यपिपरार्द्धेनज्ञेयत्वमेवशब्दलभ्यं । तथापियोग्यतयान्यस्यलाभः । नन्वेवंपरमपराद्ध्यरसतमत्वंभगवतःकिमर्थंवक्तव्यं । देवतातारतम्यज्ञानपुरःसरंभगवतःसर्वोत्तमत्वकथनार्थमितिचेत् । न । एषांभूतानांपृथिवीरसइत्यादिनासाम्नउद्गीथोरसइत्यंतेनत स्योक्तत्वादितिचेत्सत्यं । तदेवसंग्रहेणानूद्यप्राणोत्तमरमोत्तमत्वंचात्रकथ्यतइत्यदोषः । ननुयद्येषांभूतानांपृथिवीरसइत्याद्युक्त मेवसंग्रहेणपरमपराध्र्यरसतमइत्यनेनानूद्यते तर्हिपूर्ववाचऋग्रसइतिवागपेक्षयाऋचआधिक्यस्योक्तत्वादत्रवाचःपरमपररसतम त्वं ऋचःपरमपरर्द्धरसतमत्वं प्राणस्यपरमपरार्द्धरसतमत्वं परार्द्धेनज्ञेयस्यभगवतःपरमपराध्र्यरसतमत्वमिति प्राणादेवभगवत आधिक्यंलब्धं । नतुरमायाइतिचेत् । न । वागृचोरैक्यविवक्षयैवंव्याख्यानात् । अस्तुवाऋग्रूपायाःसरस्वत्याःवाग्रूपायाःस्वस्या एवपृथक्परत्वं । तथापिरमोत्तमत्वंभगवतःसिद्ध्यत्येवेत्याह ॥ ऋग्रूपायाइति ॥ ननुपूर्वव्याख्यानेरमायाःपरमपरार्द्धरसतम त्वमुक्तं । तत्कथंपरमपरार्द्धरसतमशब्दवाच्यप्राणोत्तमत्वमनेनलभ्यतइत्यतःपरार्द्धशब्दंव्याचष्टे ॥ परस्मादपीति ॥ तस्मि न्नेवपक्षेपरार्ह्यशब्दार्थंपूर्वोक्तंस्मारयति ॥ तेनेति ॥ परार्द्धेनश्रीतत्वेनेत्यर्थः । अस्मादप्यतिशयेनपरमितीत्यपिग्राह्यं । यद्वासं ख्याऽगोचरगुणवत्त्वेनेत्यर्थः । नविद्यंतेसंख्यागोचरागुणायस्यासावसंख्यागोचरइतिविग्रहाश्रयणात् । एवंचेदंव्याख्यानांतरमि तिबोद्धव्यं । ननुद्वितीयपक्षेप्राणस्यपरमपरार्द्धरसतमत्वमेव । नतुपरमपरार्द्धिरसतमत्वमित्युक्तं । किंततः । नह्येतावताभगवतः

भा० । ऋग्रूपायावाचःपृथक्परत्वांगीकारेपिभूतेभ्यःप्राणस्यपरमपरार्द्धरसतमत्वमेव । नतुपरमपरार्धिरसतमत्वं । परस्मादप्यासमंतादृद्धंहिपरार्द्धं । तेनासंख्यागोचरत्वे नज्ञेयंपरार्ध्यं । परार्द्धोत्तमंपरार्द्धि । तेनासंख्यागोचरत्वेनज्ञेयंपरार्ध्यमित्यतःपरार्धित्वंश्रियोभवति । श्रियोपिपरार्ध्योभगवान् ।

॥ ९ ॥

परार्द्ध्यशब्दवाच्यस्यरमोत्तमत्वंलब्धमित्यतोलब्धमेवेतिभावेनपरार्द्धिपरार्द्ध्यशब्दार्थमाह ॥ परार्द्धेति ॥ इकारस्येशत्ववाचक त्वेनोत्तमत्वार्थकत्वादितिभावः । परार्द्धोत्तमंपरार्द्धीतियतोऽतःपरार्द्धित्वंश्रियोभवति । श्रियएवपरार्द्धशब्दवाच्यप्राणोत्तमत्वा त् । तेनपरार्द्धिनाऽसंख्यातत्वेनज्ञेयंपरार्द्ध्यमित्यतःश्रियोपिपराध्योंभगवानितियोजना । पूर्वमकारलोपोत्रत्विकारलोपइतिवैलक्ष ण्यसूचनायपुनःपरार्द्ध्यशब्दव्याख्यानमुपसंहरति ॥ अतइति ॥ इत्युच्यतेभगवानितिशेषः ॥ २ ॥ ननुपूर्वंपृथिवीसोमवरुण रुद्राणामपिप्रकृतत्वात्तान्विहायकतमाकतमर्गित्यादिनाऋक्सामोद्गीथमात्रस्वरूपविमर्शकरणेकिंनिमित्तमित्यतआह ॥ पृथिव्या इति ॥ पृथिव्याःपृथिवीदेवतात्वेनेतिशेषः । ननुपृथिव्यादीनांजडपृथिव्यादिदेवतात्वेनप्रसिद्धिःकिंलौकिकीवैदिकीवा । ना द्यः तदभावात् । नद्वितीयः ऋगादिस्वरूपस्यापिश्रुत्यादिसिद्धत्वेनतद्विमर्शस्याप्यकर्तव्यत्वापातादित्यतोहेत्वंतरमाह ॥ त ज्ज्ञानस्येति ॥ ऋगादिज्ञानस्येत्यर्थः । विशिष्टंफलंयेनतद्विशिष्टफलं । ऋगादीनामेवविमर्शःक्रियतइतिसंबंधः । पृथिव्यादि ज्ञानस्यविशिष्टफलसाधनत्वाभावेपितत्स्वरूपस्याप्रसिद्धत्वेतद्विमर्शःकर्तव्यएवेतिप्राचीनहेतूपन्यासः । यदिऋगादिज्ञानस्यवि शिष्टफलसाधनत्वात्तद्विमर्शःकर्तव्यस्तर्हिवाचोज्ञानस्यापिविशिष्टफलसाधनत्वात्तद्विमर्शोपिकर्तव्यइत्यतआह ॥ वाचश्चेति ॥ चशब्दस्तुशब्दार्थः । तर्ह्युक्तन्यायेनऋगादिविमर्शोपिनकार्यःस्यादित्यतउक्तंवागृचोरिति । वागेवर्गितिवागृचोरैक्यस्योक्तत्वा

भा० । अतोरसानांरसतमःपरमःपरार्द्ध्यः ॥ २ ॥ पृथिव्याःसोमवरुणयोश्चौषध्यब्देवतात्वेनरुद्रस्यचलिंगदेवतात्वेनप्रसिद्धेःऋगादीनामेवविमर्शःक्रियतेकतमाकतमर्गित्या दिना । तज्ज्ञानस्यविशिष्टफलत्वाच्च । वाचश्चसरस्वतीत्वेनप्रसिद्धेर्वागृचोरैक्याच्चनविमर्शःकृतः ।

दितिभावः । तथाचऋग्विमर्शेवाग्विमर्शोपिकृतएवेतिभावः । ऐक्येपिरूपांतरस्याप्रसिद्धत्वेतद्विमर्शःकर्तव्यएवेतिप्राचीनहेतूप
न्यासः । नन्वेतदयुक्तं । पूर्ववाचऋग्रसइतिवागपेक्षयाऋचोरसत्वमुक्तं । इदानींतयोरैक्यमुच्यते । तत्कथमुपपन्नं । नहिस्वस्मा
त्स्वस्यश्रैष्ठ्यंभवतीत्यतआह ॥ विशेषादिति ॥ वाक्सरस्वती । विशेषेणप्राणसंयुक्तत्वंकथंऋक्शब्दलब्धमित्यतआह ॥
ऋगताविति ॥ धातोर्धातुव्याख्यानादित्यर्थः । ऋक्शब्दप्रवृत्तिनिमित्तंहिऋक्त्वमेव । ऋक्त्वंचगतत्वं । ऋगतावितिधातोः ।
गतत्वंचात्रसंयुक्तत्वमेव । कारणशब्देनकार्योपलक्षणात् । संयुक्तत्वंचयोग्यतयाप्राणेनैव । रूपांतरादतिशयलाभायविशेषादित्य
पियोग्यतयालब्धं । तेनविशेषात्प्राणसंयुक्तत्वंऋक्शब्दलभ्यमितिभावः । प्रकारांतरेणसरस्वत्याऋक्शब्दाभिधेयत्वमुपपादय
ति॥ सर्गाभिमानिनीति । अभिमान्यभिमन्यमानयोरेकशब्दत्वस्यमहतश्चतुर्मुखादित्यादौदृष्टत्वादितिभावः। अस्त्वेवंप्राणसं
युक्तावागृक्शब्दाभिधा । तथापिकथंतस्याःस्वस्याएवोत्तमत्वमुच्यतइत्यतआह ॥ विशेषेति ॥ तथाचावस्थाविशेषमादायैक
स्याएवतस्याःस्वापेक्षयारसत्वोक्तिरुपपन्नेतिभावः । अतएवोरुस्थलाश्रितयज्ञनाम्नयालक्ष्म्याभगवद्रतियोगस्थादक्षिणाख्यापि
सैवविशिष्टेत्युच्यते । यज्ञाख्यासैवविष्णोस्तुयातूरस्थलमाश्रिता । हरिणारितियोगस्थादक्षिणाख्यापिसैवतु । उत्तरोत्तरतःसापि
विशिष्टादक्षिणासुखइत्यादौ । नन्वस्याएकत्वेवाचऋग्रसइतिभेदोक्तिरयुक्ता । भेदेचवागेवर्गित्यभेदोक्तिरनुपपन्नेत्याशंकाप्येवं

भा० । विशेषात्प्राणसंयुक्तावागृगित्यभिधीयते । ऋगतावितिधातोर्हिऋक्त्वंसर्गाभिमानिनी । विशेषसंयोगहीनायदासावैसरस्वती । तदास्याअवरासैवप्राणसंयोगिनीमता ।

सतिनिरस्तेतिभावेनाह ॥ **प्राणयोगेति** ॥ यस्मात्सैषैकातत्तस्माद्वागेवर्गीतिश्रुतावभेदेनप्रोक्ता । यस्माच्चसैषैकापिप्राणयोगवियोगाभ्यांभिद्यते । तत्तस्मात्वाचऋग्रसइतिभेदेनप्रोक्तेतियोज्यं । अनेनवागेवर्गीतिवाक्यव्याख्यानमपिलब्धं । इदानींप्राणःसामेतिवाक्यंव्याचष्टे ॥ **प्राणइति** ॥ ओमित्येतदक्षरमुद्गीथइतिवाक्यंप्रणवपरमितिप्रतीतिनिरासायव्याचक्षाणस्तावदक्षरशब्दार्थमाह ॥ **अक्षयादिति** ॥ अक्षेत्यस्यार्थोक्षयादिति । एतेननञुपपदात्क्षैक्षयइत्यस्माद्धातोरातोनुपसर्गेकइतिकप्रत्ययइत्युक्तंभवति । रइत्यस्यार्थोरतिरूपत्वादिति । रमुक्रीडायामित्यस्माड्डडः । अक्षश्चासौरश्चेत्यक्षरः । तस्यैवार्थांतरमाह ॥ **अक्षेष्विति** ॥ इंद्रियेष्वित्यर्थः । ओमित्यस्यार्थमाह ॥ **ओमितीति** ॥ नन्वोमित्येतदक्षरमित्यत्रेतिशब्दबलात्ओंकाराख्यःशब्दोलभ्यते । अर्थप्रकरणेपठितस्येतिशब्दस्यशब्दपदार्थकत्वव्यवस्थापकत्वात् । अन्यथातद्वैयर्थ्यंस्यादित्यतआह ॥ **इतिशब्दइति** ॥ इतिशब्दार्थस्योंकारार्थेनान्वयंदर्शयति ॥ **एवमिति** ॥ एवमित्यनेनेतिशब्दस्यप्रकृतपरामर्शकत्वमप्यर्थइत्यभिप्रेत्यइतिओमित्यन्वयउक्तइत्यपिज्ञातव्यं । एतच्छब्दार्थमाह ॥ **एतदिति** ॥ उद्गीथशब्दार्थमाह ॥ **उद्गीयमानइति** ॥ उच्चत्वेनगीतउद्गीतःउद्गीतएवोद्गीथः ॥ ३ ॥ तद्वाएतदनुज्ञाक्षरंयद्धिकिंचानुजानात्योमित्येवतदाहेतिवाक्यमसंगतिपरिहारायव्याचष्टे ॥ **तस्मादिति** ॥ ओंनाम्नोभगवद्वाचकत्वादेवेत्यर्थः । एतत्परामर्शसौकर्यायैवश्रुतिक्रमोल्लंघनं ।

---

भा० । प्राणयोगवियोगाभ्यांसैषैकापिविभिद्यते । वागेवर्क्तच्छ्रुतौप्रोक्ताप्राणःसामेतिकीर्तितः । अक्षयाद्रतिरूपत्वादक्षेषुरमणादपि । अक्षरंभगवान्विष्णुरोमित्युच्चत्वहेतुतः । इतिशब्दोन्यथाभावनिवृत्त्यर्थउदाहृतः । एवमत्युच्चएवासौसर्ववेदैतद्धृदिस्थितः । उद्गीयमानउद्गीथोभगवान्पुरुषोत्तमः ॥ ३ ॥ तस्मादोमित्यनुज्ञानंकुर्वत्येतेजनास्सदा ।

नन्वोमित्यनुज्ञानेनकथमोंकारस्यभगवद्वाचकत्वसिद्धिरित्यतआह ॥ **त्वदुक्तमिति** ॥ कुर्यादेवेतिसंबंधः । तस्मादोंशब्दोभगवद्वाचकइतिशेषः । तथाचतद्वाइतिवाक्यमोंकारस्यभगवद्वाचकत्वसमर्थनायप्रवृत्तमितिनासंगतमितिभावः । कथंतर्ह्यधुनातनैर्नोक्ताभिप्रायतःसशब्दःप्रयुज्यतइत्यतआह ॥ **तदेतदिति** ॥ एषोएवसमृद्धिर्यदनुज्ञेतिवाक्यंव्याख्यातुंतावत्तात्पर्यमाह ॥ **ओमित्ययमिति** ॥ शब्दइतिशेषः ॥ तत्रहेतुमाह ॥ **समृद्धिरिति** ॥ समृद्धेरोंशब्दवाच्यत्वंकुतइत्यतआह ॥ **समृद्धइति** ॥ अथवेतिप्राचीनानुज्ञाभिप्रायकथनात्पक्षांतरद्योतकः । हियस्मादयंतेकामःसमृद्धोभवत्वित्यभिप्रायेणानुज्ञाभवेत् । अनुज्ञाचोंकारइत्युक्तं । अतःॐशब्दोहरेःसमृद्धिवाचीईरितःस्यादित्यर्थः । नन्वनुज्ञायाःउक्ताभिप्रायकत्वेॐशब्दःसमृद्धिमात्रवाचीस्यात् । नतुहरिसमृद्धिवाची । तत्कथंहरेःसमृद्धिवाचीस्यादित्युक्तमित्यतोनुज्ञायाअभिप्रायांतरमाह ॥ **इतिवेति** ॥ यतोहरिस्तवसमृद्धिदइतिवाऽनुज्ञादीयते अतोहरेःसमृद्धिवाचीॐशब्दइत्यन्वयः । ॐशब्दस्यसमृद्धिमात्रवाचकत्वेपूर्वोक्तोहेतुः । हरिसमृद्धिवाचकत्वेत्वयंहेतुरितिभावः ॥ ६ ॥ एवंतद्वाएतदनुज्ञाक्षरमितिवाक्यंपरामर्शसौकर्यायपूर्वंव्याख्यायेदानींतदेतन्मिथुनमोमित्येतस्मिन्नक्षरेसंसृज्यतइतिवाक्यंव्याचष्टे ॥ **वाक्प्राणाविति** ॥ चापिशब्दौवाक्प्राणश्चेतिवाक्प्राणावितिपरस्परसमुच्चया

भा० । त्वदुक्तंतत्तथाकुर्याद्भगवानेवकेशवः । इत्यभिप्रायतःशब्दःप्रवृत्तस्सपुरातनैः । तदेतदज्ञैस्तुजनैस्स्वानुज्ञेतिप्रदीयते । ओमित्ययंपूर्णवाचीसमृद्धिर्ह्योमितीरिता । समृद्धस्तेहिकामोयमित्यनुज्ञाथवाभवेत् । अतस्समृद्धिवाचीस्याद्धरेरोंशब्दईरितः । इतिवादीयतेनुज्ञाहरिस्तवसमृद्धिदः ॥ ६ ॥ वाक्प्राणौदंपतीचापिसंसृज्येतेजनार्दने । मुक्तौतुतत्प्रसादेनसंसृज्यंतेततःपरे । तद्वारेणैवसाक्षात्तुप्राणस्संसृज्यतेहरौ ॥ ४ ॥



र्थौ । अतएवश्रुतौवाक्प्राणश्चेत्युक्तं । यद्वाअपिशब्दःकैमुत्यार्थः । यदाऽतिशयितमाहात्म्यविशिष्टवाक्प्राणप्राप्योजनार्दनस्तदातन्माहात्म्यंकिंवक्तव्यमिति । चशब्दोऋक्सामसमुच्चयार्थः । अतएवश्रुतौतद्वाएतन्मिथुनंयद्वाक्प्राणश्चऋक्सामचेत्युक्तं । तुशब्दोविशेषार्थः । ननुसर्वेपिमुक्तौभगवतिसंसृज्यंते । अतःकोविशेषइत्यतआह ॥ **तत्प्रसादेनेति** ॥ तयोःप्रसादेनेत्यर्थः । तुशब्दोऽवधारणार्थः । साक्षादेवभगवदन्याधिकारिप्रसादमन्यद्वारंचानपेक्ष्येत्यर्थः । वाक्प्राणयोःप्रकृतयोरप्यत्रप्राणमात्रग्रहणेनवाक्प्राणद्वारेतिगम्यते ॥ ४ ॥ तेनेयंत्रयीविद्यावर्ततइतिवाक्यं तच्छब्दपरामृश्यंदर्शयन्व्याचष्टे ॥ **तेनैवेति** ॥ तेनैवप्रणवार्थभूतेनैवविष्णुनास्वप्रतिपाद्यभूतेनेयंत्रयीविद्याप्रवर्ततइत्यनेनप्रवणार्थएवसर्ववेदार्थइत्युक्तंभवति । प्राचीनप्रणवव्याख्यानसमुच्चयार्थश्चशब्दः । प्रणवार्थएवसर्ववेदार्थइत्युक्तमुपपादयितुंप्रवृत्तमोमित्याश्रावयति ओमितिशंसति ओमित्युद्गायतीतिवाक्यत्रयंव्याचष्टे ॥ **ओमित्युक्त्वेति** ॥ सर्वैर्मंत्रैराश्रावणादिमंत्रैः । एतस्यैवाक्षरस्यापचित्याइत्येतद्व्याचष्टे ॥ **ॐनामकस्येति** ॥ महिम्नारसेनतेनोभौकुरुतइत्यादिव्याचष्टे ॥ **महिम्नेति** ॥ विष्णुनैवेतिसंबंधः ॥ ७ ॥ नानातुविद्याचाविद्याचेत्युक्तंवैलक्षण्यंफलकृतमितिभावेनप्रवृत्तस्ययदेवविद्ययेतिवाक्यस्यव्यावर्त्यप्रदर्शनपूर्वकंतात्पर्यमाह ॥ **नाज्ञस्येति** ॥ तुशब्दएवार्थः । ज्ञस्यैवेतिसंबंधः । ननूपनिषदोविद्याजनकत्वात्कथमुपनिषदाविद्ययेतिसामानाधिकरण्यमित्यतउपनिषच्छब्दार्थ

भा० । तेनैवविष्णुनेयंचत्रयीविद्याप्रवर्तते । ओमित्युक्त्वाहितद्व्याख्यासर्वैर्मंत्रैःप्रवर्तते । ओंनामकस्यपूजार्थंविष्णोरेवसदैवहि । महिम्नासारभूतेनविष्णुनाज्ञोऽज्ञएवच । कुरुतःकर्म ॥ ७ ॥ नाज्ञस्यमुक्तिर्ज्ञस्यभेवत्तुसा ।

माह ॥ स्वयोग्यमिति ॥ तस्यज्ञस्य । अत्रस्वयोग्यमित्येवोपनिषच्छब्दार्थः । उपनिषीदतीत्युपनिषदितिव्युत्पत्तेः । परिज्ञानमिति विद्याशब्दार्थानुवादः । अन्यथापुनरपिसामानाधिकरण्यानुपपत्तेः । अतएवोक्तंकर्मनिर्णयटीकायां । उपनिषीदतीत्युपनिषत् ।योग्येति ॥ इतिखल्वेतस्यैवाक्षरस्योपव्याख्यानंभवतीतिवाक्येऽक्षरशब्दस्यप्रणववाचकत्वावश्यंभावात्पूर्वत्रापिसर्वत्रतस्यप्रणवपरत्वमेवयुक्तंनतुभगवत्परत्वमित्यतस्तद्यथावद्व्याचष्टे ॥ अक्षरमिति ॥ तस्यविष्णोरुपसमीपेवर्तमानःप्रणवः । असाधारण्येनतद्वाचकतयातत्प्रीतिविषयत्वात् । वागृचोरैक्याविवक्षापक्षेपरर्द्धपरार्द्धपरार्द्धिपराध्यमितिचतस्रःकक्ष्यानिरूपिताः । तत्राप्रतीत्यापरर्धादिशब्दार्थमाह ॥ परर्द्धमिति ॥ तस्मिन्नेवपक्षेपरार्द्धोवायुःपरार्द्धिनीश्रीःपराध्र्योभगवानित्युक्तमपिप्रमाणेनद्रढयति ॥ परतइति ॥ वायुरेवेतिसंबंधः ॥ ८ ॥ ततश्चायंखंडार्थः ॥ ओमितिनामकमक्षरं नक्षीयतइत्यक्षं रतिरूपत्वाद्रं अक्षंचतद्रंचेत्यक्षरं अक्षेष्विंद्रियेषुरमणाद्वाऽक्षरं एतत्सर्वसन्निहितत्वादेतन्नामकं । उद्गीथं उच्चत्वादुत् गीतत्वाद्गीः सर्वस्थानत्वात्थः उच्चासौगीश्चासौथश्चेत्युद्गीथस्तमुद्गीथंभगवंतमुपासीत । भगवओंनामकत्वंकुतइत्यतस्तत्समर्थयते ॥ ओमितिह्युद्गायतीति ॥ हियस्माद्भगवंतमुद्दिश्योद्गातोमित्युच्चार्योद्गायति उद्गानंकरोति । तस्मादोंनामकत्वंभगवतःसिद्धं । अन्यथाऽसंगतेरितिभावः । नकेवलम

भा० । स्वयोग्यंतुपरिज्ञानंयत्तस्योपनिषत्स्मृतं । अक्षरंभगवान्विष्णुस्तस्योपप्रणवःस्मृतः । उपव्याख्यातुतद्व्याख्येत्येवमाहश्रुतिःपरेतितातीये । परर्द्धंपरमादुच्चंपरर्द्धंतुततोधिकं । ततोधिकंपरार्द्धिस्यात्परार्द्ध्यमितितत्परं। परतःपरमाच्चैवपरार्द्धोवायुरीरितः । परार्द्धिनीश्रीरुद्दिष्टापराध्र्योभगवान्हरिरितिशब्दनिर्णये ॥ ८ ॥

उप० । ओमित्येतदक्षरमुद्गीथमुपासीतोमितिह्युद्गायतितस्योपव्याख्यानं ॥ १ ॥

श्वकर्णादिशब्दवद्रूढिमात्रप्रवृत्तोंकारवाच्यंभगवंतमुपासीतकिंतुॐकारार्थगुणविशिष्टतयेतिभावेनभगवद्वाचकोंकारव्याख्यानंप्रतिजानीते ॥ **तस्येति** ॥ तस्याक्षरस्योद्गीथस्यविष्णोरुपसमीपेवर्तमानोयःप्रणवस्तस्यव्याख्यानंक्रियतइत्यर्थः। तस्यप्रणवस्योपपन्नंव्याख्यानंक्रियतइत्यर्थःइत्यप्याहुः ॥१॥ तत्रतावदधिकोच्चत्वेनप्रमितत्वमोंकारार्थइतिभावेनदेवतातारतम्यज्ञानपूर्वंभगवदधिकोच्चत्वज्ञानस्यैवमोक्षहेतुत्वेनदेवतातारतम्योक्तिपूर्वंभगवतअधिकोच्चत्वमाह ॥**एषांभ्भूतानामित्यादिना** ॥ एषांप्रसिद्धानांसर्वेषांभूतानामृभ्वादीनांसकाशात्पृथिवीपृथिव्यभिमानिदेवता । रसःसर्वगुणैर्वरा । पृथिव्याःसकाशादापस्तदभिमानिवरुणोरसः । अपांवरुणस्यसकाशादोषधयओषधिदेवतासोमोरसः । ओषधीनांसोमस्यसकाशात्पुरुषःपौंस्यदेवतारुद्रोरसः । पुरुषस्यरुद्रस्यसकाशात् वाक्वेदाभिमानिनीसरस्वतीरसः।वाचःसरस्वत्याःसकाशात्ऋक्रसः ऋङ्नाम्नीसैवश्रेष्ठा। ऋचःसकाशात्सामरसःसामदेवतामुख्यवायुःश्रेष्ठः । साम्नःसकाशादुद्गीथोरसःनारायणःश्रेष्ठः। सामादीनांभूतादिभ्यःश्रेष्ठत्ववदस्योद्गीथस्यश्रेष्ठत्वंनभवति। किंतुमहान्विशेषइतिज्ञापयितुमाह ॥ **सएषइति** ॥ अष्टमःपृथिव्यपेक्षयाष्टमत्वेनोक्तोयउद्गीथःसएषरसानांश्रेष्ठानांपृथिव्यादीनांसकाशाद्रसतमःश्रेष्ठतमःपरमश्रेष्ठादपिश्रेष्ठतमाच्चयत्परमंतस्मादुत्तमइत्यर्थः। परार्द्ध्यःअतिशयेनपरार्द्धियुतत्वात्परार्द्ध्यइत्यर्थः।यद्वासएषपरमःपरार्द्ध्यःअतिशयेनपरमार्द्धिगुणइत्यर्थः । अथवानकेवलमुद्गीथस्यसाम्नएवोत्तमत्वं । किंतुसामोत्तमरमोत्तमत्वंचेति

---

उप०। एषांभूतानांपृथिवीरसःपृथिव्याआपोरसोपामोषधयोरसओषधीनांपुरुषोरसःपुरुषस्यवाग्रसोवाचऋग्रसऋचस्सामरसस्साम्नउद्गीथोरसस्सएषरसानांरसतमःपरमःपरार्द्ध्योष्टमोयउद्गीथः ॥ २ ॥

भावेनपूर्वोक्तंसंग्रहेणानूद्यरमोत्तमत्वमाह ॥ **सएषइति** ॥ योष्टमउद्गीथःसएषरसानांसकाशात्‌रसतमःपरमःपरार्ध्यःपरमपरार्ध्यरसतमइत्यर्थः। अत्रायंविवेकः । वक्ष्यमाणरीत्यायदिवागृचोरैक्यविवक्षातदाभूतेभ्यःपृथिव्यारसत्वंतेभ्योवरुणस्यरसतरत्वं सोमस्यरसतमत्वं रुद्रस्यपरमरसतमत्वं वाचःपरमपररसतमत्वं साम्नःपरमपरर्द्धरसतमत्वं रमायाःपरमपरार्द्धरसतमत्वं उद्गीथस्यपरमपरार्ध्यरसतमत्वं । यदिचऋग्रूपायाःवाचःपृथक्‌परत्वविवक्षातदा ऋचःपरमपरर्द्धरसतमत्वं साम्नःपरमपरार्द्धरसतमत्वं रमायाःपरमपरार्द्धिरसतमत्वं उद्गीथस्यपरमपरार्ध्यरसतमत्वमिति ॥ २ ॥ पृथिव्याःपृथिवीदेवतात्वेन सोमवरुणयोश्चौषध्यब्देवतात्वेन रुद्रस्यचलिंगदेवतात्वेन वाचश्चसरस्वतीत्वेनप्रसिद्धेः पृथिव्यादिविमर्शस्याकर्तव्यत्वादृगादिज्ञानस्यविशिष्टफलसाधनत्वाच्च ऋगादीनामेवविमर्शःक्रियते ॥ **कतमाकतमर्गित्यादिना**॥ ऋक्‌कतमा का।साम कतमत्‌ किं । उद्गीथः कतमः कः। इतिविमृष्टं भवति विमर्शःकृतोभवति।कतमेत्यादिरुक्तिःकुतूहलनिमित्ता ।क्रमेणोत्तरमाह॥ **वागेवर्गित्यादिना** ॥ वागेवपूर्वपुरुषसारत्वेनोक्तासर्ववेदाभिमानिनीसरस्वत्येवर्गित्यर्थः। अतएवनवाचोविमर्शःकृतः । नचैवंपूर्ववाचऋग्रसइत्युक्तिरनुपपन्नेतिवाच्यं । सरस्वती ह्यनेकरूपा।तत्रैकंरूपंसर्ववेदाभिमानिप्राणसंयोगविशेषहीनंच । अपरंतुऋगभिमानिप्राणसंयोगशेषयुक्तंच । सर्ववागभिमानिप्राणसंयोगविशेषरहिताद्रूपादृगभिमानिप्राणसंयोगविशेषविशिष्टरूपस्यस्वरूपोत्तमत्वाभावेपिअवस्थाविशेषमादायरसत्वोक्तिः । वेदात्मकरमारूपापेक्षयाभगवदंकस्थयज्ञाभिमानिरमारूपस्यधन्याश्चर्यत्वोक्तिवदित्यवधेयं। प्राणो मुख्यप्राणः। साम सर्वभूतेषुसमत्वात्।



उप० । कतमाकतमर्क्तमत्कतमत्सामकतमःकतमउद्गीथइतिविमृष्टंभवति । वागेवर्क्प्राणःसामोमित्येतदक्षरमुद्गीथः ॥ ३ ॥

सामदेवतात्वाच्च । ॐ उच्चत्वादिनाॐनामकं । इतिशब्दोन्यथाभावनिवृत्त्यर्थः। सर्वदाप्यत्युच्चएवेति । यद्वा इतिओमित्यन्वयः। पूर्वोक्तप्रकारेणेत्यर्थः । एतत्‌एतन्नामकमक्षरंयत्प्रागभिहितंसएवोद्गीथइत्यर्थः ॥३॥ ननूद्गीथाख्यस्यभगवतःऋक्सामनामकाभ्यांसरस्वतीप्राणाभ्यामुत्तमत्वमुक्तं। तत्कथं। तयोरतिमाहात्म्यवत्त्वेनश्रुत्यादिप्रसिद्धत्वादितिचेत्‌। न। तदपेक्षयापिभगवतोतिमाहात्म्यवत्त्वेनतदुपपत्तेरितिभावेनतयोर्मुक्तौभगवदाश्रितत्वंवक्तुमाह ॥ **तद्वाइति**॥ तदेतन्मिथुनंवै किंतत्‌। वाक्‌चप्राणश्चऋक्चसामचेति यत्‌ । इतरेतरयोगेचशब्दाः । किंततइत्यतआह ॥ **तदेतदिति** ॥ तदेतन्मिथुनमोमितिनामकेएतस्मिन्नक्षरेभगवतिसंसृज्यते । मुक्तावितिशेषः । सायुज्यलक्षणांमुक्तिंप्राप्नोतीतिभावः॥४॥कोविशेषस्तत्रेत्यतआह॥ **यदावाइति**॥ यदामिथुनौवाक्‌प्राणादिरूपौ दंपतीसमागच्छतउद्गीथेसंसृज्येयातांतदातावन्योन्यस्यकाममभिलषितमापयतोहवैप्राप्नुतइतिप्रसिद्धमित्यर्थः। उक्तरीत्याभगवदुपासकस्यफलमाह॥ **आपयितेति** ॥ योऽधिकारीएतत्‌वाक्‌प्राणादिरूपंमिथुनमेवंमुक्तौभगवदाश्रितत्वादिनाविद्वानक्षरमुद्गीथमेवमुक्तरीत्यातदुत्तमत्वेनोपास्तेसकामानांकाम्यानामापयिताप्रापयिताप्राप्ताहवैप्रसिद्धमित्यर्थः॥५॥ भगवतॐनामकत्वेओमितिह्युद्गायतीतिपूर्वयुक्तिरुक्ता । इदानींयुक्त्यंतरेणापितत्समर्थयते ॥ **तद्वाइति** ॥ तदेतदोंकाररूपमनुज्ञाक्षरमनुज्ञाप्रदमक्षरंवै। कुतः। हिय

उप० । तद्वाएतन्मिथुनंयद्वाक्‌चप्राणश्चर्क्चसामचतदेतन्मिथुनमोमित्येतस्मिन्नक्षरेसंसृज्यते ॥ ४ ॥ यदावैमिथुनौसमागच्छतआपयतोवैतावन्योन्यस्यकाममापयिताहवै कामानांभवतियएतदेवंविद्वानक्षरमुद्गीथमुपास्ते ॥ ५ ॥ तद्वाएतदनुज्ञाक्षरंयद्धिकिंचानुजानात्योमित्येवतदाहैषोएवसमृद्धिर्यदनुज्ञा समर्द्धयिताहवैकामानांभवतियएतदेवंविद्वानक्षरमुद्गीथमुपास्ते ॥ ६ ॥

स्माज्जनो यत्यदा । किंचकिंचिदनुजानातिअनुज्ञानंकरोतितत्तदाओमित्येवाहतस्मादेवतदनुज्ञाक्षरमितिसंबंधः । भगवास्त्वदु
क्तंतत्तथाकुर्यादित्यभिप्रायतोऽनुज्ञांप्रदातुंहिज्ञानिभिरोमित्युच्यते । तत्रोंकारस्यभगवद्वाचकत्वाभावेउक्ताभिप्रायेणानुज्ञाप्रदा
नायोमित्युच्चारणंनस्यादितिभावः । पूर्वमोंकारस्याधिकोच्चत्वेनप्रमितत्वमर्थइत्यभिप्रेत्याधिकोच्चत्वंसमर्थितं । इदानींभगवतःपू
र्णत्वंचोंकारार्थइतिभावेनाह ॥ **एषोएवेति** ॥ ओमित्ययंशब्दःपूर्णत्ववाची । समृद्धिवाचकत्वात् । तदेवकुतः । ॐकारस्ता
वदनुज्ञाक्षरमित्युक्तं किंततः यदनुज्ञा यानुज्ञा एषैवसमृद्धिर्वै । अयंतेकामःसमृद्धइतिभावेनैवानुज्ञाप्रदानात् । अतःॐकारः
समृद्धिवाचकइत्यर्थः । नन्वोंकारस्यपूर्णत्ववाचकत्वेपिभगवत्पूर्णत्ववाचित्वंकुतइतिचेत् । न । भगवत्समृद्धिवाचकत्वादेव । तदे
वकुतः । ॐकारोह्यनुज्ञाक्षरमित्युक्तं । यदनुज्ञाएषैवभगवतःसमृद्धिर्वै भगवांस्तवसमृद्धिदइतिभावेनैवानुज्ञाप्रदानात् । अतोभ
गवत्समृद्धिवाच्योंकारइत्यर्थः । एवमुपासकस्यफलमाह ॥ **समर्धयितेति** ॥ योधिकारीएतत्पूर्वप्रकृतभगवत्स्वरूपमेवंसमृद्ध
त्वनिमित्तकोंनामकत्वेनविद्वानक्षरमुद्गीथंभगवंतमुपास्तेसमुक्तस्सन्कामानांकाम्यानांसमर्धयितासमृद्धिकारकोभवतिहवै ॥ ६ ॥
सर्ववेदार्थोप्योंकारार्थइतिभावेनाह ॥ **तेनेति** ॥ तेनोंकारप्रतिपाद्येनविष्णुनास्वप्रतिपाद्यभूतेनेयंत्रयीविद्या वर्ततेप्रवर्तते ।
वेदप्रतिपाद्यस्यैवोंकारप्रतिपाद्यत्वंकुतइत्यतॐकारव्याख्यानत्वात्सर्ववेदस्येतिभावेनाह ॥ **ओमितीति** ॥ अध्वर्युरोमित्युच्चा
र्याश्रावयतिआश्रावमंत्रंपठति । तथाहोतोमित्युच्चार्यशंसतिशंसनमंत्रंपठति । तथोद्गातोमित्युच्चार्योद्गायतिउद्गानमंत्रंपठति । ॥ १४ ॥

उप० । तेनेयंत्रयीविद्यावर्ततओमित्याश्रावयत्योमितिशꣳसत्योमित्युद्गायत्येतस्यैवाक्षरस्यापचित्यैमहिम्नारसेनतेनोभौकुरुतोयश्चैतदेवंवेदयश्चनवेद ॥ ७ ॥

तेनतेषांमंत्राणामोंकारव्याख्यानरूपत्वमवगम्यतइतिभावः । अध्वर्य्वादिरोमित्युच्चार्याश्रावादिमंत्रंकिमर्थंपठतीत्यतआह ॥ एतस्येति ॥ एतस्यैवाक्षरस्योंनामकस्यविष्णोरपचित्यैपूजार्थं । एवमधिकोच्चत्वंपूर्णत्वंसर्ववेदार्थश्चप्रणवार्थइत्युक्तं । इदानींतदनुवादेनार्थांतरमाह ॥ महिम्नेति ॥ महिम्नापूर्णेनरसेनाधिकोच्चेनतेनसर्ववेदप्रसिद्धेनोंनामकेनभगवताप्रेरितावुभौकर्मकुरुतः । तौकौ । यश्चैतत् भगवत्स्वरूपमेवमुक्तरीत्यावेदयश्चनवेदतावुभाविति पूर्वेणसंबंधः ॥ ७ ॥ सर्वोपिकर्मकुरुतइत्यनुक्त्वाज्ञान्यज्ञानिविभागोक्तिःकिमर्थेत्यतस्तत्रावांतरवैलक्षण्यज्ञापनार्थेतिभावेनज्ञान्यज्ञानिनोःकुतोवैलक्षण्यमित्यतोज्ञानाज्ञानयोरेववैलक्षण्यादितिभावेनाह ॥ नानात्विति ॥ विद्याचाविद्याच परस्परयोगेचशब्दौ तुविशेषेण नानाविलक्षणे । कुतः फलवैलक्षण्यादित्याह ॥ यदेवेति ॥ श्रद्धयाश्रद्धायुक्तयाउपनिषदाउपनिषीदतीत्युपनिषत् योग्यया । विद्ययाज्ञानेनैवयत्कर्मकरोतितदेववीर्यवत्तरमनंतफलसाधनंभवति । अत्रविद्याशब्दस्यापरोक्षज्ञानपरत्वेमोक्षगतानंदातिशयसाधनंभवतीत्यर्थः । परोक्षज्ञानपरत्वेत्वपरोक्षज्ञानद्वारामोक्षसाधनंभवतीत्यर्थः । अविद्ययायत्करोतिनतदेवमितिभावः । एवंकृतमोंकारव्याख्यानमुपसंहरति ॥ इतीति ॥ इतिपूर्वोक्तप्रकारेणैतस्यैवपूर्वोक्तस्यैवाक्षरस्याक्षरनामकस्यभगवतउपसमीपेवर्त्तमानस्यप्रणवस्यव्याख्यानंभवतीत्यर्थः । अत्रकेचिदध्यापकाः अथहयएवायंमुख्यप्राणस्तमुद्गीथमुपासीततस्येतरैःप्राणैरुपव्याख्यानंभवतीतिपठंति ।

उप० । नानातुविद्याचाविद्याचयदेवविद्ययाकरोतिश्रद्धयोपनिषदातदेववीर्यवत्तरंभवतीतिखल्वेतस्यैवाक्षरस्योपव्याख्यानंभवति । अथहयएवायंमुख्यप्राणस्तमुद्गीथमुपासीततस्येतरैःप्राणैरुपव्याख्यानंभवति ॥ ८ ॥ **प्रथमःखंडः** ॥ १ ॥

तस्यायमर्थः । अथप्रणवाख्यस्यभगवतःउपास्तिकथनानंतरंतदुपास्त्यधिष्ठानमुच्यतइतिशेषः । यएवायंप्रमाणसिद्धोमुख्यप्राणस्तंतत्रोद्गीथंभगवंतमुपासीत । कोविशेषस्तस्य । येनतत्रैवभगवदुपास्तिःकर्तव्येत्यतआह ॥ **तस्येति** ॥ तस्यमुख्यप्राणस्येतरैःप्राणैर्नासिक्यप्राणादिभिरुपव्याख्यानमुपपन्नंविशिष्टतयाकथनंभवतीति ॥ ८ ॥ **प्रथमःखंडः** ॥ १ ॥ तात्पर्याप्रतीतेरुत्तरखंडमवतारयति ॥ **उद्गीथाख्यस्येति** ॥ ओमित्येतदक्षरमुद्गीथमुपासीतेत्युद्गीथाख्यस्यविष्णोरुपास्तिःकर्तव्येत्युक्तं । तत्रनतावत्केवलस्यविष्णोरुपास्तिःकर्तुंयुक्ता । सर्वेषांतदनधिकारात् । किंतुक्वचित्प्रतिमायां । तत्रापिनसाधारणप्रतिमायांतदुपास्तिर्युक्ता । फलाधिक्याभावात् । किंतुविशिष्टायामेव । अतःसाकेत्याशंकायामिदमाहेतिभावः । वायुरेवाधिकारिवर्गइतिशेषः । किंततइत्यतउक्तमतइति । वायोःसर्वलोकाधारत्वेनतदाश्रितेतरपदार्थसाधारण्यव्यावर्तनायततोप्युत्तमत्वेनेत्युक्तंदर्शयति देवासुराइतिखंडेन वेदपुरुषइतिशेषः । विष्णोर्विशिष्टप्रतिमावायुरेवेत्यत्रप्रमाणआह ॥ **वायाविति** ॥ सूर्योग्निर्ब्राह्मणोगावोवैष्णवःखंमरुज्जलं । भूरात्मासर्वभूतानिभद्रपूजापदानिमइतिपूर्ववाक्येमरुतोभगवत्पूजास्थानत्वमुक्त्वातत्प्रकारोवायावित्यनेनोच्यते । वायौमुख्यधिया वायोःसर्वोत्तमज्ञानेन । मांयजेतेतिपूर्वेणान्वयः । यदिवायुर्विष्णोर्विशिष्टप्रतिमानस्यात्तदावायुसर्वोत्तमत्वज्ञानंकथंविष्णुपूजास्यादितिभावः । उक्तंच सर्वदेवोत्तमोवायुरितिज्ञानान्नचापरं । प्रियमस्तिहरेः

भाष्यं । उद्गीथाख्यस्यविष्णोर्विशिष्टप्रतिमावायुरेव । अतस्तस्यसर्वोत्तमत्वज्ञानपूर्वकंतस्मिंस्ततोप्युत्तमत्वेनोपासितएवभगवान्सम्यक्फलंददातीतिदर्शयति । वायौमुख्यधियेतिचेतिभगवद्वचनं ।



किंचित्तथावायोर्हरेर्विदइति । मांयजेतेत्युक्तास्मच्छब्दवाच्यः कइत्याशंकानिरासायभगवद्वचनमित्युक्तं । भगवतोवासुदेवस्यवचनमित्यर्थः । नकेवलंवेदपुरुषोदर्शयति । किंतुभगवद्वचनंचविवक्षितमर्थंदर्शयतीतिचशब्दार्थः । ननुज्ञानिनोदेवामुख्यप्राणमुद्गीथाख्यविष्णोर्विशिष्टप्रतिमांजानंत्येव । अतःकिमर्थंस्वशत्रुजयायपापवेध्यनासिक्यप्रणादावुद्गीथमुपास्यतेषामसुरकृतपापवेधे अंततोमुख्यप्राणउद्गीथमुपासितवंतइत्याशंकांपरिहर्तुंतस्यसर्वोत्तमत्वज्ञानपूर्वकमित्याद्युक्तमर्थंप्रमाणेनद्रढयन्नाह ॥ **यस्मादिति** ॥ अखिलात्जगतोवायोर्मुख्यतया । तस्माद्वायोःस्वस्यमुख्यतयावायौस्मृतोविष्णुःपरांतुष्टिंगमिष्यतीतिसंबंधः ॥ **विचार्येति** ॥ ज्ञानिभिरपिदेवैर्वायोःसर्वोत्तमत्वनिर्णयायेतिपूरणीयं । पापवर्जितेप्राणइत्यन्वयः । सकलैर्देवैर्दैत्यजयेतिचोक्त्या श्रुतौदेवासुरशब्दौप्रसिद्धदेवासुरपरावेवेत्युक्तंभवति । तेनशास्त्रोद्भासिताइंद्रियवृत्तयोद्योतनाद्देवास्तद्विपरीताइंद्रियवृत्तयःस्वेष्वेवासुषुरमणादसुराइतिपरकीयंव्याख्यानमपास्तं । देवासुरशब्दयोरूढिपरित्यागेनयौगिकार्थग्रहणेकारणाभावात् । तेहनासिक्यंप्राणमुद्गीथमुपासांचक्रिरइत्यादौप्राणवाक्चक्षुःश्रोत्रमनःशब्दाःइंद्रियपराइत्यसत् । तद्धदेवाइतिदेवोपक्रमविरोधात् । एवमुखल्वेतादेवताःपाप्मभिरुपासृजन्नेवमेनाःपाप्मनाविध्यन्इतिश्रुत्यंतरेदेवानामेवासुरकृतपापविद्धत्वोक्तेश्चेतिभावेनान्येषामपिपापवर्जितत्वेकोविशेषोमुख्यप्राणस्येत्यतःतंहासुराःपाप्मनाविविधुरित्यादिवाक्यपंचकंव्याचष्टे ॥ **वायुपुत्रमिति** ॥ यदादेवानासिक्यप्राणा

भाष्यं । यस्माद्वायौस्मृतोविष्णुर्वायोर्मुख्यतयाऽखिलात् । स्वस्यमुख्यतयातस्मात्परांतुष्टिंगमिष्यति । अतोविचार्यसकलैर्देवैःप्राणेजनार्दनः । उपासितोदैत्यजयकारणात्पापवर्जिते । वायुपुत्रंचनासिक्यमग्निंवागात्मकंतथा । सोमंश्रोत्रात्मकंचैवसूर्यंचक्षुःस्वरूपिणं । रुद्रंमनस्स्वरूपंचशेषंचाहंस्वरूपिणं । चित्तात्मकंचगरुडंपापेनविविधुःसुरान् ।

दावुद्गीथनामानंविष्णुमुपासांचक्रिरेतदेतिग्राह्यं । नासिकायांभवोनासिक्यस्तदभिमानीतियावत् । वागात्मकंवागभिमा
निनं । एवमुत्तरत्र । प्राणस्यसर्वदेवोत्तमत्वलाभायमनःप्रभेदाहंचित्ताभिमानिनौशेषगरुडावुपात्तौ । बुद्धिचेतनाभिमा
निनावपिग्राह्यौ । अन्येंद्रियाभिमानिनामुपलक्षणमेतत् । विविधुरेवेत्येवशब्दसंबंधः । तस्मात्तेनोभयंजिघ्रतिसुरभिचदुर्गं
धिच । पाप्मनाह्येषविद्धइतिवाक्यपंचकंव्याचष्टे ॥ तैरिति ॥ अथहयएवायंमुख्यप्राणस्तमुद्गीथमुपासांचक्रिरेतंहासुराऋ
त्वाविदध्वसुरितिवाक्यंतमुद्गीथमितिसामानाधिकरण्येनमुख्यप्राणोद्गीथयोरभेदउच्यतइतिप्रतीतिनिरासायव्याचष्टे ॥ मुख्य
वायाविति ॥ अनेनतमितिद्वितीयासप्तम्यर्थेत्युक्तंभवति । प्राणोद्गीथयोरभेदस्यबाधितत्वात् । नासिक्यप्राणमुद्गीथमित्या
दिसामानाधिकरण्येनतदभेदप्राप्तावुद्गीथाख्यस्यविष्णोःपापवेधप्राप्तेश्च । शरीरस्थइत्यनेनायमित्यस्यशरीरस्थइत्यर्थःसूचितोभव
ति ॥ सूर्यगइतियएवासौतपतितमुद्गीथमुपासीतेत्युत्तरखंडविवक्षयोक्तं उद्गीथनामानमुपासांचक्रिरइतिशेषः। विदध्वसुः विविधुः।
सयथाश्मानमितिदृष्टांतवाक्यसंघटनायतंविदध्वसुरित्येतदेवापेक्षितपूरणेनपुनर्व्याचष्टे ॥ यदेति ॥ इदानीं सयथाश्मानमाख
णमृत्वाविध्वंसतएवमितिवाक्यंव्याचष्टे ॥ अखन्याश्मानमिति ॥ तथासुराविध्वस्ताइतिसंबंधः। अस्त्वेवमसुरकृतपापवेधशू
न्यत्वात्पापवर्जितेमुख्यप्राणेदेवैर्जनार्दनउपासितइति। किंततइत्यतआह ॥ तस्मादिति ॥ देवैःपापवर्जितेशरीरस्थेसूर्यगेचमु

भाष्यं । असुरास्तैर्यतोविद्धास्तस्मात्तेदोषयोगिनः । मुख्यवायौयदादेवाःशरीरस्थेचसूर्यगे । विष्णुमुद्गीथनामानंतदातंचविदध्वसुः । यदाविदध्वसुःप्राणंविध्वस्तास्ते
तदाऽसुराः। अखन्याश्मानमेवाप्यलोष्टोविध्वंसतेयथा । प्रतिमांप्रेयसींप्राप्यविष्णोःप्राणंतथाऽसुराः । तस्मादादित्यसंस्थेवाशरीरस्थेपिवाऽनिले । वलज्ञानात्मके

ख्यवायौविष्णोरुपासितत्वादित्यर्थः। आदित्यसंस्थेऽनिलेविष्णुमुपासीतेत्यनेनयएवासौतपतितमुद्गीथमुपासीतेत्युत्तरखण्डगतमुपासनाविधिवाक्यंव्याख्यातं। शरीरस्थेऽनिलेविष्णुमुपासीतेत्यनेनपूर्वखण्डेयत्किंचिदध्यापका अथहयएवायंमुख्यप्राणस्तमुद्गीथमुपासीतेतिपठंतितद्व्याख्यातंभवति। बलज्ञानात्मकइतिप्राणशब्दार्थः। प्रकर्षेणासमंताण्णंबलंयस्यासौतथोक्तः। णकारोबलमितिश्रुतेः। प्रकृष्टमणनंज्ञानंयस्यासौतथोक्तइतिवा अणपणगतावितिधातोः। तपतीत्युक्त्यनुरोधेनोज्ज्वलात्मनीत्युक्तं। तल्लब्धमर्थमाह॥ दिव्याकृतिमतीति॥ ततो वायोः। तंबृहस्पतिरुद्गीथमुपासांचक्रइतिवाक्यंसजातीयोपलक्षणपरमितिभावेनैतमुएवबृहस्पतिंमन्यंतेइतिवाक्यसंघटनायैतदुपास्तिफलमाह॥ अस्येति॥ देवाइत्युपलक्षणं। ऋषयश्चेत्यपिग्राह्यं। तेनतंहांगिराउद्गीथमुपासांचक्रइत्युक्तोपासनस्यापिफलंलब्धं। सर्वनामानि स्वस्वनामानि। अनेनोपासांचक्रइत्यनंतरं तथाबृहस्पतिरितिनामभेजइतिपूरणीयमित्युक्तंभवति। नन्विंद्रबृहस्पत्यादीनिदेवनामान्यंगिरःप्रभृतीनिऋषिनामानिचेंद्रबृहस्पत्यादीनांस्वतएवसिद्धानि। अतःकथमस्योपासनयातेषांतत्तन्नामलाभइत्युच्यतइत्यतोनैतानितेषांनामानि। किंतुमुख्यप्राणस्यैवमुख्यतः। नचप्रसिद्धिविरोधः। तदुपासनालब्धतत्तन्नामकत्वेनतदुपपत्तेरितिभावेनप्रवृत्तमेतमुएवबृहस्पतिंमन्यंतइतिवाक्यमुपलक्षणपरमित्यभिप्रेत्यव्याचष्टे॥ इंद्रइति॥ इत्याद्याः शब्दाः। आदिपदेनर्षिवाचकशब्दाअपिग्राह्याः। नन्वेवंतर्हियोदेवानांनामधा इंद्रंमित्रंवरुणमग्निमाहुरि

भाष्यं। दिव्याकृतिमत्युज्ज्वलात्मनि। सर्वदेवोत्तमंविष्णुमुपासीतततोऽधिकं। अस्योपासनयादेवास्सर्वनामानिभेजिरे। इंद्रोबृहस्पतिश्शंभुरित्याद्याःप्राणगायतः। प्राणस्यनामशब्दाश्चमुख्यतोविष्णुसंस्थिताइतिप्रध्याने।

त्यादिश्रुतिविरोधइत्यतआह ॥ **प्राणस्येति** ॥ नामशब्दाः अभिधायिशब्दाः । प्राणस्यशब्दाअपिमुख्यतोविष्णुसंस्थिताः । नामप्रसिद्धमितिवार्थः । तद्धदेवाउद्गीथमाजह्रुरित्यत्रोद्गीथनामानंविष्णुंबलादाहृतवंतोदेवाइतिप्रतीयते तदयुक्तं । तथासतिविष्णोरशक्तत्वापत्तेरित्यतस्तद्व्याचष्टे ॥ **उद्गीथाख्यमिति** ॥ आजह्रुरभीष्टदंचक्रुः । ननुबलादाहरणेप्राणएवोपासनंकार्यमितिनिर्बंधोऽयुक्तः । बलादाहृतस्यान्यत्रमनःप्रसादाभावेनयत्रमनःप्रसादस्तत्रैवफलप्रदत्वोपपत्तेः । उपास्त्याहरणेतुसनिर्बंधोव्यर्थः । अन्यत्राप्युपासितस्यफलप्रदत्वसंभवादित्यतआह ॥ **तथापीति** ॥ यद्यप्युपास्त्याऽऽजह्रुर्नतुबलात्तथापीत्यर्थः । यथाश्मानमाखणमृत्वाविध्वंसतएवंहैवसविध्वंसतइत्यत्रपूर्ववाक्यवदेवयथाश्मानमाखणमृत्वाविध्वंसतेलोष्टइतिव्याख्यानमसत् । उपासकेउपास्यसाम्यस्यैववक्तव्यत्वादितिभावेनयथाश्मानमित्यारभ्यअभिदासतीत्यंतंवाक्यंव्याचष्टे ॥ **प्राणमिति** ॥ अनेनाश्मानमाखणमित्ययंशब्दःप्राणपरः । विध्वंसतइत्यनंतरमसुरवर्गइतिशेषइत्युक्तंभवति । अतएववाक्यशेषेसएषोश्माखणइत्युक्तं । उक्तंचान्यत्र आखणाश्मसमोहिसइति । अभिदासतीत्यस्यार्थोदातुमिच्छतीति । प्रतीपमितिशेषोक्तिः । तदुपासकस्यापीत्यपिशब्दसंबंधः । चशब्दात्पापंकामयतइतिग्राह्यं । सोपिविध्वंसतइतिशेषः । एतमुएवांततोविस्त्वोत्क्रामतीत्यत्रांततइत्येतत्परित्यज्यान्यांशंव्याचष्टे ॥ **एतमिति** ॥ मुख्यप्राणमित्यर्थः । अवधारणार्थोसंशयमिति । नन्वेवं तमेवंविद्वानित्यादिश्रुतिविरोधइत्यतआ



---

भाष्यं । उद्गीथाख्यंपरंविष्णुमुपास्त्याजह्रुरंजसा । तथापिप्राणएवासौप्रीतिमागादुपासितइतिच । प्राणंप्राप्यैवविध्वस्तायथासर्वेऽसुरास्तथा । तदुपासकस्ययश्चापिप्रतीपंदातुमिच्छतीतिच । एतंविदित्वासंसारान्मुक्तिमेष्यत्यसंशयं ।

ह ॥ **विष्णुमपीति** ॥ अनेनश्रौतउशब्दोपिशब्दार्थः । तेनविष्णुसमुच्चयः । ततश्चैतंमुख्यप्राणंविदित्वांततोविष्णुमपिविदित्वोत्क्रामत्येवेतिवाक्यंयोजनीयमितिसूचितंभवति । तद्विवरणरूपंव्याददात्येवांततइतिवाक्यंव्याचष्टे ॥ **वीतीति** ॥ तत्रनिमित्तमाह ॥ **विशिष्टत्वादिति** ॥ नरमादीनांब्रह्मादिभ्योविशिष्टत्ववदस्यविशिष्टत्वमपितुमहान्विशेषइतिज्ञापनायतुशब्दः । आददात्येवावगच्छत्येव । अंते प्राणस्य । ननुप्राणवेत्तांतेविष्णुमगवच्छतीत्यनुपपन्नं । विष्णुज्ञानाभावेपिप्राणपरिज्ञानसंभवादित्यतोत्रविवक्षितंप्राणज्ञानमाह ॥ **प्राणादिति** ॥ तुशब्दोऽवधारणार्थः । अवरानेवेत्येवशब्दसंबंधः । विष्णोरवरत्वेन जीवेभ्यउत्तमत्वेनयेप्राणंविदुरितियावत् । एतादृशंचप्राणज्ञानमंततोविष्णुज्ञानंविनानसंभवतीतिभावः । यएवायंमुख्यप्राणस्तमुद्गीथमुपासांचक्रिरइत्यत्रतमितिद्वितीया मुख्यवायौयदादेवाइत्यनेनसप्तम्यर्थाव्याख्याता । तत्रनियामकंप्रमाणंपठति ॥ **प्राणइति** ॥ प्राणउद्गीथइत्यादिवाक्यगताःप्राणइत्यादिप्रथमाःनामब्रह्मेत्यादिवाक्यगतानामेत्यादिप्रथमाश्चसप्तम्यर्थाःसमुद्दिष्टाइतिप्रसंगादुत्तरश्रुतिव्याख्यानायोक्तं । तत्रनियामकंसूत्रंपठति ॥ **सप्तस्विति** ॥ प्रकृतमाह ॥ **प्राणमिति** ॥ प्राणमुद्गीथमित्यादिवाक्यगताप्राणमित्यादिद्वितीयेत्यर्थः ॥ ७ ॥ **ततश्चायंखंडार्थः** ॥ देवाश्चासुराश्च देवासुराः । हवाइतिवृत्तार्थस्मरणा

---

भाष्यं । विष्णुमप्यंततोवेत्तिप्राणवेत्तायतःस्फुटं । वीतिविष्णुस्समुद्दिष्टोविशिष्टत्वात्तुसर्वतः । आददात्येवतंप्राणवेत्तांतेतत्प्रसादतः । प्राणात्परंतुयेविष्णुंजीवांश्चैवावरांस्ततः । येविदुस्तेविदुःप्राणंनान्यथातुकथंचनेतिच । प्राणउद्गीथइत्याद्यानामब्रह्मादिकास्तथा । सप्तम्यर्थाःसमुद्दिष्टाःसप्तसुप्रथमायतः । प्राणमुद्गीथमित्याद्याद्वितीयासप्तमीमतेतिच ॥खं० २॥

उप० । देवासुराहवैयत्रसंयेतिरउभयेप्राजापत्यास्तद्धदेवाउद्गीथमाजह्रुरनेनैनानाभिभविष्यामइति ॥ १ ॥

थौंनिपातौ । यत्रयदा । संयेतिरे योद्धुंसन्नद्धाअभवन् । योद्धुंसन्नद्धत्वेदायादत्वंकारणमाह ॥ उभयइति ॥ उभयेपितेदेवा सुराः प्राजापत्याः प्रजापतेर्ब्रह्मणःकश्यपस्यवापुत्राः । यदासंयेतिरे । किंतदेत्यतआह ॥ तद्धेति ॥ तत्तदा असुराणांबहुत्वा च्छंकरवरसद्भावाच्च तैर्जितादेवा उद्गीथंउद्गीथनामकंविष्णु मुपास्त्याऽऽजह्रुराहृतवंतः अभीष्टदंकृतवंतइतियावत् । हेतिप्रसिद्धि माह । उद्गीथाहरणेतेषामभिप्रायमाह ॥ अनेनेति ॥ अनेनो द्गीथेनोपासितेन तत्प्रसादाप्तबलेन एतानसुरानभिभविष्यामोज यामइतिभावेनाजह्रुरितिसंबंधः ॥ १ ॥ उद्गीथाख्यस्यविष्णोर्विशिष्टप्रतिमामुख्यप्राणएव । अतस्तस्यसर्वोत्तमत्वज्ञानपूर्वंतस्मिं स्ततोप्युत्तमत्वेनोपासितएवभगवान्सम्यक्फलंददातीतिजानंतोपि मुख्यप्राणस्यसर्वोत्तमत्वप्रकटनायादौतावत् ते देवाः । नासि क्यं नासिकायांभवं । प्राणं । द्वितीयासप्तम्यर्थे । नासिकाभिमानिनिप्राणेमुख्यवायुपुत्रे उद्गीथं विष्णुं । उपासांचक्रिरे ह प्रसिद्धं । तेऽसुराअनेनोद्गीथेननोजेष्यंतीतिविदुरितिवक्तव्यं।एवंज्ञातदेवाभिप्राया असुराः। तंउद्गीथोपास्तिप्रतिमाभूतंनासिक्यप्राणं।पाप्मना पापेन । विविधुः वेधितवंतः । नासिक्यप्राणस्यपापविद्धत्वेकार्यंप्रमाणयति ॥ तस्मादिति ॥ हि यस्मात् । एषनासिक्यप्राणः । पाप्मनाविद्धस्तस्मादेव । तेन तदभिमतेन । नासिकारूपकरणेन। सुरभिचदुर्गंधिचेत्युभयं जिघ्रतिजीवः। अन्यथातन्नस्यादितिभावः ॥ २ ॥ एवमुत्तरत्रापियोजनाद्रष्टव्या । अथ नासिक्यप्राणस्यपापवेधानंतरं । वाचं वागभिमानिन्यग्नौ ॥ ३ ॥ चक्षुस्तदभिमानिसूर्ये

उप० । तेहनासिक्यंप्राणमुद्गीथमुपासांचक्रिरे । तꣳहासुराःपाप्मनाविविधुस्तस्मात्तेनोभयंजिघ्रतिसुरभिचदुर्गंधिचपाप्मनाह्येषविद्धः ॥ २ ॥ अथहवाचमुद्गीथमुपासांचक्रिरे ताꣳहासुराःपाप्मनाविविधुस्तस्मात्तयोभयंवदतिसत्यंचानृतंचपाप्मनाह्येषाविद्धा ॥ ३ ॥ अथहचक्षुरुद्गीथमुपासांचक्रिरेतद्धासुराःपाप्मनाविविधुस्तस्मात्तेनोभयंपश्यतिदर्शनीयं चादर्शनीयंचपाप्मनाह्येतद्विद्धं ॥ ४ ॥

॥ ४ ॥ श्रोत्रं तदभिमानिसोमे ॥५॥ मन स्तदभिमानिरुद्रशेषगरुडेषु ॥६॥ उपलक्षणमेतत्। अथसर्वेषामिंद्रियदेवतानामसुरकृतपापवेधानंतरंतेषांविशिष्टप्रतिमात्वाभावंप्रकटीकृत्य। यएवायं पूर्वंसामनामकत्वेनोक्तो मुख्यप्राणःतंतत्रो द्गीथंभगवंत मुपासांचक्रिरे। तंमुख्यप्राण मसुराःपूर्ववदेव ऋत्वा प्राप्य। विदध्वसुर्विविधुः। यदातंविदध्वसुस्तदाविध्वस्ताअभवन्नितियोज्यं । तत्र दृष्टांतमाह ॥ यथेति ॥ यथाआखणंसर्वथाअखन्यमश्मानंपाषाणंऋत्वाप्राप्यविध्वंसेतलोष्टएवंतंहासुराऋत्वाविदध्वसुरितिसंबंधः ॥ ७ ॥ एवंमुख्यप्राणोपासकस्यफलमाह ॥ यथेति ॥ यथाऽखन्यमश्मानंऋत्वाविध्वंसतेऽसुरवर्गइतिशेषः। एवमेवसविध्वंसतेहनिश्चितं। कोसौ यःपुरुषएवंविदि। असुरकृतपापाविद्धतयाभगवन्मुख्यप्रतिमात्वेनमुख्यप्राणोपासके। पापं पापफलंदुःखं कामयते। यश्चैनंमुख्यप्राणोपासकंप्रति अभिदासति प्रतीपंदातुमिच्छति। सविध्वंसतइतिपूर्वेणान्वयः। नन्वसुरवर्गोमुख्यप्राणंप्राप्यैवविध्वंसतइत्युक्तं। नत्वाखणमश्मानंप्राप्य। नचपूर्ववाक्यवदत्रापिलोष्टएवग्राह्यः । उपासकेउपास्यसाम्यस्यवक्तव्यत्वादित्यतआखणमश्मानमित्यस्यार्थमाह ॥ सएषइति ॥ सएषमुख्यप्राणोश्माखणःआखणाश्मेत्युच्यते। आखणाश्मसदृशत्वात्। आखणाश्मसमोहिसइत्युक्तेः। एवंचाश्मानमाखणमित्यस्याखणाश्मसदृशंमुख्यप्राणमित्यर्थइतिनानुपपत्तिरितिभावः ॥८॥

---

उप० । अथहश्रोत्रमुद्गीथमुपासांचक्रिरेतद्धासुराःपाप्मनाविविधुस्तस्मात्तेनोभय१ँशृणोतिश्रवणीयंचाश्रवणीयंचपाप्मनाह्येतद्विद्धं ॥५॥ अथहमनउद्गीथमुपासांचक्रिरेतद्धासुराःपाप्मनाविविधुस्तस्मात्तेनोभयंसंकल्पयतेसंकल्पनीयंचासंकल्पनीयंचपाप्मनाह्येतद्विद्धं ॥ ६ ॥ अथहयएवायंमुख्यप्राणस्तमुद्गीथमुपासांचक्रिरेत१ँहासुराऋत्वाविदध्वसुर्यथाश्मानमाखणमृत्वाविध्व१ँसेतैवं ॥ ७ ॥ यथाश्मानमाखणमृत्वाविध्व१ँसतएव१ँहैवसविद्ध्व१ँसेतयएवंविदिपापंकामयतेयश्चैनमभिदासातिसएषोश्माखणः ॥ ८ ॥

मुख्यप्राणेनासिक्यप्राणादिवैलक्षण्यमाह ॥ **नैवेति** ॥ यद्वा मुख्यप्राणस्यपापाविद्धत्वेकार्यंप्रमाणयति ॥ **नैवेति** ॥ हियस्मादेषोपहतपाप्मातस्मादेवैतेनमुख्यप्राणेन ( तदभिमानेनमौक्तेनस्वरूपदेहेन ) सुरभिनविजानातिदुर्गंधिचनविजानाति । केवलंसुरभ्येवजानाति । नतूभयविधमितिभावः । उपलक्षणमेतत् । सत्यंचानृतंचनवदतीत्याद्यपिग्राह्यं । एवंमुख्यप्राणस्यैवसर्वदेवोत्तमत्वेपापाविद्धत्वंहेतुरित्युक्तं । इदानींहेत्वंतरमाह ॥ **तेनेति** ॥ तेनमुख्यप्राणेनप्रेरितोजीवोयदश्नातियत्पिबतितेनेतरान्प्राणानिंद्रियदेवानवतिरक्षति । मुख्यप्राणस्यैवसर्वोत्तमत्वेहेत्वंतरमाह ॥ **एतमिति** ॥ उशब्दोपिशब्दार्थः । एतंमुख्यप्राणंविदित्वोत्क्रामत्येव । संसारान्मुक्तिमेष्यत्यसंशयं । नचश्रुत्यंतरविरोधः । अंततःसर्वोत्तमत्वेनविष्णुमपिविदित्वोत्क्रामति । प्राणज्ञानीविष्णुंकथंसर्वोत्तमत्वेनजानीयादित्यतउक्तंविवृणोति ॥ **व्याददातीति** ॥ यतःप्राणवेत्तांततस्तस्याप्युत्तमत्वेनविशिष्टत्वाद्विविष्णुमाददात्येवसम्यगवगच्छत्येव । प्राणप्रसादात्विष्णववरत्वेनसर्वजीवोत्तमत्वेनप्राणज्ञानिनएवप्राणवेत्तृत्वादितिभावः॥९॥एवंदेवामुख्यप्राणेभगवंतमुपास्यस्वकार्यसिद्धिंप्राप्ताइत्युक्तं । इदानीमृषयस्तमुपास्यस्वस्वनामानिभेजिरइत्युपलक्षणमाह॥**तंहेत्यादिना** ॥ अंगिरानामर्षिस्तंतत्रमुख्यप्राणेउद्गीथंभगवंतमुपासांचक्रे । तेनसोंगिराइतिनामधेयंलेभइतिवक्तव्यं । नन्वंगिराइतिनामतस्यर्षेरेवप्रसिद्धं । अतःकथंमुख्यप्राणेउद्गीथोपासनेनतस्यैतन्नामधेयलाभइत्यतोनेदमृषिनाम । किंतुमुख्यप्राणस्यैव । इतरत्रप्रसिद्धेस्तद्दत्तत्वेनोपप

उप० । नैवैतेनसुरभिनदुर्गंधिविजानात्यपहतपाप्माह्येषतेनयदश्नातियत्पिबतितेनेतरान्प्राणानवत्येतमुएवांततोवित्त्वोत्क्रामतिव्याददात्येवांततइति ॥ ९ ॥ त९ंहांगिराउद्गीथमुपासांचक्रएतमुएवांगिरसंमन्यंतेंगानांयद्रसस्तेन ॥ १० ॥



त्तेरितिभावेनाह ॥ **एतमिति** ॥ एतमेवमुख्यप्राणमेवांगिरसंमुख्यतोंगिरसनामकंमन्यंतेवैज्ञानिनः । तत्रांगिरसशब्दंनिर्वक्ति ॥ **अंगानामिति** ॥ यत्यस्मादंगानांशरीरावयवानांरसोनियामकोंगानामप्रधानानांपृथिव्यादिसरस्वत्यंतानांरसःश्रेष्ठोवातेनकारणेनांगिरसंमन्यंतइत्यन्वयः ॥ १० ॥ नकेवलमृषयएवतमुपास्यस्वस्वनामानिभेजिरेकिंतुदेवाअपीत्युपलक्षणयाह ॥ **तंहबृहस्पतिरिति** ॥ व्याख्यातप्रायं । वाकूवागभिमानिनीसरस्वती । बृहतीस्त्रीगुणैःसर्वपूर्णत्वात् । यथोक्तं । स्त्रीगुणैःसर्वपूर्णत्वाद्बृहतीतुसरस्वतीति । तस्याबृहत्याएषमुख्यप्राणःपतिर्हियस्मात्तेनबृहस्पतिंमन्यतइत्यर्थः ॥ ११ ॥ उपलक्षणमेतत् । तमिंद्रउद्गीथमुपासांचक्रेएतमुएवेंद्रंमन्यतइत्याद्यपिग्राह्यं । उपलक्षणताज्ञापनायैवाह ॥ **तंहायास्यइति** ॥ अयास्यःकश्चिदृषिः । यद्यस्मादास्यादयतेमुखाद्गच्छतितत्रप्रविश्यतंनियमयतीतियावत् । तथाहिश्रुतिः । चक्षुःश्रोत्रेमुखनासिकाभ्यांप्राणःस्वयंप्रतिष्ठतइति । मुखान्निर्गच्छतिश्वासोच्छ्वासरूपेणेतिवार्थः ॥ १२ ॥ यज्ञेवायुरेवोद्गाताकर्तव्यः । तदभावेतज्ज्ञानीवा । तस्यैवतत्रप्राप्तविघ्नपरिहारक्षमत्वात् । यजमानाभीष्टप्रदानसमर्थत्वाच्चेतिभावेनाह ॥ **तंहेति** ॥ तंमुख्यप्राणंदाल्भ्योदल्भपुत्रोबकोनामतोविदांचकारज्ञातवान् । अतःसबकोनैमिशीयानांनैमिषदेशीयानामृषीणांसत्रिणामुद्गाताबभूव । सबकोमुख्यप्राणज्ञानसामर्थ्यादेवैभ्यःऋषिभ्यःकामान्काम्यान्नुद्दिश्यागायति । हस्मेत्याश्चर्यद्योतकं । तेकामास्तैःप्राप्ताश्च ॥१३॥ यजमानाभीष्टप्रदानसमर्थोद्गातृज्ञेयमुख्यप्राणाख्यविशि

उप० । त९ंहबृहस्पतिरुद्गीथमुपासांचक्रएतमुएवबृहस्पतिंमन्यंतेवाग्घिबृहतीतस्याएषपतिस्तेन ॥ ११ ॥ त९ंहायास्यउद्गीथमुपासांचक्रएतमुएवायास्यंमन्यंतआस्याद्यदयतेतेन ॥ १२ ॥ त९ंहबकोदाल्भ्योविदांचकार । सहनैमिशीयानामुद्गाताबभूवसहस्मैभ्यःकामानागायति ॥ १३ ॥

ष्टप्रतिमात्वेनभगवदुपासकस्यफलमाह ॥ आगातेति ॥ आगंता । यद्वाअन्योप्युद्गातायदिमुख्यप्राणज्ञानीतत्रभगवंतमुपास्तेतर्हि सोपियजमानाभीष्टप्रदानसमर्थइत्याह ॥ आगातेति ॥ इत्यध्यात्मं मुख्यप्राणोद्गीथोपास्तिरुक्तेतिशेषः ॥ १४ ॥ द्वितीयःखंडः ॥ २ ॥ एवमध्यात्मंवायोःसर्वोत्तमत्वज्ञानपूर्वकंतस्मिंस्ततोप्युत्तमत्वेनोपासनीयोभगवानित्युक्तं । इदानीमधिदैवतंतथोद्गीथोपास्तिमाह ॥ अथेत्यादिना ॥ तत्रयएवासौतपतितमुद्गीथमुपासीतेतिवाक्यंसूर्यगेमुख्यवायावुद्गीथोपास्तिःकर्त्तव्येतिप्राग्व्याख्यातं । तदसत् । यएवासौतपतीतितपनकर्तृत्वेनसूर्यस्यैवप्रतीत्यासूर्यांतर्गतभगवदुपास्तिकर्तव्यतायाएवप्रतीतेरित्यतस्तपनकर्तृत्वमपिसूर्यस्थप्राणस्यैवधर्मोनसूर्यस्येतिप्रमाणेनैवाह ॥ आदित्येति ॥ अपर आदित्यः । किंतत्तपनमित्याशंकांपरिहरनूतपनस्यादित्यस्थत्वगोचरप्रमाणविरोधंचपरिहरति ॥ प्रकाशनमिति ॥ काष्टवत्काष्टगततपनमिव । ननुयदियएवासौतपतीत्यत्रसूर्यमण्डलगतोवायुरुच्यतेतदोत्तरवाक्येउद्यन्नित्युक्तिरयुक्तास्यात् । सूर्यमण्डलस्यनित्योदितत्वेनतद्गतस्यतस्योदयास्तमयशून्यत्वादित्यतस्तदर्थमेवप्रजाभ्यइत्युक्तमित्याशयेनोद्यन्वाएषप्रजाभ्यइत्यादिवाक्यंव्याचष्टे ॥ सूर्येति ॥ एवशब्देनवाइत्येतदवधारणार्थकमित्युक्तंभवति । गायतिचेतिचशब्दान्वयः । तेनतमोभयमपहंतीतिश्रुत्युक्तस्यसमुच्चयः । जनार्दनमितिशेषोक्तिः । ननुसमानउएवायंचासौचोष्णोयमुष्णोसावित्यत्रदेहसूर्यमंडलयोरुष्णत्वेनसाम्यमुच्यते। तथाचपूर्वदेहसूर्यमंडलयोरेवोद्गीथोपास्तिःकार्ये

---

उप० । आगाताहवैकामानांभवतियएतदेवंविद्वानक्षरमुद्गीथमुपास्तइत्यध्यात्मं ॥ १४ ॥ द्वितीयःखंडः ॥ २ ॥

भा० । आदित्यसंस्थितोनित्यंप्राणस्तपतिनापरः । प्रकाशनंचतपनंकाष्टवत्सूर्यगंभवेत् । सूर्यमंडलगोवायुरुदयास्तमयोज्झितः । अपिप्रजाभ्यउद्यंश्चैवोद्गायतिजनार्दनं ।

तिव्याख्येयमित्यतस्तद्यथावद्व्याचष्टे ॥ **आदित्यमंडलस्थइति** ॥ चशब्दतथाशब्दौपरस्परसमुच्चये । द्वितीयचशब्देनउ
ष्णइत्यस्यानुकर्षः । अस्त्वेवंसाम्यंकिंततइत्यतःप्राप्तंतस्माद्वाएतमिममुंचोद्गीथमुपासीतेतिवाक्यंसामानाधिकरण्यभ्रांतिनिरा
सायद्वितीयायाःसप्तम्यर्थत्वमभिप्रेत्यव्याचष्टे ॥ **तस्मादिति** ॥ वाशब्दोवधारणार्थउपासीतेत्यनेनसंबध्यते । अपिशब्दोस्मिन्नि
त्युक्तसमुच्चयार्थः । वाइत्यनुवादेनापीतिव्याख्यानंवा । श्रुतावुपासनफलानुक्तेस्तदाह ॥ **विमोक्षायेति** ॥ स्वरइतीममाचक्षतेस्व
रइतिप्रत्यास्वरइत्यमुमितिवाक्यंव्याचष्टे ॥ **केशवइति** ॥ शरीरस्थःसूर्यस्थमारुतःस्वरइत्युदाहृतइतिसंबंधः । असौसूर्यस्थः
प्रत्यास्वरउदाहृतः । तत्रप्रतीत्येतद्वीप्साभिप्रायमितिभावेनप्रतिप्रतीत्युक्तं । आइत्यनुवादेनसमंततइतिव्याख्यानं । किंप्रतीत्यत
उक्तं ॥ **मामिति** ॥ तथाचयतःआसमंतात्मांप्रतिमांप्रतिवर्त्ततइत्युदाहृतोतएवप्रत्यास्वरः । नतुनिमित्तांतरेण । स्वनामकविष्णुर
तत्वात्स्वरः । प्रत्याचासौस्वरश्चेतिप्रत्यास्वरइत्यर्थः । अथयःप्राणापानयोःसंधिःसव्यानइत्यत्रप्राणापानसंधिप्रवर्तकत्वेनव्यान
स्योत्तमत्वमुच्यते । तत्रकौतौप्राणापानौ नतावन्मुख्यप्राणस्वरूपभूतौ । ताभ्यांतत्स्वरूपभूतव्यानस्योत्तमत्वासंभवात् । अतएवन
दासभूतौ । नापिप्राणापानौदासभूतौ व्यानःस्वरूपभूतइतियुक्तं । भिन्नपंचकग्रहणायोगादित्यतोत्रविवक्षितप्राणादिस्वरूपंवक्तुं

---

भा० । आदित्यमंडलस्थश्चसर्वप्राणिगतस्तथा । वायुस्समानएवायमुष्णोसावपिचस्फुटं । तस्मादस्मिन्नमुष्मिन्वाप्युद्गीथाख्यंजनार्दनं । उपासीतविमोक्षायसर्वकामाप्तयेतथे
तिच । केशवःस्वःस्वतंत्रत्वात्तद्रतेर्मारुतःस्वरः । शरीरस्थश्चसूर्यस्थःप्रतिप्रत्यासमंततः । मांप्रतीत्यतएवासौप्रत्यास्वरउदाहृतः ।

प्राणादिपंचकस्वरूपंतावदाह ॥ **प्राणाद्याइति** ॥ प्राणाद्याःपंचत्रिविधाइत्यन्वयः । त्रैविध्यमेवदर्शयति ॥ **मुख्येति** ॥ मुख्य पंचकरूपएवसन्नस्ति। चशब्दोवधारणार्थोमध्यपंचकएवेत्येतेनसंबध्यते । तुशब्दोवधारणार्थः। तस्य प्रधानवायोः । उक्तविभागस्य प्रकृतानुपयोगात्प्रकृतोपयुक्तविभागांतरमाह ॥ **विभागोन्यइति** ॥ तमेवदर्शयति ॥ **प्राणेति** ॥ तथाचात्रप्राणापानौशेषवींद्रौव्या नःश्रेष्ठोवायुर्विवक्षितइतिनानुपपत्तिरितिभावः। अतएवतत्परइत्युक्तं। अथखलुव्यानमेवोद्गीथमुपासीतेतिवाक्यंसामानाधिकरण्ये नाभेदोक्तिभ्रमनिरासायव्याचष्टे॥ **तस्मिन्निति**॥व्यानइत्यर्थः।श्रुतौ योव्यानःसावाक्यावाक्सर्क्यर्क्तत्सामयत्सामसउद्गीथइत्य त्रव्यानवाक्ऋक्सामोद्गीथानामभेदउच्यतइतिप्रतीयतेतदसत्। तस्यबाधितत्वात्। नचव्यानस्यैववागादिस्थत्वमुच्यतइतिव्याख्ये यं। व्यानस्यापिस्वातंत्र्येणतत्क्रियाप्रवर्तकत्वाभावादित्यतस्तद्व्याचष्टे॥**योसाविति**॥व्यानगतइत्युक्त्याविशेषणीभूतव्यानस्यापिवा गादिगतत्वंलभ्यते।अन्यथाव्यानस्यविशिष्टप्रतिमात्वानुपपादकत्वेनास्यासांगत्यापत्तेः। अतएवव्यानाद्धितत्क्रियाइतिवक्ष्यति।उद्गी थेचगतः। उद्गीथोनामसामभेदः। स्थानभेदेनभेदशंकानिरासायैकइत्युक्तं। तस्मादप्राणन्ननपानन्वाचमभिव्याहरतीत्यादिउद्गायती त्यंतंवाक्यंव्याचष्टे ॥ **तस्मादिति** ॥ तत्क्रियाःवागृगभिव्याहरणसामगानोद्गानरूपक्रियाइत्यर्थः।तस्मादित्युक्तंहेतुंविवृण्वन्नुत्तरत्रा

---

भा० । प्राणाद्यास्त्रिविधाःपंचप्रधानोवायुरेवच । मुख्यपंचकरूपस्सन्गरुडोमध्यपंचकः । अवमःपंचकस्त्वन्येप्राणाद्यास्तस्यसूनवः । इतित्रेधाविभागोयंविभागोन्यश्चतुर्थकः । प्राणापानौशेषवींद्रौतथोदानसमानकौ । रुद्रेंद्रौततपरःश्रेष्ठोवायुर्व्यानउदाहृतः । तस्मिन्तुद्गीथनामानमुपासीतहरिंपरं । योसौव्यानगतोविष्णुःसवागृक्सामगःसदा । उद्गीथे चसएवैकस्तस्माद्व्यानाद्धितत्क्रियाः ।



पिहेतुमाह ॥ **उद्गीथनामेति** ॥ अत्रव्यानशब्देनपृथक्स्थितोव्यानउच्यते । आदिपदेनवागृक्सामोद्गीथगतव्यानरूपचतुष्टयंग्रा ह्यं । तथाचभगवतोवागादिचतुष्टयगतव्यानगतत्वंपूर्वत्रहेतुः । तेनतस्मादित्येतत्विष्ण्वाविष्टस्यव्यानस्यवागादिगतत्वादितिविवृ तं ।पृथक्स्थितव्यानगतत्वंतूत्तरत्रहेतुरितिबोध्यं। अतोयान्यन्यानिवीर्यवंतिकर्माणि–तानिकरोतीतिवाक्यंव्यानस्यस्वातंत्र्येणवी र्यवत्कर्मकर्तृत्वमुच्यतइतिभ्रमनिरासायव्याचष्टे॥ **वीर्यवदिति**॥ यस्माद्व्यानगतोभगवांस्तस्मादित्यर्थः। एवशब्देनप्राणापानव्य वच्छेदः।एतस्यहेतोर्व्यानमेवोद्गीथमुपासीतेतिवाक्यंसामानाधिकरण्यभ्रमनिरासायव्याचष्टे॥ **तस्मादिति**॥ उपासीतैवेत्युक्त्या श्रुतावेवशब्दोभिन्नक्रमइत्युक्तंभवति । श्रुत्यनुसारात्प्राणापानव्यवच्छेदायव्यानगतमेवेतिवासंबंधः । ननुतत्रतत्रस्थितानिभगव द्रूपाणिकिंभिन्नान्युताभिन्नानि। आद्येसएवैकइत्युक्तविरोधः । द्वितीयेनामरूपादिपार्थक्योक्तिविरोधः । किंचवागादिगतंरूपमृ गादिगतरूपकार्यकरणासमर्थं नवा । आद्येन्यूनोद्रिक्तमहिमत्वेनसविशेषत्वप्रसंगः । द्वितीयेसर्वत्राविशिष्टत्वात्सर्वमप्यविशेषंकु र्यात् । कुर्वाणोवाजीववत्सुखदुःखादिविकारवांश्चस्यादित्याशंक्यनिराकरोति ॥ **यद्यपीत्यादिना** ॥ एकोऽभिन्नः । आद्यार्धे नाभेदपक्षोंगीकृतः । प्रामाणिकत्वज्ञापनायहिशब्दः। द्वितीयार्धेनसामर्थ्याभावपक्षमनभ्युपगमेनपराचष्टे । निर्विशेषश्चेत्यन्वयः।

---

भा० । उद्गीथनामाभगवान्स्थितोव्यानादिपंचके । वीर्यवत्कर्मकृत्तस्माद्व्यानएवह्युदाहृतः । तस्माद्व्यानगतंविष्णुमुपासीतवैनित्यशः । यद्यप्येकोहिभगवान्सर्वदासर्ववस्तुगः । अनूनोद्रिक्तमहिमोनिर्विशेषस्सदैवच ।

अभेदपक्षोक्तंदोषंपरिहरति ॥ तथापीति ॥ तथापीत्यस्यविवरणमपृथक्त्वेपीति । नामरूपादिकंपृथगुच्यतइत्यत्रहेतुस्तत्क्रिया भेदादिति । तत्तत्क्रियाकर्तृत्वभेदादित्यर्थः । अपृथक्त्वेतदपिकथमित्यतउक्तं ॥ पूर्णेति ॥ सामर्थ्यसद्भावपक्षोक्तदोषंपरिहरति ॥ अविशेषोपीति ॥ सामर्थ्यविशेषशून्योपीत्यर्थः । विशेषहेतुकंसामर्थ्यविशेषोपेतमितियावत् । अविकृतोदुःखादिविकारशून्यः । दुग्धेस्मैवाग्दोहंयोवाचोदोहइत्यादिवाक्यमुद्गीथाक्षरादिमात्रोपास्त्योक्तंफलंभवतीतिप्रतीतिनिरासायव्याचष्टे ॥ उद्गीथेति ॥ एवशब्देनोद्गीथाक्षरव्यावृत्तिः। चशब्दौपरस्परसमुच्चये। उद्गीथाक्षराण्युपास्ते उत् गी थ इतीत्यत्रोद्गीथइतीत्यस्यतात्पर्यमुद्गीथाक्षरगमिति। उद्गीथाक्षराणीत्यस्यतात्पर्यंप्राणादिषुचसंस्थितमिति । आशीःसमृद्धिहेतुष्वपीत्यनेनाथखल्वाशीःसमृद्धिरित्यादिव्याख्यातं। सर्वेष्टमाप्नुयादित्यनेनाभ्याशोहयदस्मैसकामःसमृद्ध्येतेतिवाक्यमपिव्याख्यातं । ननूद्गीथाक्षराण्युपास्तइत्युक्तोद्गीथाक्षरशब्दस्यप्राणादिषुचसंस्थितमितिव्याख्यानमयुक्तं। पूर्वंप्राणएवोत्वाग्गीरन्नंथमित्यादिनाप्राणादीनामेवोच्छब्दादिवाच्यत्वेनोक्ततयात्राप्युद्गीथाक्षरशब्देनतेषामेवग्राह्यत्वात् । नह्यनुक्तस्यभगवतोनुवादेग्रहणंसंभवतीत्यतस्तानिपूर्ववाक्यान्यपिभगवत्परतयाप्रमाणेनव्याचष्टे ॥ उच्छब्देति ॥ आत्मानंततउपसृत्येतिवाक्यमात्मशब्दस्यजीवाद्यर्थत्वप्रतीतिंनिवारयन्व्या

---

भा० । तथापितत्क्रियाभेदान्नामरूपादिकंपृथक् । उच्यतेह्यपृथक्त्वेपिपूर्णैश्वर्यैकहेतुतः । अविशेषोपिभगवान्सर्वशक्तित्वहेतुतः । विशेषहेतुकंसर्वंकरोत्यविकृतःसदा । उद्गीथाक्षरगंचैवप्राणादिषुचसंस्थितं । आशीःसमृद्धिहेतुष्वप्यखिलेषुव्यवस्थितं । एकमेवहरिंवेदयःससर्वेष्टमाप्नुयादितिच । उच्छब्दवाच्याःप्राणाद्यावागाद्यागीरितीरिताः । अन्नाद्यास्थमितिप्रोक्तास्तेषूद्गीथोहरिःस्थितइतिच । आत्मानंपरमात्मानमंततःसर्वोत्तमत्वेनसर्वत्रोपसृत्य ॥ खं. ३ ॥

चष्टे ॥ आत्मानमिति ॥ सर्वत्रसर्वोपास्तिषु उपसृत्यज्ञात्वा ॥ ६ ॥ ततश्चायंखंडार्थः ॥ अथ अध्यात्मंमुख्यप्राणेउद्गीथोपास्तिकथनानंतरं। अधिदैवतं मुख्यवायावुद्गीथोपास्तिरुच्यतइतिशेषः। यएवासौ आदित्यसंस्थितोमुख्यप्राणस्तपति। तंतत्रोद्गीथं भगवंतमुपासीत। तस्योद्गीथाख्यविष्णुप्रेमास्पदप्रतिमात्वमुपपादयति ॥ उद्यन्वाइति ॥ एषआदित्यसंस्थितोमुख्यप्राणःस्वयमुदयास्तमयोज्झितोपि ।प्रजाभ्यःप्रजार्थमेवोद्यन्नुद्गायति । जनार्दनमितिशेषः। उद्यन्नेवतमोंधकारंतज्जन्यंभयंचप्राणिनामपहंति । एवंज्ञानिनःफलमाह ॥ अपहंतेति ॥ यएवमुक्तरीत्याऽदित्यस्थंप्राणंवेदसतमसोऽज्ञानस्यतत्कृतभयस्यचापहंताभवतिहवै ॥ १ ॥ एवमध्यात्ममधिदैवतंचमुख्यप्राणेभगवदुपास्तिःकर्तव्येत्युक्तं । तत्रनाध्यात्ममधिदैवतंचमुख्यप्राणेविशेषः। अतस्तत्रोभयत्रापिभगवदुपास्तिःकर्तव्येतिभावेनाध्यात्ममधिदैवतंचतयोःसाम्यमाह ॥ समानइति ॥ अयंदेहस्थश्चअसावादित्यस्थश्चमुख्यप्राणः समानएववै । कथं । अयंदेहस्थोमुख्यप्राणउष्णःअसावादित्यमंडलस्थश्चोष्णः । तदधिष्ठितेदेहमंडलेचौष्ण्यदर्शनात् । अस्त्वेवंसाम्यंकिंततइत्यतआह ॥ तस्मादिति ॥ यस्मादध्यात्ममधिदैवतंचसमानएववायुस्तस्मादेवहेतोरेतमेतस्मिन्मुख्यवायाविममस्मिन्देहस्थेअमुष्मिन्सूर्यस्थेचोद्गीथमुपासीतेतियोजना । अध्यात्ममधिदैवंचमुख्यप्राणस्यविशिष्टप्रतिमात्वेहेत्वंतरमाह ॥ स्वरइति ॥ इमंदेहस्थंमुख्यप्राणं। स्वतंत्रत्वेनस्वनामकविष्णुरतत्वात्स्वरइत्याचक्षते ।अमुमादित्यस्थं । स्वरइतिप्रत्यास्वरइत्याचक्ष

---

उप० । अथाधिदैवतंयएवासौतपतितमुद्गीथमुपासीतोद्यन्वाएषप्रजाभ्यउद्गायत्युद्यंस्तमोभयमपहंत्यपहंताहवैभयस्यतमसोभवतियएवंवेद ॥१॥ समानउएवायंचासौचोष्णोयमुष्णोसौस्वरइतीममाचक्षतेप्रत्यास्वरइत्यमुंतस्माद्वाएतमिमममुंचोद्गीथमुपासीति ॥ २ ॥

ते। आसमंतात्मांप्रतिमांप्रतिवर्ततइत्युक्तत्वात्प्रत्या स्वनामकविष्णुरतत्वात्स्वरः प्रत्याचासौस्वरश्चेतिप्रत्यास्वरः। तस्मादेतमिमम मुंचास्मिन्नमुष्मिंश्चोद्गीथमुपासीतैव ॥२॥ इदानींव्याननामकमुख्यप्राणनिष्ठतयोद्गीथोपास्तिमाह॥ अथेति॥ अथखल्विवितिपक्षां तरद्योतकं। व्यानमेवव्याननामकमुख्यवायावेवोद्गीथमुपासीत। व्यानस्यभगवद्विशिष्टप्रतिमात्वोपपादनायतन्माहात्म्यंवक्तुंतदु पयुक्तत्वेनप्राणापानस्वरूपमाह ॥ यद्वाइति ॥ यत्यःप्राणितिऊर्ध्वप्राणनंकरोतिसप्राणोवै। यदपानिति योऽधोनयनंकरोति सोऽपानइत्यर्थः। अत्रप्राणापानशब्दौशेषवींद्रवाचकौ। यदर्थमेतदुक्तंतदाह ॥ अथेति ॥ यःप्राणापानयोःसंधिःसंधिप्रवर्तकः सव्यानइत्यर्थः। व्यानाख्यमुख्यवायोर्विशिष्टप्रतिमात्वोपपादनायवागादिप्रवर्तकत्वंमाहात्म्यांतरमाह॥ योव्यानइत्यादिना। योव्यानो मुख्यवायुः। सा वाक् वागंतर्गतोवाङ्नामावाक्प्रवर्तकश्च। व्यानस्यस्वातंत्र्येणवाक्प्रवर्तकत्वंकिमित्यतोनेत्याह॥ योव्या नइति ॥ योव्यानो व्यानगतोविष्णुः। सावाक् वाङ्नामावाक्प्रवर्तकोवागंतर्गतश्च। अतोविष्णवाविष्टस्यैवव्यानस्यवाक्प्रवर्त कत्वमितिभावः। ननुव्यानस्यैववाक्प्रवर्तकत्वंकुतः। प्राणापानयोरेवतत्प्रवर्तकत्वंकिंनस्यादित्यतोव्यतिरेकेणतदुपपादय ति ॥ तस्मादिति ॥ तस्माद्वाचोव्यानप्रवर्त्यत्वादेवाप्राणन्ननपानन्प्राणापानाख्यशेषवींद्रव्यापारशून्यःप्राणापानौनिरुद्धे तियावत्। वाचमभिव्याहरति। अतोनप्राणापानौवाक्प्रवर्तकौ किंतुव्यानएवेतिभावः ॥ ३ ॥ यावाक् वाङ्नामावागं

उप०। अथखलुव्यानमेवोद्गीथमुपासीतयद्वैप्राणितिसप्राणोयदपानितिसोपानोथयःप्राणापानयोःसंधिःसव्यानोयोव्यानःसावाक्तस्मादप्राणन्ननपानन्वाचमभिव्याहरति ॥ ३ ॥ यावाक्सर्क्तस्मादप्राणन्ननपानन्नृचमभिव्याहरतियर्क्तत्सामतस्मादप्राणन्ननपानन्त्सामगायतियत्सामसउद्गीथस्तस्मादप्राणन्ननपानन्नुद्गायति ॥ ४ ॥



तर्गतोवाक्प्रवर्तकोव्यानः साऋक् ऋङ्नामाऋगंतर्गतोऋक्प्रवर्तकः। किंस्वातंत्र्येण न किंतु यावाक्वाङ्नामावाक्प्रवर्तकोव्यान गतोविष्णुःसाऋक्ऋङ्नामाऋक्प्रवर्त्तकव्यानगतश्च। अतस्तदाविष्टस्यैवऋक्प्रवर्त्तकत्वमितियोज्यं। प्राणापानयोरेवऋक्प्रवर्त्तकत्वं किंनस्यादित्यतआह ॥ तस्मादिति ॥ पूर्ववदर्थः। याऋक् ऋगंतर्गतोऋङ्नामाऋक्प्रवर्तकोव्यानः तत्साम सामनामकःसामांतर्ग तःसामप्रवर्त्तकश्च। किंस्वातंत्र्येण न किंतु याऋक् ऋङ्नाऋक्प्रवर्त्तकव्यानगतोविष्णुस्तत्सामसामनामासामप्रवर्त्तकव्यानगतश्च। प्राणापानयोरेवसामप्रवर्त्तकत्वंकिंनस्यादित्यतआह ॥ तस्मादिति ॥ यत्साम सामनामकःसमगतःसामप्रवर्त्तकोव्यानःसउद्गीथः। उद्गीथोनामसामभेदः। उद्गीथनामोद्गीथस्थस्तत्प्रवर्त्तकश्च। किंस्वातंत्र्येण न किंतु यत्साम सामनामकःसामप्रवर्त्तकव्यानगतोवि ष्णुः सउद्गीथः उद्गीथनामोद्गीथप्रवर्त्तकव्यानगतश्च। उद्गीथप्रवर्त्तकत्वंनप्राणापानयोरित्याह ॥ तस्मादिति॥ यद्यपिप्राक्वागृक्सा मोद्गीथशब्दैर्द्विरूपसरस्वतीप्राणपरमात्मानएवोक्तास्तथाप्यत्रतेषामसंभवाद्वेदग्वेदसामवेदोद्गीथसामभेदानांतदवांतराभिमानिनां वाग्रहणमितिज्ञेयं ॥ ४ ॥ नकेवलंवागादिप्रवर्त्तकएवव्यानः किंतुअतःपूर्वोक्तादन्यान्यपियानिवीर्यवंतिप्रयत्नाधिक्यसाध्या निकर्माणि। कानितानि यथाग्नेर्मथनंनिर्घर्षेणोत्पादनमाजेर्मर्यादायाःसरणमवनमाजेःसंग्रामस्यार्थेसरणंगमनंवा। दृढस्यधनुषआय मनमाकर्षणमित्यादीनि। तान्यपिअप्राणन्ननपानन्करोति। अतोव्यानएवसर्वप्रवर्त्तकतयासर्वोत्तमइतिभावः। किंततइत्यतआ ह ॥ एतस्येति ॥ एतस्यपूर्वोक्तस्यहेतोस्सकाशात्व्यानमेवव्यानएवोद्गीथंभगवंतमुपासीत ॥ ५ ॥ इदानीमुद्गीथाक्षरप्रतिपाद्यप्रा

उप०। अतोयान्यन्यानिवीर्यवंतिकर्माणियथाग्नेर्मथनमाजेःसरणंदृढस्यधनुषआयमनमप्राणन्ननपानंस्तानिकरोत्येतस्यहेतोर्व्यानमेवोद्गीथमुपासीत ॥ ५ ॥

णादिस्थितभगवदुपास्तिमाह॥अथेति॥उद्गीथाक्षराणिउद्गीथाक्षराप्रतिपाद्यदेवतासुस्थितानिभगवद्रूपाण्युपासीत। कान्युद्गीथाक्षराणीत्यतआह ॥ उद्गीथइतीति ॥ कास्ताउद्गीथाक्षरदेवतायासुभगवदुपास्तिःकर्त्तव्येत्यतआह ॥ प्राणएवेत्यादिना ॥ प्राणोमुख्यप्राणएवोत् उच्छब्दवाच्यः। कुतः हियस्मात्प्राणेनेदंजगदुत्तिष्ठति उत्पद्यते। वाक् सरस्वती गीः।कुतः। वाचोहिगिरइत्याचक्षते विद्वांसः। अन्नमन्नाभिमानिचतुर्मुखस्थं। अन्नाभिमानीब्रह्मैवप्राणोवायुरितीरितइतिह्यन्यत्रोक्तं। कुतः अन्नेहीदंसर्वंजगत्स्थितं ॥६॥ एवमुत्तरत्रापिद्यवंतरिक्षादिशब्दैस्तदभिमानिनोग्राह्याः। उद्गीथाक्षरवाच्यप्राणादिस्थितभगवदुपासकस्यफलमाह ॥ दुग्धइति ॥ योधिकारीएतानि एवमुच्छब्दादिवाच्यतयाविद्वानुद्गीथाक्षराणिउद्गीथाक्षरवाच्यप्राणादिस्थितभगवद्रूपाणि उपास्ते किमिति उद्गीथइति उद्गीथाक्षराणीतियावत्। अस्मैउपासकाय वाक् वाङ्गमाभगवान् वाग्दोहं वाचःफलं दुग्धे। कोसौवाग्दोहः योवाचोदोहःश्रुत्यादिसिद्धोमोक्षादिलक्षणस्तमितिसंबंधः। सउपासकोन्नवानन्नादश्चान्नादनसमर्थश्चभवति ॥ ७ ॥ इदानीमाशीःसमृद्धिहेतुष्वपिभगवदुपास्तिमाह ॥ अथेति ॥ आशीःसमृद्धिराशिषःकाम्यस्यसमृद्धिर्येनसआशीःसमृद्धिः। कामसमृद्धिहेतुरुच्यतइतिशेषः। सामादिस्थितानिभगवद्रूपाणि उपसारयंतीष्टमित्युपसरणानीत्युपासीत। उपास्तिप्रकारमेवाह

---

उप०। अथखलूद्गीथाक्षराण्युपासीतोद्गीथइतिप्राणएवोत्प्राणेनह्युत्तिष्ठतिवाग्गीर्वाचोहिगिरइत्याचक्षतेऽन्नथमन्नेहीदंसर्वंस्थितं ॥ ६ ॥ द्यौरेवोदंतरिक्षंगीःपृथिवीथमादित्यएवोद्वायुर्गीरग्निस्थंसामवेदएवोद्यजुर्वेदोगीर्ऋग्वेदस्थंदुग्धेस्मैवाग्दोहंयोवाचोदोहोन्नवानन्नादोभवतियएतान्येवंविद्वानुद्गीथाक्षराण्युपास्तउद्गीथइति ॥७॥ अथखल्वाशीःसमृद्धिरुपसरणानीत्युपासीतयेनसाम्नास्तोष्यन्त्स्यात्तत्सामोपधावेत् ॥ ८ ॥

॥ येनेति ॥ पुरुषोयेनसाम्नासामविशेषेण स्तोष्यन्स्तोत्रंकरिष्यन्स्यात् तत्सामोपधावेत्आददीत । ( तत्सामगंहरिंसर्वोत्तमत्वे नज्ञात्वातत्सामगायेदित्यर्थः । ) ॥ ८ ॥ यस्यामृचिआरूढेनसाम्नास्तोष्यन्स्यात्तामृचमुपधावेत् । यदार्षेयंयेनार्षिणाद्दृष्टंसाम स्तोतुमिष्टंतमृषिमुपधावेत् । यांदेवतामभिष्टोष्यन्स्यात्सम्यक्स्तोत्रंकरिष्यन्स्यात्तांदेवतामुपधावेत् ॥ ९ ॥ येनछंदसागायत्र्या दिनास्तोष्यन्स्यात्तच्छंदउपधावेत् । येनस्तोमेनगानविशेषेणवाक्यसमूहेनवास्तोष्यमाणःस्यात्तंस्तोममुपधावेत् ॥ १० ॥ यांदि शंदिग्देवतामभिष्टोष्यन्स्यात्तांदिशंउपधावेत् ॥११ ॥ ननुकथमेतद्भगवदुपासनं । यांदेवतामितिस्वाभिप्रेतयत्किंचिद्देवतायाएव स्तुत्यत्वोक्तेरित्यतोनसर्वोत्तमत्वेनेतरदेवतास्तोत्रंकर्त्तव्यंकिंत्वित्यतआह ॥ आत्मानमिति ॥ काममभिलषितंध्यायन्नप्रमत्तःप्र मादरहितःपुरुषआत्मानंपरमात्मानंअंततःसर्वोत्तमत्वेनोपसृत्यज्ञात्वास्तुवीतेतरदेवतामितिशेषः । कुतएवंज्ञात्वास्तोत्रंकर्तव्यमि त्यतआह ॥ अभ्याशइति ॥ यत्यस्मात् यत्कामो यःकामोयस्यसोयत्कामः पुरुषःसर्वोत्तमत्वेनभगवंतंज्ञात्वेतरदेवतांस्तुवी त । सकामअस्मैस्तावकायाभ्याशःशीघ्रंसमृध्येतसम्यक्परिपूर्णोभवति । तस्मादात्मानमंततउपसृत्यस्तुवीतेतिसंबंधः । इतिश ब्दोविद्यासमाप्त्यर्थः । खंडत्रयस्याप्युद्गीथोपास्तिप्रतिपादकत्वेनैकविद्यात्वात् । द्विरुक्तिस्तुपूर्वोक्तविद्यार्थावधारणार्था । उक्तंच ।

---

उप० । यस्यामृचितामृचंयदार्षेयंतमृषिंयांदेवतामभिष्टोष्यन्त्स्यात्तांदेवतामुपधावेत् ॥ ९ ॥ येनच्छंदसास्तोष्यन्त्स्यात्तच्छंदउपधावेद्येनस्तोमेनस्तोष्यमाणःस्यात्तꣳस्तोममुपधावेत् ॥ १० ॥ यांदिशमभिष्टोष्यन्त्स्यात्तांदिशमुपधावेत् ॥ ११ ॥ आत्मानमंततउपसृत्यस्तुवीतकामंध्यायन्नप्रमत्तोभ्याशोहयदस्मैसकामःसमृध्येयतत्कामःस्तुवीतेति यत्कामःस्तुवीतेति ॥ १२ ॥ **तृतीयःखंडः ॥ ३ ॥**

अध्यायांतेद्विरुक्तिःस्याद्वेदेवावैदिकेपिवा । विचारोयत्रसञ्ज्येतपूर्वोक्तस्यावधारणइति । अत्राध्यायांतेपीत्यपिशब्दसंबंधः । तेन विद्यांतस्यसमुच्चयइतिनानुपपत्तिरितिज्ञेयं । एवमुत्तरत्रापि ॥ १२ ॥ **तृतीयःखंडः** ॥ ३॥ वायुगतत्वेनप्रणवोपास्तेःपूर्वंफलानुक्तेस्तामनुवदन्संसारनिवृत्तिलक्षणंफलमाख्यायिकयाह॥ **ओमित्येतदक्षरमित्यादिना** ॥ तत्रस्वरमेवप्राविशन्नित्यत्रस्वरशब्दः प्रणवपरइत्यसत् । एषउस्वरोयदेतदक्षरमेतदमृतमभयमित्यक्षरत्वामृतत्वाभयत्वोक्तिविरोधात् । तेषांचब्रह्मलिंगत्वात् । तत्प्रविश्यदेवाअमृताअभवन्नित्युक्तिविरोधाच्चेतिभावेनप्रमाणेनैवस्वरशब्दार्थमाह ॥ **स्वरतेरिति** ॥ तुशब्दोऽवधारणार्थः । तद्रतेः स्वतंत्रत्वात्स्वनामकविष्णुरतेः । वायुःस्वरइत्युच्यतइत्यर्थः । अस्त्वेवंविष्णुर्वायुश्चस्वरनामकस्तथापिस्वरमेवप्राविशन्नित्युक्तः प्रवेशोनप्रसिद्धएवोपपद्यते । तत्प्रविश्यदेवाअमृताअभवन्नित्युक्त्ययोगात् । अन्यथासुषुप्तिप्रलययोरप्यमृतत्वापत्तेरित्यतस्तद्वाक्यंव्याचष्टे ॥ **वायुस्वरइति** ॥ अनेनस्वरमित्येतदावर्त्तनीयं । तत्रैकंवायुपरं । तदाद्वितीयासप्तम्यर्थे । द्वितीयंविष्णुपरं । तदाद्वितीयायथाश्रुतैवेत्युक्तंभवति । ओमित्येवातिस्वरतीत्येतदनुरोधेनोमाख्यमित्युक्तं । प्राविशन्नित्यस्यार्थःसमुपासिरइति । तत्प्रविश्यदेवाअमृताअभवन्नितिवाक्यंव्याचष्टे ॥ **तेनेति** ॥ उपासनेन । अमृतमितिभावप्रधानोनिर्देशः । प्रसिद्धामृतत्वव्यावृत्त्यर्थंमुक्त्याख्यमित्युक्तं । मृत्युवर्जिताःमृत्युनिमित्तभयंवर्जिताः । अमृतशब्दस्यार्थांतरकथनमेतत् । देवावैमृत्योर्बिभ्यतइत्यत्रमृत्युशब्दो यमपरइत्यसत् । सर्वदेवानांयमाद्भयाभावादित्यतोऽत्रविवक्षितंमृत्युशब्दार्थमाह ॥

भा० । स्वरतेस्तुस्वरोविष्णुस्तद्रतेर्वायुरुच्यते । वायुस्वरेस्वरंविष्णुमोमाख्यंसमुपासिरे । देवास्तेनामृतंप्राप्तामुक्त्याख्यंमृत्युवर्जिताः ।



**मरणादिति** ॥ खंडतात्पर्यमाह ॥ **तद्भयतइति** ॥ तेनुवित्त्वोर्ध्वाइत्यत्रोर्ध्वाःप्रांशवइत्यन्यथाप्रतीतिनिरासार्थंतदनूद्यव्याचष्टे ॥ **ऊर्ध्वाइति** ॥ मत्स्यःस्वमारकंनजानातिदेवास्तुज्ञातवंतइत्यत्रहेतुतयोत्तमत्वस्यैववक्तव्यत्वादितिभावः ॥ **ततश्चायंखंडार्थः** ॥ ॐमित्येतदक्षरमित्यादिकमुक्तार्थं ॥ १ ॥ देवामृत्योः मारणान्मृत्युर्दुर्गा तस्याबिभ्यतःभीताःसंतः त्रयींविद्यां वेदविद्यां प्राविशन्वै । वेदाभिमानिदेवतारूपाधिष्ठानेभगवदुपास्तिमकुर्वन्नित्यर्थः । ततस्ते देवाः छंदोभिःछंदस्सुभगवदुपासनैरात्मनआच्छादयन् । तत्रज्ञापकमाह॥**यदिति** । छंदोभिराच्छादयन्नितियत्छंदसांदेवाच्छादकत्वंतदेवछंदसांछंदस्त्वं छंदःशब्दप्रवृत्तिनिमित्तं । छंदःशब्दप्रवृत्तिनिमित्तपर्यालोचनयैवछंदसांदेवाच्छादकत्वंज्ञायतइतिभावः ॥२॥ मृत्युर्दुर्गा तांस्त्रयीविद्याप्रविष्टान्देवान् । तत्र तस्यैवविवरणंऋचिसाम्नियजुषि पर्यपश्यत् । कथं । यथालोकेकश्चनपक्षिविशेषोमत्स्यमुदकेपरिपश्येदेवंपर्यपश्यत् । तेदेवाअस्मान्मृत्युर्दृष्टवानितिज्ञातवंतइतिवक्तव्यं । तेदेवायतऊर्ध्वाउत्तमाअतोऽनुवित्त्वामृत्युरस्मान्दृष्टवानितिज्ञात्वाऋचःसाम्नोयजुषःल्यब्लोपनिमित्तापंचमी । ऋगादिदेवतांपरित्यज्यस्वरमेवप्राविशन् । द्वितीयासप्तम्यर्थेच । स्वतंत्रत्वेनस्वनामकविष्णुरतेः स्वरनामकेवायौ स्वरतेःस्वरनामकमोमाख्यंविष्णुंसमुपासिरइत्यर्थः ॥ ३ ॥ ऋगादिपरित्यागेनस्वरप्रवेशोदेवैःकृतइत्यत्रज्ञापकमा

माराणान्मृत्युरित्युक्तादुर्गा तद्भयतःसुराः । ओमित्युपास्य तंविष्णुंपरमामृतमापिरइतिसंध्याने । ऊर्ध्वाउत्तमाः ॥ खं० ४ ॥

उप० । ओमित्येतदक्षरमुद्गीथमुपासीतोमितिह्युद्गायतितस्योपव्याख्यानं ॥ १ ॥ देवावैमृत्योर्बिभ्यतस्त्रयींविद्यांप्राविशꣳस्तेच्छंदोभिराच्छादयन्यदेभिराच्छादयꣳस्तच्छदसां छंदस्त्वं॥ २ ॥ तानुतत्रमृत्युर्यथामत्स्यमुदकेपरिपश्येदेवंपर्यपश्यदृचिसाम्नियजुषितेनुवित्त्वोर्ध्वाऋचःसाम्नोयजुषःस्वरमेवप्राविशन् ॥ ३ ॥

ह ॥ यदावाइति ॥ लोकोयदावाङ्कचमाप्नोतितदाओमित्येवस्वरति । एवंसामैवंयजुरिति । यदासामयजुश्चाप्नोतितदाओमित्येवस्वरतीत्यर्थः । केवलंङ्कगादीनांरक्षणेऽशक्तत्वात्खल्विदानीमपिप्रणवपूर्वमृगादिजपतीतिभावः । स्वरमेवप्राविशन्नित्युक्तंविवरितुंस्वरशब्दार्थंतावदाह ॥ एषइति ॥ यदेतत् सर्वसन्निहितत्वादेतन्नामक मक्षरमविनाशिब्रह्मैषउएषएवस्वरः । तन्महिमानमाह॥ एतदमृतमिति ॥ एतद्ब्रह्मामृतंनित्यमुक्तं । अभयंभयशून्यमभयप्रदंवा । यद्यत्रापि मृत्युर्देवान्परिपश्येत्तर्हिंकोविशेषोङ्कगादिभ्यःस्वरस्येत्यतआह ॥ तत्प्रविश्येति ॥ तदमृतत्वाभयत्वादिविशिष्टमक्षरंस्वरशब्दवाच्यंप्रविश्योंनामकंभगवंतमुपास्यदेवाअमृताअभवन्नित्यर्थः॥४॥नकेवलंदेवानामेवप्रणवोपास्तिरमृतत्वप्रदा। अपितर्ह्यद्यतनस्यापितद्योग्यस्येत्याह॥सयइत्यादिना॥ योधिकारीएतदोंनामकंब्रह्मैवंदेवानाममृतत्वप्रदत्वेन विद्वानक्षरमक्षरनामकंभगवंतं प्रणौतिप्रणवेनस्तौति । सएतदेवाक्षरंस्वरंस्वरमणमोंकाररूपस्वरवाच्यममृतमभयंप्रविशति । किंततः । नहितत्प्रवेशएवफलमित्यतआह ॥ तत्प्रविश्येति ॥ यत्तच्छब्दौ यथातथाशब्दार्थौ । यत्प्रविश्यदेवायथाअमृताअभवंस्तथातत्परंब्रह्मप्रविश्यामृतोभवतीत्यर्थः ॥ ५ ॥ इतिचतुर्थःखंडः ॥४॥ इदानीमधिदैवमध्यात्मंचमुख्यप्राणेउद्गीथस्योपास्त्यंतरंतत्फलंचाख्यायिकयाह ॥ अथखल्विति ॥ तत्रोद्गीथप्रणवयोरभेदपरंमंत्रमुदाहृत्यकउद्गीथःप्रणवश्चेत्याशंकायामसौवाआदित्यउद्गीथएषप्रणवइत्यादित्यस्योद्गीथत्वंप्राणवत्वंचोच्यते । तत्पूर्वोक्तवि

उप० । यदावाङ्कचमाप्नोत्योमित्येवातिस्वरत्येवꣳसामैवंयजुरेषउस्वरोयदेतदक्षरमेतदमृतमभयंतत्प्रविश्यदेवाअमृताअभवन् ॥४॥ सयएतदेवंविद्वानक्षरंप्रणौत्येतदेवाक्षरꣳस्वरममृतमभयंप्रविशतितत्प्रविश्ययदमृतादेवास्तदमृतोभवति ॥ ५ ॥ चतुर्थःखंडः ॥ ४ ॥

रुद्धमित्यतस्तद्वाक्यंयथावत्प्रमाणेनैवव्याचष्टे ॥ आदित्येति ॥ तद्गतोहरिःप्रणवइतिसंबंधः । नचैवमादित्यशब्दस्यलक्षितलक्षणाप्रसंगः । अव्यक्ताधिकरणन्यायेनादित्यशब्दस्यवायुभगवतोरेवमुख्यत्वात् । आदित्यस्थोहरिरित्येवकुतोनव्याख्यायते । किंवायुग्रहणेनेतिचेन्न । पूर्ववायुस्थत्वेनैवभगवदुपास्तेःप्र(स्तुत)कृतत्वात् । अध्यात्मप्रकरणेयएवायंमुख्यप्राणस्तमुद्गीथमुपासीतेतिवक्ष्यमाणत्वेनाधिदैवप्रकरणेपिवायुस्थत्वेनैवोद्गीथोपास्तेर्वक्तव्यत्वाच्च । हरौप्रणवशब्दंनिर्वक्ति ॥ प्रकृष्टत्वाच्चेति ॥ श्रुतावुद्गीथस्यप्रणवत्वोक्तेःकथमेतदित्यतउद्गीथशब्दवाच्योपिसएवेत्याह ॥ उद्गीथइति ॥ अध्यात्मप्रकरणेअथाध्यात्ममित्यस्यानंतरमथखलुयउद्गीथःसप्रणवोयःप्रणवःसउद्गीथइतिमंत्रोदाहरणरूपमुत्तरवाक्यंसंयोज्यं । अधिदैवप्रकरणेतथोक्तत्वात् । उत्तरत्रोक्तेर्व्यर्थत्वाच्च । तदनंतरमयंवैमुख्यप्राणउद्गीथएषप्रणवइतिमंत्रव्याख्यानरूपंवाक्यमधिदैवप्रकरणवदत्रापिग्राह्यमितिभावेनतद्वाक्यंव्याचष्टे ॥ सएवेति ॥ (यो)देहेप्राणगः सएवहरिःप्रणवउद्गीथश्चेतिसंबंधः । स्थानभेदेनभेदशंकांनिवर्तयितुंसएवेत्युक्तं । अधिदैवाध्यात्मप्रकरणगतमोमितिह्येषस्वरन्नेतीतिवाक्यंव्याचष्टे ॥ ओमित्येवेति ॥ अधिदैवाध्यात्मप्रकरणयोरादित्यदेहस्थवायुगतभगवदुपासकस्यफलमेतमुएवाहमभ्यगासिषंतस्मान्ममत्वमेकोसीत्युत्तरवाक्यानुसारेणाह ॥ ध्यायन्निति ॥ भगवद्ध्यानस्यैकपुत्रत्वरूपैहिकमात्रफलकत्वानुपपत्तेर्मुक्तिमेतीत्युक्तं । एवमुत्तरत्रापि । रश्मींस्त्वंपर्यावर्त्तयतात् । प्राणांस्त्वंभूमानमभि

---

भा० । आदित्यसंस्थितोवायुःप्रणवस्तद्गतोहरिः । प्रकृष्टत्वाच्चनेतृत्वाद्गतित्वादखिलस्यच । उद्गीथउच्चैर्गेयत्वात्सएवपुरुषोत्तमः । सएवप्राणगोदेहेओमित्येवसदाजपन् । एत्येषभगवान्विष्णुर्ध्यायन्नेकंतमक्षरं । एकपुत्रोमुक्तिमेतिध्यायन्प्राणेषुरश्मिषु । बहुपुत्रोविमुक्तःस्यात्—

गायतादितिवाक्यानुसारेणादित्यरश्मीतरप्राणस्थितवायुगतभगवदुपासकस्यफलमाह ॥ **ध्यायन्निति** ॥ विमुक्तइत्यत्रवीत्युपसर्गेणानंदाधिक्यंफलमाह । यएवायंमुख्यप्राणस्तमुद्गीथमुपासीतेत्यध्यात्मप्रकरणवदधिदैवप्रकरणेपिएषप्रणवइत्यनंतरंयएवासावादित्यस्तमुद्गीथमुपासीतेतिवाक्यंग्राह्यमितिभावेनतदुभयमपिवाक्यंव्याचष्टे ॥ **तस्मादिति** ॥ तथा आदित्येरश्मिषुदेहेप्राणेषुचविद्यमानवायुगतत्वेन । अनेनाधिदैवाध्यात्मप्रकरणयोर्यएवामीरश्मयस्तमुद्गीथमुपासीतयएवेमेप्राणास्तंभूमानमभिगायतादितिवाक्यमध्याहर्त्तव्यमितिसूचयति । प्राणांस्त्वंभूमानमभिगायतादित्येतद्वाक्यंसामानाधिकरण्येनभूम्नःप्राणाभेदप्रतीतिनिरासायव्याचष्टे ॥ **प्राणस्थमिति** ॥ श्रुतौत्वमितियुष्मच्छब्दश्रवणादभिगायतादितिप्रथमपुरुषप्रयोगानुपपत्तिरित्यतःमध्यमपुरुषएवायमितिभावेनाभिगायेत्युक्तं । अभिगानंकुर्वित्यर्थः । होतृषदनाद्धैवापिदुरुद्गीतमनुसमाहरतीतिवाक्यंहोतृषदनात्हौत्रात्कर्मणोदुरुद्गानमनुसंधत्तइतिव्याख्याननिरासायव्याचष्टे ॥ **दुरुद्गीतमिति** ॥ अनुरूपमेवकरोति । प्रतीकूलंयथानभवेत्तथाकरोतीत्यर्थः । ध्यात्वानुरूपमेवकरोतीत्यन्वयः । अनेनहोतृणांसदनमाश्रयोग्निःतत्स्थोभगवान्होतृषदनशब्दाभिधेयः । पंचमील्यब्लोपनिमित्तेत्युक्तंभवति । परोक्तएवार्थःकिंनस्यादित्यतःस्वोक्तार्थेप्रमाणमाह ॥ **अन्यथेति** ॥ **ततश्चायंखंडार्थः** ॥ प्रणवोपास्तिरुद्गीथोपास्तिश्चप्रागुक्ता । तत्रप्रणवोद्गीथयोर्भेदशंकावारणायाभेदपरंमंत्रमुदाहरति ।

भा० । तस्माद्ध्यायेत्तथापरमितिच । प्राणस्थंभूमानमभिगाय । दुरुद्गीतमनुसमाहरतिअनुरूपमेवकरोति । होतृषदनस्थमग्निस्थंभगवंतंध्यात्वा।अन्यथागानजंदोषमग्नौध्यात्वाहरिंपरं । अपाकरोतितस्मात्तंध्यायेदेवाग्निगंसदेतित्रैविध्ये ॥ खं० ५ ॥



**अथखल्विति** ॥ मंत्रारंभद्योतनार्थमेतत् । यउद्गीथःसएवप्रणवः । नेदंयइंद्रःसोर्जुनइत्यादिवदितिभावेनोक्तं ॥ **यःप्रणवःसउद्गीथइति** ॥ मंत्रोदाहरणसमाप्तिद्योतनायेतिशब्दः । कउद्गीथःकश्चप्रणवोययोरभेदोबोध्यतइत्यतउद्गीथप्रणवशब्दार्थमाह ॥ **असौवाआदित्यइति** ॥ असावादित्यआदित्यनामाऽऽदित्यगतोमुख्यवायुस्तद्गतोहरिरेवोद्गीथउद्गीथनामाउच्चैर्गेयत्वात् । एषआदित्यस्थमुख्यवायुगतएवप्रणवइत्युच्यते । प्रकृष्टत्वान्नेतृत्वाद्गतित्वादखिलस्य । किंततइत्यतोत्र यएवासावादित्यस्तमुद्गीथमुपासीतेतिवक्तव्यं । अध्यात्मप्रकरणेतथावक्ष्यमाणत्वात् । आदित्यस्थमुख्यवायुगतस्यभगवतःप्रणवनामकत्वेयुक्तिमाह ॥ **ओमितीति** ॥ हियस्मादेषआदित्यस्थमुख्यवायुगतोविष्णुरोमितिस्वरन्इतरजनशिक्षणायोमितिस्वात्मानंजपन्नेति । तस्मादेषप्रणवइत्यर्थः । एवंध्यायन्नेकंतमक्षरंएकपुत्रोमुक्तिमेतीतिवक्तव्यं । तथायएवामीरश्मयस्तमुद्गीथमुपासीत । एवंरश्मिषुवायुगतत्वेन भगवंतंध्यायन्बहुपुत्रोविमुक्तःस्यादित्यपिवक्तव्यं ॥ १ ॥ आदित्यस्थवायुगतभगवदुपास्तावेकपुत्रत्वं तद्रश्मिस्थवायुगतभगवदुपास्तौबहुपुत्रत्वंभवतीत्यत्रविश्वासजननायाख्यायिकामाह ॥ **एतमिति** ॥ कुषीतकस्यापत्यंपुमान्कौषीतकिः स्वपुत्रमुवाच । किमिति । एतमेवादित्यस्थमुख्यवायुगतमेवविष्णुं नत्वादित्यरश्मिस्थवायुगतमहमभ्यगासिषंसम्यग्गानंकृतवान् । सम्यगुपास्तिंकृतवानितियावत् । तस्मान्ममत्वमेकएवपुत्रोसीति । त्वंरश्मीन्आदित्यरश्मिस्थमुख्यवायुगतंभगवंतं पर्यावर्तयतात् । प

उप० । अथखलुयउद्गीथःसप्रणवोयःप्रणवःसउद्गीथइत्यसौवाआदित्यउद्गीथएषप्रणवओमितिह्येषस्वरन्नेति ॥१॥ एतमुएवाहमभ्यगासिषंतस्मान्ममत्वमेकोसीतिहकौषीतकिःपुत्रमुवाच । रश्मीꣳस्त्वंपर्यावर्तयताद्बहवोवैतेभविष्यंतीत्यधिदैवतं ॥ २ ॥

र्यावर्त्तयोपासनंकुरु । तथासतिबहवःपुत्रास्तेभविष्यंति । वैप्रसिद्धं । इत्यधिदैवतंभगवदुपास्तिफलमुक्तं ॥ २ ॥ अथा ध्यात्मं तदुपास्तिफलमुच्यतइतिशेषः । अथखलुयउद्गीथःसप्रणवोयःप्रणवःसउद्गीथइतिमंत्रोदाहरणरूपमुत्तरवाक्यमत्रसंयोज्यं। तदनंतरमयंवैमुख्यप्राणउद्गीथएषप्रणवइतिमंत्रव्याख्यानरूपंवाक्यंग्राह्यं ॥ किंततइत्यतआह ॥ **यएवायमिति** ॥ यएवायंमुख्य प्राणस्तंतत्रोद्गीथंभगवंतमुपासीत । देहस्थमुख्यप्राणगतस्यभगवतः प्रणवनामकत्वमुपपादयति॥ **ओमितिह्येषइति** ॥ व्याख्यातं ॥ ३ ॥अत्रापिएवंध्यायन्नेकंतमक्षरंएकपुत्रोमुक्तिमेतीतिचवक्तव्यं । तथायएवेमेप्राणास्तंभूमानमभिगायतात् । प्राणस्थवायुगतत्वेन भगवंतंध्यायन्बहुपुत्रोविमुक्तःस्यादित्यपिवक्तव्यं।अत्राप्याख्यायिकामाह॥**एतमेवेति**॥व्याख्यातं। त्वंप्राणानिंद्रियगतमुख्यप्राण स्थंभूमानंपूर्णगुणंभगवंतमभिगायतात् । अभिगाय । सम्यग्गानंकुरु। केनाभिप्रायेण ममबहवःपुत्राभविष्यंतिवैइत्यभिप्रायेणाभिगा नंकुर्वित्यर्थः ॥ ४ ॥ दुरुद्गानहेतुकपापनिवृत्त्यर्थमुपास्तिमाह ॥ **होतृषदनादिति**॥ ल्यब्लोपनिमित्तापंचमी । होतृसदनस्थमग्निस्थं भगवंतंध्यात्वादुरुद्गीतंदुरुद्गानंप्रामादिकंस्वरादिहीनमुद्गानमनुरूपमेवकरोतिइष्टहेतुमेवकरोतीत्यर्थः। द्विरुक्तिःपूर्ववत्॥ ५ ॥ पंच मःखंडः ॥ ५ ॥ वाच ऋग्रसऋचःसामरसइतिप्रकृतऋक्सामयोरीश्वरवर्गत्वादधिदैवमध्यात्मंचतदुपास्तिपूर्वंततपरिवृतोद्गीथो पास्तिमाह ॥ **इयमेवेत्यादिखंडद्वयेन** ॥ यद्वा ऋचःसामरसःसाम्नउद्गीथोरसइत्यृक्सामाभ्यामुद्गीथस्यश्रैष्ठ्यमुक्तं । ऋक्

उप॰ । अथाध्यात्मं यएवायंमुख्यप्राणस्तमुद्गीथमुपासीतोमितिह्येषस्वरन्नेति ॥ ३ ॥ एतमुएवाहमभ्यगासिषंतस्मान्ममत्वमेकोसीतिहकौषीतकिःपुत्रमुवाच प्राणांस्त्वं भूमानमभिगायताद्बहवोवैतेभविष्यंतीति ॥ ४ ॥ अथखलुयउद्गीथःसप्रणवोयःप्रणवःसउद्गीथइति होतृषदनाद्धैवापिदुरुद्गीतमनुसमाहरतीति ॥ ५ ॥ **पंचमःखंडः** ॥ ५ ॥

सामोत्तमत्वेप्युद्गीथस्यकिंमाहात्म्यंकथंचोद्गीथस्यऋक्सामोत्तमत्वमित्यतऋक्साममाहात्म्योक्तिपुरःसरंभगवतस्तदुत्तमत्वंदर्शय ति ॥ इयमेवेत्यादिखंडद्वयेन ॥ तत्रेयमेवर्गग्निःसामेत्यादौभूरादीनामेवऋगादित्वमुच्यतइतिप्रतीतिनिरासायेयमेवर्गग्निः सामां तरिक्षमेवर्ग्वायुःसाम द्यौरेवर्गादित्यःसाम नक्षत्राण्येवर्क्चंद्रमाःसाम अथयदेतदादित्यस्यशुक्लंभाःसैवर्गथयन्नीलंपरःकृष्णं तत्सामे तिवाक्यपंचकंव्याचष्टे ॥ अग्नीरेति ॥ सूर्येत्यतःपरंचंद्रेतिग्राह्यं । तथाद्युइत्यतःपरंनक्षत्रेत्यपिग्राह्यं । सामदेवतावायु रग्नीसूर्यचंद्रनीलेषु । स्थःतिष्ठतीत्यर्थः । एवमुत्तरार्धोपिव्याख्येयः । यद्यपिश्रुतावियमेवर्गित्यादीनिप्रथमवाक्यानि । तथा पिप्राधान्यक्रममनुसरताऽग्निःसामेत्यादीन्येवप्रथमंव्याख्यातानि । इयमेवसाग्निरमस्तत्सामेत्यादिवाक्यपंचकंव्याचष्टे ॥ सेती ति ॥ एवंतावुभावपिमिलित्वासामनामानावुदाहृतावित्यनेनेदमर्धनारीनरात्मकवायुस्वरूपकथनपरमितिज्ञायते । उक्तंच । अर्धनारीनरवपुर्वायुःकुत्रचिदीरितइति । तस्मादृच्यध्यूढंसामगीयतइतिवाक्यपंचकंव्याचष्टे ॥ अतोहीति ॥ यतोऽग्न्यादौसामदेव तावायुरस्ति उर्व्यादौचऋग्देवीसरस्वती यतश्चतदेतस्यामृच्यध्यूढंसाम अतएवेत्यर्थः । अध्यात्मंवागेवर्क्प्राणःसामेत्याद्युत्तरखण्ड स्थवाक्यचतुष्टयंव्याचष्टे ॥ वागादिष्विति ॥ अत्रादिपदेनप्राणचक्षुरात्मश्रोत्रमनःशुक्लनीलानांग्रहणं । यएषोंतरादित्येहिरण्मयःपु रुषोदृश्यते । यएषोंतरक्षणिपुरुषोदृश्यतेइतिवाक्यद्वयमादित्यचक्षुर्मात्रांतस्थभगवत्परमितिप्रतीतिनिरासायव्याचष्टे ॥ तयोरिति ॥

---

भाष्यं । अग्नीरसूर्यनीलेषुवायुः स्थःसामदेवता । उर्वीवियद्द्युशुक्लेषुऋग्देवीस्थासरस्वती । सेतिभार्याहिवाग्देवीप्राणोऽमःपतिरीरितः । एवंतौसामनामानावुभावेतावुदाहृतौ । अतोहिसामवेदोयंऋक्सामात्मकईरितः । वागादिष्वेवमेवैतौवाक्प्राणौसर्वदास्थितौ । तयोरंतःस्थितोविष्णुर्गायकौतस्यतावुभौ ।

छां०वे०१८

आदित्यस्थचक्षुःस्थवायुसरस्वत्योरित्यर्थः । तस्यर्क्सामचगेष्णाविति वाक्यंव्याचष्टे ॥ **गायकाविति**॥ ऋक्सामाभ्यामृग्वेदसामवेदाभ्यांगायकाविति संबंधः । तस्योदितिनामसएषसर्वेभ्यःपाप्मभ्यउदितइतिवाक्यंव्याचष्टे ॥ **सउन्नामेति** ॥ उच्चेत्युच्छब्दस्यार्थांतरं । सएवेत्येवशब्दान्वयः । तस्ययथाकप्यासंपुंडरीकमेवमक्षिणीइतिवाक्यंव्याचष्टे ॥ **कप्यासेति** ॥ पुंडरीकशब्दोरक्तपद्मपरः । कंपिबन्नालसंबंधीतियोगेनकप्यासत्वंरक्तपद्मविशेषणमित्यर्थः । एवंचकप्यासशब्देनाम्लानत्वंलभ्यतइतितात्पर्यं । अक्षिगश्चेत्यनेनतस्यैतस्यतदेवरूपंयदमुष्यरूपमित्येतदपिव्याख्यातं । सएषयेचामुष्मात्परांचोलोकास्तांश्चाप्नोतिदेवकामांश्च । येचैतस्मादर्वांचोलोकास्तांश्चाप्नोतिमनुष्यकामांश्चेत्यत्रोद्गातुरेवपरागर्वाग्लोकप्राप्तिर्देवमनुष्यकामप्राप्तिश्चोच्यतइत्यसत् । तस्मादुहैवंविदुद्गाताब्रूयात्कंतेकाममागायानीत्याद्युत्तरवाक्यानुपपत्तेः । तस्मात्पराग्लोकादिप्रापकत्वमेवोच्यते । तदपिनसर्वस्योद्गातुर्मुख्यतःसंभवतीत्यतोव्यवस्थयातद्व्याचष्टे ॥ **गायकइति** ॥ तस्मादुद्गीथइत्यत्रतस्मादितिकस्यपरामर्शइतिनज्ञायते । अतस्तदनूद्यतत्परामृश्यंदर्शयति ॥ **तस्मादिति** ॥ पूर्वंतस्योदितिनामेतिभगवतउन्नामकत्वमुक्तं । तस्यऋक्चसामचगेष्णाविति गीयमानत्वमुक्तं । तदुभयंतस्मादितिपरामृश्यतइतिभावः॥ खं०॥६॥ चक्षुरेवर्गात्मासामेत्यत्रात्मशब्देनछायात्मोच्यतइतिव्याख्याननिरासायात्मशब्दार्थमाह ॥ **आत्मेति** ॥ कुतोयमर्थः । परोक्तएवार्थःकिंनस्यादित्यतःश्रुत्यर्थनिश्चायकंप्रमाणमाह ॥ **सरस्वतीति** ॥

भाष्यं० । ऋक्सामाभ्यांसउन्नामापापोद्दश्चोच्चएवचेत्यादिसत्तत्वे । कप्यासरक्तपद्माक्षःसूर्यगश्चाक्षिगश्चसः ॥ गायकस्तस्यविष्णोर्यःसस्वर्ग्यांश्चनृलोकगान् । कामान्दद्यान्नरश्चेत्स्यात्सुराणांचनृणामपि । मोक्षदोयदिवायुःस्यान्मुख्योद्गाताततोऽनिलइतिच । तस्मादुद्गीथउच्चोसौगीयतेचेति ॥ खं० ॥ ६ ॥ आत्माजीवः । सरस्वतीहिचक्षुःस्थाजीवस्थोवायुरीरितः । विदित्वातावुभौदेवौतद्वंध्यायेद्धरिंसदेतिमानसे ।
॥ २९ ॥

ननुयएषोंतरादित्येहिरण्मयःपुरुषोदृश्यते यएषोंतरक्षणिपुरुषोदृश्यतइत्ययुक्तं । नचक्षुषापश्यतिकश्चिदेनमित्यादिश्रुतिविरोधादित्यतस्तद्व्याचष्टे॥**दृश्यतइति**॥सैवर्क्तत्सामतदुक्थंतद्यजुस्तद्ब्रह्मेतिवाक्यमृगाद्यात्मकत्वप्रतीतिनिरासायव्याचष्टे॥ **ऋङ्नामेति**॥एतेनजीवाख्यचाक्षुषपुरुषपरमित्येतदपिपरास्तं॥किंच यदीदंप्रकरणंजीवपरंस्यात्।तदासएषयेचैतस्मादर्वांचोलोकास्तेषांचेष्टइतिपातालादिलोकाधिपत्यकथनमयुक्तंस्यात्। नचजीवस्यार्वाग्लोकाधिपत्यमस्ति।सर्वेषांतदनुपलंभेपिकस्यचित्स्यादितिचेन्न।सर्वस्यापिभगवद्भिक्षुकत्वेनकस्याप्यसंभवात्। उक्तंचैतरेयभाष्ये । नहिकश्चिद्भिक्षुकःपातालाद्यधिपतिरित्यत्रकिंचिन्मानमिति।ननुचाक्षुषपुरुषस्येश्वरत्वेपिनैतदुपपन्नं। तस्यसर्वलोकनाथत्वेनविशिष्यार्वाग्लोकनाथत्वकथनस्या धिदैवप्रकरणेसएषयेचामुष्मात्परांचोलोकास्तेषांचेष्टइतिपराग्लोकनाथत्वकथनस्यचानुपपत्तेरित्यतआह ॥ **यथेति** ॥ **ततश्चायंखंडद्वयार्थः** ॥ ऋक् ऋगभिमानिनीऋङ्नाम्नीसरस्वती इयमेवपृथिवीलोकगतैव । साम सामाभिमानीसामनामकोवायुःअग्निरग्निस्थःतदेतदग्न्यंतर्गतमग्निनामकंसामैतस्यांपृथिव्यंतर्गतायामृचिअध्यूढमाश्रितं । अग्निर्हिंपृथिव्याश्रितोदृश्यते । अतोग्निस्थस्यवायोःपृथिवीस्थसरस्वत्याश्रयत्वमुपपन्नं । सामनामकवायोःऋच्यध्यूढत्वेयुक्तिमाह॥ **तस्मादिति** ॥ तस्मात्तयोःसंबद्धत्वादेवबाह्यमपिसामऋच्यध्यूढंगीयतेसामगातृभिः।

भा० । दृश्यतेज्ञानदृष्ट्यायःसूर्येचक्षुषिचैकराट् । ऋङ्नामाज्ञानरूपत्वात्सामनित्यसमत्वतः । उक्थमुत्थापकत्वाच्चयजुर्याज्यस्वरूपतः । ब्रह्मासौगुणपूर्णत्वादेवंसर्वाभिधानवानितिच । यथाबदरिकानाथोद्वारकानाथइत्यपि । अर्वाङ्नाथःपराङ्नाथइतितद्वदिहोच्यतइतिच ॥ खं० ॥ ७ ॥

उप० । इयमेवर्गग्निःसामतदेतदेतस्यामृच्यध्यूढꣳसामतस्मादृच्यध्यूढꣳसामगीयते इयमेवसाऽग्निरमस्तत्साम ॥ १ ॥

एवंपृथक्स्थितयोर्ऋक्सामयोःसरस्वतीवाय्वोःपृथिव्यग्निस्थत्वरूपमाहात्म्यमुक्तं । इदानींसरस्वतीवायुश्चेत्येतद्द्वयंमिलित्वैकश रीरंसदर्धनारीनरात्मकंसामनामकंवर्तते । तत्रसरस्वतीभागःसेत्युच्यते । वायुभागअमेत्युच्यते । तस्यार्द्धनारीनरात्मकभाग द्वयस्यापिपृथिव्यग्निस्थत्वमाह ॥ इयमेवसेत्यादिना ॥ सारत्वात्स्त्रीषुसा देवी इयमेवपृथिवीगतैव । नमीयतइत्यमोमुख्य वायुःअग्निरग्निस्थः । तत् सा अम इत्येतदुभयंमिलित्वासामसामनामकंभवतीत्यर्थः ॥ १ ॥ एवमुत्तरत्रापि । अंतरि क्षमंतरिक्षलोकस्था । वायुर्बाह्यवायुस्थः ॥ २ ॥ द्यौर्द्युलोकस्था । आदित्यआदित्यस्थः ॥३॥ नक्षत्राणि नक्षत्रस्थिता । चंद्रमाः चंद्रस्थः ॥ ४ ॥ यदेतदादित्यस्यशुक्लंभाःतेजःसैवतदंतस्थैवऋक् । अथादित्यस्ययन्नीलं नेदमौपचारिकं किंतुपरः परं । कृष्णम तिशयेनकृष्णंतेजस्तत्तत्स्थंसाम ॥ ५ ॥ अस्त्वेवमृक्सामयोःसरस्वतीवाय्वोरुक्तमाहात्म्यं किंततइत्यतएवंविधाभ्यामपिभगवा नुपास्योयतोतस्तस्ययुक्तमृक्सामोत्तमत्वमितिभावेनोद्गीथाख्यभगवत्स्वरूपमाह ॥ अथेति ॥ अथशब्दःप्रकरणांतरद्योतकः ।य एषआदित्येआदित्यस्थसरस्वतीवाय्वोरंतर्हिरण्मयः । हिरुक्बाह्यविलक्षणंसुखंहिरण्यंस्यात् । मयडाधिक्यार्थेस्वरूपार्थेच । इ तरविलक्षणपूर्णानंदस्वरूपः । पूर्णौ हिहितौ निहितौ रश्चरणश्चेतिरणौ रत्यानंदौ यस्मिन्स हिरण्मयोवा सुवर्णवर्णोवा पुरुषोदृ

---

उप० । अंतरिक्षमेवर्ग्वायुःसामतदेतदेतस्यामृच्यध्यूढꣳसामगीयतेंतरिक्षमेवसावायुरमस्तत्साम ॥ २ ॥ द्यौरेवर्गादित्यःसामतदेतदेतस्यामृच्यध्यूढꣳसामतस्मादृच्यध्यू ढꣳसामगीयते । द्यौरेवसाआदित्योऽमस्तत्साम ॥ ३ ॥ नक्षत्राण्येवर्क् चंद्रमाःसामतदेतदेतस्यामृच्यध्यूढꣳसामतस्मादृच्यध्यूढꣳसामगीयतेनक्षत्राण्येवसाचंद्रमाअमस्तत्साम ॥ ४ ॥ अथयदेतदादित्यस्यशुक्लंभाःसैवर्क्अथयन्नीलंपरःकृष्णंतत्सामतदेतदेतस्यामृच्यध्यूढꣳसामतस्मादृच्यध्यूढꣳसामगीयतेऽथयदेवैतदादित्यस्यशुक्लंभाःसैवसाऽथयन्नीलं परःकृष्णंतदमस्तत्साम॥ ५ ॥ अथयएषोंतरादित्येहिरण्मयःपुरुषोदृश्यतेहिरण्यश्मश्रुर्हिरण्यकेशआप्रणखात्सर्वएवसुवर्णः ॥ ६ ॥

श्यते ज्ञानदृष्ट्येतिशेषः। उक्तंच । सएवचहिरण्मयः ॥ हिरुक्सुखंहिरण्यंस्यात्बाह्यानंदात्पृथग्यतः॥अधिक्यार्थेमयड्व्यस्मादधिकानदंरूपकइति॥ रत्यानंदौपूर्णनित्यौहितौतेनहिरण्मयः ॥स्वर्णवर्णतयावापिवासुदेवोहिरण्मयइतिच। नकेवलंभगवत्स्वरूपस्यैव हिरण्मयत्वं। किंतु तदवयवानामपीत्याह॥हिरण्यश्मश्रुरिति॥आप्रणखात्प्रणखमारभ्यसर्वएवावयवः सुवर्णःसुवर्णवर्णः सुखपूर्णोवेत्यर्थः ॥ ६ ॥ सर्वएवसुवर्णइत्युक्त्याचक्षुषोपिसुवर्णवर्णत्वप्राप्तेस्तत्रविशेषमाह ॥तस्येति॥ तस्यादित्यांतर्गतसरस्वतीवायुगतस्यपुरुषस्य यथाकप्यासं कंपिबन्नालसंबंधिअम्लानमितियावत्।पुंडरीकंरक्तपद्मं एवमक्षिणीवर्तेते। तस्यरहस्यंनामाह॥तस्येति॥ तस्यपुरुषस्योदितिनामकुतः। सएषआदित्यस्थसरस्वतीवायुगतःपुरुषःसर्वेभ्यःपाप्मभ्यउदितउद्गतोयतः । एवंविदःफलमाह ॥ ॥ उदेतीति॥ योधिकारी एवंपापोद्गत्वप्रवृत्तिनिमित्तकोन्नामकतयाभगवंतंवेद ससर्वेभ्यःपाप्मभ्यउदेतिउद्गतोभवति । हवैप्रसिद्धमित्यर्थः॥७॥तस्यादित्यस्थसरस्वतीवायुगतस्यभगवतऋक्चसामच परस्परसमुच्चयेचशब्दौ। ऋगभिमानिनीसरस्वतीसामाभिमानीवायुश्चगेष्णौगायकौ । ऋग्वेदसामवेदाभ्यामितिशेषः। एतस्यैवभगवतःप्रसिद्धमुद्गीथनामाप्यतएवजातमित्याह ॥ तस्मादिति ॥ यस्मात्तस्योदितिनाम यस्माच्चतस्यर्क्सामचगेष्णौतस्मात्सउद्गीथः । उच्चासौगीयतेचेतिव्युत्पत्तेरित्यर्थः। नकेवलमृक्सामनामकसरस्वतीवायूएवतस्यगेष्णौ किंत्वित्यतआह ॥ तस्मादिति ॥ यस्मादेवमत्युत्तमौसरस्वतीवायूतस्यगायकौतस्मादेवयःको

---

उप० । तस्ययथाकप्यासंपुंडरीकमेवमक्षिणीतस्योदितिनामसएषसर्वेभ्यःपाप्मभ्यउदितउदेतिहवैसर्वेभ्यःपाप्मभ्योयएवंवेद ॥ ७ ॥ तस्यर्क्चसामचगेष्णौतस्मादुद्गीथस्तस्मात्त्वेवोद्गातैतस्यहिगातासएषयेचामुष्मात्परांचोलोकास्तेषांचेष्टेदेवकामानांचेत्यधिदैवतं ॥ ८ ॥ षष्ठःखंडः ॥ ६ ॥

प्युद्गातातस्यैवभगवतोगातागायकोभवेत् । तस्यैवभगवतःसामर्थ्यमाह ॥ सएषइति ॥ सएषआदित्यस्थसरस्वतीवायुगतउद्गीथाख्योभगवान्येचामुष्मादंतरिक्षलोकात्परांचोलोकाःस्वर्गादयस्तेषांचेष्टेअधिपतिर्भवतीत्यर्थः । नकेवलममुष्यलोकस्यैव किंतुतेषामपीतिचशब्दः। देवकामानां देवकाम्यानां देवकामितदानार्थं चेष्टेसमर्थोभवतीत्यधिदैवतमृक्सामोद्गीथस्वरूपमुक्तं ॥८॥ इति षष्ठःखंडः ॥ ६ ॥ अथाधिदैवतमृक्सामादिस्वरूपकथनानंतरमध्यात्ममृक्सामस्वरूपकथनपूर्वकमुद्गीथस्वरूपमुच्यतइतिशेषः। वागेवर्गित्यादेःपूर्ववदेवाक्षरार्थः । वागेववागिंद्रियगतैव । प्राणः श्वासरूपप्राणस्थः ॥ १ ॥ चक्षु श्चक्षुःस्था । आत्मा जीवस्थः ॥२॥ श्रोत्रंश्रोत्रस्था । मनोमनस्थः ॥ ३ ॥ यदेतदक्ष्णश्चक्षुषःशुक्लंभास्तेजः सैवतत्स्थैव ऋक् अथयन्नीलंपरःपरंकृष्णं तत्स्थंसाम ॥ ४ ॥ एवमध्यात्ममृक्सामनामकसरस्वतीवाय्वोर्माहात्म्यमुक्त्वेदानींतदंतर्गतोद्गीथाख्यभगवत्स्वरूपमाह ॥ अथेति ॥ यएषपुरुषउद्गीथाख्योभगवानक्षण्यक्षिस्थसरस्वतीवाय्वोरंतर्दृश्यते। ज्ञानदृष्टचेतिशेषः । तस्यमाहात्म्यमाह ॥ सैवेति ॥ सैवयोंतरक्षणिपुरुषोदृश्यतेसाऋक्ऋङ्गमाज्ञानरूपत्वात् । ऋक्शब्दस्यस्त्रीलिंगत्वात्तदपेक्षयासेत्युक्तं । एवमुत्तरत्रापि । तत्साम

उप० । अथाध्यात्मंवागेवर्क्प्राणःसामतदेतदेतस्यामृच्यध्यूढꣳसामतस्मादृच्यध्यूढꣳसामगीयतेवागेवसाप्राणोऽमस्तत्साम॥ १॥ चक्षुरेवर्गात्मासामतदेतदेतस्यामृच्यध्यूढꣳसामतस्मादृच्यध्यूढꣳसामगीयतेचक्षुरेवसाप्राणोऽमस्तत्साम ॥२॥ श्रोत्रमेवर्क्मनःसामतदेतदेतस्यामृच्यध्यूढꣳसामतस्मादृच्यध्यूढꣳसामगीयतेश्रोत्रमेवसामनोऽमस्तत्साम ॥३॥ अथयदेतदक्ष्णःशुक्लंभाःसैवर्गथयन्नीलंपरःकृष्णंतत्सामतदेतदेतस्यामृच्यध्यूढꣳसामतस्मादृच्यध्यूढꣳसामगीयतेऽथयदेवैतदक्ष्णःशुक्लंभाःसैवसाऽथयन्नीलंपरःकृष्णंतदमस्तत्साम ॥ ४ ॥ अथयएषोंतरक्षणिपुरुषोदृश्यतेसैवर्क्तत्सामतदुक्थंतद्यजुस्तद्ब्रह्मतस्यैतस्यतदेवरूपंयदमुष्यरूपंयावमुष्यगेष्णौतौगेष्णौयन्नामतन्नाम ॥ ५ ॥



सामनामकंनित्यसमत्वात् । तदुक्थमुक्थनामकमुत्थापकत्वात् । तद्यजुर्यजुर्नामकं याज्यस्वरूपत्वात् । तद्ब्रह्मब्रह्मनामकं पूर्णरूपत्वात् । इदमधिदैवप्रकरणेपिग्राह्यं । चक्षुस्थस्यभगवतःकीदृशंरूपादिकमित्यतोयादृशंसूर्यस्थस्यतादृशमेवास्यापीत्याह ॥ तस्येति॥ तस्यैतस्याक्षिस्थसरस्वतीवायुगतस्यभगवतस्तदेवरूपं । किं । यदमुष्यसूर्यस्थसरस्वतीवायुगतस्य रूपंहिरण्मयत्वादिकं यौऋक्सामनामकौसरस्वतीवायूअमुष्यगेष्णौतावेवास्यगेष्णौ यदमुष्यनामोदितिउद्गीथइतिच तदेवास्यनाम ॥ ५ ॥ सएषोक्षिस्थो भगवान्येचास्मादर्वाचोलोकाःपातालाद्यास्तेषांचेष्टे। तेषामप्यधिपतिर्भवति। नकेवलमस्यलोकस्येतिचशब्दार्थः । मनुष्यकामानां चेष्टे मनुष्यकामितदानायसमर्थोभवति। इतिशब्दोभगवत्स्वरूपनिरूपणसमाप्तिद्योतकः । मनुष्यकामानांचेष्टइत्युक्तमनुभवारूढंकर्तुमाह ॥ तद्यइति ॥ तत्तस्माद्भगवतोमनुष्यकामदानसमर्थत्वात् । यइमेप्रसिद्धागायकावीणायांगायंतिराजादिपुरतस्तेएतमक्षिस्थंभगवंतमेवगायंति । तस्माद्भगवद्गायकत्वादेव भगवतएवतेगायकाधनसनयोधनप्राप्तिमंतः । राजादेर्धनदानेस्वातंत्र्याभावादित्यर्थः ॥ ६ ॥ उक्तरीत्याज्ञात्वासामगायकस्यसामर्थ्यमाह ॥ अथेति ॥ यउद्गाता एतत् अधिदैवमादित्यस्थसरस्वतीवायुगत मध्यात्मंचक्षुस्थसरस्वतीवायुगतंभगवत्स्वरूपंएवमुक्तप्रकारेणविद्वान्सामगायति । सउभावादित्यचक्षुस्थितौभगवंतावेव गायति । किंस्वसामर्थ्यन नत्याह ॥ सोमुनैवेति ॥ सउद्गातागायतीतियत् तदमुनैव भगवत्प्रेरणयैवेत्यर्थः। इष्टफलप्रापकत्वल

उप० । सएषयेचैतस्मादर्वांचोलोकास्तेषांचेष्टेमनुष्यकामानांचेतितद्यइमेवीणायांगायंत्येतंतेगायंतितस्मात्तेधनसनयः ॥ ६ ॥ अथयदेतदेवंविद्वान्त्सामगायत्युभौसगायतिसोमुनैवसएषयेचामुष्मातपरांचोलोकास्ताꣳश्चाप्नोतिदेवकामाꣳश्च ॥ ७ ॥

क्षणंसामर्थ्यांतरमाह ॥ सइति ॥ सएषभगवदुद्गातायेचामुष्मादंतरिक्षलोकात्परांचोलोकाःस्वर्गादयोवैकुंठादयश्चतांश्चाप्नोति उद्गानेनयोग्यान्प्रापयतीत्यर्थः । नकेवलममुंलोकमितिचशब्दः। देवकामांश्चदेवकाम्यान्स्वर्ग्यांश्चाप्नोतिप्रापयतीत्यर्थः। पराग्लोकादिप्रापकत्वंनस्वसामर्थ्यादेवेतिवक्तुंसोमुनैवेत्येतदत्रापियोज्यं । सउद्गातापराग्लोकादिप्रापयतीतियत् तदमुनाऽऽदित्यगतभगवत्प्रसादेनेत्यर्थः ॥७॥ अथानेनैवचक्षुःस्थभगवत्प्रसादेनैवयेचास्मादर्वांचोलोकास्तांश्चाप्नोति उद्गानेनप्रापयति। नकेवलमिमंलोकमितिचशब्दः।मनुष्यकामांश्चनृलोकगान्मनुष्यकामां(म्यां)श्चप्रापयतीत्यर्थः। अत्रायंविवेकः। भगवदुद्गाताहिमुख्योवायुरमुख्यस्त्वाधुनिकोमनुष्यः तत्रवायुविवक्षयापरागर्वाग्लोकप्रापकत्वमुच्यते। मनुष्यविवक्षयास्वर्ग्यनृलोकगकामप्रापकत्वमिति । तस्मादेवंविदुद्गातुरतिसमर्थत्वादेवंविदुद्गातायजमानंप्रतिब्रूयात्। किमिति। तेतव कंकाममुद्दिश्यागायानि उद्गानंकुर्यामिति। नैतद्वचनमात्रं। यएवंविद्वान्सामगायति एषएवहियजमानकामगानस्येष्टे उद्गानेनयजमानेष्टप्रदानसमर्थइत्यर्थः। द्विरुक्तिःपूर्ववत्॥८॥सप्तमःखंडः ॥७॥ उद्गीथाख्योभगवान्सर्वोत्तमइत्युक्तं। तन्मीमांसारूपाख्यायिकयासमर्थयतेत्रयइत्यादिखण्डद्वयेन। अत्र कासाम्नोगतिरित्यादिना सामस्वरप्राणान्नाब्द्युलोकाःक्रमेणोत्तरोत्तराःकथिताः । तेप्रसिद्धाएवेतिप्रतीतिनिरासायप्रमाणेनैवतत्स्वरूपमाह ॥ अग्निरि

---

उप० । अथानेनैवयेचैतस्मादर्वांचोलोकास्ताꣳश्चाप्नोतिमनुष्यकामाꣳश्चतस्मादुहैवंविदुद्गाताब्रूयात्कंतेकाममागायानीत्येषह्येवकामगानस्येष्टेयएवंविद्वान्सामगायतिसामगायति ॥ ८ ॥ सप्तमःखंडः ॥ ७ ॥

भा० । अग्निःसामाभिमानीस्याद्वरुणस्तुस्वरात्मकः । प्राणवराभिमानीतुसूर्यएवप्रकीर्तितः। अन्नाभिमानीदक्षश्चशक्रस्त्वबभिमानवान्। द्वात्मकश्चशिवःप्रोक्तःक्रमेणैवोत्तरोत्तरा

ति॥उच्छ्वासनिश्वासरूपप्राणावराभिमानी। मुख्यप्राणव्यावृत्त्यर्थमवरेत्युक्तं। प्रसिद्धगमनार्थत्वप्रतीतिनिरासायगतिशब्दार्थमाह॥ क्रमेणमोक्षइति ॥ अग्निःसामाभिमानीत्यत्रयुक्तिमप्याह ॥ अग्नेरिति ॥ अग्नेर्वागिंद्रियाभिमानित्वात्साम्नश्चवागधीनाभिव्यक्तित्वादग्निःसामाभिमानीत्यर्थः । अग्नेर्वेदवागभिमानित्वात्साम्नश्चतद्विशेषत्वात्तस्याप्यभिमानीतिवार्थः । वरुणस्तुस्वरात्मक इत्यत्रापियुक्तिमाह॥ स्वरस्येति॥ स्वरस्यवर्णव्यंजकध्वनेरुदकात्मकत्वात्ताल्वादिस्थोदकजन्यत्वाद्वरुणस्यचोदकाभिमानित्वाद्वरुणःस्वरात्मकइत्यर्थः।प्राणःसूर्योन्नंदक्षइत्यत्रश्रुतिमप्याह ॥ आदित्यएवेति ॥ प्रजापतिर्दक्षः । शक्रस्त्वबभिमानवान्द्वात्मकश्चशिवइत्यत्रापिश्रुतिमाह ॥ आपएवेति ॥ ननुनदैवंकेशवात्परमितिलोकेपामरोपिजानाति । अतःकथंनस्वर्गेलोकमतिनयेदिति नप्रतिष्ठांलोकमतिनयेदितिच रुद्रब्रह्मणोरेवसर्वोत्तमत्वंदाल्भ्यशिलकाभ्यामुक्तमित्यतआह ॥ विशेषेति ॥ स्वर्गेवयंलोकंसामाभिसंस्थापयामइत्यत्रस्वर्गशब्दस्यप्रसिद्धस्वर्गपरत्वमिंद्रपरत्वंवा साम्नःस्वर्गाभेदंचनिराकर्तुंतद्व्याचष्टे ॥ स्वर्गेति ॥ तदुपपादकंस्वर्गसंस्तावंहिसामेतिवाक्यंस्वर्गलोकस्यसामवेदत्वमुच्यतइतिप्रतीतिंनिवारयन्व्याचष्टे ॥ तत्स्तावकमिति ॥ हियस्मात्साम सामवेद स्तस्यस्वर्गलोकाभिमानिरुद्रस्यस्तावकंतस्मात्तंप्रत्यभिसंस्थापयामइत्यर्थः । ननुस्वर्गोवैलोकः सामवेदइतिश्रुतेः स्वर्गलोकस्यसामवेदाभेदएवश्रुत्यर्थःकिंनस्यादितिचेत् । न । बाधितार्थत्वप्रसंगेनतस्याअपिस्वर्गाभिमानीरु

भा० । क्रमेणमोक्षेप्राप्याश्चपूर्वेषामुत्तरोत्तराइतिनिवृत्ते । अग्नेर्वागात्मकत्वात्स्वरस्योदकात्मकत्वात् । आदित्यएवप्राणोन्नंवैप्रजापतिरितिश्रुतेः।आपएवेंद्रोद्यौर्वावरुद्रइत्यादेश्च । विशेषज्ञानसंप्राप्त्यैजानंतोपिपरंहरिं । ब्रूयुर्देवाश्चऋषयस्तदन्यस्यपरात्मतामितिब्रह्मतर्के । स्वर्गाभिमानिनंरुद्रंप्रतिसामाभिसंस्थापयामः । तत्स्तावकंहिसाम ।

द्रः सामवेदप्रतिपाद्यइत्यर्थोपपत्तेः । यस्त्वेतर्हिंब्रूयान्मूर्धातेविपतिष्यतीतिमूर्धातेविपतेदितीतिवाक्येयस्तुतेमूर्धाविपतिष्यती तिब्रूयात्तर्हिंविपतेदितियोजनानयुक्ता।विपतेदित्यस्यैवविधिप्रत्ययांतस्यशापरूपत्वेनविपतिष्यतीत्यस्यशापरूपत्वासंभवादितिभा वेनान्वयमुखेनतद्योजयति ॥ **मूर्धातइति** ॥ किंचयदिस्वर्गलोकशब्दस्यप्रसिद्धएवार्थःस्यात्तदामुष्यलोकस्यकागतिरित्ययंलो कइतिहोवाचेतिपृथिव्याःस्वर्गाश्रयत्वोक्तिरनुपपन्नास्यात्। नचयागोहोमादिभिरमुंलोकंपुष्यति । इतःप्रदानंहिदेवाउपजीवंतीति श्रुतेःप्रत्यक्षंहिसर्वभूतानांधरणीप्रतिष्ठेत्यतःस्वर्गलोकस्याप्ययंलोकोगतिरेवेतिवाच्यं । अयंलोकइत्युक्तस्यतत्स्थयागलक्षकत्वापा तात्। धरण्याःसर्वभूताश्रयत्वप्रतीतावपिस्वर्गलोकाश्रयत्वाप्रतीतेश्च । नचपृथिव्याअधस्तनत्वात्स्वर्गस्योपरितनत्वादाश्रयाश्र यिभावोक्तिरुपपन्नेतिवाच्यं । तथासतिअस्यलोकस्यकागतिरित्याकाशइतिहोवाचेत्यस्यानुपपत्तेः। नह्यूर्ध्वलोकेअधस्तनलोकआ श्रितः । ननुभवत्पक्षेपिकथमुपपत्तिः । नहिस्वर्गाभिमानिरुद्रात्पृथिवीलोकस्यतदभिमानिधरायावोत्तमत्वं । नवाआकाशस्यतद भिमानिगणेशस्यवारुद्रोत्तमत्वमित्यतःप्रमाणेनैवपृथिव्याकाशशब्दार्थावाह ॥ **ब्रह्मैवेति** ॥खंड ८॥ आकाशशब्दंविष्णौनिर्वक्ति॥ **आदीप्तत्वादिति**॥ नन्वाकाशोभूताकाशमेवकिंनस्यात्।आकाशशब्दस्यतत्ररूढत्वाद्विष्णौतुयौगिकत्वात्। नहिरूढिपरित्या गेनयोगांगीकारोविनाबाधकंयुक्तइतिचेत् । न। सएषपरोवरीयानुद्गीथःसएषोनंतइत्याकाशस्यपरोवरीयस्त्वानंतत्वाद्युक्तेः। तस्य विष्णावेवसंभवादन्यत्रासंभवादितिभावेनाह॥ **वरीयांश्चेति** ॥ परमोवरीयानित्यनेनपरोवरीयःशब्दार्थउक्तः। चशब्दोऽनंतत्वा ॥ ३३ ॥

भा० । मूर्धातेविपतेदितियःकश्चिद्ब्रूयाच्चेद्विपतिष्यति । ब्रह्मैवहिपृथिव्यात्मा ॥ खं० ॥ ८ ॥ विष्णुराकाशनामकः । आदीप्तत्वाद्वरीयांश्चपरमोहरिरेवहीतिसत्तत्वे ।

दिसमुच्चायकः। तथाचसूत्रं। आकाशस्तल्लिंगादिति। पूर्वमग्न्याद्याःसामाद्यभिमानित्वात्सामादिशब्दवाच्याइत्युक्तं । इदानींयोगे नापिसामादिशब्दवाच्यास्तइत्याह॥ **शुभेति** ॥दाहादावित्यंतस्ययोग्यतयालाभः । स्वोविष्णुःरमत्यस्मिन्त्सागरइतिवरुणःस्वरः स्मृतइत्यर्थः।उदयेनजगत्प्रवृत्तिहेतुत्वादित्यर्थः। दक्षअद्यतइत्यन्ननामकःस्यात्। कोदक्षात्तेत्यतउक्तंअत्तारुद्रइति।तथापिदक्षस्यत दद्यत्वंकुतइत्यतउक्तंतद्विरोधादिति । रुद्रविरोधादित्यर्थः। स्वर्गवयंलोकमिति असौलोकइतिचरुद्रेस्वर्गासौलोकशब्दाःप्रयुक्ताः। तत्रस्वर्गशब्दंनिर्वक्ति॥ **स्वइति** ॥ यतःस्वतंत्रत्वात्स्वेविष्णौरमतइतिस्वरितिवायुरुच्यते ।यतश्चमुक्तौसदाशिवस्तस्मिन्गतोतःसः स्वर्गइत्युच्यतइत्यर्थः । आसावित्यस्यापेक्षितपूरणेनार्थमाह ॥ **असुसंस्थत्वादिति** ॥ अयंलोकइतिब्रह्मणिप्रयुक्तस्यायमित्य स्यार्थमाह ॥ **सर्वेति** ॥ लोकशब्दंनिर्वक्ति ॥ **लोकइति** ॥ रुद्रेप्रयुक्तलोकशब्दस्याप्ययमेवार्थः। अस्यलोकस्यकागतिरित्याका शइतिहोवाचेत्यत्रब्रह्मोत्तमत्वोक्तावपिसर्वोत्तमत्वंलब्धमेवेतिभावेनाह ॥ **एतेषामिति** ॥ आकाशशब्दस्तुप्रागेवनिरुक्तः । इंद्रे प्रमाणेनाप्शब्दस्यानिरुक्तेःस्वयंनिर्वक्ति ॥ **आपालनादिति** ॥ आसमंतादित्यर्थः । वरीयसःपरः परोवरीयानितिव्याख्या नमसत् । तथासतिपरवरीयानित्येवप्रयोगापातात्। एतेनपरश्चवरीयांश्चपरोवरीयानित्यप्यपास्तं । परत्वस्यपृथग्विशेषणत्वेपुन

भा० । शुभाशुभानांदाहादौसाम्यात्सामाग्निरीरितः। स्वोविष्णुःसागरेरंतावरुणोतःस्वरःस्मृतः । उदयाज्जगत्प्रणेतृत्वात्सूर्यःप्राणउदाहृतः। अत्तारुद्रस्तद्विरोधाद्दक्षःस्यादन्ननामकः । स्वोविष्णुस्तद्रतिर्वायुस्तद्गोमुक्तौसदाशिवः । अतःस्वर्गोसुसंस्थत्वादसावितिचकीर्तितः । सर्वदेवांतरत्वात्तुब्रह्मायंसमुदाहृतः । लोकोज्ञानस्वरूपत्वादेतेषांपरमोहरिरिति ब्रह्मतर्के । आपालनादापइंद्रः ।

रुक्त्यापाताच्चेतिभावेनतत्तात्पर्यमाह ॥ अधिकमिति ॥ अक्षरार्थंतूत्तरत्रवक्ष्यति । ननुपरोवरीयोहास्यभवतीतिकथं भगवतः
सर्वान्प्रत्यविशिष्टत्वादित्यतस्तद्व्याचष्टे ॥ तत्परोवरीयइति ॥ पूर्वंपरोवरीयानितिपुल्लिंगांतशब्दश्रवणादत्रनपुंसकलिंगांतशब्द
श्रवणादन्यदेवैतदितिशंकापरिहारायतत्परोवरीयइत्युक्तं । यावत्तएनंप्रजायांमुद्गीथंवेदिष्यंतइत्यत्रयावत्तेतवप्रजायामुद्गीथवेदि
ष्यंतइतिव्याख्यानमसत् । प्रजाशब्दस्यैवाधिकारिप्रजामात्रपरत्वसंभवेतेतवेतिविशिष्योक्त्ययोगात् । अतोयावत्तइतितसि
लूप्रत्ययांतोयंशब्दःप्रमाणप्रमितयावत्कालपर्यंतमित्यर्थमाह । तत्रकोसौप्रमाणप्रमितःकालइत्यतआह ॥ यावत्तइति ॥
खं० ९ ॥ ततश्चायंखण्डद्वयार्थः ॥ त्रयउद्गीथेउद्गीताख्यभगवद्विषये कुशलाबभूवुर्ह । केते शिलकोनामतः शलावत्यांभवः
शालावत्यः । चिकितायनस्यापत्यंचैकितायनः । दाल्भ्योदल्भगोत्रापत्यं दाल्भ्योनामतइतिवा । प्रवाहणोनामतः । जिबि
लस्यापत्यंजैबिलि रितित्रयइतिसंबंधः । तेत्रयोन्योन्यमूचुर्ह । किमिति । वयमुद्गीथविषयेकुशलावैनिपुणास्मोतोहंतयद्यनुम
तिर्भवतांतर्हि उद्गीथेकथां वीतरागकथारूपवादकथां वदामइति ॥ १ ॥ तथास्त्वित्युक्त्वातेहसमुपविविशुरुपविष्टवंतः । ते
षांमध्येसप्रवाहणोजैबिलिः शिलकचैकितायनौप्रतिउवाचह । किमिति । भगवंतौपूजार्हावग्रेवदतां । अहंब्राह्मणयोर्वदतो

भा० । अधिकंवरीयान्परोवरीयान् । तत्परोवरीयोऽस्यरक्षकंभवति । यावत्तःद्वापरादिपर्यंतं ॥ खं० ९ ॥
उप० । त्रयोहोद्गीथेकुशलाबभूवुःशिलकःशालावत्यश्चैकितायनोदाल्भ्यःप्रवाहणोजैबिलिरिति । तेहोचुरुद्गीथेवैकुशलाःस्मोहंतोद्गीथेकथांवदामइति ॥ १ ॥ तथेतिहसमुपवि
विशुःसहप्रवाहणोजैबिलिरुवाचभगवंतावग्रेवदतांब्राह्मणयोर्वदतोर्वाच ऽश्रोष्यामीतिसहशिलकःशालावत्यश्चैकितायनंदाल्भ्यमुवाचहंतत्वापृच्छानीतिपृच्छेतिहोवाच ॥ २ ॥

र्वाचंश्रोष्यामीति । अनेनास्यक्षत्रियत्वमवगम्यते ।एवमुक्तःसशिलकःशालावत्य श्चैकितायनंदाल्भ्यमुवाच । हंतयद्यनुमतिस्त्व
वतर्हित्वात्वामहंपृच्छामीति । एवमुक्तोदाल्भ्यःपृच्छेतिहोवाच ॥२॥ प्रश्नोत्तरक्रमंदर्शयति ॥ कासाम्नइति ॥ साम्नःशुभाशुभा
नांदाहादौसाम्यात्सामनामकस्यसामाभिमानिनोग्नेःकागतिःकिंमोक्षेगम्यमितिपृष्टे स्वरःस्वोविष्णूरमत्यस्मिन्नितिस्वरनामकः
स्वराभिमानीवरुणइतिहोवाच । एवमुत्तरत्रापि । प्राणःसूर्यःउदयेनजगत्प्रणेतृत्वात् । प्राणावराभिमानित्वाच्च । अन्नंदक्षः ।
रुद्रेणाद्यत्वादन्नाभिमानित्वाच्च । आपइंद्रः । आपालनादबभिमानित्वाच्च ॥ ३ ॥ असौलोकोरुद्रः । असौमुख्यप्राणेस्थित
त्वात्प्रकाशरूपत्वात्द्युलोकाभिमानित्वाच्च । अमुष्यलोकस्यरुद्रस्यकागतिरितिपृष्टे स्वर्गस्वनामकविष्णुरतेवायौमुक्तौगच्छतीति
स्वर्गनामकं लोकंप्रकाशरूपं स्वर्गलोकाभिमानिनंरुद्रं नातिनयेत्अतिक्रम्यान्यमुत्तमत्वेननजानीयादितिहोवाच । हरेःसर्वोत्तमत्वं
जानन्नपिऋषिर्विशेषज्ञानसंप्राप्त्यैरुद्रस्यसर्वोत्तमत्वमाह । कस्मान्नस्वर्गलोकमतिनयेदित्यतआह ॥ स्वर्गमिति ॥ वयंस्वर्गलोकं
स्वर्गाभिमानिनंरुद्रंप्रतिसामाभिसंस्थापयामः सामरुद्रप्रतिपादकमितिजानीमइतियावत् । तदपिकुतः । हियस्मात्सामस्वर्गसं
स्तावं स्वर्गाभिमानिरुद्रस्तावकमिति तस्मात्स्वर्गलोकंप्रतिसामाभिसंस्थापयामइतिसंबंधः ॥ ४ ॥ एवमुक्तःशिलकःशालाव
त्यस्तंदाल्भ्यंप्रत्युवाचह । हेदाल्भ्यतेतव साम सामप्रतिपाद्यतयाज्ञातंवस्तु अप्रतिष्ठितंवैकिलअपर्यवसितमेवखलु । सर्वोत्तमं

उप० । कासाम्नोगतिरिरितिस्वरइतिहोवाचस्वरस्यकागतिरिरितिप्राणइतिहोवाचप्राणस्यकागतिरित्यन्नमितिहोवाचान्नस्यकागतिरित्यापइतिहोवाच ॥ ३ ॥ अपांकागतिरित्यसौ
लोकइतिहोवाचामुष्यलोकस्यकागतिरिरितिनस्वर्गंलोकमतिनयेदितिहोवाचस्वर्गंवयंलोकंसामाभिसंस्थापयामःस्वर्गसꣳस्तावंहिसामेति ॥ ४ ॥ तंहशिलकःशालावत्यश्चैकितायनंदा
ल्भ्यमुवाचाप्रतिष्ठितंवैकिलतेदाल्भ्यसामयस्त्वेतर्हिब्रूयान्मूर्धातेविपतिष्यतीतिमूर्धातेविपतेदिति ॥ ५ ॥

नभवतीतियावत्। अतोयस्तु यःकश्चि देतर्हिइदानीं तेतव नस्वर्गलोकमतिनयेदितिवदतोमूर्धातेविपतेदितिब्रूयाच्चे त्तर्हितेमू
र्धाविपतिष्यति। विस्पष्टंपतिष्यति। अहंतुत्वत्स्नेहात्तथानवदिष्यामीतिभावः। इत्युवाचेतिद्वितीयेतिशब्दस्यान्वयः ॥ ५ ॥ एव
मुक्तोदाल्भ्योयदिमदीयंसामाप्रतिष्ठितं हंततर्हिअहमेतत्सामभगवतःपूजार्हाद्वेदानीत्युवाच । एवमुक्तःशिलकोविद्धीतिहोवाच।
दाल्भ्यःपृच्छति ॥ **अमुष्येति** ॥ अमुष्यलोकस्यरुद्रस्यकागतिरितिपृष्टे अयंलोकःसर्वदेवांतरत्वादयमितिनामकः प्रकाशरूप
त्वाल्लोकनामकः पृथिव्यभिमानीब्रह्मैवेतिहोवाचशिलकः। अस्यलोकस्यपृथिव्यभिमानिनोब्रह्मणःकागतिरितिदाल्भ्येनपृष्टे न
प्रतिष्ठांलोकंसर्वाधारपृथिव्यभिमानिनंब्रह्माणमतिक्रम्यान्यमुत्तमत्वेननजानीयादितिहोवाचशिलकःशालावत्यः। प्रतिष्ठांवयमि
त्यादिपूर्ववत् ॥ ६ ॥ तंशिलकंशालावत्यंप्रवाहणोजैबिलिरुवाच। हेशालावत्य तेसाम त्वयासामप्रतिपाद्यत्वेनज्ञातंवस्तु अंतवद्वै
उत्तमवस्त्वंतरोपेतमेवखल्वित्यर्थः। यस्त्वेतर्हीत्यादिपूर्ववत्। वेदानीतिशिलकेनोक्तेविद्धीतिहोवाचप्रवाहणः ॥ ७ ॥ **अष्टमः
खंडः** ॥ ८ ॥अस्यलोकस्यपृथिव्यभिमानिब्रह्मणःकागतिरितिपृष्टे आकाशःआदीप्तत्वादाकाशनामकोविष्णुरितिहोवाचप्रवाहणः।

---

उप०। हंताहमेतद्भगवतोवेदानीति विद्धीतिहोवाचामुष्यलोकस्यकागतिरित्ययंलोकइतिहोवाचास्यलोकस्यकागतिरितिनप्रतिष्ठांलोकमतिनयेदितिहोवाचप्रतिष्ठांवयंलोकंसामा
भिसंस्थापयामःप्रतिष्ठासंस्तावंहिसामेति ॥ ६ ॥ तंहप्रवाहणोजैबिलिरुवाचांतवद्वैकिलतेशालावत्यसामयस्त्वेतर्हिब्रूयान्मूर्धातेविपतिष्यतीतिमूर्धातेविपतेदितिहंताहमेतद्भगवतोवे
दानीतिविद्धीतिहोवाच ॥ ७ ॥ **अष्टमःखंडः** ॥ ८ ॥ अस्यलोकस्यकागतिरित्याकाशइतिहोवाचसर्वाणिहवाइमानिभूतान्याकाशादेवसमुत्पद्यंतेआकाशंप्रत्यस्तंयंतिआकाशो
ह्येवैभ्योज्यायानाकाशःपरायणंसएषपरोवरीयानुद्गीथःसएषोनंतः ॥ १ ॥



कथमेतस्यपृथिव्यभिमानिब्रह्मगतित्वमित्यतस्तस्यमाहात्म्यमाह ॥ **सर्वाणीति** ॥ सर्वाणीमानिप्रमाणप्रसिद्धानि भूतानिब्र
ह्मरुद्रादीनि आकाशादेवसमुत्पद्यंते। हवाइत्यस्यार्थस्यवैदिकींसुप्रसिद्धिमाह। आकाशंप्रत्यस्त मदर्शनंयंति । तत्रैवप्रलयेमुक्तौ
चलीनाःनिभवंति। कुतः। हियस्मादाकाशएवैभ्योब्रह्मरुद्रादिभूतेभ्योज्यायान्। तदपिकुतः। आकाशःपरायणमुत्तमाश्रयः।
नैतस्मादप्युत्तमंवस्त्वाशंक्यमितिभावेनाह ॥ **सइति** ॥ सएषआकाशनामाभगवान्परोवरीयान्। अधिकंवरीयान्। उद्गीथउ
च्चैर्गेयत्वात्। सएषोनंतो देशतःकालतोगुणतश्चपरिच्छेदशून्यत्वादनंतनामकः ॥ १ ॥ उक्तरीत्याभगवदुपासकस्यफलमाह ॥
**परोवरीयइति** ॥ योधिकारीएतमाकाशनामकंपरोवरीयांसमुद्गीथमेवमुक्तरीत्याब्रह्मगतित्वेनविद्वानुपास्ते । अस्योपासकस्य
परोवरीयःपरोवरीयोनामकंब्रह्म रक्षकंभवति । सउपासकःपरोवरीयसोधिकंवरीयसोलोकान्वैकुंठानंतासनश्वेतद्वीपाख्यान्जय
तिप्राप्नोतिह ॥ २ ॥ परोवरीयोहास्यरक्षकंभवतीत्युक्तंविवरितुंविश्वासजननायाख्यायिकामाह ॥ **तमिति** ॥ अतिधन्वानामतः
शुनकस्यापत्यंशौनकः तंउद्गीथंभगवंतंउदरशांडिल्यायस्वशिष्यायोक्त्वोवाच। किमिति। येप्रजायामधिकारिजीवसमूहेएनमुद्गी
थंत्रेतायांवेदिष्यंते एभ्यउद्गीथवेत्तृभ्यःपरोवरीयोब्रह्मास्मिँल्लोकेयावत्तः प्रमाणेनयावत्कालपर्यंतमुक्तंद्वापरादिपर्यंतंतावज्जीवनंभ
विष्यति। नकेवलमेतावत् तथामुष्मिंल्लोकेजीवनंभविष्यति। पुनर्लोकइत्युक्तिरादरार्था। इदानींपरोवरीयोहास्यभवतीत्युक्तंविवृ

---

उप०। परोवरीयोहास्यभवतिपरोवरीयसोहलोकाञ्जयतियएतमेवंविद्वान्परोवरीयांसमुद्गीथमुपास्ते ॥ २ ॥ तंहैनमतिधन्वाशौनकउदरशांडिल्यायोक्त्वोवाचयावत्तएनंप्रजायामु

णोति ॥ **सइति** ॥ सप्रसिद्धोयोधिकारीएतमेवंविद्वानुपास्तेऽस्योपासकस्यपरोवरीयएवास्मिंल्लोकेजीवनंभविष्यति । तथामु ष्मिंल्लोकेजीवनंभविष्यतीतिद्विरुक्तिर्विद्यासमाप्त्यर्था ॥ ३ ॥ **नवमःखंडः** ॥ ९ ॥ सामैकदेशप्रस्तावप्रतिहारोद्गीथनिष्ठांभगवदु पास्तिंवक्तुंतदर्थांकांचनाख्यायिकामाह ॥ **मटचीत्यादिखंडद्वयेन** ॥ तत्रमटच्यशनायाइत्यन्यथाप्रतीतिनिरासायप्रमाणेनम टचीशब्दार्थमाह ॥ **उपलाइति** ॥ वर्षोपलाइत्यर्थः । आटक्येत्येतत्दुर्गमार्थत्वाद्व्याचष्टे ॥ **आसन्नेति** ॥ दुर्गमार्थत्वात्प्रद्राण कइत्यस्यार्थमाह ॥ **प्रद्रवन्निति** ॥ कतमासादेवतेतिप्रश्नेप्राणइतिहोवाचेतिप्रसिद्धप्राणस्यैवप्रस्तावदेवतात्वमुच्यतइत्यसत् ॥ स र्वाणीतिवाक्यशेषेभगवल्लिंगश्रवणादितिभावेनतद्भगवत्परतयाव्याचष्टे ॥ **प्राणस्थेति** ॥ सविष्णुःप्रस्तावदेवतास्यात् । तत्रहेतुः प्राणस्थविष्णुनेति । अनेनसर्वाणिभूतानिप्राणमभ्युज्जिहतइत्येतद्व्याख्यातं । ननुसर्वप्रसवितृत्वेपिप्रस्तावदेवतात्वंकुतइत्यतआह ॥ **प्रस्तावइति** ॥ जनिर्जनिकर्तृत्वं । भावार्थकथनंचैतत् । कतमासादेवतेत्यादित्यइतिहोवाचेत्यत्रप्रसिद्धादित्यस्यैवोद्गीथदेवता त्वमुच्यतइतिप्रतीतिनिरासायतद्व्याचष्टे ॥ **आदित्येति** ॥ आदित्यसंस्थितःसएवपुरुषोत्तमोविष्णुरुद्गीथदेवतेत्यन्वयः । स्थान

---

द्गीथंवेदिष्यंतेपरोवरीयोहैभ्यस्तावदस्मिँल्लोकेजीवनंभविष्यतितथामुष्मिँल्लोकेलोकइतिसयएतमेवंविद्वानुपास्तेपरोवरीयएवहास्यास्मिँल्लोकेजीवनंभविष्यतितथामुष्मिँल्लोकेलोकइतिलो केलोकइति ॥ ३ ॥ **नवमःखंडः** ॥ ९ ॥

भा०। उपलाइष्टकाःस्थूलामटचीतिप्रकीर्तिताइतिशब्दनिर्णये । आसन्नयौवनायोषिदाटकीत्यभिधीयतइतिच । प्रद्रवन्नन्नपानार्थंप्रद्राणकइतीरितइतिच ॥ **दशमःखंडः**॥१०॥ प्राणस्थविष्णुनासर्वेप्रसूयंतेयतस्ततः । प्रस्तावदेवतासस्यात्प्रस्तवस्तुजनिर्यतः । आदित्यसंस्थितोविष्णुर्यत्सदासर्वगीतभुक् ॥

भेदेनभेदशंकानिरासायसएवेत्युक्तं । तत्रहेतुमाह ॥ गानस्यदेवतेति ॥ तदपिकुतइत्यतउक्तं ॥ यत्सदासर्वगीत भुगिति ॥ सर्वगानानुभवितेत्यर्थः । राजादिपुरतोयद्गीतंतद्भोक्तृत्वाभावेकथंसर्वगीतभोक्तृत्वमित्यतआह ॥ राजादा विति ॥ अनेनसर्वाणिहवाइमानिभूतान्यादित्यमुच्चैःसंतंगायंतीत्येतद्व्याख्यातं । कतमासादेवतेत्यन्नमित्यत्रप्रसिद्धान्नस्यैव प्रतिहारदेवतात्वमुच्यतइतिप्रतीतिनिरासायतद्व्याचष्टे ॥ अन्नस्थेनैवेति ॥ सोन्नस्थोविष्णुःप्रतिहारदेवता ।तत्रहेतुरन्नस्थेनेति । अनेनसर्वाणिहवाइमानिभूतान्यन्नमेवप्रतिहरमाणानिजीवंतीत्येतद्व्याख्यातं । अन्नस्थेनविष्णुनाभूतानांजीवनेपिविष्णुःप्रतिहार देवतेतिकुतइत्यतआह ॥ प्रतिहारइति ॥ उच्चैःसंतंऊर्ध्वंसंतमुपरिवर्तमानमित्यन्यथाप्रतीतिनिरासायतदनूद्यव्याचष्टे ॥ उच्चैरिति ॥ उच्चैरित्यस्याव्ययत्वादुत्तममितिव्याख्यानं । अर्थांतरंतुप्रत्यक्षादिसिद्धमितिनवक्तव्यं ॥ ततश्चायंखंडद्वया र्थः ॥ उषस्तिर्नामतश्चक्रमयनंयस्यासौचक्रायणःप्रायोरथचक्रसमीपेतिष्ठति । चक्रायणस्यापत्यंचाक्रायणः । कुरुदेशेवसन्कुरु षुमटचीहतेषुवर्षोपलैर्नाशितेषुसत्सुअतएवातिवृष्ट्यादुर्भिक्षेपतितेआटक्याआसन्नयौवनयाजाययासहेभ्यग्रामेधनिकग्रामे इभाधि

---

भा० । राजादौगीतमप्यज्ञैर्भुङ्क्तेगानस्यदेवता । उद्गीथदेवतातस्मात्सएवपुरुषोत्तमः । अन्नस्थैनैवजीवंतिभूतान्येतानिविष्णुना । प्रतिहारदेवताऽतःसप्रतिहारोहिभोजनमितिच । उच्चैःसंतमुत्तमंसंतं ॥ १० ॥

उप० । मटचीहतेषुकुरुष्वाटक्यासहजाययोषस्तिर्हचाक्रायणइभ्यग्रामेप्रद्राणकउवास । सहेभ्यंकुल्माषान्खादंतंबिभिक्षे ॥ १ ॥

पतिग्रामेवा प्रद्राणकोन्नपानार्थंप्रद्रवन्नुवास । सचाक्रायणअन्नार्थीअटन्कुल्माषान्कुत्सितमाषान्खादंतमिभ्यंयदृच्छयोपलभ्य बिभिक्षेयाचितवान् ॥ १ ॥ सइभ्यस्तंप्रत्युवाच । चशब्दोवधारणे । येमेममोपनिहिताःसमीपस्थिताःकुल्माषाइमएवविद्यंते । नेतोन्येविद्यंते । यत्यस्मात्तस्मात्कुल्माषानसंतिदातुं । इमेचनदेयाउच्छिष्टत्वादितिभावः । एतेषामुच्छिष्टानोमेवकुल्माषाणांमध्ये कांश्चनमेदेहीतिहोवाचचाक्रायणः । एवमुक्तइभ्यस्तान्कुल्माषानस्मैचाक्रायणायप्रददौ । हंततर्हिअनुपानमुच्छिष्टजलपानंचकु र्वित्युवाच । अनुपानंकरभस्त्रिकास्थितोदकपानमित्यप्याहुः । एवमुच्छिष्टजलपानार्थंप्रार्थितश्चाक्रायणएतदुदकपानेउच्छिष्टमेव मेमयापीतंस्यादितिहोवाच । तत्रेभ्योबभाषे । एतेपिकुल्माषाउच्छिष्टानस्वित् नकिं ॥ २॥ तत्रमुनिरुवाच । इमान्कुल्माषानखा दन्नभक्षयन्नैवाजीविष्यंनजीविष्यामि । अतःप्राणात्ययेदोषाभावात्तेभक्षिताः । उदपानंजलपानंतुमेकामोममेच्छाधीनमिदानींवर्तते । वृथोच्छिष्टस्वीकारेदोषप्राप्तेर्नतत्पिबामीति । उक्तंचसूत्रकृता । ॐसर्वान्नानुमतिश्चप्राणात्ययेतद्दर्शनादिति । सचाक्रायणस्तान्कु ल्माषांस्तत्रखादित्वातिशेषानतिशिष्टाञ्जायायाआजहारह । साजायाग्रएवपत्युरागमनात्पूर्वमेव सुभिक्षा शोभनभिक्षा लब्धान्ना बभूव । अतस्तान्कुल्माषान्प्रतिगृह्यनिदधौस्थापितवती ॥ ३ ॥ सचाक्रायणस्तांरात्रिंनीत्वाप्रातःसंजिहानःशयनंनिद्रांवापरित्य

---

उप० । त९ंहोवाचनेतोन्येविद्यंतेयच्चयेमइमउपनिहिताइत्येतेषांमेदेहीतिहोवाचतानस्मैप्रददौहंतानुपानमित्युच्छिष्टंवैमेपीतंस्यादितिहोवाचनस्विदेतेप्युच्छिष्टाइति ॥ २ ॥ नवाअजीविष्यमिमानखादन्नितिहोवाचकामोमउदपानमिति सहखादित्वाऽतिशेषान्जायायाआजहारसाग्रएवसुभिक्षाबभूवतान्प्रतिगृह्यनिदधौ ॥ ३ ॥ सहप्रातःसंजिहानउवाच यद्बतान्नस्यलभेमहिलभेमहिधनमात्रांराजाऽसौयक्ष्यतेसमासर्वैरार्त्विज्यैर्वृणीतेति ॥ ४ ॥



जन्उत्तिष्ठन्नितियावत् । उवाच । प्रत्यहमन्नार्थंखिद्यंतींस्वजायांप्रतिबतेत्यास्वादने । यत्यस्माद्वयमन्नस्यान्नंलभेमहि । अन्नस्यमात्रांभारमितिवा । धनमात्रांधनभारंचलभेमहि । तेनास्माकंजीवनंभविष्यति । अतस्तवखेदोमाभूदित्यर्थः । अन्नादिलाभेकारणमाह ॥ राजेति ॥ असौदूरेस्थितोराजायक्ष्यतेतत्राहंगमिष्यामि । सराजामांसर्वैरार्त्विज्यैःऋत्विक्कर्मभि र्वृणीते । अतस्तत्रगमनायपाथेयंकिमप्यस्तीत्युवाचेतिसंबंधः ॥ ४ ॥ एवमुक्तवंतंपतिंप्रतिजायोवाच ॥ हंतेति ॥ हंतेतिखे दे । हेपतेयेभवद्भिःपूर्वेद्युरानीताःइमएवकुल्माषावर्त्तंतइति । तएवनेयाइत्युक्त्वातान्प्रतिगृह्यखादित्वाऽमुंयज्ञंविततं विस्तृतमे यायगतवान् । तत्रयज्ञे । आस्तावेआस्तुवंत्यस्मिन्नित्यास्तावाख्येकर्मणिस्तोष्यमाणान्स्तोतॄनुपसमीपेउपविवेशोपविष्टवान् । सचाक्रायणःप्रस्तोतारमुवाचह ॥ ५ ॥ हे प्रस्तोतरित्यभिमुखीकृत्य यादेवताप्रस्तावंप्रस्तावभक्तिमन्वायत्ता संबद्धातत्प्रति पाद्यातत्स्थाचतांदेवतांचेद्यदित्वमविद्वान्प्रस्तोष्यसितर्हितेतवमूर्धाविपतिष्यतीति ॥ ६ ॥ एवमेवोद्गातारंप्रत्युवाच । उद्गातारंप्र तिप्रस्तोतर्यादेवतेत्याद्युक्तेरसंगतेरेवमित्युक्तंविवृणोति ॥ उद्गातरिति ॥ पूर्ववदर्थः । एवमेवप्रतिहर्तारमित्यादिकमपिव्याख्ये

---

उप० । तंजायोवाचहंतपतइमएवकुल्माषाइतितान्खादित्वाऽमुंयज्ञंविततमेमाय । तत्रोद्गातॄनास्तावेस्तोष्यमाणानुपोपविवेश । सहप्रस्तोतारमुवाच ॥ ५ ॥ प्रस्तोतर्यादे- वताप्रस्तावमन्वायत्तातांचेदविद्वान्प्रस्तोष्यसिमूर्धातेविपतिष्यतीति ॥ ६ ॥ एवमेवोद्गातारमुवाचोद्गातर्यादेवतोद्गीथमन्वायत्तातांचेदविद्वानुद्गास्यासिमूर्धातेविपतिष्यतीति ॥ ७ ॥

यं ॥७॥ एवंचाक्रायणेनोक्तास्तेप्रस्तोत्रादयःप्रस्तावादिदेवताज्ञानाभावात्समारताःस्वस्वव्यापारान्निवृत्तास्तूष्णीमासांचक्रिरे॥८॥
दशमःखंडः ॥ १० ॥ अथतेषांतूष्णींभावानंतरमेनंचाक्रायणंप्रति । यजमानोराजोवाच । अहंभगवंतंपूजार्हं वैशब्देनैवंज्ञानि नस्तवपूजार्हत्वंप्रसिद्धमित्याह। विविदिषाणि त्वंकिंनामकः कस्यपुत्र इतिवेत्तुमिच्छामीति। एवमुक्तोमुनिरहंनाम्नोषस्तिरस्मि चाक्रायणःचक्रायणस्यपुत्रोस्मीतिहोवाच । एवमुक्तःसराजोवाच । भगवंतमेवाहमेभिःसर्वैरार्त्विज्यैःऋत्विक्कर्मभिःपर्यैषिषंपर्येषणं कृतवानस्मि । भगवंतमेवसर्वैःऋत्विक्कर्मभिर्वृणीतुंविचारितवानस्मीतियावत् । तर्हिपूर्वंकिमर्थमेतेप्रस्तोतृत्वादिनावृताइत्यतआह ॥ भगवतइति॥ पूर्वमहंभगवतोगतेरवित्यावाअज्ञानेनैवान्यान्प्रस्तोत्रादीनवृषि। यद्वाभगवतोऽवित्यावाअलाभेनैवेत्यर्थः । इदानींभगवाँल्लब्धः । अतोभगवानेव तु विशेषेण मेमया सर्वैरार्त्विज्यैर्वृतइति ॥ १ ॥ एवमुक्तोमुनिर्यद्यहमेवैतत्कर्मकुर्यांतर्हिब्राह्मणद्रोहो यद्यत्रानंगीकारस्तर्हिधनाप्राप्तिरितिविचार्यतथास्त्वित्युवाच । किंतु । अथतर्हिएवंतर्हि । येपूर्वंत्वयावृताएतएवसमतिसृष्टामदाज्ञप्ताःस्तुवंतांस्तुवंतु । त्वयात्वेतत्कार्यं । यावत्तेभ्यःप्रस्तोत्रादिभ्यःसर्वेभ्योधनंदद्याः तावन्ममदद्याइति । एवमुक्तोयज

---

उप० । एवमेवप्रतिहर्तारमुवाचप्रतिहर्तर्यादेवताप्रतिहारमन्वयत्तातांचेदविद्वान्प्रतिहरिष्यसिमूर्धातेविपतिष्यतीति । तेहसमारतास्तूष्णीमासांचक्रिरे ॥ ८ ॥

दशमःखंडः ॥ १० ॥

उप० । अथहैनंयजमानउवाचभगवंतंवाअहंविविदिषाणीत्युषस्तिरस्मिचाक्रायणइतिहोवाच । सहोवाचभगवंतंवाअहमेभिस्सर्वैरार्त्विज्यैःपर्यैषिषंभगवतोवाअहमवित्याऽन्यानवृषि । भगवांस्त्वेवमेसर्वैरार्त्विज्यैरिति ॥ १ ॥ तथेत्यथतर्ह्येतएवसमतिसृष्टाःस्तुवंतांयावत्तेभ्योधनंदद्यास्तावन्ममदद्याइति । तथेतिहयजमानउवाच ॥ २ ॥

मानस्तथेतिहोवाच । हेतियजमानस्यहर्षद्योतकं । उभयविधब्राह्मणापराधाभावोममसंपन्नइति ॥ २ ॥ अथैवंचाक्रायणराजसं
वादानंतर मेनंचाक्रायणंप्रति प्रस्तोतोपससादगुरुभावेनोपजगाम । प्रास्तोतर्यादेवतेत्यादिनामामांभगवानवोचत्पूर्वं । कतमा
सादेवता याप्रस्तावभक्तिमन्वायत्तेतिपृष्टः प्राणोमुख्यप्राणस्थः प्राणनामाविष्णुरितिहोवाच। युक्तंप्राणस्थविष्णोःप्रस्तावदेवतात्वं
प्रस्तावशब्दार्थस्यात्रैवसत्वादितिभावेनाह ॥ **सर्वाणिहवाइमानिभूतानिप्राणमभ्युज्जिहतइति** ॥ अभ्युज्जिहतेत्यजंति ।
प्राणान्निस्सरंतिउत्पद्यंतइतियावत् । अनेनप्रसूयंतेनेनेतिप्रस्तावइतिप्रसवकर्तृत्वंप्रस्तावशब्दार्थः । तच्चप्राणस्थविष्णोरेववर्त
तइतिसएवप्रस्तावदेवतेत्युक्तंभवति । लोकेपितुरन्यस्यमारकत्वदर्शनात्संहर्तान्यएवेतिनमंतव्यमितिभावेनसर्वाणिहवाइमानि
भूतानिप्राणमेवाभिसंविशंतिप्रलयकालइत्युक्तं । सैषादेवताप्रस्तावमन्वायत्तातांचेदविद्वान्प्रस्तोष्यस्तर्हिंमयातथोक्तस्यतांचेदवि
द्वान्प्रस्तोष्यसीत्याद्युक्तस्यतेमूर्धाशिरोव्यपतिष्यत् । मद्वचनस्यामोघत्वात् । त्वंतुतथानकृतवान् । अतोमहान्प्रमादःपरिहृत
इतिभावः ॥ ३ ॥ अथप्रस्तावदेवतानिर्णयानंतरं । अन्यत्पूर्ववत् । आदित्यःआदित्यस्थोविष्णुः । युक्तमादित्यस्थस्यविष्णो
रुद्गीथदेवतात्वं । तस्यगानदेवतात्वादितिभावेनतत्रहेतुमाह ॥ **सर्वाणीति** ॥ यद्वोद्गीथशब्दार्थस्यतत्रैवभावात्सएवोद्गीथइतियु

---

उप० । अथहैनंप्रस्तोतोपससाद । प्रस्तोतर्यादेवताप्रस्तावमन्वायत्तातांचेदविद्वान्प्रस्तोष्यसिमूर्धातेविपतिष्यतीतिमाभगवानवोचत्कतमासादेवतेतिप्राणइतिहोवाचसर्वा
णिहवाइमानिभूतानिप्राणमेवाभिसंविशंतिप्राणमभ्युज्जिहतेसैषादेवताप्रस्तावमन्वायत्तातांचेदविद्वान्प्रस्तोष्योमूर्धातेव्यपतिष्यत्तथोक्तस्यमयेति ॥ ३ ॥ अथहैनमुद्गातोपससादो
द्गातर्यादेवतोद्गीथमन्वायत्तातांचेदविद्वानुद्गास्यसिमूर्धातेविपतिष्यतीतिमाभगवानवोचत्कतमासादेवतेत्यादित्यइतिहोवाच ।

क्तमित्याह ॥ **सर्वाणीति** ॥ सर्वाणीमानिभूतानिगानकर्तृणिआदित्यमादित्यस्थंविष्णुमुच्चैःसंतमुत्तमंसंतंगायंति । हवाइतिबहु प्रमाणसिद्धिमाह । अनेनादित्यस्थस्यविष्णोःसर्वगीतभुक्त्वाद्गानदेवतात्वमित्युक्तंभवति ॥ ४ ॥ **सैषेत्यादिपूर्ववत्** । अन्नमन्नस्थो विष्णुः । युक्तमन्नस्थविष्णोःप्रतिहारदेवतात्वं । प्रतिहारशब्दार्थस्यतत्रैवमुख्यतोभावादितिभावेनाह ॥ **सर्वाणीति** ॥ सर्वा णीमानिभूतान्यन्नमेवान्नस्थंभगवंतमेव प्रतिहरमाणानिभोजनंकुर्वाणानि तदुपजीवकानीतियावत् । जीवंति । अन्यत्व्या ख्यातं ॥ ५ ॥ **एकादशःखंडः** ॥११॥ पूर्वमुद्गीथोपासकस्यपापाविद्धत्वा दिकंफलमुक्तमिदानीमन्नप्राप्तिलक्षणफलमाख्यायिक याह ॥ **अथेति** ॥ बकोदाल्भ्यो ग्लावोवामैत्रेयइत्यत्र बकोदाल्भ्यइत्येको ग्लावोमैत्रेयइत्यपरइत्यसत् । तथासतिविकल्पार्थक वाशब्दायोगात् । उद्वव्राज प्रतिपालयांचकारेत्येकवचनानुपपत्तेश्च।कथंतर्हिएकस्यैवबकोदाल्भ्यइतिग्लावोवामैत्रेयइतिचोभय थानिर्देशइत्यतआह ॥ **दल्भपुत्रइति** ॥ दल्भपुत्रोदाल्भ्यः बकोनामतः मित्रयापुत्रार्थंस्वीकृतोमित्रापालितपुत्रोतोमैत्रेयः

---

उप० । सर्वाणिहवाइमानिभूतान्यादित्यमुच्चैस्संतंगायंतिसेषादेवतोद्गीथमन्वायत्तातांचेदविद्वानुद्गास्योमूर्धातेव्यपतिष्यत्तथोक्तस्यमयेति ॥४॥ अथहैनंप्रतिहर्तोपससादप्रतिहर्तर्या देवताप्रतिहारमन्वायत्ता तांचेदविद्वान्प्रतिहरिष्यसिमूर्धातेविपतिष्यतीतिमाभगवानवोचत्कतमासादेवतेत्यन्नमितिहोवाच । सर्वाणिहवाइमानिभूतान्यन्नमेवप्रतिहरमाणानिजीवं तिसैषादेवताप्रतिहारमन्वायत्ता तांचेदविद्वान्प्रत्यहरिष्योमूर्धातेव्यपतिष्यत्तथोक्तस्यमयेतितथोक्तस्यमयेति ॥ ५ ॥ **एकादशःखंडः** ॥ ११ ॥

भा० । दल्भपुत्रोबकोमित्रयापुत्रार्थंस्वीकृतोग्लाववत्तूष्णींस्थितत्वात्तयाग्लावेत्युक्तोग्लावनामकोजातः ।



प्रयोजनार्थमाह्वानेपिग्लाववत्तूष्णींस्थितत्वात्तयाग्लावेत्युक्तोग्लावनामकोजातइत्यर्थः । किंततइत्यतआह ॥ **अतइति** ॥ बकोदा ल्भ्यइत्येकोनिर्देशः । ग्लावोमैत्रेयइत्यपरः । उभयनिर्देशज्ञापकोवाशब्दइतिभावः । श्वभिर्दृष्टःशौवइत्यन्यथाप्रतीतिनिरासाय शौवउद्गीथइत्येतद्व्याचष्टे ॥ **प्रसादार्थमिति** ॥ श्वरूपिणांरुद्रादीनां बकास्यापि प्रसादार्थं श्वरूपिणावायुनोक्तउद्गीथःशौवोद्गी थइतिप्रोक्तइत्यन्वयः । यद्यपिश्वसंबंधित्वमेवशौवशब्दार्थः तथापिश्वरूपवायुनोक्तत्वमेवशौवशब्दप्रवृत्तिनिमित्तं नतुश्वभि दृष्टत्वं । श्वरूपदेवानांवायूक्तमंत्रश्रोतृत्वेनतद्द्रष्टृत्वाभावादितिभावः । रुद्रादीनामित्यनेन तमन्येश्वानइत्युक्ताःश्वानःसंद र्शिताः । नन्वन्नंनोभगवानागायत्वित्यन्नयाचनावसरएवोद्गीथमनुक्त्वाइहैवमाप्रातरुपसमीयातेतिवचनेकोभिप्रायइत्यतआह ॥ **उपासितइति** ॥तेश्वानआससृपुस्तेहसमुपविश्यहिंचक्रुरोमदामेत्यनेनवायूपदेशंविनैवदेवाओ३मदा३मेत्यादिमंत्रेहिंचक्रुरितिप्र तीयते तदयुक्तं । तथासतिश्वेतशुनःप्रादुर्भावोक्त्ययोगात् । प्रातरेनंप्रत्यागमनायोगाच्चेतिभावेनतद्व्याचष्टे ॥ **ॐमदामादि कमिति** ॥ ओमदामेत्यादिकमित्यर्थः । वायुस्थविष्णुमुद्दिश्येत्यनेनदेवोवरुणइत्यादिकंवायुस्थविष्णुपरमित्युक्तंभवति । तेनवा योरपिदेववरुणादिशब्दवाच्यत्वममुख्यतोस्तीतिगम्यते । तत्रविष्णुवाय्वोर्देववरुणसवितृप्रजापतिशब्दप्रवृत्तिनिमित्तान्याह ॥ ॥ **देवाविति** ॥ दीव्यतेर्गत्यर्थत्वाद्गत्यर्थानांज्ञानार्थत्वात्सर्वज्ञत्वादित्युक्तं । तुशब्दोवधारणार्थः । क्रमेणैवसर्वज्ञत्वात् । स्वपरग

---

भा० । अतउभयथास्यनिर्देशोभवतीत्यर्थः । प्रसादार्थंबकस्यापिवायुनोक्तःश्वरूपिणा । शौवोद्गीथइतिप्रोक्तोरुद्रादीनांश्वरूपिणां । उपासितःपौर्णमास्यांशौवोद्गीथेनकेशवः । सर्वाभीष्टंददातीतिप्रातरित्याहमारुतः । ओमदामादिकंमंत्रंवायुनोक्तंतुदेवताः । वायुस्थविष्णुमुद्दिश्यहिंकृत्यप्रापुरीप्सितं । देवौविष्णुश्चवायुश्चसर्वज्ञत्वात्क्रमेणतु । वरुणौ वरणीयत्वात्सवितारौप्रसूतितः । प्रजानांचपतीतद्वत्क्रमादेवप्रकीर्तिताइतिच ॥ **खं० १२** ॥

तसर्वज्ञत्वाद्विष्णोः । अन्यत्रालोचनएवसर्वज्ञत्वाद्वायोरित्यर्थः ॥ ततश्चायंखंडार्थः ॥ अथशब्दःप्रकरणांतरद्योतकः । अतः प्रयोजनसद्भावात् । शौवःशुनोक्तउद्गीथउच्यते । तत्तदाकदाचिद्बकोनामतःदाल्भ्योदल्भ्यपुत्रोग्लावोवाआह्वानेपिग्लाववत्तूष्णीं स्थितत्वान्मित्रयाग्लावेत्युक्तत्वाद्ग्लावनामकोमैत्रेयोमित्रयापुत्रार्थंस्वीकृतः । उभयथानिर्देशज्ञापकोवाशब्दः । स्वाध्यायमुद्दिश्योद्वव्राजह । तदित्येतदुत्तरत्रवासंबध्यते । तत्तदा तस्मैबकाय बकस्यप्रसादार्थमितियावत् । उपलक्षणमेतत् । देवानांप्रसादार्थमित्यपिग्राह्यं । श्वेतःश्वाश्वरूपोवायुःप्रादुर्बभूव । तंश्वरूपंवायुं अन्येश्वानःश्वरूपादेवाउपसमेत्यसमीपंप्राप्योचुः । उपलक्षणमेतत् । बकश्चेत्यपिग्राह्यं । किमितिनोस्माकमन्नमुद्दिश्यभगवानागायतुअन्नप्राप्तिहेतूद्गीथोपासनमुपदिशेतिभावः । वयंतुअशनायामवैअशितुमिच्छामोवै ॥ १ ॥ उपासितःपौर्णमास्यांशौवोद्गीथेनकेशवःसर्वाभीष्टंददातीतिभावेनतान्होवाचश्वरूपोवायुः । इहैवात्रैवमामांप्रतिप्रातःकाले उपसमीयातेति । तत्तदाबकोदाल्भ्योग्लावोवामैत्रेयःश्वरूपंवायुंप्रतिपालयांचकारह । तेश्वानःप्रातःकालेयथेदंनिदर्शनंबहिष्पवमानेनस्तोत्रेणस्तोष्यमाणाःसंरब्धाःसंरभवंतस्त्वरिताःसर्पंत्येवंसंरब्धाःसंतःआससृपुः । निर्दिष्टस्थलं



उप० । अथातःशौवउद्गीथस्तद्ध बकोदाल्भ्योग्लावोवामैत्रेयःस्वाध्यायमुद्वव्राज । तस्मैश्वाश्वेतःप्रादुर्बभूव । तमन्येश्वानउपसमेत्योचुरन्नंनोभगवानागायत्वशनायामवाइति॥१॥ तान्होवाचेहैवंमाप्रातरुपसमीयातेतितद्ध बकोदाल्भ्योग्लावोवामैत्रेयःप्रतिपालयांचकार । तेहयथैवेदंबहिष्पवमानेनस्तोष्यमाणाःसꣳरब्धाःसर्पंतीत्येवमाससृपुस्तेहसमुपविश्यहिंचक्रुरो३मदा३मों३पिबा३मों३देवोवरुणःप्रजापतिःसविता३न्नमिहा३हरदन्नपते३न्नमिहा३हराहरोमिति ॥ २ ॥ द्वादशःखंडः ॥ १२ ॥

प्रतिसंरब्धाः अन्योन्यसंलग्नाः सर्पत्येवंमुखेनान्योन्यस्यपुच्छंगृहीत्वाससृपुरितिवा । तेष्वागतेषुश्वरूपोवायुरोमदामेत्यादिकंमंत्रंतेषा मुपदिदेशेतिग्राह्यं । तेवायुनोपदिष्टाःश्वरूपादेवाःसमुपविश्यवायुंतत्स्थविष्णुंचोद्दिश्यहिंचक्रुर्हिंकारंकृतवंतः। तत्प्रकारमेवदर्शयति ॥ ओमिति ॥ ॐ हेगुणपरिपूर्ण । वायोतत्स्थभगवंश्च । वयमन्नमदाम ओंपिबाम । ॐअतोगुणपूर्णत्वादोंनामकःसर्वज्ञत्वाद्दे वो वरणीयत्वाद्वरुणः प्रजानांपालनात्प्रजापतिः प्रसवितृत्वात्सविता वायुस्तद्गतोविष्णुश्चेहान्नमाहरत्आहरतु । एवंपरोक्षतःप्रार्थ यित्वाऽपरोक्षतोपिप्रार्थयते ॥अन्नपतइति॥ हेअन्नपतेवायोतद्गतविष्णविहास्मदर्थमन्नमाहर।द्विरुक्तिःविद्यार्थावधारणार्थे । इति शब्दोविद्यासमाप्त्यर्थइत्युक्तं ॥ २ ॥ द्वादशःखंडः ॥१२॥ सामैकदेशोपास्तेःप्रकृतत्वात्तदेकदेशहावित्यादित्रयोदशस्तोभनिष्ठा मुपास्तिमाह ॥ अयमित्यादिना ॥ सामानाधिकरण्येनाभेदप्रतीतिनिरासायखंडंप्रमाणेनव्याचक्षाणस्तावदादिवाक्यंव्याचष्टे ॥ हूयतइति ॥ अत्र पृथिव्यां । यतोग्निहोत्रादिहूयतेअतइयंपृथिवीहावुकारइत्युच्यतइतिसंबंधः । अत्रहावित्यादिस्तोभएव व्याक्रियते । हावित्याक्रियमाणत्वाद्धावुकारइत्यर्थोज्ञेयः । वायुर्हायिकारइतिवाक्यंव्याचष्टे॥ हेतीति ॥ हेतितावदाश्चर्येवर्तते । आश्चर्यवदायातियतस्ततोवायुर्हायिकारइत्येकोर्थः । वाशब्दोव्याख्यानांतरद्योतकः । हेतिसुखमुच्यते । तदापयतिसुखकृदि तियावत् । सुखकृत्त्वतोवायुर्हायिकारइत्यन्योर्थः । चंद्रमाअथकारइतिवाक्यंव्याख्यातुमथशब्दार्थमाह ॥ अथेतीति ॥ अस्त्वानंतर्यमथशब्दार्थः । प्रकृतेकिमानंतर्यंचंद्रमसोविवक्षितमित्यतस्तद्दर्शयन्वाक्यंव्याचष्टे ॥ आनंतर्यादिति ॥

भा० । हूयतेचाग्निहोत्रादिर्हावुकारस्त्वियंयतः । हेत्याश्चर्यवदायातिहेतिवासुखकृत्त्वतः । हायिकारस्ततोवायुरथेत्युक्तमनंतरं । आनंतर्यात्प्रकाशस्यसूर्याच्चंद्रस्तथेरितः ।

सूर्याचंद्रमसोःस्वरूपेणसमत्वात्प्रकाशस्येत्युक्तं । तथेरितःअथकारइतीरितः । आत्मेहकारइतिइतिवाक्यंव्याचष्टे ॥ सर्वेति ॥ अग्निरीकारइतिवाक्यंव्याचष्टे ॥ इंधनादिति ॥ दीपनादित्यर्थः । आदित्यऊकारइत्येतद्व्याचष्टे ॥ ऊकारइति ॥ उष्टितःआतपदाहात् । उषप्लुषदाहइतिधातुः । निहवएकारइतिवाक्यंव्याख्यातुंतावन्निहवशब्दोक्तांदेवतामप्रतीतेराह ॥ नितरामिति ॥ पदार्थमुक्त्वावाक्यार्थमाह ॥ एतीति ॥ विश्वेदेवाऔहोयिकारइतिवाक्यंव्याचष्टे ॥ औहोयीतीति ॥ स्मृताइतिवचनविपरिणामेनवर्तते । तेष्वौहोयिशब्दंनिर्वक्ति ॥ उच्चत्वादिति ॥ यतोस्मिन्नुशब्दवाच्येविष्णावखिलाःसुरामुक्तौ हूयंतेतस्मात्सर्वेदेवाऔहोयिनःप्रकीर्तिताइत्यन्वयः । अनेनऊशब्दस्यसप्तमीऔइति । औहूयंतइत्यौहोयिनइतिनिरुक्तिर्दर्शितेति ज्ञातव्यं । प्रजापतिर्हिंकारइतिवाक्यंव्याचष्टे ॥ हीतीति ॥ सदेत्यनुस्वारार्थः । प्राणःस्वरइतिवाक्यंव्याचष्टे ॥ वायुरिति ॥ प्राणइत्यनुवादेनवायुरितिव्याख्यातं । हायिकारत्वेनवायोरुक्तत्वाच्छरीरगइत्युक्तं । तेनाध्यात्माधिदैवभेदेनैकस्यैवद्विर्ग्रहण मितिसूचितंभवति । तस्मिन्स्वरशब्दंनिर्वक्ति ॥ स्वेविष्णाविति ॥ अन्नंयायेतिवाक्यंव्याचष्टे ॥ ययिरिति ॥ तद्वातदनुगास रस्वतीयायेतिप्रोक्ता । अन्नंयायेत्युक्तेः । कथमेतदित्यतआह ॥ सैवेति ॥ यायाशब्दंप्रकारांतरेणनिर्वक्ति ॥ यात्रेति ॥ यात्रा

भा० । सर्वसामीप्यतोविष्णुरिहेतिकथितःसदा । इंधनादग्निरीकारऊकारःसूर्यउष्टितः । नितरामाह्वयंत्येनमितींद्रोनिहवःस्मृतः । एतीत्येकारएवासौऔहोयीत्यखिलाःसुराः । उच्चत्वाद्विष्णुरुःप्रोक्तोहूयंतेऽस्मिन्यतोखिलाः । मुक्तावौहोयिनस्तस्मात्सर्वेदेवाःप्रकीर्तिताः । हीतिनिश्चयउद्दिष्टोनिश्चयज्ञानतःसदा । ब्रह्माहिंकारइत्युक्तोवायुःप्राणःशरीरगः । स्वेविष्णौरमयत्येनंजीवंतस्मात्स्वरःस्मृतः । ययिर्नित्यगतेर्वायुस्तद्वायायासरस्वती । सैवान्नदेवताप्रोक्तायात्राप्राणेननीयते ।

॥ ४१ ॥

नेत्रा नीयतइतियाया । वाग्विराडितिवाक्यंव्याचष्टे ॥ सर्वेति ॥ साश्रीः । अनिरुक्तस्त्रयोदशस्तोभःसंचरोहुप्कारइतिवा क्यंव्याचष्टे ॥ अनिरुक्तइति ॥ आद्यस्तुशब्दोनारायणएवानिरुक्तशब्दस्यविशेषद्योतनार्थः । द्वितीयस्त्ववधारणार्थः । आ त्मेहकारइत्युक्तेःपुनर्ग्रहणंकथमित्यतोव्याप्तइत्युक्तं । तेनपूर्वोक्तःक्षेत्रज्ञइतिलभ्यते । यच्छब्दश्रवणात्तच्छब्दलाभः । अहूतएवपा तीतिहुबितिनामधेयंस्यान्नतुहुप्कारइतीत्यतआह ॥ हुबित्याक्रियतइति ॥ नारायणेऽनिरुक्तशब्दंनिर्वक्ति ॥ अनिरुक्तइति ॥ अवाच्यत्वात्साकल्येनवक्तुमशक्यत्वात् । संचरशब्दस्यप्रमाणेनाव्याख्यातत्वात्तस्यान्यपरत्वप्रतीतिनिरासायतंव्याचष्टे ॥ सम्य गिति ॥ सएवहरिरेव ॥ ततश्चायंखंडार्थः ॥ अयंपृथिवीलोकस्तदभिमानीहावुकारः हूयतेऽत्राग्निहोत्रादीतिहावित्युच्यते । हा वित्याक्रियमाणत्वाद्धावुकारःवायुर्मुख्यवायुर्हायिकारःहेत्याश्चर्ये । आश्चर्यवदायातीतिहायीत्युच्यते । अथवा हेतिसुखमुच्यते । तदापयतिसुखकर्तेतियावत् । तस्माद्धायीत्युच्यते । कारप्रत्ययार्थःपूर्ववत् । चंद्रमाअथकारः । चंद्रप्रकाशस्यसूर्यप्रकाशानंतर्यात् । आत्माक्षेत्रज्ञोविष्णुरिहकारः । सर्वसामीप्यात् । अग्निरीकारः इंधनात् ॥१॥ आदित्यऊकारः उष्टितःआतपदाहात् । नितरामा

भा० । सर्ववागात्मिकायातुश्रीर्विशेषेणराजनात् । विराडुक्ताऽनिरुक्तस्तुव्याप्तोनारायणस्तुयः । आहूतएवपातीतिहुप्कारइतिकीर्तितः । हुबित्याक्रियतेयस्माद्धुप्कारस्तु जनार्दनः । अनिरुक्तस्त्ववाच्यत्वात्परमःपुरुषोहरिरितिमाहात्म्ये । सम्यक्चरतीतिसएवसंचरः ॥ **इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमच्छांदोग्योपनिषद्भाष्येप्रथमोध्यायः** ॥ १ ॥

उप० । अयंवावलोकोहावुकारोवायुर्हायिकारश्चंद्रमाअथकारआत्मेहकारोग्निरीकारः ॥ १ ॥ आदित्यऊकारोनिहवएकारोविश्वेदेवाऔहोयिकारःप्रजापतिर्हिंकारःप्राणःस्वरो

ह्वयंत्येनमितिनिह्वनामकइंद्रएकारः । एतीतिहेतोः । विश्वेदेवाऔहोयिकारः । उच्चत्वाद्विष्णुरुःप्रोक्तः तस्यसप्तमीऔइति । औविष्णौहूयंतेमुक्ताविति औहोयिनइत्युच्यंते । प्रजापतिर्हिंकारः । निश्चयज्ञानरूपत्वात् । प्राणःशरीरगोवायुः स्वरःस्वेविष्णौ जीवंरमयतीतिस्वरनामकः । अन्नमन्नाभिमानिनीसरस्वतीयाया नित्यगतेर्वायुर्ययिरित्युच्यते । तद्गतत्वाद्यायेत्युच्यते । या त्रानियंत्राप्राणेननीयतइतिवायायेत्युच्यते । वाक्सर्ववागभिमानिनीश्रीर्विराट् विशेषेणराजनाद्विराडुक्ता । अनिरुक्तःसाकल्ये नविर्वक्तुमशक्यत्वादनिरुक्तनामकः । संचरःसम्यक्चरतीतिसंचरनामकोव्याप्तोनारायणस्त्रयोदशःस्तोभः । कोसौहुपकारःआ हूतएवपातीतिहुप् । हुबित्यनेनाक्रियमाणत्वादित्यर्थः । एवंवेत्तुःफलमाह ॥ दुग्धइति ॥ व्याख्यातमेतत् । विद्यार्थस्यसर्वा ध्यायार्थस्यवावधारणार्थाद्विरुक्तिः ॥ ३ ॥ त्रयोदशःखंडः ॥ १३ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्य च्छांदोग्योपनिषद्भाष्यस्यटीकायांश्रीमद्वेदव्यासतीर्थपूज्यपादशिष्यवेदेशभिक्षुविरचितायांपदार्थकौमुद्यांप्रथ मोध्यायः ॥ १ ॥ ॥ ॥ ॥ ॥ ॥ ॥



---

त्रंयायावाग्विराट् ॥ २ ॥ निरुक्तस्त्रयोदशःस्तोभःसंचरोहुपकारोदुग्धेस्मैवाग्दोहंयोवाचोदोहोन्नवानन्नादोभवतियएतामेवंसाम्नामुपनिषदंवेदोपनिषदंवेद ॥ ३ ॥ त्रयोदशःखंडः ॥ १३ ॥ श्रीमच्छांदोग्योपनिषदि प्रथमोध्यायः ॥ १ ॥

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ ॐ ॥ प्रद्युम्नादिस्वरूपेणहिंकाराद्यभिधंपरं ॥ समस्त सामगंवंदेसामनामानमीश्वरं ॥ सामैकदेशोद्गीथस्तोभनिष्ठामुपास्तिमुक्त्वापंचभक्तिकसप्तभक्तिकसमस्तसामनिष्ठामुपास्तिमाहाने नाध्यायेन । तत्रसमस्तस्यैवसाम्नउपासनंकर्तव्यमितिभावेनैतत्स्तौति ॥ **समस्तस्येतिप्रथमखंडेन** ॥ तत्रादिवाक्यं समस्तस्यसाम्नःसामवेदस्योपासनंपठनादिसाध्वित्युच्यतइतिप्रतीतिनिरासायव्याचष्टे ॥ **समस्तस्येति** ॥ साधुशोभनमित्यर्थः। साधुत्वंकथंसामशब्दप्रवृत्तिनिमित्तमित्यतःसाधुसामशब्दयोरेकार्थत्वादितिभावेनतदुभयंनिर्वक्ति ॥ **सारत्वेनेति** ॥ सेत्यस्य सारत्ववाचकत्वादित्यर्थः । अनेन यत्खलुसाधुतत्सामेत्याचक्षतइतिश्रुतौयत्साधुसामशब्दयोःपर्यायत्वमुक्तंतद्विवृतंभवति । समस्तस्यखलुसाम्नइत्युपक्रमवाक्यस्योक्तएवार्थइतिभावेनसयएतदेवंविद्वान्साधुसामेत्युपास्तेऽभ्याशोहयदेनंसाधवोधर्माआच गच्छेयुरित्युपसंहारवाक्यंव्याचष्टे ॥ **साधुत्वादिति** ॥ सर्वसाम्नांदेवतेतिसामनामानमितिसामशब्दस्यार्थांतरं ॥ ततश्चायंखं डार्थः ॥ समस्तस्यपूर्णस्य खलुवै साम्नःसामनाम्नोविष्णो रुपासनंसाधु कःसामशब्दार्थः । यद्विशिष्टतयाभगवदुपासनंसाध्वि त्यतःसाधुत्वमेवसामशब्दार्थः । साधुसामशब्दयोःपर्यायत्वादितिभावेनतयोःपर्यायत्वंवृद्धप्रयोगेणसमर्थयते ॥ **यत्खल्विति**॥

---

भा० । समस्तस्यपूर्णस्यसाधुत्वात्सामनाम्नोविष्णोरुपासनंसाधु । सारत्वेनमेयंसाम सारत्वेनधार्यंसाध्वित्येकएवार्थः । साधुत्वात्सामनामानंसमस्तगुणपूर्तितः । समस्तं यउपासीतनारायणमनामयं । सर्वनाम्नांदेवतेतिसमुक्तःसाधुधर्मभागितिसामसंहितायां ॥ **प्रथमःखंडः** ॥ १ ॥

उप० । समस्तस्यखलुसाम्नउपासनंसाधुयत्खलुसाधुतत्सामेत्याचक्षतेयदसाधुतदसामेति ॥ १ ॥

यत्खलुसाधु तत्सामेत्याचक्षते विद्वांसः । यदसाधु तदसामेत्याचक्षते । अतस्तयोःपर्यायत्वमितिभावः ॥ १ ॥ ननुविद्वांसोप्येवंकिमर्थमाचक्षतइत्यतस्तत्रापिमूलभूतप्रयोगदर्शनादित्याह ॥ **तदुतेति**॥ यद्वा साधुसामशब्दयोरेकार्थत्वेवृद्धप्रयोगांतरमाह ॥ **तदुतेति** ॥ तदुततत्रैवसाधुसामशब्दयोरेकार्थत्वएवान्येपिविद्वांसआहुः । किमाहुरित्यतआह ॥ **साम्नेति** ॥ साम्नैनंभगवंतमुपागादितिमंत्रोयदाहतत्साधुनैनमुपागादित्येवाहेत्याहुः । असाम्नैनमुपागादितिमंत्रोयदाहतदसाधुनैनमुपागादित्येवाहेत्याहुः । एवंचसामासामशब्दयोःसाधुत्वासाधुत्वार्थकत्वेनव्याख्यानात्साधुसामशब्दयोरेकार्थत्वमितिभावः ॥२॥ तत्रैव वृद्धांतराणामपिप्रयोगंदर्शयति ॥ **अथेति** ॥ अथशब्दःपूर्वप्रयोगविच्छेदप्रदर्शकः । अप्युत अपिचाहुः । प्रकारांतरेणापिज्ञानिनआहुरित्यर्थः । सामनोस्माकंबतभवेदितिमंत्रोयत्यस्मात्सामशब्दार्थःसाधुभवतितत्तस्मात्साधुबतेत्येवाहेत्याहुः । असामनोबतेतिमंत्रोयद्यस्मात्असाधुअसामशब्दार्थोभवतितत्तस्मादसाधुबतेत्येवाहेत्याहुः । अत्रापिसामासामशब्दयोस्साधुत्वासाधुत्वार्थकत्वेनव्याख्यानात्साधुसामशब्दयोःपर्यायत्वमितिभावः । एवंसाधुत्वार्थकसामनामकत्वेनभगवदुपासकस्यफलमाह ॥ **सयइति** ॥ सप्रसिद्धोयोधिकारी एतत्समस्तंसामै वंसाधुत्वेनसामनामकतया विद्वा न्साधुसामेत्युपास्तेएनमुपासकंप्रति साधवोधर्माआगच्छेयुश्चउपचनमेयुरचंचलास्तिष्ठंति । उपनमेयुश्चभोग्यत्वेनोपतिष्ठंतीतिवा ॥ **प्रथमःखंडः** ॥ १ ॥ लोकेषुपंचभक्तिक

उप० । तदुताप्याहुःसाम्नैनमुपागादितिसाधुनैनमुपागादित्येवतदाहुरसाम्नैनमुपागादित्यसाधुनैनमुपागादित्येवतदाहुः ॥ २ ॥ अथोताप्याहुःसामनोबतेतियत्साधुभवतिसाधुबतेत्येवतदाहुरसामनोबेततियदसाधुभवत्यसाधुबतेत्येवतदाहुः ॥३॥ सयएतदेवंविद्वान्साधुसामेत्युपास्तेऽभ्याशोहयदेनꣳसाधवोधर्माआचगच्छेयुरुपचनमेयुः ॥ ४ ॥ **प्रथमःखंडः १**

सामप्रतिपाद्यस्यभगवतउपास्तिमाह ॥ **लोकेष्वित्यादिना** ॥ अत्रपृथिवीहिंकारइत्यादिनासामानाधिकरण्येनपृथिव्यादीनां हिंकाराद्यभेदःप्रतीयते । तदयुक्तं । हिंकारादेःशब्दत्वेनपृथिव्यादित्वानुपपत्तेः । अत्रसंकरःपृथिवीदृष्ट्यापृथिवीहिंकारइत्युपासीतेतिव्याख्येयमित्याह । तदसत् । लोकेषुपंचविधंसामोपासीतेतिप्रक्रमविरोधात् । नचोत्तरवाक्यानुसारेणलोकेष्वित्यस्यापि प्रथमात्वेनविपरिणामः । पंचविधंसामेत्यस्यद्वितीयांतत्वेनलोकाइत्यनेनसामानाधिकरण्यायोगेनानन्वयप्रसंगात् । इतिशब्दकल्पनेचाश्रुतकल्पनाप्रसंगात् । हिंकारादौपृथिव्यादिदृष्टेर्मिथ्यादृष्टित्वेनानर्थहेतुत्वस्यवक्ष्यमाणत्वाच्च । अतोत्रसर्वत्रभगवदुपासनमेवकथ्यतइतिभावेनखंडंप्रमाणेनैवव्याचक्षाणस्तावदत्रबहुषुखंडेषुसतांहिंकारप्रस्तावोद्गीथप्रतिहारनिधनशब्दानामर्थमाह ॥ **नारायणाख्यइत्यादिना** ॥ अवतारक्रमानुसरणेनश्रुतिक्रमोल्लंघनं । उद्गेयउच्चतयागातुंयोग्यः । उद्गीथशब्दस्यार्थांतरमाह ॥ **उद्गच्छंतीति** ॥ प्रस्तावशब्दार्थमाह॥**प्रथमेति** ॥ प्रस्तावशब्दस्यप्रारंभार्थत्वादितिभावः । निधनशब्दार्थमाह ॥ **निधनमिति** ॥ चापिशब्दाववधारणार्थौ ॥ वासुदेवएवप्रस्तावः । संकर्षणएवनिधनमितिसंबंधः । तेनपरोक्तार्थनिरासः । तत्रतंशब्दंव्युत्पादयति ॥ **संकर्षणइति** ॥ निधनशब्दश्चसंहर्तृत्वार्थकइतिभावः । हिंकारशब्दार्थमाह॥**प्रद्युम्नइति**॥ हीतिकथंसृष्टिरुदीर्यतइत्यतउक्तंप्रसिद्धताहीति । प्रसिद्धताखलुहिशब्दार्थः । सृष्टिश्चप्रागसिद्धानांप्रसिद्धतैव । अतोहीतिसृष्टिरुदीर्यते । तथाच

भा० । नारायणाख्यउद्गीथउद्गेयःप्रणवेनयत् ।

उप० । उद्गच्छंतियतोस्माद्वावासुदेवादिमूर्तयः । प्रथमावताररूपत्वाद्वासुदेवःपरःपुमान् । प्रस्तावो निधनंचापिसंकर्षणउदाहृतः । संकर्षणोहिसंहर्ताप्रद्युम्नःपरमेश्वरः ।

हिंसृष्टिंकरोतीतिव्युत्पत्त्यासृष्टिकर्ताप्रद्युम्नोहिंकारइतिप्रोक्तइतिभावः । प्रतिहारशब्दार्थमाह ॥ अनिरुद्धइति ॥ सहिप्रतिप्रति कार्येष्विदंजगद्धरेदित्यनेनस्थितिकर्तृत्वमुच्यते। मूर्तिंप्रतिहृतेः स्वमूर्तीनांस्वात्मन्येकीकरणादितिप्रतिहारशब्दस्यार्थोंतरं । तथा शब्दःसमुच्चये । अस्त्वेवंहिंकारादिनामकोभगवान् तथापिपृथिवीहिंकारइत्यादिनोक्तंपृथिव्याद्यात्मकत्वंकथंतस्येत्यतःखंडंव्याचष्टे ॥ तेपृथिव्यादिष्विति ॥ तेप्रद्युम्नाद्याः । अनेनपृथिवीहिंकारइत्यादौपृथिव्यादिशब्दाःलोकेष्वित्युपक्रमानुसारेणसप्तम्यर्थाइत्युक्तंभवति। अनन्वयपरिहारायप्रतिष्ठिताइतिशेषोक्तिः। तन्नामानइत्यनेनपृथिव्यादिशब्दानांप्रथमांतत्वेपिनानुपपत्तिरितिसूचितं । पृथिव्यादिषुस्थितेःप्रद्युम्नाद्याःपृथिव्यादिनामानइत्युक्तेपृथिव्यादयएवतच्छब्दमुख्यार्थाः भगवन्मूर्तयस्तुतत्संबंधात्पृथिव्यादिनामिकाइतिप्रतीतावाह ॥पृथिवीत्यादीति॥ तेप्रद्युम्नाद्याः । केपृथिव्यादिशब्दार्थायेभगवतिमुख्याअन्यत्रामुख्याइत्यतःपृथिव्यादिशब्दान्निर्वक्ति॥प्रथनादिति॥चशब्दोवधारणार्थउत्तरत्रसंबध्यते। अग्र्यत्वादिनिमित्तांतरसमुच्चयेवा।अंतरीक्षणयोगतअंतरिक्षमितीर्यतइतिसंबंधः । अंतरीक्षणंकिंपरोक्षेण नेत्युक्तं ॥ अभावाद्व्यवधानस्येति ॥ आयुषश्चेतिचशब्दोरससमु

---

उप० । हिंकारइतिसंप्रोक्तोहीतिसृष्टिरुदीर्यते । प्रसिद्धताहिसृष्टिःस्यादनिरुद्धःपरोविभुः । प्रतिहारइतिप्रोक्तःसहिकार्येष्विदंजगत् । प्रतिप्रतिहरेन्नित्यंमूर्तिंप्रतिहृतेस्तथा ॥ 

भा० । तेपृथिव्यादिषुसदातन्नामानःप्रतिष्ठिताः । पृथिवीत्यादिशब्दार्थास्तेहिमुख्यतईरिताः । तत्संबंधात्तदर्थत्वंपृथिव्यादेरमुख्यतः । प्रथनादेवसस्यादेःपृथिवीत्वमुदाहृतं । अग्नित्वमदनाच्चैवह्यंतरीक्षणयोगतः । अभावाद्व्यवधानस्यत्वंतरिक्षमितीर्यते । आदानादायुषश्चैवसआदित्यउदीरितः । द्यौःक्रीडाकारणत्वाच्चतत्सर्वंह्रिपरेहराविति च ।

च्चयार्थः । कारणत्वाच्चेतिचशब्दोवधारणार्थः । कल्पंतेहास्मैलोकाऊर्ध्वाश्चावृत्ताश्चेत्यत्रलोकानामेवाभीष्टकल्पकत्वमुच्यतइति प्रतीतिनिरासायप्रमाणेनैवतद्व्याचष्टे ॥ पंचात्मकमिति ॥ मोक्षादिकमभीष्टमितिशेषोक्तिः ॥ ततश्चायंखंडार्थः ॥ लोकेषुपृथिव्यादिषु पंचविधाहिंकाराद्याःयस्यतत्पंचविधं सामसामनामकं ब्रह्मोपासीत । कुत्रकस्योपासनंकर्तव्यमित्यतस्तद्विशदमाह ॥ पृथिवीत्यादिना ॥ हिंकारःसृष्टिकर्तृत्वाद्धिंकारनामकःतन्नामकसामभक्तिप्रतिपाद्यः प्रद्युम्नः पृथिवी सस्यादेःप्रथनात्पृथिवीनामकःपृथिव्यांस्थितश्च । प्रस्तावः प्रथमावताररूपत्वात्प्रस्तावनामकःप्रस्तावरूपसामभक्तिप्रतिपाद्योवासुदेवो ग्नि रदनादग्निनामकोग्निस्थश्च । उद्गीथः प्रणवेनोद्गेयत्वाद्वासुदेवादिमूर्त्युद्गमावधित्वाद्वोद्गीथनामोद्गीथाख्यसामभक्तिप्रतिपाद्यो नारायणों तरिक्ष मंतरीक्षणादंतरिक्षनामकोंतरिक्षस्थश्च । प्रतिहारः कार्येषुजगतःप्रतिप्रतिहरणान्नित्यंमूर्तिंप्रतिहृतेर्वाप्रतिहारनामकः प्रतिहाररूपसामभक्तिप्रतिपाद्योअनिरुद्ध आदित्य आयुषआदानादादित्यनामाऽऽदित्यस्थश्च । निधनं संहारान्निधननामानिधनाख्यसामभक्तिप्रतिपाद्यःसंकर्षणो द्यौः क्रीडाकारणत्वाद्द्युनामाद्युस्थश्च। इत्युक्तप्रकारेणोर्ध्वेषुउत्तरोत्तरेषुलोकेषुपंचविधंसामोपासीतेत्यन्वयः ॥ १ ॥ अथावृत्तेषुप्रतिलोमेषुलोकेषुपंचविधंसामोपासीत । तदेवविशदयति ॥ द्यौरित्यादिना ॥ योज

---

भा० । पंचात्मकंयोलोकेषुसदोपास्तेहरिंपरं । ऊर्ध्वाधःसंस्थितास्तस्यपंचैवदशमूर्तयः । मोक्षादिकमभीष्टंयत्कल्पंतेऽस्यसदैवहीतिच ॥ २ ॥ खंडः ॥ २ ॥

उप० । लोकेषुपंचविधꣳसामोपासीतपृथिवीहिंकारोग्निःप्रस्तावोंतरिक्षमुद्गीथआदित्यःप्रतिहारोद्यौर्निधनमित्यूर्ध्वेषु ॥ १ ॥ अथावृत्तेषुद्यौर्हिंकारआदित्यःप्रस्तावोन्तरिक्षमुद्गीथोऽग्निःप्रतिहारःपृथिवीनिधनं ॥ २ ॥

नातुपूर्ववदेव ॥ २ ॥ एवंज्ञात्वोपासकस्यफलमाह ॥ कल्पंतइति ॥ योधिकारीएतत्प्रद्युम्नादिरूपंपंचविधसामनामकंब्रह्मैव मुक्तरीत्याविद्वांल्लोकेषूर्ध्वेष्वावृत्तेषुचपंचविधंसामोपास्तेअस्माअस्योपासकस्याभीष्टमितिशेषः ॥ ऊर्ध्वाश्चावृत्ताश्चोर्ध्वाधःसंस्थि तालोकाःप्रकाशरूपत्वाल्लोकनामानःप्रद्युम्नाद्याःपंचैव दशमूर्तयःकल्पंतेकल्पयंतीत्यर्थः ॥ ३ ॥ द्वितीयःखंडः ॥ २ ॥ एवंलो केषुपंचविधभगवदुपास्तिमुक्त्वालोकस्थितेर्वृष्टिनिमित्तकत्वाद्वृष्टौपंचविधभगवदुपास्तिःकर्तव्येत्याह ॥ वृष्टाविति ॥ अयम पिखंडोभगवत्परएवेतिज्ञापनायवर्षतिहास्माइत्यादिफलवाक्यंप्रमाणेनैवव्याचष्टे ॥ पंचरूपमिति ॥ वर्षतीत्यस्यार्थोवृष्टिरस्मै स्यादिति । वर्षयतीत्यस्यकर्मानुक्तेर्मुक्तिगान्सर्वभोगानित्युक्तं । वर्षयतिचेतिचशब्दान्वयः । मुक्तिगांश्चेतिवा ॥ ७ ॥ अत्र खंडार्थःपूर्वोक्तरीत्यास्पष्टः । एवमुत्तरत्रापि । अस्पष्टांशस्तुव्याख्यास्यते । अत्रपुरोवातादिशब्दानांभगवतिव्युत्पत्तिःप्रमाणांत रेणद्रष्टव्या ॥ तृतीयःखंडः ॥ ३ ॥ एवंवृष्टौपंचविधभगवदुपास्तिमभिधायवृष्टिपूर्वकत्वात्सर्वासामपांतत्रभगवदुपास्तिकर्त व्यतामाह ॥ सर्वास्विति ॥ अयमपिखंडोभगवत्परइतिज्ञापनायनहाप्सुप्रैत्यप्सुमान्भवतीतिफलवाक्यंप्रमाणेनैवव्याचष्टे ॥

उप० । कल्पंतेहास्मैलोकाऊर्ध्वाश्चावृत्ताश्चयएतदेवंविद्वाँल्लोकेषुपञ्चविधंसामोपास्ते ॥ ३ ॥ द्वितीयःखंडः ॥ २ ॥

भा० । पंचरूपंतुयोविष्णुंपुरोवातादिषुस्थितं । उपास्तेवृष्टिरस्मैस्याद्वर्षयत्यस्यमुक्तिगान् । सर्वभोगांश्चभगवान्पंचरूपीजनार्दनइतिच ॥

उप० । वृष्टौपंचविधंसामोपासीतपुरोवातोहिंकारोमेघोजायतेसप्रस्तावोवर्षतिसउद्गीथोविद्योततेस्तनयतिसप्रतिहारः ॥ १ ॥ उद्गृह्णातितन्निधनंवर्षतिहास्मैवर्षय- तिहयएतदेवंविद्वान्वृष्टौपंचविधसामोपास्ते ॥ २ ॥ तृतीयःखंडः ॥ ३ ॥



अप्स्विति ॥ पंचविधस्यभगवतउपासास्त्यास्तीतितथोक्तः । अप्सुमानित्यस्यार्थोनारायणवानिति । नहाप्सुप्रैतीत्यस्यार्थोनचे ति । तत्रहेतुरप्सुषदिति । यद्वाऽप्सुमानित्येतन्नारायणवानितिव्याख्यातं । तत्कथंशब्दतोलब्धमित्यतआह ॥ अप्सुषदिति॥ यतोभगवान्हरिरप्सुषदतोप्सुमानित्यस्यनारायणवानितिव्याख्यानमुपपन्नमित्यर्थः । नन्वेवमप्सुषद्वानितिस्यान्नत्वप्सुमानिती त्यतोमध्यमपदलोपिसमासोयमित्याह ॥ अप्सुस्थितनारायणवानिति ॥ नन्वंतर्यामितयानारायणवत्त्वंसर्वसाधारणमिति कथमिदमुपासनफलमित्यतस्तदर्थमाह ॥ मुक्तइति ॥ नन्वप्सुमानित्यत्राप्स्वित्यस्यसप्तम्यंतत्वात्कथंसमासः । समासेतुअम्मा नित्येवप्रयोगापत्तेरितिचेत् । न । सप्तम्याअलुक्त्वांगीकारात् । अथवानाप्स्वित्येतत्सप्तम्यंतं । येनालुक्त्वंमध्यमपदलोपोवाश्र यणीयः । किंतुयोगेनभगवद्वाचकमितिपक्षांतरमाह ॥ अपइति ॥ तद्वानप्सुमानितियोज्यं । एवंतर्ह्यप्सुमानितिदीर्घःस्यादि त्यतउक्तं ॥ दीर्घलोपेनेति ॥ छांदसत्वादितिभावः ॥ खं० ॥ ४ ॥ खंडार्थः ॥ संप्लवतेसंचरति । नानादेशस्थएकदेशस्थो भवतीतियावत् ॥ चतुर्थःखंडः ॥ ४ ॥ सर्वासामपामुत्पत्त्यादिकृत्वधीनमितिऋतुषुभगवदुपास्तिकर्तव्यतामाह ॥ ऋतुष्वि

भा० । अप्सुपंचविधोपासीयोनारायणवान्भवेत् । नचास्यमृतिरप्सुस्यादप्सुषद्भगवान्हरिरितिच । अप्सुस्थितनारायणवान्मुक्तोभवतीत्यर्थः । अपःसूतइत्यप्सूर्भगवान् दीर्घलोपेनाप्सुमानितिवा ॥ खंडः ॥ ४ ॥

उप० । सर्वास्वप्सुपंचविधꣳसामोपासीतमेघोयत्संप्लवतेसहिंकारोयद्वर्षतिसप्रस्तावोयाःप्राच्यःस्यंदंतेसउद्गीथोयाःप्रतीच्यःसप्रतिहारःसमुद्रोनिधनं ॥ १ ॥ नहाप्सुप्रै त्यप्सुमान्भवतियएतदेवंविद्वान्सर्वास्वप्सुपंचविधꣳसामोपास्ते ॥ २ ॥ चतुर्थःखंडः ॥ ४ ॥

ति ॥ ननुऋतूनांषट्त्वान्मूर्तीनांपंचत्वात्कथमृतुषुपंचविधमित्युक्तिरित्यतआह ॥ हेमंतेति ॥ ऐक्येनैक्यविवक्षया । अयमपिखण्डोभगवत्परइतिज्ञापनायपूर्ववत्कल्पंतेहास्माऋतवोऋतुमान्भवतीत्यादिफलवाक्यंप्रमाणेनव्याचष्टे॥ ऋतुनामानमिति ॥ ऋतुत्वात्ऋतूनांऋतुत्वप्रदत्वादित्यर्थः । सर्वशास्त्रावगतत्वादितिवार्थः । अमुष्य विष्णोः । पंचात्मानंपंचस्वरूपं । कल्पंतेहास्माऋतवइत्यत्रमोक्षादीनितिशेषोक्तिः । कल्पतेदातुंसमर्थोभवति । अस्योपासकस्येत्यनेनास्माइतिचतुर्थीषष्ठ्यर्थेत्युक्तंभवति ॥ प्रसिद्धर्तुमत्त्वमृतुनामकभगवद्भक्त्वंवासर्वसाधारणमितिकथमिदंफलमित्यतउक्तं ॥ रक्ष्यत्वादिति ॥ हिंकारादिनामकप्रद्युम्नादीनांवसंताद्यभेदोभिधीयतइतिभ्रांतिनिरासायभगवतिवसंतादिशब्दनिर्वचनपरंप्रमाणमेवोदाहरति ॥ वासस्येति ॥ स्ववासस्यजीवसुखकारित्वादित्यर्थः । वसतेःपचाद्यच् वसतीतिवसः तनोतेरौणादिकोडप्रत्ययः । तनोतीतितः । वर्णागमोवर्णविपर्ययश्चेत्यादिनापूर्वपदस्यनकारागमः । नीरादेरित्येतस्यवर्षणादित्यनेनापिसंबंधः । रातिददाति । रादानइत्यतोडत् । हिमंतनो

---

भा० । हेमंतशिशिरयोरैक्येनपंचत्वं । ऋतुनामानमृतुगमृतुत्वादृतुनामकः । इत्युपासीतयोविष्णुंपंचात्मानममुष्यहि । मोक्षादीन्कल्पतेचास्यऋतुसंस्थोजनार्दनः । रक्ष्यत्वात्तेनतद्वांश्वसदैवस्यादुपासकइतिच । वासस्यसुखकारित्वाद्वसंतःपुरुषोत्तमः । नीरादेर्गरणाद्ग्रीष्मोवर्षणाद्वर्षउच्यते । शंरातीतिशरत्प्रोक्तोहेमंतोहिमकारणादितिच । ॥ पंचमःखंडः ॥ ५ ॥

उप० । ऋतुषुपंचविधꣳसामोपासीतवसंतोहिंकारोग्रीष्मःप्रस्तावोवर्षाउद्गीथःशरत्प्रतिहारोहेमंतोनिधनं ॥ १ ॥ कल्पंतेहास्माऋतवऋतुमान्भवतियएतदेवंविद्वानृतुषुपंचविधꣳसामोपास्ते ॥ पंचमःखंडः ॥ ५ ॥

तीतिहेमंतः ॥ पंचमःखंडः ॥ ५ ॥ ऋतुषुसम्यग्वृत्तेषुपशवोपिसम्यगवस्थिताइतिपशुषुभगवदुपास्तिःकर्तव्येत्याह ॥ पशु
ष्विति ॥ अयमपिखण्डोभगवत्परइतिज्ञापनायभवंतिहास्यपशवःपशुमान्भवतीतिफलवाक्येपुनरुक्तिपरिहारायपशुमानित्येत
त्तावत्प्रमाणेनैवव्याचष्टे ॥ पालनादिति ॥ पालनात्पःसुखरूपत्वाच्छुःउकारस्ताच्छील्यार्थः । अतिप्रसंगवारणायतद्वानित्यस्य
व्याख्यानंमुक्तइति । हिंकारादिनामकप्रद्युम्नादीनामजादिपश्वभेदउच्यतइतिभ्रांतिनिरासायाजादिशब्दनिर्वचनपरंप्रमाणमेवो
दाहरति ॥ यज्ञेनेति ॥ अजस्थोभगवानजइत्युक्तः । यज्ञेनयज्ञद्वारासद्गतिहेतुत्वादित्यर्थः । अजगतौक्षेपणेचेतिधातुः । गति
पूजार्थस्यांचुधातोश्चकारस्यस्ववर्गतृतीयजकारादेशेऽनुस्वारस्यचलोपेचयतिप्रवर्ततइतियज्ञेनपूजनेनेतियज्ञेनांचनहेतुत्वादजस्थो
भगवानजइत्यर्थः । यजधातोर्यकारलोपेऽजइतिभवति । तथाचयजत्यनेनेतियज्ञेनांचनहेतुत्वादजइतिवार्थइत्याहुः । अविस्थए
वेतिसंबंधः । अवनात्सर्वरक्षणादविरुक्तः।अविस्थस्यकथंरक्षकत्वमित्यतउक्तं ॥ ऊर्णयेति ॥ कंबलादिनाशीततोरक्षणादित्यर्थः।आ
शुगंतृत्वादेवेतिसंबंधः ॥ पुरुषइति ॥ नचपशुष्वित्युपक्रम्यपुरुषोनिधनमितिकथमुच्यते । पुरुषस्यापशुत्वादितिवाच्यं । यज्ञवि
शेषेतस्यापिपशुत्वमभिप्रेत्यतथोक्तेः । ननुपशुमानित्यस्यपशुनामकभगवद्वानित्यर्थत्वेपिभवंतिहास्यपशवइत्यनेनपुनरुक्तिःस्यादे

भा० । पालनात्सुखरूपत्वात्पशुनामाजनार्दनः । मुक्तस्तद्वान्भवत्येवपशुभूपासकोहरेरितिच । यज्ञेनांचनहेतुत्वादजस्थोभगवानजः । अविस्थस्त्वविरेवोक्तऊर्णयाशीत-
तोऽवनात् । गौश्चसद्गतिहेतुत्वाद्गोस्थःसपुरुषोत्तमः । अश्वश्चैवाशुगंतृत्वात्पुरुषःपूर्तिहेतुतइतिच ।

व । तस्यापितदर्थकत्वप्रतीतेरित्यतआह ॥ **भवंतीति** ॥ एवंचभिन्नार्थकत्वान्नपुनरुक्तिरितिभावः। नन्वजादिशब्दानांभगवद्वाचकत्वेऽजाइत्यादिबहुवचनानुपपत्तिः । एकमेवाद्वितीयमितिश्रुत्याभगवतएकत्वावगमादित्यतआह ॥ **अजाइत्यादीति** ॥ उपपद्यतइतिशेषः ॥ **षष्ठःखंडः** ॥ ६ ॥ एवंपशुषुभगवदुपास्तिमुक्त्वेंद्रियाणांपशुपुरुषाश्रितत्वादिंद्रियेषुपंचविधभगवदुपास्तिकर्तव्यतामाह ॥ **प्राणेष्विति** ॥ अत्रपरोवरीयःसामोपासीतेत्यत्रपरोवरीयःशब्दस्यविवक्षितमर्थंप्रमाणेनाह ॥ **परस्मादिति** ॥ परस्मादुत्तमंपरोइतिप्रोक्तं । उकारस्योत्तमार्थत्वात्ततःपरंपरोवरमितिप्रोक्तं । वरशब्दस्यापितथात्वात् । तस्मात्परंपरोवरीयकमितिप्रोक्तं । अनयोर्मध्येइदमतिशयेनपरोवरंपरोवरीयः । परोवरीयएवपारोवरीयकमित्यर्थः । यद्यप्यधिकंवरीयान्परोवरीयानितिपूर्वंव्याख्यातं । तथापितत्रसंमुग्धतयास्वेनैवव्याख्यातमत्रतुवर्णार्थकथनपुरःसरंप्रमाणेनव्याख्यातमितिभेदः । भिन्नभिन्नाधिष्ठानेषुस्थितानांप्रद्युम्नादिरूपाणांनीचोच्चभावोनमंतव्यइतिभावेनप्रवृत्तंपरोवरीयांसिवाएतानीतिवाक्यंहिंकारादिसामभक्तीनांपरोवरीयस्त्वमुच्यतइतिप्रतीतिनिरासायव्याचष्टे ॥ **परोवरीयांसीति** ॥ एतानीत्यनेनेनप्राणस्थपंचरूपाणामेवपरामर्शः ।

भा० । भवंतिहास्यपशवइतिप्रसिद्धपशवएव । अजाइत्यादिबहुवचनंबहुरूपत्वाद्भगवतः ॥ **षष्ठःखंडः** ॥ ६ ॥

उप० । पशुषुपंचविधंसामोपासीताजाहिंकारोऽवयःप्रस्तावोगावउद्गीथोऽश्वाःप्रतिहारःपुरुषोनिधनं ॥ १ ॥ भवंतिहास्यपशवःपशुमान्भवतियएतदेवंविद्वान्पशुषुपंचविधंसामोपास्ते ॥ २ ॥ **षष्ठःखंडः** ॥ ६॥ 

भा० । परस्मादुत्तमंप्रोक्तंपरोइतिततःपरं । परोवरंपरंतस्मात्प्रोक्तंपारोवरीयकं । परोवरीयांस्येतानिविष्णोरूपाणिसर्वशः ॥

किंतुलोकादिस्थानामपीतिभावेनसर्वशइत्युंक्त । श्रुतौवैशब्दश्रवणात्परोवरीयांसीतिसावधारणं । अतएवतद्व्यावर्त्यमाह ॥ **तेषामिति** ॥ तत्रहेतुमाह ॥ **सदेति** ॥ सदेत्यस्यपूर्वत्रापिसंबंधः । ननुसमत्वेपरोवरीयस्त्वंकथमित्यतस्तेषांपरस्परंसमत्वेप्यन्यस्मात्परोवरीयस्त्वमुपपद्यतइत्याह ॥ **अत्युत्तमेति** ॥ हिंकारादिनामकप्रद्युम्नादेःप्राणाद्यभेदःकथ्यतइतिप्रतीतिनिरासायभगवतिप्राणादिशब्दप्रवृत्तिंप्रमाणेनदर्शयति ॥ **प्राणइति** ॥ अस्यप्रमाणप्रमितस्यसर्वस्यमंतृत्वतःनेतृत्वतइत्यादावप्यस्यसंबंधः । ननुपरोवरीयोहास्यभवतीतिफलवाक्येपरोवरीयःशब्दोमोक्षादिफलपरोंगीकार्यः । तत्कथंपूर्वंभगवत्परत्वमंगीक्रियते नह्येकस्मिन्नेवप्रकरणेश्रुतस्यैकस्यैवशब्दस्यार्थद्वयकल्पनंयुक्तमित्यतआह ॥ **परोवरीयइति** ॥ ननुपरोक्तरीत्यापरोवरीयोहास्यजीवनंभवतीतिकुतोनव्याख्यातं । श्रुतावपिपूर्वंतथोक्तत्वादिचेत् । न । अस्मिन्प्रकरणेऽप्सुमान्भवतिऋतुमान्भवतिपशुमान्भवतीतिभगवद्वत्त्वस्यैवफलत्वेनोक्तत्वात् । जीवनशब्दाध्याहारप्रसंगाच्च । ब्रह्मवत्त्वमतिप्रसक्तंकथंफलमित्यतआह ॥ **सर्वेति** ॥ स उपासकःपरोवरीयसोधिकंवरीयसोलोकान्वैकुंठानंतासनश्वेतद्वीपाख्यान्जयतिप्राप्नोति । उपसंहरति ॥ **इतित्विति** ॥

भा० । तेषांविशेषोनैवास्तिसदातानिसमानिहि । अत्युत्तमोत्तमान्येतान्यन्यस्मात्सर्वतोऽपित्वितिच । प्राणोनेतृत्वतोविष्णुर्वाक्सर्ववचनात्सदा । चक्षुश्चदर्शनान्नित्यंश्रोत्रंश्रवणहेतुतः । मनोमंतृत्वतश्चास्यह्येकएवतुपंचधेतिच । परोवरीयोब्रह्मास्यभवतिसर्वापेक्षितदातृत्वात् ॥ ७ ॥

उप० । प्राणेषुपंचविधंपरोवरीयःसामोपासीतप्राणोहिंकारोवाक्प्रस्तावश्चक्षुरुद्गीथःश्रोत्रंप्रतिहारोमनोनिधनंपरोवरीयांसिवैतानि ॥ ७ ॥ परोवरीयोहास्यभवतिपरोवरीयसोहलोकाञ्जयतियएतदेवंविद्वान्प्राणेषुपंचविधंपरोवरीयःसामोपास्तइतितुपंचविधस्य ॥ २ ॥ **सप्तमःखंडः** ॥ ७ ॥

इत्येवंप्रकारेणपंचविधस्यपंचरूपस्यभगवतउपास्तिरुक्तेतिशेषः ॥ **सप्तमःखंडः** ॥ ७ ॥ एवंपंचविधभगवदुपास्तिमुक्त्वासप्तविधभगवदुपास्तिमाह ॥ **अथेत्यादिखंडत्रयेण** ॥ हिंकारप्रस्तावोद्गीथप्रतिहारनिधननामकभगवन्मूर्तिविशेषस्यनिरूपितत्वात्अत्राधिक्येनोक्तेआद्युपद्रवनामकेमूर्तीप्रमाणेनाह ॥ **आदिरिति** ॥ हिंकारादिनामकप्रद्युम्नादीनांहुंकाराद्यभेदउच्यतइतिप्रतीतिनिरासाययत्किंचवाचोहुमितिसहिंकारइत्यादिवाक्यंव्याचष्टे ॥ **हुंकारेति** ॥ एतेनहुंप्रेत्यादिशब्दाहुंकारादिमात्रपराइत्यपिपरास्तं । तथासतिवाचिसप्तविधंसामोपासीतेतिप्रतिज्ञार्थासिद्धेः । यदेतिसआदिरितिवाक्यंव्याचष्टे ॥ **आकारेति** ॥ वाक्येस्थितइत्यनुवर्तते । यत्प्रेतिसप्रस्तावइत्येतद्व्याचष्टे ॥ **वासुदेवइति** ॥ यदुदितिसउद्गीथइत्येतद्व्याचष्टे ॥ **नारायणइति** ॥ उदित्यनेनयुक्तेवाक्ये । यत्प्रतीतिसप्रतिहारइतिवाक्यंव्याचष्टे ॥ **प्रतियुक्तइति** ॥ यदुपेतिसउपद्रवइत्येतद्व्याचष्टे ॥ **उपयुक्तइति** ॥ यन्नीतितन्निधनमित्यस्यार्थमाह ॥ **नीतीति** ॥ नीतियुक्ते । ननुयस्मिन्वाक्येहुंकारादयोनसंतितद्वाक्यंकिंदैवतमित्यतआह ॥ **अभावइति** ॥ हुंकारादिष्वेकमुपक्रम्यमध्येहुंकारादिष्वेकोक्त्यभावेयावदेतेहुंकारादयःस्युस्तावद्वाक्यंतद्दैवतमुपक्रांतदैवतंस्मृतमित्यर्थः । दुग्धेस्मैवाग्दोहमितिफलवाक्यंकेवलावागेवकामदोग्ध्रीतिप्रतीतिनिरासायव्याचष्टे ॥ **एवमिति** ॥

भा० । आदिःकल्पादिहेतुत्वात्क्रोडात्माकेशवःस्वयं । दुष्टोपद्रवकर्तृत्वान्नारसिंहउपद्रवइतिच । हुंकारसहितेवाक्येप्रद्युम्नस्तुसदास्थितः । आकारयुक्तेवाराहोवासुदेवःप्रसंयुते । नारायणस्तथोद्युक्तेप्रतियुक्तेऽनिरुद्धकः । उपयुक्तेनृसिंहश्चनीतिसंकर्षणस्तथा । अभावेयावदेतेस्युस्तावत्तद्दैवतंस्मृतं । एवंसप्तविधंविष्णुंयउपास्तेसदाविभुं । वाङ्नामाभगवांस्तस्यभवेत्सर्वार्थदोहकृदितिच ॥ **अष्टमःखंडः** ॥ ८ ॥

॥ **अष्टमःखंडः** ॥ ८ ॥ अथपंचविधभगवदुपास्तिकथनानंतरं सप्तविधस्यभगवतउपास्तिःकथ्यतइतिशेषः । तत्रादौशब्दसमूहेसप्तविधभगवदुपास्तिमाह ॥ **वाचीति** ॥ वाचिशब्दसमूहे सप्तविधंसाम सामनामकंब्रह्मोपासीत। कथं हिंकारःप्रद्युम्नः सकः यत्किंचवाचोहुंइति । हुंकारसहितंयद्वाक्यंतत्रस्थितइत्यर्थः । प्रस्तावोवासुदेवःसकः ॥ **यत्प्रेति** ॥ प्रशब्दोपेतंयद्वाक्यंतत्रस्थितइत्यर्थः । आदिःकल्पादिहेतुत्वादादिनामादीतिसामभक्तिप्रतिपाद्योवराहः । सकः ॥ **यदेति** ॥ आकारयुक्तंयद्वाक्यंतत्रस्थितइत्यर्थः ॥ १ ॥ उद्गीथोनारायणः सकः ॥**यदुदिति**॥ उच्छब्दयुक्तंयद्वाक्यंतत्रस्थितइत्यर्थः । प्रतिहारोनिरुद्धःसकः ॥ **यत्प्रतीति** ॥ प्रतिशब्दयुक्तंयद्वाक्यंतत्रस्थितइत्यर्थः । उपद्रवोदुष्टोपद्रवकर्तृत्वादुपद्रवनामोपद्रवाख्यसामभक्तिप्रतिपाद्योनृसिंहःसकः ॥ **यदुपेति** ॥ उपशब्दयुक्तंयद्वाक्यंतत्रस्थितइत्यर्थः । निधनंसंकर्षणाख्यंरूपं तत्किं ॥ **यन्नीति** ॥ निशब्दयुक्तंयद्वाक्यंतत्रस्थितइत्यर्थः ॥ २ ॥ एवमुपासकस्यफलमाह ॥ **दुग्धइति** ॥ योधिकारीएतत्सप्तविधंब्रह्मैवंवाचिस्थितत्वेनविद्वान्वाचिसप्तविधंसामोपास्तेऽस्मैअस्योपासकस्यवाक्वाङ्नामाभगवान् । योवाचोदोहःफलरूपोमोक्षादिस्तंदोहंदुग्धेसउपासकोअन्नवान्भवति । नकेवलमन्नवानेव । किंत्वन्नादश्चभवति ॥ **अष्टमःखंडः** ॥ ८ ॥ आदित्येसप्तविधसामनामकभगवदुपास्तिमाह ॥ **अथखल्वित्यादिना** ॥ अत्रप्रसिद्धादित्यस्यैवसप्तविधत्वेनोपास्तिरुच्यतइत्यसत् । तस्यसर्वदासमत्वसर्वभूताश्रयत्वाद्यनुपपत्तेरिति

---

उप० । अथसप्तविधस्य । वाचिसप्तविधꣳसामोपासीत यत्किंचवाचोहुमितिसहिंकारोयत्प्रेतिसप्रस्तावोयदेतिसआदिः ॥ १ ॥ यदुदितिसउद्गीथोयत्प्रतीतिसप्रतिहारोयदुपेतिसउपद्रवोयन्नीतितन्निधनं ॥ २ ॥ दुग्धेऽस्मैवाग्दोहंयोवाचोदोहोन्नवानन्नादोभवतियएतदेवंविद्वान्वाचिसप्तविधꣳसामोपास्ते ॥ **अष्टमःखंडः** ॥ ८ ॥

भावेनखंडंप्रमाणेनभगवत्परतयाव्याचष्टे ॥ **आदित्यस्थमिति** ॥ अनेनप्रथमवाक्यंव्याख्यातं । सप्तरूपाणवैचित्र्यशंकानि रासायसामशब्दनिर्वचनपरंसर्वदासमस्तेनसामेतिवाक्यंव्याचष्टे ॥ **सामचेति** ॥ प्रकारांतरेणसामशब्दनिर्वचनपरं मांप्रतिमां प्रतीतिसर्वेणसमस्तेनसामेतिवाक्यंव्याचष्टे ॥ **सर्वेषामिति** ॥ अनेनसर्वेणेतितृतीयाषष्ठ्यर्थेत्युक्तंभवति । दृष्टिप्रकारदौर्लभ्य व्यावर्तनायैवशब्दः । दृष्टिविषयत्वसाम्यादित्यर्थः । नन्वादित्यस्थस्यविष्णोरप्रत्यक्षत्वात्कथंतत्रसर्वदृष्टिसाम्यमित्यतआह ॥ **दृष्टीति** ॥ तर्हिमंडलएवसामशब्दवृत्तिःस्यान्नविष्णावित्यतआह ॥ **विष्णुरिति** ॥ दृष्टिसाम्यकारणत्वमेवविष्णौसामशब्दप्र वृत्तिनिमित्तमितिभावः । यद्वादृष्टिसाम्यमेवसामशब्दप्रवृत्तिनिमित्तं । तत्कारणेचतन्निमित्तकःशब्दोमुख्यः । राजनिजयिश ब्दवदितितात्पर्यं । तस्मिन्निमानिसर्वाणीतिवाक्यंव्याचष्टे ॥ **तस्मिन्निति** ॥ आश्रितान्येवेतिसंबंधः । तस्ययत्पुरोदयात्सहिं कारइतिवाक्यंव्याचष्टे ॥ **उदयादिति** ॥ असावादित्यस्थःप्रद्युम्ननामकोविष्णुरुदयात्पूर्वमेवभवेत् । तत्रतिष्ठतीत्यर्थः । तदस्य पशवोन्वायत्ताइत्येतद्व्याचष्टे ॥ **पश्वाधारइति** ॥ असावात्माप्रद्युम्ननामनामकस्तदोदयपूर्वकालेपश्वाधारइत्यर्थः । अथय त्प्रथमोदितेसप्रस्तावइत्येतद्व्याचष्टे ॥ **वासुदेवइति** ॥ तथाशब्दउपमायां । उदये तिष्ठतीतिशेषः । तदस्यमनुष्याअन्वायत्ता

---

भा० । आदित्यस्थंपरंविष्णुंध्यायेदादित्यनामकं । सप्तरूपंसामचासौसर्वदासमरूपतः । सर्वेषांमांप्रतीत्येवदृष्टिसाम्याचसामसः । दृष्टिसाम्यंमंडलस्यविष्णुस्तस्यचकारणं । तस्मिन्निमानिभूतानिसर्वाण्येवाश्रितानिहि । उदयात्पूर्वमेवासौभवेत्प्रद्युम्ननामकः । पश्वाधारस्तदात्मासौवासुदेवस्तथोदये ।



इत्यस्यार्थमाह ॥ **आश्रयश्चेति** ॥ नकेवलंतिष्ठतिकिंत्वाश्रयश्चेतिचशब्दः । तत्रतदा । अथयत्संगववेलायांसआदिरित्यस्यार्थमाह ॥ **वराहइति** ॥ तिष्ठतीतिशेषः । सर्वरूपाणांसर्वत्रसत्त्वेनकथमेतदित्यतःसन्निधानविशेषाभिप्रायेणेतिभावेनतुशब्दः । तदस्यव यांस्यन्वायत्तानीतिवाक्यंव्याचष्टे ॥ **सः** ॥ **तत्रेति** ॥ सवराहात्माविष्णुः । अथयत्संप्रतिमध्यंदिनेसउद्गीथइत्यस्यार्थमाह ॥ **तथेति** ॥ मध्यंदिनेतिष्ठतीतिशेषः । तदस्यदेवाअनन्वायत्ताइत्यस्यार्थमाह ॥ **सआधारइति** ॥ अथयदूर्ध्वंमध्यंदिनात्प्रा गपराह्णात्सप्रतिहारइतिवाक्यंव्याचष्टे ॥ **ततइति** ॥ ततोमध्यंदिनात्परमपराह्णपर्यंतमित्यर्थः । अनिरुद्धस्तिष्ठति । तदस्यगर्भा अन्वायत्ताइत्यस्यार्थमाह ॥ **सइति** ॥ अथयदूर्ध्वमपराह्णात्प्रागस्तमायात्सउपद्रवइतिवाक्यंव्याचष्टे ॥ **ततइति** ॥ ततोपरा ह्णात्परमस्तमयपर्यंतमित्यर्थः । नृसिंहाख्योविष्णुस्तिष्ठति । तदस्याऽऽरण्याअन्वायत्ताइत्येतद्व्याचष्टे ॥ **सइति** ॥ अथयत्प्रथमा स्तमितेतन्निधनमित्येतद्व्याचष्टे ॥ **अथेति** ॥ तदस्यपितरोन्वायत्ताइतिवाक्यंव्याचष्टे ॥ **आश्रयइति** ॥ एवंखल्वमुमादित्यंस प्तविधंसामोपास्तेइत्युपासनामात्रोक्तेःस्वयंफलमाह ॥ **सप्तात्मकमिति** ॥ तस्मात्तेहिंकुर्वंतिहिंकारभाजिनोह्येतस्यसाम्न इतिवा क्यंहेतुहेतुमद्भावाप्रतीतेस्तंव्यंजयन्व्याचष्टे ॥ **हिंकारेति** ॥ अनेनहिंकारभाजिनइत्यस्यहिंकारनामकरूपाश्रिताइत्यर्थः । हिश

---

भा० । आश्रयश्चनृणांतत्रवराहःसंगवेतुसः । तत्रपक्ष्याश्रयोविष्णुस्तथानारायणाभिधः । मध्यंदिनेसआधारोदेवानांचततःपरं । अनिरुद्ध स्सआधारोगर्भस्थानांसदैवहि । ततःपरंनृसिंहाख्यःसआरण्याश्रयोमतः । अथास्तमितवेलायांससंकर्षणईरितः । ( संकर्षणइतीरितः । ) आश्रयःसपितॄणांचसप्तात्मकमुदाहृतं । प्राप्नोतिपरमंस्थानंमुक्तःसंसार सागरादितिच । हिंकारनामानमाश्रितत्वाद्धिंकुर्वंति ।

ब्दोयस्मादित्यर्थः। तस्मादितिपूर्वेणसंबंधइत्युक्तंभवति । तस्मात्तेप्रस्तुतिकामाःप्रशंसाकामाःप्रस्तावभाजिनोह्येतस्यसाम्नइत्यत्रापिपूर्ववद्धेतुहेतुमद्भावाप्रतीतिंप्रस्तुतिकामाःप्रशंसाकामाइत्यनयोःपुनरुक्तिंचापाकुर्वंस्तद्व्याचष्टे ॥ प्रस्तावेति ॥ प्रस्तुतिकामाइत्यनुवादेनप्रारंभकामाइतिव्याख्यानं । ननुप्रस्तावनामकवासुदेवाश्रयत्वेपिमनुष्याणांप्रारंभकामत्वंप्रशंसाकामत्वंचकुतइत्यतआह ॥ प्रारंभेति ॥ प्रारंभावतारत्वात्प्रथमावतारत्वादित्यर्थः । तस्य प्रस्तावनामकवासुदेवस्य । तस्मात्तान्यंतरिक्षेनारंबणान्यादायात्मानंपरिपतंत्यादिभाजीनिह्येतस्यसाम्नइतिवाक्यंहेतुहेतुमद्भावंस्फोरयन्व्याचष्टे ॥ सर्वाधारत्वादिति ॥ सर्वपक्ष्याधारत्वादित्यर्थः । अनाधारेणभूम्याद्याधारंविनेत्यनेनानारंबणानीत्यस्यानाधाराणीत्यर्थउक्तोभवति । तस्मात्तेसत्तमाःप्राजापत्यानामुद्गीथभाजिनोह्येतस्यसाम्नइत्यत्रोद्गीथाख्यनारायणाश्रितत्वंदेवानामुत्तमत्वेहेतुरुच्यते । तदयुक्तं । हिंकाराद्याश्रितपश्वादीनामप्युत्तमत्वापत्तेरित्यतस्तद्वाक्यंतात्पर्यतोव्याचष्टे ॥ नारायणेति ॥ कोसौनारायणनामार्थोयद्युक्तत्वेनोपासनमित्यतउक्तं ॥ सर्वगुणपूर्त्येति ॥ उपासनादुद्गीथाख्यनारायणस्य । अत्रभजनमुपासनमेवविवक्षितमितिभावेनैवंव्याख्यातं । तेसत्तमाःप्राजापत्यानामित्यस्यार्थःसर्वोत्तमादेवाइति । ननुमध्वादिविद्यासुवासुदेवादिमूर्तीनांसर्वगुणपूर्त्योपासनादपिदेवानांस्वपदप्राप्त्यादिलक्षणसत्तमत्वश्रवणात्कथंनारायणस्योपासनात्सत्तमाइत्युक्तमित्यतआह ॥ इतरेति ॥ सर्वगुणपूर्त्येतरमूर्त्युपासनेकथंनारायणो

भा० । प्रस्तावाश्रयत्वात्प्रस्तुतिकामाःप्रारंभकामाःप्रशंसाकामाश्च । प्रारंभावतारत्वात्प्रशंसादेवतात्वाच्चतस्य । सर्वाधारत्वाद्धराहस्यतदाधाराणांपक्षिणामनाधारेणैवगमनं । नारायणनामार्थत्वेनसर्वगुणपूर्त्योपासनादेसवर्वोत्तमादेवाः । इतरमूर्तीनामपिसर्वगुणपूर्त्योपासनेननारायणोपासनमेवभवति ।

पासनंतदित्यतआह ॥ **सर्वेति** ॥ अरशब्दस्यदोषवाचकत्वान्नञश्चविरुद्धार्थत्वादरविरुद्धागुणानारास्तेषामयनमाश्रयोनारायणः । विशेषानुक्त्याश्रुत्यंतरबलाच्चसर्वगुणपूर्णत्वंनारायणशब्दार्थइतिभावः । ननु नञ्समासे नलोपोनञइतिनलोपे तस्मान्नुडचीतिनुडागमे अनरायणइतिस्यादितिचेन्न । नभ्राडित्यादिष्वस्यवक्तव्यत्वात् । अतएवनगनाकादिशब्दप्रयोगः । यद्वा नायंनञ्समासःयेननलोपःस्यात्किंतु । अमानोनाःप्रतिषेधइतिगणपरिपठितनसमासोयमित्यदोषः । पूर्वपदात्संज्ञायामगइतिणत्वं । ल्युटष्टित्करणसामर्थ्यादयनशब्दोत्राधिकरणेत्रिलिंगइतिपुल्लिंगत्वोपपत्तिः । तस्माच्चेप्रतिहतानावपद्यंतेप्रतिहारभाजिनोह्येतस्यसाम्नइतिवाक्यंहेतुहेतुमद्भावंव्यंजयन्व्याचष्टे ॥ **अनिरुद्धेति** ॥ कुतःकुत्रप्रतिहताइत्यतस्तद्दर्शनायोक्तं ॥ **पितुरिति**॥ अन्यत्र मातृशरीरे । प्रतिहताअपीतिशेषपूरणेनविनाशकाभावादेवाविनाशोनत्वनिरुद्धाश्रयत्वादित्याशंकापरास्ता । नावपद्यंतइत्यस्यार्थोनविनश्यंतीति । नकेवलमेतावत् । किंत्वित्यतउक्तं वर्धंतेचेति । ननुपितुःशरीरान्मातृशरीरेप्रतिहताअपिगर्भामातृशक्त्यैवनविनश्यंतिवर्धंतेचतत्रैवेतिकिंनस्यात्किमप्रामाणिकानिरुद्धगर्भाश्रयत्वकथनेनेतिचेत् । न । तथासतिमातृशरीरप्रविष्टान्नादेरपिमातृशक्त्यैवपरिरक्षणादिसंभवेप्रत्यहंभोजनाद्युद्योगप्रयासानुभवायोगात् । नचैवमस्तीत्याह ॥ **अन्यदिति** ॥ अन्यदन्नादिकंभुक्तं मातृशरीरप्रविष्टं । हिशब्देनसर्वानुभवंप्रमाणयति । नन्वथाप्यप्रामाणिकंगर्भाणामनिरुद्धाश्रयत्वं

---

भा० । सर्वगुणपूर्त्यर्थत्वान्नारायणशब्दस्य । अनिरुद्धाश्रयत्वाद्गर्भाणांपितुःशरीरादन्यत्रप्रतिहताअपिनविनश्यंति । वर्धंतेचतत्रैव । अन्यद्विभुक्तंजीर्यतएव ।

किमर्थमंगीकार्यमित्यतस्तत्रश्रुतिंपठति ॥ धातेति ॥ श्रुतिश्चेतिचशब्दान्वयः । तेनपूर्वोदाहृतप्रमाणसमुच्चयः । नन्वि
यंश्रुतिर्धातृशब्दोक्तचतुर्मुखस्यैवगर्भधारकत्वंब्रवीतिनानिरुद्धस्येत्यतआह ॥ धाताहीति ॥ हियस्मात्तस्मादुदाहृतश्रुति
रुक्तार्थेप्रमाणं । कामपुत्रानिरुद्धव्यावृत्त्यर्थंभगवानित्युक्तं । तदेवकुतइत्यतआह ॥ विष्णुरिति ॥ विष्णुर्योनिंकल्प
यतुत्वष्टारूपाणिपिंशतु । आसिंचतुप्रजापतिर्धातागर्भंदधातुतइतिश्रुतौविष्णुस्त्वष्टाप्रजापतिर्धातेतिशब्दैःक्रमेणवासुदेवादिचतु
मूर्तयउच्यंते । हियस्मात्तस्माद्धाताभगवाननिरुद्धतत्यर्थः । नन्वस्यांश्रुतौविष्णवादिशब्दैश्चतुर्मूर्तयउच्यंतइतिकुतः ।
तत्तन्नामकाश्चत्वारोदेवाएवेतिकिंनस्यादित्यतःश्रुत्यर्थनिश्चायकंप्रमाणमाह ॥ योनिक्लृप्तिरिति ॥ योनेःक्लृप्तिःपुत्रोत्पत्ति
सामर्थ्यमित्यर्थः । योनिशुद्धिरितिवा । रूपं गर्भस्थपुत्रस्यांगमित्यर्थः । आसेककर्मगर्भात्प्रजापातनाख्यंकर्म । धा
रणंगर्भाणां । ननुवासुदेवादिमूर्तीनांयोनिक्लृप्त्यादिकारित्वेपिविष्णुर्योनिमित्यत्रताएवोच्यंतइतिकुतः । वासुदेवादिमूर्ती
नामिवविष्णवादिनामकदेवानामपियोनिक्लृप्त्यादिकारित्वोपपत्तेः । नहिविष्णवादिशब्दाएववासुदेवादिमूर्तिवाचकाइत्यत्रप्रमाण
मस्तीत्यतस्तत्रापिप्रमाणमाह ॥ व्याप्तेरिति ॥ विष्लृव्याप्ताविितिधातुः । त्वेषात्दीप्तत्वात् । द्वितीयकःसंकर्षणः । प्रजानांपा
तात्प्रजापतिरित्युच्यते । किंतत्पातनमित्यतआह ॥ निषेकइति ॥ यद्वाप्रजापतेःकथंप्रजापातनकर्तृत्वमुच्यते । आसिंचतुप्र

भा० । धातागर्भंदधातुतइतिचश्रुतिः । धाताहिभगवाननिरुद्धः । विष्णुस्त्वष्टाप्रजापतिर्धाताइतिचतुर्मूर्तयोह्युच्यंते । योनिक्लृप्तिर्वासुदेवाद्रूपंसंकर्षणाद्भवेत् । आसेककर्मप्रद्युम्ना
दनिरुद्धाच्चधारणमितिच । व्याप्तेर्विष्णुर्वासुदेवस्त्वष्टात्वेषाद्द्वितीयकः । प्रजापतिःप्रजापातान्निषेकःपातनंततः ।



जापतिरितिनिषेककर्तृत्वश्रवणादित्यतआह ॥ निषेकइति ॥ ततोमातृदेहतोबहिःपातनमेवनिषेकइत्युच्यते । श्रुतावित्यर्थः ।
उक्तनिमित्तेनप्रजापतिशब्दाभिधेयःकइत्यतआह ॥ प्रजापतिरिति ॥ गर्भधारणाख्यकर्मतोनिरुद्धोधातेतिप्रोक्तइत्यन्वयः । ननु
गर्भंतेअश्विनौदेवावाधत्तांपुष्करस्रजावित्युत्तरत्राश्विप्रभृतिदेवानांश्रूयमाणत्वात्कथंभगवत्परत्वमस्येत्यतोश्विनावित्यनेनापिभग
वन्मूर्तीएवविवक्षितेइत्याह ॥ कृष्णरामाविति ॥ तस्मात्तेपुरुषंदृष्ट्वाकक्षंश्वभ्रमित्युपद्रवंतिउपद्रवभाजिनोह्येतस्यसाम्नइति
वाक्येहेतुहेतुमद्भावंदर्शयन्व्याचष्टे ॥ कक्षश्वभ्रइति ॥ यतस्तेषांमृगाणांनृसिंहःसदास्वाश्रयोतोभीतामृगाःकक्षश्वभ्राभ्यांद्र
वंतीत्यन्वयः ॥ मृगाणांभीतत्वेश्रुत्युक्तंपुरुषदर्शनंकारणं । ननुमृगाणांनृसिंहाश्रयत्वेनृसिंहंप्रत्येवद्रवणंस्यात् । नतुकक्षश्वभ्रो
द्देशेनेत्यतउक्तं कक्षश्वभ्रइति । कक्षमरण्यं श्वभ्रंविवरं द्वंद्वैकवद्भावः । ननुकक्षश्वभ्रयोर्नृसिंहस्यसदावस्थितत्वेपिमृगाणांकक्ष
श्वभ्रेप्रतिद्रवणंकथं । नहिस्वरक्षकोनृसिंहःकक्षश्वभ्रयोरस्तीतितेजानंतीत्यतउक्तं तदज्ञानेपीति ॥ यद्यपिकक्ष्यश्वभ्रेएवरक्षके
इतितेजानंति । नतुतत्स्थोनृसिंहःइति । तथापिकक्षश्वभ्रयोरचेतनत्वेनरक्षकत्वायोगान्नृसिंहएवरक्षकइतिभावः । तस्मात्तान्निद
धतिनिधनभाजिनोह्येतस्यसाम्नइत्येतद्व्याचष्टे ॥ पितॄणामिति ॥ अतइतिसावधारणं । पिंडादीनितिश्रुतौशेषोक्तिः । ननुपितृ

भा० । प्रजापतिस्तुप्रद्युम्नोधाताधारणकर्मतः । अनिरुद्धइतिप्रोक्तःकृष्णरामौतथाश्विनावितिच । कक्षश्वभ्रेनृसिंहस्यसदावस्थितिकारणात् । द्रवंतिकक्षश्वभ्राभ्यांतदज्ञानेपि
रक्षणात् । मृगाभीतायतस्तेषांनृसिंहस्त्वाश्रयःसदा । पितॄणामाश्रयोयस्मात्संकर्षणउदाहृतः । अतस्तान्प्रतिपिंडादीन्निदधत्यज्ञकाअपि ।

न्प्रतिपिंडादिदानंतेषांसंकर्षणाश्रयत्वेकथंज्ञापकमित्यतआह ॥ अन्यथेति ॥ तत्पिंडादिकं । इतरमूर्तीनामित्यत्रभगवद्रूपाणा मन्येषामपिसर्वगुणपूर्त्याद्यस्तीत्युक्तं । प्रमाणेनद्रढयति ॥ नरूपाणामिति ॥ अपिवेतिशब्दौपरस्परसमुच्चये । गुणनामभ्यां रूपाणांविशेषाभावःकिं नेत्याह ॥ तथापीति ॥ नारायणइतिनाम विशेषतस्तत्प्रियमित्यन्वयः । नन्वितरनामस्वेकैकना म्नोनारायणनामसाम्याभावेपिसमस्तानांनाम्नांतत्साम्यंस्यादित्यतःपक्षांतरमाह ॥ समस्तानामिति ॥ अथवा स्यादेवसमस्ता नांनाम्नांनारायणनामसाम्यं यदातस्यनारायणनाम्नोर्थभूतागुणैःपूर्तिरेवसमस्तनाम्नामर्थइतिविज्ञायेतेत्यर्थः । नारायणनामार्थ त्वेनसर्वगुणपूर्त्योपासनात्सर्वोत्तमोदेवाइत्युक्तमर्थंप्रमाणेनद्रढयति ॥ नाम्नइति ॥ ततश्चायंखंडार्थः ॥ अथखल्वमुमादित्य नामकमादित्यस्थं सप्तविधंसप्तरूपं । साम सामनामकंविष्णुमुपासीत । सामशब्दंविष्णौनिर्वक्ति ॥ सर्वदेति ॥ यस्मादसावादि त्यस्थोविष्णुःसर्वदासमस्तेनसामेत्युच्यते । प्रकारांतरेणसामशब्दंनिर्वक्ति ॥ मांप्रतीति ॥ यस्मादादित्यस्थोविष्णुःसर्वेणसर्वस्य मांप्रति मांप्रतीतिसमस्तेनकारणेनसामेत्युच्यते ॥ १ ॥ तदुपास्तिप्रकारमाह ॥ तस्मिन्निति ॥ तस्मिन्नादित्यस्थेसप्तरूपेविष्णा

---

भा० । अन्यथातन्मृतानांतुकुतएवोपतिष्ठतीतिच । नरूपाणांविशेषोस्तिगुणतोनामतोपिवा । तथापितत्प्रियंनामनारायणइतिस्मह । विशेषतःसमस्तानांनाम्नांतस्यार्थएवतु । विज्ञायतेगुणैःपूर्तिर्नामसाम्यंतदाथवेतिच (तदातथेतिच) । नाम्नोनारायणाख्यस्यगुणैःपूर्तिर्हिदेवताः । विज्ञायार्थमुपास्यैवसर्वाधिक्यमवापिरइतिच ॥ नवमःखंडः ॥ ९ ॥

उप० । अथखल्वमुमादित्यꣳसप्तविधंसामोपासीत सर्वदासमस्तेनसाम मांप्रतिमांप्रतीतिसर्वेणसमस्तेनसाम ॥ १ ॥ तस्मिन्निमानिसर्वाणिभूतान्यन्वायत्तानीतिविद्यात्तस्यय त्पुरोदयात्सहिंकारस्तदस्यपशवोन्वायत्तास्तस्मात्तेहिंकुर्वंतिहिंकारभाजिनोह्येतस्यसाम्नः ॥ २ ॥

विमानिसर्वाणिभूतानिपशुमनुष्यादीन्यन्वायत्तानिआश्रितानीतिविद्यादुपासीत । कथमादित्यस्थस्यसाप्तविध्यं कथंवातस्यसर्वभूताश्रयत्वमित्यतस्तद्विशदमाह ॥ तस्येति ॥ हिंकारःप्रद्युम्नः । सः यत्तस्यादित्यस्योदयात्पुरा यआदित्योदयात्पूर्वकाल स्तत्रस्थितइत्यर्थः । कानितत्राश्रितानीत्यतआह ॥ तदस्येति ॥ अस्यसूर्यस्थस्यसामनामकभगवतः । तदुदयात्पूर्वकालस्थितंहिंकारनामकंप्रद्युम्नाख्यंरूपंपशवोन्वायत्ताआश्रिताः । पशूनांतदाश्रितत्वेज्ञापकमाह ॥ तस्मादिति ॥ हियस्मात्तेपशवएतस्यादित्यस्थस्य साम्नःसामनामकस्यभगवतो योहिंकाराख्योवतारस्तद्भाजिनस्तदाश्रिताः तस्माद्धिंकारनामानमाश्रितत्वादेव तेपशवो हिंकुर्वंति । अन्यथातन्नस्यादित्यर्थः ॥ २ ॥ अथशब्दोविच्छेदज्ञापनार्थः । प्रस्ताकोवासुदेवः । सः यत्प्रथमोदितेतिष्ठति यआदित्योदयप्रथमकालेस्थितइत्यर्थः । तदाश्रितान्याह ॥ तदस्येति ॥ अस्यसूर्यस्थभगवतस्तत्प्रस्तावनामकंवासुदेवरूपं । मनुष्याअन्वायत्ताः । तेषांतदाश्रितत्वेज्ञापकमाह ॥ तस्मादिति ॥ हियस्मात्तेमनुष्या एतस्यसूर्यस्थस्य साम्नःसामनामकस्यभगवतः यः प्रस्तावाख्योवतारःतद्भाजिनस्तदाश्रिताः तस्मात्प्रस्तावाश्रितत्वादेव तेमनुष्याः प्रस्तुतिकामाःप्रारंभकामाः प्रशंसाकामश्च । अन्यथातन्नस्यादित्यर्थः ॥ ३ ॥ अथादिरादिनामावराहः । सः यत्संगववेलायांतिष्ठति तदाश्रितान्याह ॥ तदस्येति ॥ अस्यतद्रूपंवयांसिपक्षिणोन्वायत्तानि । तत्रज्ञापकमाह ॥ तस्मादिति ॥ हियस्मात्तानिवयांस्येतस्यसाम्नः सामनामकस्यभगवतो यआदि

उप० । अथयत्प्रथमोदितेसप्रस्तावस्तदस्यमनुष्याअन्वायत्तास्तस्मात्तेप्रस्तुतिकामाःप्रश ँसाकामाःप्रस्तावभाजिनोह्येतस्यसाम्नः ॥ ३ ॥ अथयत्संगववेलायाँसआदिस्तदस्यवया ँस्यन्वायत्तानितस्मात्तान्यंतरिक्षेऽनारंबणान्यादायात्मानंपरिपतंत्यादिभाजीनिह्येतस्यसाम्नः ॥ ४ ॥

स्तद्भाजीनितदाश्रितानि तस्मादेव वराहस्यसर्वपक्ष्याधारत्वादेव । तानितदाश्रितानिवयांसि अंतरिक्षेऽनारंबणान्यनाधाराण्यात्मानंस्वात्मानमादायपरिपतंति । अन्यथातन्नस्यादित्यर्थः ॥ ४ ॥ अथोद्गीथोनारायणः सःयत्संप्रतिमध्यंदिनेतिष्ठति । तदाश्रितान्याह ॥ तदस्येति ॥ अस्यभगवतस्तद्रूपंदेवाअन्वायत्ताः । तत्रज्ञापकमाह ॥ तस्मादिति ॥ हियस्मात्तेदेवाएतस्यसाम्नः सामनामकस्यभगवतोयउद्गीथोनारायणाख्यावतारस्तद्भाजिनस्तदाश्रितास्तदुपासकाइतियावत् । तस्मादेवनारायणशब्दार्थत्वेनसर्वगुणपूर्त्योपासनादेवतेदेवाःप्राजापत्यानांमध्येसत्तमाःसर्वोत्तमाः । अन्यथातन्नस्यादित्यर्थः ॥ ५ ॥ अथप्रतिहारोनिरुद्धः। सःयन्मध्यंदिनादूर्ध्वंअपराह्णात्प्राक् तत्कालस्थितंयदित्यर्थः। तदाश्रितान्याह ॥ तदस्येति ॥ अस्यभगवतस्तदनिरुद्धाख्यंरूपं गर्भा गर्भस्थाः प्राणिनो ऽन्वायत्ताः। तत्रज्ञापकमाह ॥ तस्मादिति ॥ हियस्मादेतेगर्भाएतस्यसाम्नोभगवतःयःप्रतिहाराख्योवतारस्तद्भाजिनस्तदाश्रिता स्तस्माद्गर्भाणामनिरुद्धाश्रयत्वादेव तेगर्भाःपरि ( प्रति ) हृताःपितुःशरीरादन्यमातृशरीरेप्रति ( परि ) हृताअपिनावपद्यंतेनविनश्यंति । नकेवलमेतावत् वर्धंतेचतत्रैव । अन्यथातन्नस्यादित्यर्थः ॥ ६ ॥ अथोपद्रवो

उप० । अथयत्संप्रतिमध्यंदिनेसउद्गीथस्तदस्यदेवाअन्वायत्तास्तस्मात्तेसत्तमाःप्राजापत्यानामुद्गीथभाजिनोह्येतस्यसाम्नः ॥ ५ ॥ अथयदूर्ध्वंमध्यंदिनात्प्रागपराह्णात्सप्रतिहारस्तदस्यगर्भाअन्वायत्तास्तस्मात्तेप्रतिहृतानावपद्यंतेप्रतिहारभाजिनोह्येतस्यसाम्नः ॥ ६ ॥



नृसिंहः । सः यदपराह्णादूर्ध्वमस्तमयात्प्राक् तत्कालस्थितंयदित्यर्थः । तदाश्रितान्याह ॥ तदस्येति ॥ अस्यभगवतस्तन्नृसिंहाख्यंरूपंआरण्याअरण्येस्थितामृगाअन्वायत्ताः । तत्रज्ञापकमाह॥ तस्मादिति ॥ हियस्मात्तेआरण्या एतस्यसाम्नःसामनामकस्यभगवतोयउपद्रवाख्योवतारःकक्षश्वभ्रयोर्मृगरक्षणार्थंसदास्थित स्तद्भाजिनस्तदाश्रितास्तस्मादेवस्वाज्ञानेपिरक्षकस्यनृसिंहस्यकक्षश्वभ्रयोःस्थितत्वादेव तेआरण्याःपुरुषंदृष्ट्वाभीताःसंतः कक्षमरण्यंश्वभ्रंविवरंस्वरक्षकमितिभावेनकक्षश्वभ्राभ्यामुपद्रवंति । अन्यथातन्नस्यादित्यर्थः ॥७॥ अथनिधनंसंकर्षणाख्यंरूपंतत् । यत्प्रथमास्तमितेतिष्ठति । तदाश्रित्यान्याह॥ तदस्येति॥ अस्यभगवतस्तत्संकर्षणाख्यंरूपंपितरोन्वायत्ताः । तत्रज्ञापकमाह ॥ तस्मादिति ॥ हियस्मात्तेपितरएतस्यसाम्नोभगवतोयन्निधनं निधननामकंसंकर्षणाख्यंरूपं तद्भाजिनस्तदाश्रितास्तस्मादेव पितॄणांसंकर्षणाश्रयत्वादेव । तान्पितॄन्प्रतिनिदधतिपिंडादीनज्ञकाअपीतिशेषः । उपासकस्यफलमाह ॥ एवमिति ॥ योधिकारीअमुमादित्यस्थमादित्यनामकंसप्तविधंसामनामकंभगवंतमेवंपश्वाद्याश्रयत्वेनोपास्ते ससंसारसागरान्मुक्तःसन्परमंस्थानंप्राप्नोतीतिवाक्यशेषः ॥ ८ ॥ नवमःखंडः ॥ ९ ॥ सप्तविधस्यसामनाम्नोभगवतोज्ञानानंदबलैर्ब्रह्माद्यसमत्वादात्मरूपसमत्वनिष्ठामुपास्तिमाह॥ अथखल्वित्यादिना ॥ अयंखंडःप्रसिद्धसाम

उप० । अथयदूर्ध्वमपराह्णात्प्रागस्तमयात्सउपद्रवस्तदस्याऽऽरण्याअन्वायत्तास्तस्मात्ते पुरुषंदृष्ट्वाकक्षꣳश्वभ्रमित्युपद्रवंत्युपद्रवभाजिनोह्येतस्यसाम्नः ॥ ७ ॥ अथयत्प्रथमास्तमितेतन्निधनं तदस्यपितरोन्वायत्तास्तस्मात्तान्निदधतिनिधनभाजिनोह्येतस्यसाम्न एवंखल्वमुमादित्यꣳसप्तविधꣳसामोपास्ते ॥ ८ ॥ नवमः खंडः ॥ ९ ॥

परइत्यतसत् । शब्दरूपस्यतस्यपरमात्मसंमितत्वातिमृत्युत्वयोरसंभवात् । तन्नाकंतद्विशोकमित्यस्यासंभवाच्च । ननुभगवत्प
रत्वेपिकथमात्मसंमितत्वंतस्यसादृश्यस्यभेदव्याप्तत्वात् । नहिगौर्गोसदृशीत्यतआत्मसंमितत्वंद्वेधाघटयन्खंडंप्रमाणेनव्याचष्टे
॥ यस्येति ॥ यथागगनंगगनाकारमित्यादौद्वैत्सदृशमन्यन्नास्तीत्यर्थएवमत्रापीतिभावः।यस्यस्वरूपाणीत्यपिसंबंधः । स्वरूपाणां
परस्परंसमत्वंनाम परस्परनिष्ठबहुधर्मयोगित्वमेव । नतुतद्भिन्नत्वविशेषितं । तच्चपरस्परमभेदेपिसंभवतीतिभावः । अतिमृत्युपदं
व्याचष्टे ॥ **अतिमृत्युरिति** ॥ अमृत्युत्वतः । सप्तविधमित्यस्यार्थमाह ॥ **प्रद्युम्नादीति** ॥ प्रद्युम्नवासुदेववराहनारायणानि
रुद्धनृसिंहसंकर्षणस्वरूपेणेत्यर्थः । हिंकारइतित्र्यक्षरं । प्रस्तावइतित्र्यक्षरं । तत्समित्यादौहिंकारादिसामनाम्नामेवत्र्यक्षरत्वसा
म्यमुच्यतइतिभ्रांतिवारणायतत्सममितिवाक्यपंचकंव्याचष्टे ॥ **समानीति** ॥ तत्रहेतुपरंहिंकारइतित्र्यक्षरं प्रस्तावइतित्र्यक्ष
रमित्यादिवाक्यंव्याचष्टे ॥ **ज्ञानादीति** ॥ सर्वशोपित्र्यक्षराणिहिंकारादीनिनामानि सर्वशःवर्णशःसर्वेषामपिरूपाणांज्ञानादित्र
यवाचीनिहियस्मात्तस्मात्तानिज्ञानानंदबलैःसमानीत्यर्थः। हिंकारादिनाम्नांवर्णशोज्ञानादित्रयवाचकत्वप्रकारस्तुप्रमाणांतरादवगं
तव्यः । आदिरितिद्व्यक्षरं । प्रतिहारइतिचतुरक्षरं । ततइहैकं तत्समित्यत्रप्रतिहारनाम्नःकोवर्णआदिनाम्नियोज्यइत्यतस्तं
दर्शयन्तद्व्याचष्टे ॥ **आदिनाम्नइति**॥प्रतिहारनाम्नःप्रशब्दःआदिनाम्नायोज्यःस्यात्। तेनप्रआदिरितिआदिप्रइतिवैकंनाम ति

भा०। यस्यान्यःसदृशोनास्तिस्वरूपाणिसमानिच । सआत्मसंमितोविष्णुरतिमृत्युरमृत्युतः । प्रद्युम्नादिस्वरूपेणसविष्णुःसप्तधास्थितः । समानितानिसर्वाणिज्ञानानंदबल
स्तथा । ज्ञानादित्रयवाचीनित्र्यक्षराण्यपिसर्वशः । हिंकारादीनिनामानिसर्वेषामपिसर्वशः । आदिनाम्नःप्रकारस्तुयोज्यःस्यात्प्रतिहारतः । तेनत्र्यक्षरमेवस्यान्नामद्वयमपिप्रभोः ।

हारइत्यन्य दितिप्रभोर्नामद्वयमपित्र्यक्षरमेवस्यादित्यर्थः । अक्षरमतिशिष्यतइत्युपद्रवनाम्न्येकमक्षरमतिरिच्यतइत्युक्तं किंतदक्षरं किंवातद्वाच्यमित्यतआह ॥ उपद्रवेतिवति ॥ तथापिसवःकारोनारायणस्यैवनाम । उक्तव्यूहांतर्गतोद्गीथाख्यनारायणव्यावृत्त्यर्थंक्षीराब्धिशायिनइत्युक्तं । नन्वेवंवःकारस्यत्र्यक्षरत्वाभावात्तद्वाच्यस्यनारायणस्यज्ञानादिगुणैःसाम्याभावेप्रागुक्तविरोधइत्याशंकानिवर्तकतयात्र्यक्षरंतत्समंभवतीतिवाक्यंव्याचष्टे ॥ व्यंजनेति ॥ व्यंजनस्वरसर्गैस्त्रिवर्णत्वादित्यन्वयः । सोपिवःकारोपि । अपिशब्देनहिंकारादिसमुच्चयः । यतस्ततःसोपिनारायणोपि । प्रद्युम्नादिसमुच्चयार्थमपिशब्दः । द्वाविंशेनपरमादित्याज्जयतीतिफलवाक्यंव्याचष्टे ॥ वःकारेति ॥ एकविंशत्याऽऽदित्यमाप्नोतीतिवाक्यंव्याचष्टे ॥ एकविंशेति ॥ एकविंशार्णवाच्यरूपज्ञानादित्यर्थः । सूर्यमंडले स्थितइतिशेषः । तानिहवाएतानिद्वाविंशतिरक्षराणीतिवाक्यंप्रसिद्धार्थप्रतीतिनिरासायव्याचष्टे ॥ सएवेति ॥ ननुप्रद्युम्नादिस्वरूपेणसविष्णुःसप्तधास्थितइत्युक्तत्वेनकथंद्वाविंशद्रूपवानित्युक्तमित्यतआह ॥ यतः ॥ तान्येवेति ॥ इतितस्मात्द्वाविंशतिः रूपाणीतिशेषः । नन्वेतानिद्वाविंशतिरूपाणिकिंनामकानिकुत्रतिष्ठंतीत्यतस्तावत् द्वादशमासाःपंचर्त्तवस्त्रयइमेलोकाअसावादित्यएकविंशइतिश्रुत्यंतरानुसारेणैकविंशतिमूर्तीराह ॥ प्रद्युम्नाद्याइत्यादिना ॥ प्रद्युम्नवासु

---

भा० । उपद्रवेतुवःकारोयद्यपिव्यातिरिच्यते । नामनारायणस्यैवसोपिक्षीराब्धिशायिनः । व्यंजनस्वरसर्गैस्तुसोपिज्ञानादिवाचकः । त्रिवर्णत्वात्समःसोपिज्ञानाद्यैःपुरुषोत्तमः । वःकारार्थपरिज्ञानात्प्राप्योब्धिशयनःप्रभुः । एकविंशार्णविज्ञानात्प्राप्योसौसूर्यमंडले । सएवभगवान्विष्णुर्द्वाविंशद्रूपवान्यतः । तान्येवसप्तरूपाणिविभिद्यंतेत्रिधात्रिधा । एकःपयोब्धिशयनइतिद्वाविंशतिःप्रभोः । प्रद्युम्नाद्यास्तुचत्वारोद्विषण्मासेषुसंस्थिताः ।

देववराहनारायणाश्चत्वारः प्रत्येकंत्रिशस्त्रिशोभूत्वाकेशवाद्याःकेशवादिनामानःसंतोद्विषण्मासेषुसंस्थिताइतिसंबंधः । पंचमोनिरुद्धस्तस्यरूपत्रयमितियावत् । षष्ठस्यनृसिंहस्यरूपद्वयमितिरूपपंचकंमत्स्यादिपंचकंसत्वसंतादिषुपंचर्तुषुसंस्थितमित्यर्थः। अत्रापिहेमंतशिशिरयोरैक्येनपंचत्वोक्तिः । षष्ठस्यतृतीयंरूपंपृथिवीसंस्थं। सप्तमस्यसंकर्षणस्यतनूरामःकृष्णःकल्किरितित्रिधासत्यंतरिक्षद्युसूर्येषुस्थितेतिसम्बंधः । एकविंशत्यादित्यमाप्नोतिद्वाविंशेनपरमादित्याज्जयतीत्यत्रैकविंशद्वाविंशरूपज्ञानयोरेवफलमुक्तं । नत्वितररूपज्ञानस्य । अतएतदुपलक्षणं । ततश्चतत्तज्ज्ञानात्तत्तत्प्राप्तिर्भवति । अनंतरंद्वाविंशाक्षरप्रतिपाद्यरूपप्राप्तिःसर्वेषामित्यभिप्रेत्याह ॥ तज्ज्ञानादिति ॥ द्वाविंशेनद्वाविंशरूपज्ञानेन । यावच्छ्वेतंनगच्छतियोगीतावन्नमुक्तःस्यादित्यादेरितिभावः । तन्नाकंतद्विशोकमित्येतत्व्याचष्टे॥एतदिति॥कंसुखमकमसुखंदुःखमितियावत्। तद्रहितंनाकमित्युच्यतइतिभावेनासुखवर्जनादित्युक्तं।दुःखवर्जनादित्यर्थः।द्वौनञौप्रकृतमर्थंसातिशयंगमयतइतिन्यायेनार्थांतरमाह ॥ पूर्णेति॥ ननुनाकपदस्यप्राचीनार्थत्वेविशोकपदंपुनरुक्तमित्यतस्तस्यार्थांतरमाह॥विशोकमिति॥भक्तानामितिशेषः । यत्पूर्वमभिप्रेतमुपासितंतत्तद्रूपंस्वस्वप्रापकमितितदयुक्तं । तथासतिपृथिव्यादिस्थितरूपस्यादित्यस्थरूपाप्रापकत्वप्राप्त्यादित्यस्थरूपस्यचेतररूपाप्रापकत्वप्राप्त्याआत्मसंमितमित्यु

भा० । त्रिशस्त्रिशःकेशवाद्यावसंतादिषुपंचमः । रूपद्वयंतुषष्ठस्यस्थितंमत्स्यादिपंचकं । तृतीयंपृथिवीसंस्थंजामदग्न्याख्यमेवतत् । अंतरिक्षद्युसूर्येषुसत्यमस्यात्रिधातनुः रामःकृष्णःकल्किरितितज्ज्ञानात्तान्यवाप्यच । द्वाविंशेनपयोब्धिस्थंप्राप्यतेरूपमक्षरं । एतद्वाविंशकंरूपंनाकंचासुखवर्जनात् । पूर्णानंदस्वरूपत्वाद्विशोकंशोकनाशनादितिसामसंहितायां । ॥ ५५ ॥

क्तं । सर्वरूपसाम्यमनुपपन्नंस्यादित्याशंकामात्मसंमितत्वादिनासप्तविधसामोपासकस्यफलकथनव्याजेनपरिहर्तुंप्राप्तमाप्नोतीहादित्यस्यजयं परोहास्यादित्यजयाज्जयोभवतीतिवाक्यद्वयंक्रमेणानूद्यव्याचष्टे ॥ आप्नोतीहेत्यादिना ॥ ऐक्यादित्युत्तरत्रापिसंबध्यते । अनेनैकरूपप्राप्त्यापीतररूपप्रापकत्वसामर्थ्येनसर्वत्रसाम्योपेतभगवत्प्राप्तिरेवात्मसंमितत्वादिनासप्तविधसामोपासकस्यफलंउपासनानुसारित्वात्फलस्येत्युक्तंभवति । इहपृथिव्यादिषुस्थितेत्युक्तार्थेप्रमाणमाह॥ स्वरूपमिति ॥ तर्हिरूपांतरोपास्तिर्व्यर्थास्यादित्यतआह ॥तथापीति॥रूपांतरसंप्राप्तिरित्यर्थः।भगवतःप्राप्त्येत्यादिनाजयशब्दःप्राप्त्यर्थोव्याख्यातः । तदुपपादयितुंप्रतिजानीते॥ जयइति ॥ अत्रेतिशेषः । जयाभिभवयोरेवजिधात्वर्थत्वात्कथमेतदित्यतःप्रयोगतोनुगंतव्याइतिन्यायमनुसृत्यजयशब्दस्यप्राप्तिवाचकत्वेप्रयोगमाह ॥ धनजितइति ॥ धनप्राप्तिमते। स्वर्जितेस्वर्गप्राप्तिमते । सत्राजितेसत्रप्राप्तिमते । विश्वजितइत्यस्यादित्वेपितस्यजयार्थत्वेपिसंभवात्तदनुदाहरणं । इंद्रायसोमंभरेत्युत्तरेणान्वयः । इत्यादिवत् इत्यादौयथाजिच्छब्दःप्राप्त्यर्थस्तथात्रापीत्यर्थः । ननुएकविंशोवाइतोसावादित्यइत्यत्रादित्यस्थस्यभगवतइतएकविंशत्वमुच्यते। तत्रेतइत्यनेनपरामृश्यंनप्रतीयते। नचपृथिवीस्थंरूपमितइत्यनेनग्राह्यं । पृथिवीस्थजामदग्न्याख्यरूपापेक्षयादित्यस्थस्यैकविंशत्वाभावात् । केशवापेक्षयाह्यादित्यस्थ

भा० । आप्नोतीहादित्यस्यजयं । इहपृथिव्यादिषुस्थितभगवत्प्राप्तावप्यादित्यस्थएवप्राप्यते। ऐक्यात् । परोहास्यादित्यस्यजयाज्जयोभवति । आदित्यस्थस्यआदित्यनाम्नोभगवतःप्राप्त्यापरोजयःरूपांतरप्राप्तिरपिभवति । स्वरूपमेकंप्राप्तस्तुविष्णोःस्यात्सर्वरूपगः । ऐक्यात्तथापिसंप्राप्तिर्बहूपास्त्यासुखाधिकीतिच । जयोनामप्राप्तिरेव । धनजितेस्वर्जितेसत्राजितइत्यादिवत् ।

स्यकल्केरेकविंशत्वं । नचतस्यमासगतस्येतइतिनिर्देशोयुज्यतइत्यतआह ॥ केशवादीति ॥ योमासगतःकेशवादिद्वादशविधोभग
वान्सएवाध्यात्मंललाटादिषुसंस्थितः । ललाटेकेशवंविद्यान्नारायणमथोदरइत्यादिस्मृतेः । एवंचकेशवस्याध्यात्मंललाटेपिसत्त्वादित
इत्यनेनावधितयापरामर्शःसंभवतीतिभावः।ननुद्वादशमासाःपंचर्तवस्त्रयइमेलोकाअसावादित्यएकविंशइतिश्रुतौमासादीनामेवश्र
वणात्कथंमासादिस्थभगवद्रूपाणिगृहीतानीत्यतस्तत्रापिमासलोकादित्यनामभिर्भगवानेवग्राह्यइतिभावेनतत्रप्रमाणमाह ॥ चित्रा
दीति ॥ पूर्णचंद्रस्यचित्रादियोगदातृत्वाद्धरिःस्वयंमुख्यतश्चैत्रादिमासनामा । अत्रचित्राशब्देनपूर्वोत्तरतारकेअपिग्राह्ये । आदिश
ब्देनविशाखादिग्रहणं । उक्तंच । चित्रादितारकाद्वंद्वंयदापूर्णेंदुसंयुतं । चैत्रादिमासाविज्ञेयाइति । अपामदनाद्भक्षणाद्रश्मिभिःस्वी
कारादितियावत् । प्रागेवव्याख्यातत्वाद्दतुशब्दोनव्याख्यातः ॥ ततश्चायंखंडार्थः ॥ अथखलुआत्मसंमितंस्वस्यस्वयमेवसंमितंन
त्वन्यत्यस्यतदात्मसंमितंस्वसमंवा । मृत्युमतिक्रांतंअतिमृत्युमृत्युरहितं। सप्तविधंप्रद्युम्नादिरूपेणसप्तधास्थितं।सामसामनामकं परं
ब्रह्मोपासीत । अत्रात्मसंमितंसामेत्युक्त्याआत्मसंमितत्वंसामशब्दप्रवृत्तिनिमित्तमित्युक्तंभवति । ननुसामनामकानांतेषांसप्तानामपि
रूपाणांकथमात्मसंमितत्वमित्यतोयतस्तानिसर्वाणिरूपाणिज्ञानानंदबलैःसमानीतिवक्तुंकुतस्तेषांज्ञानादिभिःसमत्वमित्यतोज्ञाना
दित्रयवाचकाक्षरत्रयोपेतनामवत्त्वात्सर्वेषामपिरूपाणामितिभावेनप्रद्युम्नादिवाचकहिंकारादिनाम्नांत्र्यक्षरत्वप्रकारंदर्शयन्नाह ॥

भा० । केशवादिरूपेणललाटादिषुस्थितेरितएकविंशइत्युच्यते । चित्रादियोगदातृत्वान्मासनामास्वयंहरिः । लोकःप्रकाशरूपत्वादादित्यश्चादनादपामितिच ॥ **दशमःखंडः १०**

उप० । अथखल्वात्मसंमितमतिमृत्युसप्तविधंसामोपासीतहिंकारइतित्र्यक्षरंप्रस्तावइतित्र्यक्षरंतत्समं ॥ १ ॥

हिंकारइतीति ॥ हिंकारइतित्र्यक्षरं । प्रस्तावइतित्र्यक्षरं । अतस्तन्नामद्वयंसमं । उभयोरपित्र्यक्षरत्वात् । यतएवंनामद्वयंज्ञानादित्रयवाचकत्र्यक्षरत्वेनसमंतत्तस्मात्तत्प्रद्युम्नवासुदेवाख्यरूपद्वयमपितत्प्रतिपाद्यज्ञानादित्रयवत्त्वेनसममितियोज्यं ॥१॥ आदिरितिद्व्यक्षरं । प्रतिहारइतिचतुरक्षरं । कथंतर्हिवराहानिरुद्धनाम्नोस्त्र्यक्षरत्वमित्यतआह ॥ ततइति ॥ ततःप्रतिहारनामतएकंप्रइत्येकमक्षरमिहादिनाम्नियोज्यंस्यात् । किंततइत्यतआह ॥ तत्सममिति ॥ तत्तस्मात्तन्नामद्वयमपिसमंत्र्यक्षरमेवस्यादित्यर्थः । यतएवंतन्नामद्वयंगुणत्रयवाचकत्र्यक्षरत्वेनसमंतत्तस्माद्वराहानिरुद्धाख्यरूपद्वयमपितदर्थज्ञानादित्रयवत्त्वेनसमंभवतीत्यपियोज्यं ॥ २ ॥ उद्गीथइतित्र्यक्षरंउदित्यस्यैकत्वेनपरिसंख्यानात् । उपद्रवइतिचतुरक्षरं । कथंतर्हिनृसिंहमाम्नस्त्र्यक्षरत्वमित्यतश्चतुरक्षरत्वेपिनत्र्यक्षरत्वहानिरितिभावेनाह ॥ त्रिभिरिति ॥ तन्नामद्वयंत्रिभिःत्रिभिरक्षरैःसमंभवतियतएवंतस्मात्तत्नारायणनृसिंहाख्यरूपद्वयमपितद्वाच्यैस्त्रिभिस्त्रिभिर्ज्ञानानंदबलरूपैर्गुणैःसमंभवतीत्यर्थः । यद्यप्युपद्रवेवःकाररूपमक्षरमतिशिष्यतेऽतिरिच्यतेतथापिसवःकारःक्षीराब्धिशायिनोनारायणस्यैवनामेतिज्ञातव्यं । ननुयदिवःकारस्यभगवद्रूपांतरनामत्वमंगीक्रियते । तर्हितस्यापिज्ञानादित्रयवाचकतासिध्यर्थंत्र्यक्षरत्वंवक्तव्यं । नचतत्संभवति । तस्यैकाक्षरत्वादित्यतआह ॥ त्र्यक्षरमिति ॥ वइत्येतदपिव्यंजनस्वरसर्गैस्त्र्यक्षरं । अतस्तत्सममितरनामसदृशंभवत्येवेत्यर्थः । यतएवंतस्मात्तत्क्षीराब्धिशायिभगवद्रूपमपिसमं

---

उप० । आदिरितिद्व्यक्षरंप्रतिहारइतिचतुरक्षरंततइहैकंतत्समं ॥ २ ॥ उद्गीथइतित्र्यक्षरमुपद्रवइतिचतुरक्षरंत्रिभिस्त्रिभिःसमंभवत्यक्षरमवशिष्यतेत्र्यक्षरंतत्समं ॥ ३ ॥

तद्वाच्यज्ञानानंदबलैःसममितियोज्यं ॥ ३ ॥ निधनमितित्र्यक्षरं । अतस्तन्नामेतरनामसमंभवत्येवेत्यर्थः । यतएवंतस्मात्तत्संकर्षणाख्यंभगवद्रूपंसमं । रूपांतरवत्तद्वाच्यज्ञानादिभिःसमंभवत्येवेत्यर्थः । एवंहिंकारादिनामानिवर्णशोज्ञानादित्रयवाचीनीत्युक्तं । इदानीमुपास्त्यर्थंप्रत्येकमेकैकमक्षरमेकैकभगवद्रूपवाचकमित्याह ॥ तानिहवाइति ॥ तान्येतानिहिंकारादीनिनिधनांतानिद्वाविंशतिरक्षराणि वइत्यस्यैकाक्षरत्वात् । हवाइतिप्रमाणप्रसिद्धिमाह । अतस्तान्येतानिद्वाविंशत्यक्षरप्रतिपाद्यान्यक्षराण्यनाशादक्षरनामकानिभगवद्रूपाणिद्वाविंशतिः । कथं।तानिसप्तरूपाणित्रिधात्रिधाविभिद्यंतइत्येकविंशतिः। एकःपयोब्धिशयनइतिद्वाविंशतिः । तानिचएकविंशतिरूपाणि केशवादिद्वादश मत्स्यादिनव । तत्रकेशवाद्याःद्वादशमासेषु मत्स्याद्याःपंचपंचर्तुषु । जामदग्न्याद्याश्चत्वारःपृथिव्यंतरिक्षद्युसूर्येषुस्थिताइतिज्ञेयं ॥ ४ ॥ तत्रनिधनशब्दांतर्गतनकारलक्षणैकविंशार्णवाच्यकल्किरूपैकविंशभगवद्रूपज्ञानिनःफलमुपलक्षणयाह ॥ एकविंशत्येति ॥ एकविंशत्याएकविंशाक्षरवाच्यकल्किज्ञानेनादित्यमादित्यांतर्गतंभगवंतंप्राप्नोति । अनेनैकविंशाक्षरवाच्यकल्किरेवादित्यस्थःउपास्यस्यैवप्राप्यत्वादित्युक्तंभवति । नन्वादित्यस्थस्यकल्केःकुतएकविंशत्वमित्यतआह ॥ इकविंशइति॥ असावादित्यस्थःकल्किरितःशरीरस्थललाटगतकेशवाख्यभगवद्रूपापेक्षयैकविंशोवैप्रसिद्धमित्यर्थः । क्षीराब्धिशायिभगवदुपासकस्यफलमाह ॥ द्वाविंशेनेति ॥ द्वाविंशेन वःकाररूपद्वाविंशार्णवाच्येनक्षीराब्धिश

उप० । निधनमितित्र्यक्षरंतत्सममेवभवतितानिहवाएतानिद्वावि॰शतिरक्षराणि ॥ ४ ॥ एकवि॰शत्याऽऽदित्यमाप्नोत्येकविंशोवाइतोसावादित्योद्वाविंशेनपरमादित्याज्जयतितन्नाकंतद्विशोकं ॥ ५ ॥



यनाख्यद्वाविंशेनरूपेणतदुपास्त्येतियावत् । आदित्यात्परमादित्यमंडलात्परतोवर्त्तमानंक्षीराब्धिस्थश्वेतद्वीपगतंभगवंतंजयतिप्राप्नोति । तस्यभगवतोमाहात्म्यमाह ॥ तन्नाकमिति ॥ तत्द्वाविंशकंभगवद्रूपंनाकंनविद्यतेअकंदुःखंसुखाभावोवायस्मिंस्तन्नाकं । तद्विशोकंभक्तशोकनाशकमित्यर्थः ॥ ५ ॥ यदभिप्रेतंमासादिस्थकेशवादिरूपोपासनयातत्तद्रूपप्राप्तिरिति तदयुक्तं । तथासतिपृथिव्यादिस्थितरूपस्यादित्यस्थरूपाप्रापकत्वप्राप्त्यादित्यस्थरूपस्यचेतररूपाप्रापकत्वप्राप्त्याआत्मसंमितमित्युक्तंसर्वरूपसाम्यमनुपपन्नंस्यादित्याशंकांपरिहरन्नात्मसंमितत्वादिप्रकारेणपूर्वोक्तसप्तविधभगवदुपास्तेःफलमाह ॥ आप्नोतीति ॥ योधिकारीएतत्सप्तविधभगवद्रूपमेवमुक्तरीत्याविद्वानात्मसंमितमतिमृत्यु सप्तविधंसामोपास्ते । सउपासकइहपृथिव्यादिषुस्थितजामदग्न्यादिरूपप्राप्तावप्यादित्यस्थस्यकल्क्याख्यभगवतोजयं प्राप्तिमाप्नोति । ऐक्यात् । तथास्योपासकस्यादित्यजयादादित्यस्थभगवत्प्राप्त्यापरोजयोरूपांतरप्राप्तिरपिभवति।ऐक्यादेवेतिभावः। तथाचस्वप्राप्तावपिस्वेतरप्रापकत्वादिनासर्वत्रसाम्योपेतभगवत्प्राप्तिरेवैतदुपासनफलमित्युक्तंभवति । सप्तविधभगवदुपास्तिविद्योक्तार्थावधारणार्थाद्विरुक्तिः ॥ दशमःखंडः ॥ १० ॥ ७ ॥ पुनश्चहिंकारादिसामभक्तिप्रतिपाद्यस्यहिंकारादिनाम्नःप्रद्युम्नादिपंचरूपस्यभगवतउपास्त्यर्थंप्राणाद्यधिष्ठानोक्तिपूर्वकंगायत्ररथंतरादिसामवाच्यत्वतन्नियामकत्वरूपमाहात्म्यमेकादशखंडैराह ॥ मनइत्यादिना ॥ तत्रपूर्वोक्तेष्वेवप्राणादिषुप्रकारांतरेणपंचविधभगवदुपास्तिकथनपूर्वंतस्यगायत्रसामप्रोतत्वमाह । मनइत्याद्यखंडेन । अत्रमनोहिंकारइत्यादेःप्रागुक्तरी

उप० । आप्नोतीहादित्यस्यजयंपरोहास्यादित्यजयाज्जयोभवतियएतदेवंविद्वानात्मसंमितमतिमृत्युसप्तविध॰सामोपास्तेसामोपास्ते ॥ ६ ॥ दशमःखंडः ॥ १० ॥

त्यार्थःस्पष्टइतिभावेनैतद्गायत्रंप्राणेषुप्रोतमित्येतद्व्याचष्टे ॥ प्राणेति ॥ अनेनप्रसिद्धप्राणेषुगायत्रंप्रोतमित्यपास्तं । प्रोतशब्दस्य तत्स्थत्वमात्रमर्थइतिप्रतीतिनिरासायार्थमाह ॥ तद्वाचकमिति ॥ ननुपूर्वगायत्रसाम्नोअप्रकृतत्वात्कथमेतदितिपरामर्शइत्यत आह ॥ प्राणस्थेति ॥ प्राणस्थविष्णोःसामीप्यान्मनोहिंकारइत्यादिनासमीपेप्रकृतत्वात्तत्स्थंगायत्रंसामापिप्रकृतं । अतःतत्स्थं गायत्रंसामैतदित्यनेनपरामृश्यतइत्यर्थः । अतएवैतच्छब्देनप्राणस्थविष्णुसंस्थत्वस्यलाभात्प्रोतमित्यस्यार्थांतरमुक्तं । एतद्रथंत रमग्नौप्रोतमित्यादिकमप्येवमेवव्याख्येयं । नन्वेवंतर्हियएतदेवंविद्वानात्मसंमितमित्यादावप्येतच्छब्देनपूर्वप्रकृतविष्णुस्थमेव किंचित्परामृश्यते नविष्णुरित्यतआह ॥ क्वचिदिति ॥ क्वचिद्विष्णोर्निर्देशसामीप्यात्समीपएवनिर्दिष्टत्वात् सएवैतदित्यादा वप्येतच्छब्देनपूर्वप्रकृतविष्णुस्थेतिपरामृश्यतइत्यर्थः । प्राणीभवतीत्यादेरविकलकरणो भवति । शतवर्षाणिजीवतिउज्वलन्जी वतीत्यर्थप्रतीतिनिरासायप्रमाणेनार्थमाह ॥ प्राणस्थेति ॥ खं० ११ ॥ अभिमंथतिसहिंकारइतिखंडस्यभगवत्परत्वज्ञापनायसय एवमेतद्रथंतरमग्नौप्रोतंवेदब्रह्मवर्चस्व्यन्नादोभवतीत्यादिफलवाक्यंप्रमाणेनव्याचष्टे ॥ मंथनादीति ॥ तत्तत्क्रियैकहेतुत्वात्

भा० । प्राणसंस्थेहरौप्रोतंगायत्रंसामसर्वदा । तद्वाचकंनियम्यंचेत्यतःप्रोतमितीर्यते । प्राणस्थविष्णोःसामीप्यात्तत्स्थमेतदितीर्यते । क्वचिन्निर्देशसामीप्याद्विष्णोरेतदितीर्यतइ तिच । प्राणस्थविष्णुलाल्यत्वात्प्राणीत्येवाभिधीयते । मोक्षस्तुसर्वमायुःस्यान्नित्यत्वाज्ज्योक्समस्तविदितिच खं० ॥ ११ ॥ मंथनादिस्थितंयस्तु(यत्तु)तन्नामानंहरिंपरं । तत्तत्क्रि यैकहेतुत्वाद्योग्नौध्यायेज्जनार्दनं । रथंतराश्रयंपंचरूपंसचविमुच्यतइतिच ॥ खं० १२ ॥

मथनधूत्कारादिक्रियामुख्यहेतुत्वादित्यर्थः ॥ खं० ॥ १२ ॥ ७ ॥ उपमंत्रयतइतिखण्डोपिभगवत्परइतिज्ञापनाय सयएवमेतद्वामदेव्यंमिथुनेप्रोतंवेदमिथुनीभवतीत्यादिफलवाक्यंप्रमाणेनव्याचष्टे ॥ मिथुनस्थमिति ॥ मिथुनीभवतीत्यस्यार्थोऽत्यागीच स्वभार्याणामिति । अनेननकांचनपरिहरेदित्यस्यस्वभार्याणांमध्ये नकांचनपरित्यजेदित्यर्थःसूचितः । तेनकांचनकांचिदपिस्त्रियंस्वतल्पप्राप्तांसमागमार्थिनींनपरिहरेदितिव्याख्यानं परस्त्रीरागपारवश्येनकृतमित्युपेक्ष्यमितिसूचितं । प्रतिषेधशास्त्रविरोधात् । नचवामदेव्योपासनांगत्वेनविधानादेतस्मादन्यत्रप्रतिषेधस्मृतयः । वचनप्रामाण्यादस्यचधर्मत्वावगतेरितिवाच्यं । एतद्वचनस्यैवबहुस्मृतिविरोधेनोक्तरीत्यान्यार्थत्वात् । मिथुनेप्रोतमित्युक्तोमिथुनशब्दोमिथुनस्थभगवत्परइत्युक्तं । तत्रतंशब्दंनिर्वक्ति ॥ मिथइति ॥ ओकारस्योकारोनिर्वचनत्वात् ॥ खं० ॥ १३ ॥ उद्यन्हिंकारइत्यादिखंडाष्टकस्यभगवत्परत्वज्ञापनाय सयएवमेतद्बृहदादित्येप्रोतंवेद सयएवमेतद्वैरूपंपर्जन्येप्रोतंवेद सयएवमेतद्वैराजमृतुषुप्रोतंवेद सयएवमेताःशक्वर्योलोकेषुप्रोतावेद सयएवमेतारेवत्यःपशुषुप्रोतावेद सयएवमेतद्यज्ञायज्ञीयमंगेषुप्रोतंवेद सयएवमेतद्राजनंदेवतासुप्रोतंवेद सयएवमेतत्सामसर्वस्मिन्प्रोतंवेदेत्यष्टौफलवाक्यानिप्रमाणेनव्याचष्टे ॥ आदित्येति ॥ पंचात्मन्यभिध्यातइत्यनेनोद्यन्हिंकारइत्यादिकमुपासनार्थमेवोक्तमित्युक्तंभवति । बृहदाद्यमित्यादिपदेनवैरूपादिग्रहणं । अत्रप्रकरणाष्टकेप्रायःसर्वेषांशब्दानांभगवत्परतयाव्याख्यातत्वादव्या

---

भा० । मिथुनस्थंपंचरूपंध्यात्वैवपुरुषोत्तमं । अत्यागीचस्वभार्याणांमुच्यतेनात्रसंशयइतिच । मिथोनयतीतिमिथुनंभगवान् ॥ १३ ॥ आदित्यनाम्निपंचात्मन्यभिध्यातेजनार्दने । पर्जन्यनाम्निचर्त्वाख्येलोकाख्येपशुसंज्ञके । अंगाख्येदेवताख्येचसर्वाख्येचप्रतिष्ठितं । बृहदाद्यंच्छ्योवेदमुच्यतेनात्रसंशयः ।

ख्यातान्कांश्चिच्छब्दान्व्याचक्षाणस्तावत्समुद्रोनिधनमित्युक्तंसमुद्रशब्दंभगवतिनिर्वक्ति ॥ **समुद्रेकादिति** ॥ सम्यगुद्रेकादित्यर्थः । दिशःप्रतिहारइत्युक्तदिक्शब्दंनिर्वक्ति ॥ **देशनादिति** ॥ लोमहिंकारइत्युक्तलोमशब्दंनिर्वक्ति ॥ **लोपकत्वादिति** ॥ त्वक्प्रस्तारइत्युक्तंत्वक्शब्दंनिर्वक्ति ॥ **तवोरूपइति** ॥ प्रकाशरूपइत्यर्थः । मांसमुद्गीथइत्युक्तमांसशब्दंनिर्वक्ति ॥ **मादनादिति** ॥ आह्लादनादित्यर्थः । अनुस्वारश्चाधिक्यार्थकइतिज्ञेयं । अस्थिप्रतिहारइत्युक्तास्थिशब्दंनिर्वक्ति ॥ **अस्थित्विति** ॥ स्थिरमासनादस्थीत्युच्यतइत्यर्थः । तुशब्दोवधारणार्थः । मज्जानिधनमित्युक्तमज्जाशब्दार्थमाह ॥ **मदस्येति** ॥ एतद्यज्ञायज्ञीयमंगेषुप्रोतमित्युक्तांगशब्दंनिर्वक्ति ॥ **सोंगमिति** ॥ अंतिकगतत्वतइत्यर्थः । वायुःप्रस्तावइत्युक्तवायुशब्दार्थमाह ॥ **वायुरिति** ॥ ज्ञानादितिवशब्दार्थः । आयुष्ट्वादित्यायुःशब्दार्थः । आयुःप्रदत्वादित्यर्थः । नक्षत्राणिप्रतिहारइत्युक्तनक्षत्रशब्दार्थमाह ॥ **नक्षत्रंचेति** ॥ नविद्यतेक्षत्रंक्षत्रजात्यवच्छिन्नंनियामकंयस्यतन्नक्षत्रमितिशब्दार्थमभिप्रेत्यस्वतंत्रतइत्युक्तं । चंद्रमानिधनमित्युक्तचंद्रमश्शब्दार्थमाह ॥ **चंद्रमाइति** ॥ चदिआह्लादनइतिधातोः । त्रयीविद्याहिंकारइत्युक्तत्रयीविद्याशब्दार्थमाह ॥ **त्रैविद्यइति** ॥ ज्ञानरूपतोज्ञानविषयत्वतइत्यर्थः । तेनत्रय्यावेद्यतइतित्रैविद्येत्यर्थइत्युक्तंभवति । नक्षत्राणिवयांसिमरीचयःप्रतिहारइत्यनेननक्षत्रशब्दस्यव्याख्यातत्वाद्वयांसिमरीचयइत्येतद्व्याचष्टे ॥ **वयांसीति** ॥ वयांसिचेतिचशब्दान्वयः । एवशब्देनप्र

भा० । समुद्रेकात्समुद्रस्तुदेशनाद्दिशउच्यते । लोपकत्वाल्लोमचस्यात्तवोरूपस्त्वगुच्यते ।मादनात्साररूपत्वान्मांसोस्थित्वासनात्स्थिरं । मदस्यजननान्मज्जासोंगमंतिगतत्वतः। वायुर्ज्ञानात्तथायुष्ट्वान्नक्षत्रंचस्वतंत्रतः । चंद्रमाःपरमानंदात्त्रैविद्योज्ञानरूपतः । वयांसिव्ययनाच्चैव



सिद्धार्थंपरोक्तमपाकरोति । अप्रतीतेर्व्ययनादित्युक्तंविवृणोति ॥ **वीत्याकाशइति** ॥ तथाशब्दश्चशब्दार्थः । वीतिचाकाशउच्यते । तत्राकाशेऽयनाद्गमनादित्यर्थः । मितरुक्त्वतः प्रमितप्रकाशत्वतइत्यर्थः । सर्पागंधर्वाःपितरस्तन्निधनमित्युक्तसर्पादिशब्दान्व्याचष्टे ॥ **सर्पइति** ॥ सर्पणहेतुत्वाद्गमनहेतुत्वात्सृप्लृगतौ । गौर्भूर्विद्यावा । एतत्सामसर्वस्मिन्प्रोतमित्युक्तसर्वशब्दंव्याचष्टे ॥ **सर्वमिति** ॥ उक्तनिमित्तेनसमुद्रादिशब्दाभिधेयःकइत्यतआह ॥ **एतैरिति** ॥ ७ ॥ ७ ॥ ७ ॥ १३–२१ ॥ सर्वंहभवतीत्यस्योपासकःसर्वस्वरूपोभवतीत्यर्थइतिव्याख्याननिरासायप्रमाणेनैवतद्व्याचष्टे ॥ **यादृशीति** ॥ आयतिःप्राप्तिः । एतेन सर्वंभवतीत्यस्यसर्वेश्वरोभवति । निरूपचरितसर्वोत्तमत्वेहिदिग्भ्योबलिप्राप्त्युपपत्तिरितिव्याख्यानंचापास्तं । उपासकेनिरुपचरितसर्वेश्वरत्वस्यबाधितत्वात् । ननुसर्वंभावःसर्वस्वरूपत्वमेवकिन्नस्यादितिचेत् । न । प्रमाणेनैवान्यथाव्याख्यातत्वात् । किंचसर्वभावोह्युपासनाफलत्वेनोच्यते । नचसर्वस्वरूपत्वंपुरुषार्थः येनात्रसर्वभावशब्दार्थःस्यादित्याह ॥ **नचेति** ॥ कुतोनेत्यतआह ॥ **नारकित्वादेरिति** ॥ ननुसर्वंभवतीत्यस्याविद्याकृतासर्वत्वव्यावृत्तिरर्थोनप्रतीतएव । एवंचनारकित्वादेराविद्यकत्वान्नोक्तदोषइत्यतआह ॥ **नचेति** ॥ कुतोनेतिचेत् ।असर्वत्वस्याविद्याकृतत्वेतद्व्यावृत्तेश्च सर्वभावशब्दार्थत्वेचप्रमाणाभावादित्यतआह॥ **प्रमाणाभावादिति**॥ ननुसर्वमस्मीत्युपासीतेत्युत्तरवाक्येसर्वात्मकत्वेनोपासनाविधीयते। अतःसर्वंहभवतीतिफलवाक्यमपितथै

भा० । वीत्याकाशस्तथोच्यते । तत्रायनाद्व्ययःप्रोक्तोमरीचिर्मितरुक्त्वतः । सर्पाःसर्पणहेतुत्वाद्गंधर्वोगोधरत्वतः । पिताससृष्टिहेतुत्वात्सर्वंपूर्णगुणत्वतः । एतैर्नामभिरुद्दिष्टोभगवान्पुरुषोत्तमइतिच । यादृश्येवोन्नतिर्योग्यातस्याःसर्वात्मनाऽऽयतिः । सर्वभावस्तुविज्ञेयोनतुसर्वस्वरूपतेतिच । नचसर्वस्वरूपतापुरुषार्थः। नारकित्वादेरपिप्राप्तेः । नचार्थांतरकल्पनायुक्ता । प्रमाणाभावात् ।

वव्याख्येयं। उपासनानुसारित्वात्फलस्येत्यतस्तदपिवाक्यंप्रमाणेनैवयथावद्व्याचष्टे ॥ असनादिति ॥ निरसनात् । मितिरूपत्वा
ज्ज्ञानरूपत्वादित्यर्थः। तस्यसर्वरूपत्वंबाधितमित्यतउक्तं॥ पूर्णतेति॥ अनेनास्मि अस्मिनामकंब्रह्मसर्वंपूर्णमित्युपासीतेतिवाक्यं
योजितंभवति।नन्वस्मीत्यस्यकिंयोगवृत्त्याभगवत्परत्वांगीकारेणो त्तमपुरुषत्वमेवकिंनस्यात् । नचसर्वभावउपासकस्यबाधितइ
तिवाच्यं। यतोत्रनस्वस्यनात्मप्रपंचात्मकत्वेनोपासनमुच्यते । येनश्रुत्यर्थोबाधितःस्यात् । किंत्वनात्मप्रपंचस्यमिथ्यात्वात् ।
यत्सर्वंसर्वत्रानुगतमारोपाधिष्ठानचैतन्यंतदस्मीत्युपासीतेतिसर्वचेतनात्मकत्वेनेत्यतस्तावत्सर्वस्यमिथ्यात्वांगीकारेबाधकमाह ॥ स
र्वमिति ॥ उत्तमपुरुषत्वे सर्वस्यमिथ्यात्वेचांगीकृतइतिशेषः । कुतोव्यर्थावित्यतआह ॥ अन्यस्यैवेति ॥ यदिसर्वमस्मीत्यस्यो
त्तमपुरुषत्वेनसर्वस्यमिथ्यात्वमभिप्रेतंस्यात्तदान्यस्यैवाभावेनपूर्वमुदाहृतश्लोकेतेभ्योन्यन्नास्तीत्येववक्तव्यतयोत्तमत्वार्थकज्यायः
परशब्दौव्यर्थौस्यातामित्यर्थः । तेभ्यइत्यस्यचभगवत्परत्वमाचार्यएवोत्तरत्रवक्ष्यति । यतएवंसर्वस्यमिथ्यात्वांगीकारेज्यायःपरश
ब्दौव्यर्थावतस्तेभ्योन्यदंगीकृत्यज्यायःपरनिषेधएवांगीकर्त्तव्यः । एवंचनसर्वस्यमिथ्यात्वंवक्तुंयुक्तमित्याह ॥ अतइति ॥ तेभ्य
इत्यस्यततइत्यनुवादः।ननुभवत्पक्षेपिज्यायःपरशब्दयोरन्यतरस्यवैयर्थ्यं । तेभ्योन्यत्परंज्यायोवानेत्येतावतापूर्तेः।उभयोपादानं
त्वयुक्तं । तेभ्योन्यत्परंज्यायोनास्तीत्युक्तेभगवत्परसद्भावप्राप्त्यानतत्समश्चाभ्यधिकश्चदृश्यतइतिश्रुतिविरोधादितिचेन्न। यतोत्रते

भा० । असनान्मितिरूपत्वादस्मीत्युक्तपरोहरिः । तंसर्वइत्युपासीतपूर्णतासर्वतास्मृतेतिच ॥ सर्वमस्मीत्युत्तमपुरुषत्वेतेभ्योनज्यायःपरमन्यदस्तीतिज्यायःपरशब्दौव्यर्थौ।
अन्यस्यैवाभावात् । अतस्ततोन्यदस्तीतिसिद्धं ।

भ्यइतिपंचम्यंतमन्यदित्यस्यप्रतियोगिमात्रबोधकंनतुपरंज्यायइत्यत्रावधिबोधकं । येनोक्तदोषप्रसंगइतिभावेनतद्वाक्यंव्याचष्टे ॥ अतइति॥परपक्षेज्यायःपरशब्दयोर्वैयर्थ्यप्रसंगादित्यर्थः।ब्रह्माद्यपेक्षयेतिशेषः।ज्यायोमात्रनिषेधनिरासायसर्वंवाक्यंसावधारणमितिन्यायेनैवेत्युक्तं । ननुयदिततोन्यज्ज्यायोविद्येत तदापरमज्यायएवनास्तीतिनिषेधोयुक्तःस्यात्।नचतदस्तीत्यतआह॥ज्यायइति ॥ ननुयथाज्यायोलक्ष्मीरस्ति तथापरमज्यायोपियदिकश्चिद्भगवदन्यःस्यात्तदातन्निषेधोनुपपन्नएवेत्यतआह ॥ परमेति ॥ नतुततोन्यः । एवंचभगवत्सदृशनिषेधोर्थोऽस्यवाक्यस्येतिभावः । एवमनात्मप्रपंचस्यमिथ्यात्वंदूषयित्वेदानींयदुक्तंसर्वंसर्वत्रानुगतंयच्चैतन्यंतदस्मीत्युपासीतेति । तद्दूषयति ॥ जीवेति ॥ सर्वमस्मीत्यस्यार्थत्वेनेतिशेषः । जीवस्योपासकस्यसर्वचैतन्यैक्यांगीकारइत्यर्थः । अपिशब्देनतेभ्योनज्यायःपरमन्यदस्तीत्यस्यसमुच्चयः । उक्तरीत्यातद्वाक्येनभगवदतिरिक्तचेतनसद्भावप्रतीतेः तच्छब्दोप्ययुक्तःस्यात् । तेनहियच्छब्दनिर्दिष्टादुपासकाद्भिन्नमेवकिंचिदुपास्यंप्रतीयतइत्यर्थः । ऐक्यपक्षेप्रयोगप्रकारप्रदर्शनेनतदेवोपपादयति ॥ तदेति ॥ यदुक्तंसर्वमस्मीत्यस्यजीवैक्यार्थमङ्गीकारेयस्तद्वेदेत्यादिविरोधःस्यादिति तन्न। जीवेश्वरभेदस्यप्रत्यक्षानुमानसिद्धत्वेनयस्तद्वेदेत्यादेःप्रसिद्धभेदानुवादितयादुर्बलत्वात् । अभेदस्यप्रमाणांतरासिद्धत्वेनसर्वमस्मीत्यादेरनुवादकतयाप्रबलत्वात् । नचप्रबलंदुर्बलेनबाध्यतइत्यतआह ॥ नचेति ॥ कुतोनेत्यतआह ॥ श्रुतिमिति ॥ तत्स्वरूपस्ये

भा० । अतस्ततोन्यत्परमज्यायएवनास्ति । ज्यायोलक्ष्मीर्विद्यते । परमज्यायस्तुभगवानेव । जीवैक्यांगीकारेयस्तद्वेदेतितच्छब्दोप्ययुक्तः । तदास्वात्मानंवेदेत्येवस्यात् । नचप्रसिद्धभेदानुवादः । श्रुतिंविनातत्स्वरूपस्यैवासिद्धेस्तद्भेदस्यातिशयेनासिद्धिः ।

श्वरस्वरूपस्य । इदमुक्तंभवति । भेदस्तावद्धर्मिप्रतियोगिप्रतीतिसापेक्षप्रतीतिकः । तत्रेश्वरधर्मिकोजीवप्रतियोगिकोवा जीवधर्मिकईश्वरप्रतियोगिकोवाभेदःप्रमाणांतरसिद्धइतिवक्तव्यं । तत्रयद्यपिजीवःसाक्षिवेद्यः । तथापीश्वरसिद्धिर्नतावच्छ्रुतिव्यतिरिक्तप्रमाणेन। स्वभावविप्रकृष्टतयाप्रत्यक्षतोसिद्धत्वात् । विपर्ययेणाप्यनुमातुंशक्यत्वेनकेवलानुमानासिद्धत्वाच्च। ततश्चश्रुतिंविनेश्वरस्वरूपस्यैवासिद्धेर्धर्मिप्रतियोगिप्रतीत्यभावतद्भेदस्यसुतरामसिद्धिरितिकथंतद्वाक्यानामनुवादकत्वंदौर्बल्यंवाभवेदिति श्रुत्यैवेश्वरस्तद्भेदोवासिद्धइतियस्तद्वेदेत्यादिस्तदनुवादइत्यंगीकारेतेनैववाक्येनाभेदवाक्यस्यबाधःस्यादितिहृदयं । जीवब्रह्मैक्यांगीकारेबाधकांतरमाह ॥ ऐक्यइति ॥ अत्रेश्वरशब्देनब्रह्मोच्यते । तस्यैवस्वाधीनमायाबलस्येश्वरत्वेनपरैरंगीकारात् । ऐश्वर्यादिविशिष्टेनजीवस्याभेदानुपपत्तेः । इदमुक्तंभवति । जीवब्रह्मणोरभेदपक्षेयच्छुद्धं ब्रह्मचैतन्यंतत्स्वस्वरूपंवेत्ति नवा । द्वितीयेऽधिष्ठानज्ञानाभावेनशुद्धस्यापिसंसारोपलंभप्रसंगः । तदात्मानमेवावेदित्यादिश्रुतिविरोधश्च । आद्येतत्स्वरूपस्यजीवस्यापिश्रवणाद्यभावेपिब्रह्मज्ञानमस्तीतितस्यब्रह्माज्ञानंनस्यात् । ज्ञानाज्ञानयोर्विरोधात् । तथाचाज्ञानकृतसंसारोपलंभोपिनस्यादिति । आदिपदेनसंसारग्रहणं । ननुब्रह्मणःस्वज्ञानसद्भावेपितद्रूपस्यजीवस्याज्ञानादिकंयुज्यतएव । स्वभावतस्तद्रूपत्वेप्यौपाधिकभेदस्यसत्त्वेनोपाधिनाजीवस्याज्ञत्वाद्युपपत्तेरित्यतआह ॥ औपाधिकेति ॥ यद्यौपाधिकभेदसत्वेनोपाधिर्जीवस्याज्ञत्वंकुर्यात्तर्हिब्रह्मणो

भा० । ऐक्यईश्वरस्यस्वज्ञानमस्तीतिनतद्रूपस्यजीवस्याज्ञानादिकंयुज्यते । औपाधिकभेदांगीकारेप्युपाधिरुभयोरैक्यादुभयोरप्यज्ञत्वंकुर्यात् । उपाधिनिमित्तदोषाश्चोभयोरपिस्युः ॥



प्यज्ञत्वंकुर्यात् । जीवब्रह्मणोरैक्यादित्यर्थः । नकेवलमेतावत् किंतर्हीत्यतआह ॥ उपाधीति ॥ दोषादुःखादयः । एतेनब्रह्मणोज्ञत्वंमयांगीक्रियतएव । अज्ञानस्यशुद्धब्रह्माश्रयत्वांगीकारादित्येतदपिपरास्तं । ननुजीवब्रह्मणोरैक्येप्युपाधिर्जीवस्यैवाज्ञत्वंकुर्यात् । उपाधिनिमित्तदुःखादिदोषाश्चतस्यैवस्युः । उपाधेर्जीवएवसंबद्धत्वात् । तस्यचस्वसंबद्धएवकार्यकारित्वादित्यतआह ॥ उपाधीति ॥ उभयोरपीत्यनुवर्तते । नहिदर्पणंमुखसंबंधीतिशक्यतेवक्तुमितिभावः । ननूपाधिसंबंधस्योभयत्रसमत्वेप्युपाधिर्जीवभागएवस्वकार्यंकरोति । नब्रह्मभागइतिविशेषोयुज्यते । उपाधेःप्रतिबिंबपक्षपातित्वनियमात् । यथाखलुदर्पणादिकंमुखसंबंध्यपिप्रतिमुखएवमालिन्यादिकंकरोति । नमुखइतिविशेषइत्यतआह ॥ उपाधिसंबंधस्येति ॥ अस्मिञ्जीवभागे अन्यथा ब्रह्मभागापेक्षयास्वकार्यकारित्वमितियावत् । तस्मिन् ब्रह्मभागे अन्यथा जीवभागापेक्षयास्वकार्यकारित्वमितियावत् । उपाधिसंबंधस्योभयत्रसमत्वेप्युपाधिर्जीवभागएवस्वकार्यंकरोतिनब्रह्मभागइतिवदन्प्रष्टव्यः । जीवब्रह्मणोरैक्यमुतभेदइति । नाद्यः । उक्तविशेषार्थमयमसाविितिनिर्देशविषयत्वेनभेदस्यैवापेक्षितत्वात् । द्वितीयेसकिमौपाधिकःस्वाभाविकोवा । नाद्यः । आत्माश्रयाद्यापातेनभेदस्योपाधिंविनास्वतएवापेक्षितत्वात् । नद्वितीयः । विवादपर्यवसानापत्तेः । उपाधिसंकीर्तनवैफल्याच्चेतिभावः । मुखप्रतिमुखयोरपिस्वाभाविकभेदस्यसत्त्वान्नदृष्टांतःसंप्रतिपन्नइतिहृदयं । ननुयदिजीवब्रह्मणोर्मुखप्रतिमुखयोर्वास्वाभाविकभेदःस्यात्तर्ह्युपाधिर्व्यर्थःस्यात् । तस्याविद्यमानभेदकरणव्यतिरेकेणकार्यांतराभावात् । दृष्टंचोपाधेरविद्यमानभेदकारकत्वं । घटम

भा० । उपाधिसंबंधस्यसमत्वात् । उपाधिसंबंधस्यास्मिन्नन्यथातस्मिन्नन्यथेतिविशेषार्थमयमसावितिभेदस्योपाधिंविनास्वतएवापेक्षितत्वात् ।

ठाद्युपाधेःस्वतोऽभिन्नाकाशभेदकत्वदर्शनादित्यतआह ॥ अतइति ॥ यतएवमुपाधिंविनास्वतएवभेदस्यापेक्षितत्वमतइत्यर्थः । विशेषोविद्यमानभेदज्ञापनरूपः । अयमाशयः । नाकाशादावपिघटादेरविद्यमानभेदकारकत्वंवक्तुंयुक्तं । असंबद्धस्योपाधेर्भेदकत्वेऽतिप्रसंगात् । उपाधिसंबंधस्यसर्वदेशवृत्तित्वेत्वभेदकत्वप्रसंगात् । प्रदेशवृत्तित्वेपितस्यप्रदेशस्योपाधिकृतत्वेऽनवस्थादिप्रसंगात्स्वाभाविकमेवेष्टव्यं । तथाचप्राक्सिद्धस्याकाशभेदस्योपाधिनाकर्तुमशक्यत्वात्स्वतोभिन्नस्यैवाकाशादेरुपाधिनाविशेषोविद्यमानभेदज्ञापनरूपोभवतीत्यंगीकर्तव्यमिति । आकाशादौघटमठाद्युपाधिनाप्राग्विद्यमानोभेदोज्ञाप्यतएव । नत्वविद्यमानोभेदःक्रियतइत्यत्रतर्कशास्त्रवाक्यंप्रमाणयति ॥ यस्त्विति ॥ अभिन्नाव्याकृताकाशापेक्षयाविशेषद्योतनायतुशब्दः । अत्रखशब्देनभूताकाशंविवक्षितं । तस्यघटाद्यवच्छिन्नस्यबहिष्ठभूताकाशापेक्षयास्वतएवभिन्नत्वात् । उक्तंचप्रथमतात्पर्येस्वरूपंजायमानंचआकाशंतुघटेद्विधा । स्वरूपंजायमानेतुघटेनिर्भेदमेवतु । भिन्नवद्व्यवहारस्यसमर्थंतल्लयेनत्विति । यस्त्वभिन्नःस्वतःखादिस्तस्यभेदःप्रदेशविशेषउपाधिभिर्ज्ञाप्यइत्यपियोज्यं । एतदभिप्रायेणैवोपाधिखंडनटीकायां खेपिदेशांतरस्यसः । विद्यमानस्यभेदस्यज्ञापकइत्येतद्वाक्यंयदाकाशभेदोनास्तीतिसिद्धांतस्तदांतरशब्दोविशेषवचनः । यदाघटमठाद्याकाशभेदाभ्युपगमइत्यादिनापक्षद्वयेपियोजितं । ननुभेदोवस्तुस्वरूपमेव सतद्दर्शनेनैवदृश्यः । नचोपाधेःस्वरूपदर्शनेउपयोगोस्ति । तत्कथमुच्यते । उपाधिभिर्भेदोज्ञाप्यतइतीत्यतउक्तमबुद्धिनामिति । भेदस्यवस्तुस्वरूपत्वेसतिविशेषत्वंप्रतिपादितमन्यत्र । ततोवस्तुप्रतीता

भा० । अतःस्वतोभिन्नस्यैवोपाधिनाविशेषोभवति । यस्तुभिन्नःस्वतःखादिस्तस्यभेदोह्यबुद्धिनां । उपाधिभिर्ज्ञाप्यएव ।

वपिभेदाप्रतीतिरभेदप्रतीतिश्चयुज्यते । तदाभेदज्ञापनेस्त्येवोपाधेरुपयोगइतिभावः । एवकारव्यावर्त्यमाह ॥ नत्विति ॥ उपाधिःकुतोभेदंनसृजेदितिचेत् । किमुपाधिरपिभिन्नेभेदंकुर्यादुताभिन्ने । नाद्यः । प्राग्विद्यमानस्यभेदस्योपाधिजन्यत्वायोगात् । न हिप्राक्विद्यमानोघटोदंडादिनाजायते । द्वितीयंनिराह ॥ उपाधिरपीति ॥ जनकत्वेनोच्यमानापीत्यपिशब्दार्थः । साधयितुमुत्पादयितुंनक्षमः विरोधात् । उपाधिसंबंधार्थमेवस्वाभाविकभेदस्यापेक्षितत्वाच्चेतिभावः । निगमयति ॥ सिद्धेति ॥ विद्यमानभेदस्येत्यर्थः । तस्मादित्यादौयोज्यं । उपाधिरितिवर्तते । ननुयदिभूताकाशेऽव्यावृताकाशेवास्वतोविद्यमानएवभेदः । प्रदेशोवोपाधिभिर्ज्ञाप्यस्तर्हिउपाधीनामनंतत्वात्तज्ज्ञाप्यास्तेप्यनंताःस्युरित्यतइष्टापत्तिमुत्तरमाह ॥ आकाशाअपीति ॥ भूताकाशपक्षे यथाश्रुतं । अव्याकृताकाशपक्षेत्वाकाशा आकाशप्रदेशाइत्यर्थः । जीवैक्यांगीकारइत्यादिनोक्तमुपसंहरति ॥ अतइति ॥ सर्वमस्मीत्यादेरर्थइतिशेषः । किंचयदिसर्वमस्मीत्यादौजीवेशयोरभेदोविवक्षितःस्यात्तदोपासीतेत्यनेनैवविरोधःस्यात् । उपास्योपासकभावस्यभेदंविनाऽयोगादितिभावेनप्रमाणमाह ॥ नत्विति ॥ देवःईश्वरःदेवदेवंईश्वरंसमर्चयेत् । उपासीत । कुतइत्यतआह ॥ सामानेति ॥ समत्वज्ञानइत्यर्थः । पूज्यउपास्यः । पूजकउपासकः । ऐक्यज्ञानेसुतरामुपास्योपासकभावानुपपत्तिरितिभावः । प्रमाणविरोधाच्चनजीवेशाभेदपरत्वंसर्वमस्मीत्यस्येतिभावेनतयोर्भेदप्रमाणान्याह ॥ अनन्ये

भा० । नतुभेदंस्वयंसृजेत् । उपाधिरप्यभिन्नस्यभेदंसाधयितुंक्वचित् । नक्षमःसिद्धभेदस्यज्ञापकःस्यादबुद्धिनां ।आकाशाअप्यतस्त्वेतेह्यनंताअप्कणादिवदितिब्रह्मतर्के । अतोनजीवेशाभेदः । नतुदेवःस्वयंभूत्वादेवदेवंसमर्चयेत् । समानव्यवहारेहिनपूज्यःपूजकोभवेदितिपरमसंहितायां । अनन्यप्रोक्तेगतिरत्रनास्त्यणीयान्ह्यतर्क्यमणुप्रमाणात् ।

ति ॥ पूर्वमाश्चर्योस्यवक्केत्युक्तं । अद्वैतवादीभविष्यत्यस्यवक्केत्यपेक्षायामुच्यतेअनन्येति ॥ अन्योभगवानन्योहमित्यजानन् सएवाहमितिजानंश्चानन्यः तेनप्रोक्तेऽत्रब्रह्मणि । गतिर्ज्ञानंसम्यग्ज्ञानंनजायते कुतः । तस्यमिथ्याज्ञानित्वादितिभावेनजीवेशयो र्भेदकमाह ॥ अणुप्रमाणादपिजीवादणीयान्हीति ॥ यद्वाव्याख्यात्रभावेनागमेनतज्ज्ञानासंभवेपिप्रत्यक्षेणस्यादित्यतउक्तम णीयानिति । अनुमानेनापिनतन्निश्चयइत्याह ॥ अतर्क्यमिति ॥ अतर्क्यत्वविवरणपरंनैषातर्केणमतिरापनीयेतिमध्यमवाक्य मत्रनोदाहृतं । प्रयोजनाभावात् । तर्हिभगवज्ज्ञानोपायाभावेनमोक्षाभावइत्यतआह ॥ प्रोक्तेति ॥ अन्येनैव जीवेश्वरभेदज्ञा निनैव प्रोक्तावेदप्रवचनोत्पादिता मतिःसुज्ञानायसाक्षात्कारायभवति । प्रेष्ठेतिनचिकेतसंप्रतियमस्यसंबुद्धिः । यथाचेदमभेदेपि नसावकाशंतथोक्तमन्यत्र । तद्ब्रह्म विदिताद्व्यक्तादन्यदेव । अविदितादव्यक्ताच्चान्यदेवेतिसंबंधः । नकेवलमेतावत् । किंतुवि दितादविदिताच्चाधि अधिकमित्यर्थः । अव्ययानामनेकार्थत्वादन्यत्रेत्यस्यान्यदित्यर्थः । धर्मात्पुण्यात्मनोजीवादन्यत् । अधर्मा दधर्मात्मनोजीवादन्यत् । नकेवलंचेतनादेवकिंतुकृताकृतादचेतनादप्यन्यत् । नकेवलंवर्तमानादेव । किंतुभूताद्भव्याच्चान्यत् तद्ब्रह्मयद्यथापश्यसितत्तथावदेतियमंप्रतिनचिकेतसःप्रार्थनं । नित्योनित्यानामितिस्पष्टार्थं । ननूदाहृतंश्रुत्यादिकंव्यावहारिकभे दपरंकिंनस्यादित्यतोमोक्षेपिभेदंश्रुत्यादिभिःसमर्थयते ॥ यथेति ॥ एवंमुनेर्विजानतआत्माभवतिगोतमेतिवाक्यशेषः । विजान

भा० । प्रोक्तान्येनैवेसुज्ञानायप्रष्ठ । अन्यदेवतद्विदितादथोअविदितादधि । अन्यत्रधर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्रभूताच्चभव्याच्चयत्तत्पश्यसितद्वद । नित्योनि-त्यानांचेतनश्चेतनामेकोबहूनांयोविदधातिकामान् । यथोदकंशुद्धेशुद्धमासिक्तंतादृगेवभवति । इदंज्ञानमुपाश्रित्यममसाधर्म्यमागताः । सोश्नुतेसर्वान्कामान्सहब्रह्मणाविपश्चिता ॥



तांमुनीनामात्मास्वामीचतुर्मुखोपि मुक्तःसन्तादृगेवभवति । नतुसएवकिम्वन्यइत्यर्थः । साधर्म्यंभेदव्याप्तं । ब्रह्मणासहेतिभेदो क्तिः । साहित्यस्यभेदसापेक्षत्वात् । ऐश्वर्यमर्यादोक्त्याच नमुक्ताब्रह्माभिन्नाइत्याह ॥ आधिपत्यमिति ॥ परमसाम्यमुपैतीत्यु क्तसाम्यवचनव्याख्यानमेतत् । आधिपत्यं जगद्व्यापारं । विषयेण लक्ष्म्यादिविषयनिमित्तकेनभोगेन । ऋतइत्यत्रापिसंबध्यते । अपरिच्छिन्नानंदादीन् । समाःदुःखराहित्येन । यद्वाआधिपत्यंचर्तेआनंदादीश्चर्तेविषयेणविषयनिमित्तकभोगेनसमाइतियोज्यं । ननुयदुक्तमनात्मप्रपंचस्यमिथ्यात्वांगीकारेतेभ्योनज्यायःपरमन्यदस्तीतिवाक्यविरोधःस्यादिति । तन्न । तेभ्यइत्यस्यभगवत्पर त्वेहिततोन्यप्रपंचसिद्ध्यास्माकंतद्विरोधःस्यात् । नचैवंकिंनामयानिपंचधाहिंकारादिविभागैःप्रोक्तानित्रीणित्रीणिविद्यादीनितेभ्यः पंचत्रिकेभ्योज्यायोमहत्तरं परंव्यतिरिक्तमन्यद्वस्त्वंतरंनास्ति । तत्रैवहिसर्वस्यांतर्भावइत्यर्थांगीकारादितिचेन्न । एवमपिज्यायःशब्द वैयर्थ्यानिस्तारात् । परान्यशब्दयोःपौनरुक्त्यापाताच्चेतिभावेनतद्वाक्यस्यभगवत्परत्वंप्रमाणेनाह ॥ प्रद्युम्नादीनीति ॥ प्रद्युम्नादी निपंचापिरूपाणिऋगादिस्थानभेदेनत्रीणित्रीणिजातानि । नचस्थानभेदेनभेदःशंकनीयः । नित्याभिन्नान्येवविरुद्धमपीदमैश्वर्या द्युज्यतइत्युक्तमीशनादिति । ननुयदुक्तमनन्यप्रोक्तइत्यादिनाजीवेशयोर्भेदसिद्धिरिति । तदयुक्तं । उदाहृतवचनानांमिथ्याभेदविष यत्वात् । मुक्तौभेदवचनान्यपिगौणमुक्तिपराणि । स्पष्टंजीवेशभेदसत्यत्वप्रतिपादकंचप्रमाणंनास्ति । नचतान्येवतत्सत्यत्वेप्र

भा० । आधिपत्यमृतेचैवभोगेनविषयेणच । आनंदादीनृतेमुक्तास्सर्वेतेब्रह्मणस्समाइत्यादेश्च । प्रद्युम्नादीनिरूपाणित्रीणित्रीण्येवपंचच । ऋगादिस्थानभेदेननित्याभिन्नानिचे-शनादितिसामसंहितायां ।

माणानीत्यत्रयुक्तिरस्ति । भेदस्वरूपमात्रग्राहकत्वेनापिसावकाशत्वादित्यतआह ॥ दृष्टेति ॥ प्रमाणसिद्धवस्तुनइत्यर्थः । चश ब्दएवार्थे । अतएवतद्व्यावर्त्यमाह ॥ नत्विति ॥ ज्ञानानांह्यप्रामाण्यंपरतः प्रामाण्यंस्वतइतिवादिप्रतिवादिनोःसंमतत्वादितिभा वः । किंचप्रत्यक्षबाधितंभेदप्रपंचमिथ्यात्वं । स्यादेतत् । यदिप्रत्यक्षदृष्टयाजगत्सत्यत्वंचेत्सिद्ध्येत् । नचैतदस्ति प्रत्यक्षस्यस्वरू पमात्रगोचरत्वेनतत्सत्यत्वगोचरत्वेयुक्त्यभावादित्यतोवाआह ॥ दृष्टेति ॥ अयमर्थः । प्रत्यक्षदृष्टिर्हिघटादिकंघटादित्वेनगोच रयति । घटादयश्चार्थक्रियासामर्थ्यवत्सप्रभेदाइतिघटादिसत्तागोचरैव । ज्ञानानांचाप्रामाण्यंपरतःप्रामाण्यंस्वतइतिवादिप्रतिवा दिनोःसंमतं । अतःप्रत्यक्षसिद्धस्यवस्तुनोमिथ्यात्वांगीकारएवबलवत्प्रमाणापेक्षा । नतुसत्यत्वे । अपवादाभावेदृष्टयैवतत्सि द्धेः । अतएवान्नादिकेभोग्येक्षुधितेनदृष्टे नेदमन्नमितिकेनचिदुक्ते कथमिदमन्नत्वेनदृश्यमानमन्नंनभवतीतितन्मिथ्यात्वएवबल वत्प्रमाणमपेक्षतेनतुतत्सत्यत्वइति । अथवाननुमास्त्वनात्मप्रपंचस्यमिथ्यात्वं तत्सत्यत्वंकुतःसिद्ध्यति । नचप्रत्यक्षदृष्टयैवेतियु क्तं । तस्याःस्वरूपमात्रविषयत्वेनतत्सत्वगोचरत्वाभावात् । तद्गोचरत्वेपिवाशुक्तिरजतादौतदसाधकत्वात् । तथाचजगतःसत्य त्वसाधकाभावात्सत्यत्वाभावेमिथ्यात्वमेवसेत्स्यतीत्यतआह ॥ दृष्टवस्तुनइति ॥ अर्थःपूर्ववत् । तत्रप्रमाणमाह॥ दृष्टस्येति ॥ दृष्टस्यसत्यतायांयुक्तिःप्रमाणसद्भावश्चभूषणमेव । प्रत्यक्षसिद्धेप्रमाणांतरसंवादेदार्ढ्यसिद्धेः । अयुक्तिः । प्रमाणाभावश्चेदपिभूषण मेव । नतुदूषणं । अपवादाभावेदृष्टेरेवसत्यतायांमानत्वादितिभावः । तस्यदृष्टस्यमिथ्यात्वेयुक्त्यभावःप्रमाणाभावोतिदूषणं ॥ ६४ ॥

भा०। दृष्टवस्तुनोमिथ्यात्वांगीकारेचयुक्त्यपेक्षा । नतुसत्यत्वे । दृष्टस्यसत्यतायांतुयुक्तिर्वाऽयुक्तिरेववा ॥ भूषणंतस्यमिथ्यात्वेयुक्त्यभावोतिदूषणं ॥

प्रमाणविरोधैकगम्यत्वात्तन्मिथ्यात्वस्येतिभावः । ननुदृष्टस्यापिप्रपंचस्यमिथ्यात्वेदृश्यत्वादियुक्तिरस्त्येवेत्यतआह ॥ युक्तिश्चेति ॥ दृष्टस्यमिथ्यात्वंह्यदुष्टयुक्त्यैवनिश्चेयं । यथाभिसर्पणाद्यभावयुक्त्यासर्पमिथ्यात्वं । प्रकृतयुक्तिश्चदोषवतीत्यर्थः । कुतइत्यतआह ॥ बलवदिति ॥ तत्वमसीत्यादिकंत्वन्यथैवव्याख्यास्यते । बलवन्मानविरुद्धाचेत्यपिग्राह्यं । धर्मिसाध्यलिंगव्याप्त्यादिग्राहकंहिप्रमाणमनुमानस्योपजीव्यत्वेबलवत् । तच्चधर्म्यादिकंसत्यत्वेनैवगृह्णातीतिजगन्मिथ्यात्वसाधकानुमानस्योपजीव्यविरोधइति । यद्वान्बलवमानवर्जितातद्विरुद्धायुक्तिर्दोषएव वक्तुर्दूषणमेवेत्यर्थः । किंचवचनानांमिथ्याभेदविषयत्वेऽत्यंतासद्भेदविषयत्वापत्त्यात्यंताप्रामाण्यंस्यात् । असत्त्वमिथ्यात्वयोर्मात्रयापिविशेषाभावादित्याह ॥ नचेति ॥ शून्यत्वमत्यंतासत्त्वं । तथाहि । मिथ्यात्वंनामप्रतिपन्नोपाधौत्रैकालिकनिषेधप्रतियोगित्वं । स्वात्यंताभावाधिकरणएवप्रतीयमानत्वंसद्विविक्तत्वंवा । पक्षत्रयेप्यसत्त्वमिथ्यात्वयोर्नविशेषः । शशविषाणादावपीतोतिरिक्तस्यासत्त्वस्याभावात् । नचतत्रनिरुपाख्यत्वमेवासत्त्वं । निरुपाख्यपदेनैवख्यायमानत्वात् । असतोऽप्रतीतावसद्वैलक्षण्यज्ञानानुपपत्तेश्च । नाप्यपरोक्षतोप्रतीयमानत्वमसत्त्वं । नित्यातींद्रियस्याप्यसत्त्वापातात् । नापिक्कचिदपिसत्त्वेनाप्रतीयमानत्वमसत्त्वं । तद्धैकआहुरसदेवेदमग्रआसीदितिश्रुत्याऽसतःसत्त्वप्रतीतेः । नापिसदनिर्वचनीयाभ्यामन्यत्त्वं । अनिर्वाच्यत्वस्यासत्त्वनिरूप्यत्वेनान्योन्याश्रयात् । लाघवेनसदन्यत्वस्यैवतत्वाच्च । नाप्यर्थक्रियासामर्थ्याभावादिकंतत् । शुक्तिरूप्यस्यशुद्धब्रह्मणश्चात्यंतासत्त्वापातात् । तस्मात्सार्वत्रिकत्रैकालिकनिषे

भा० । युक्तेश्चदोषएवस्याद्बलवन्मानवर्जितेतिब्रह्मतर्के । नचशून्यत्वमिथ्यात्वयोःकश्चिद्विशेषः ।

धप्रतियोगित्वंवा स्वात्यंताभावाधिकरणएवप्रतीयमानत्वंवा । सद्रूपत्वाभावोवाऽसत्वमितिवाच्यं । तदेवचतत्वमिथ्यात्वमितिन तयोर्विशेषइतिभावः । ननुमिथ्यात्वंनामानिर्वचनीयत्वं । तच्चसदसत्त्वानधिकरणत्वं । असत्वंचनिरुक्तमन्यदेवेतिचेन्न । स्यादेवंयद्युक्तरूपमनिर्वचनीयंकिंचित्स्यात्।नचतदस्ति प्रमाणाभावादित्याह॥ **तदिति** ॥ तत्तत्रानिर्वचनीये इतिमिथ्याशब्दार्थत्वेन बुद्धिस्थत्वात् । तथाहि । नतावदनिर्वचनीयमिदमितिप्रत्यक्षंप्रमाणमस्ति । नचभ्रांत्युत्थितस्यमिथ्यैवरजतंप्रत्यभादित्यनुवादोस्तीतिवाच्यं । मिथ्याशब्दस्यासत्त्वार्थत्वेनानिर्वचनीयपरत्वाभावात् । नापिविमतमनिर्वचनीयंबाध्यत्वादित्यनुमानं । अप्रसिद्धविशेषणत्वात् । नचसदसद्विलक्षणंक्वचिदागमोवक्ति । नचख्यातिबाधान्यथानुपपत्तिः । असतोपिख्यात्युपपत्तेरिति । एवंभेदमिथ्यात्वंनिराकृत्योपसंहरति ॥ **अतइति** ॥ अस्तुभेदःसत्यःकिंतुव्यावहारिकएव । पारमार्थिकंसत्यत्वमेवमिथ्यात्वविरोधीति चेत्न । भेदपंचकस्यव्यावहारिकत्वंवदतोमतेकिंकदाचित्कस्यचिदयंनास्तिनासीन्नभविष्यतीतिबुद्धिरस्तिनवा । द्वितीयंदूषयति ॥ **नचेति** ॥ आद्यंदूषयति ॥ **तद्भावेचेति** ॥ उक्तबुद्धिसद्भावे शून्यादसतःनविशेषोव्यावहारिकसत्यस्य । उपपादितंचैतत् । भेदस्यसत्यत्वेस्पष्टांश्रुतिंचपठति ॥ **सत्यमिति** ॥ एनमनुविश्वेमदंतीत्येतत्सत्यमित्यनेनजीवेश्वरयोरुपजीव्योपजीवकभा

भा० । तत्प्रमाणाभावात् । अतःसत्यएवभेदः । नचकदाचित्कस्यापिनासीदस्तिभविष्यतीतिबुद्ध्यभावेव्यावहारिकसत्यमित्यत्रास्माकंविरोधः। तद्भावेचनशून्याद्विशेषः।सत्यमेनमनुविश्वेमदंतीत्यादिश्रुतेश्चसत्योभेदः । प्रपंचोयदिविद्येतनिवर्तेतनसंशयः । मायामात्रमिदंद्वैतमद्वैतंपरमार्थतः । विकल्पोविनिवर्तेतकल्पितोयदिकेनचित् । उपदेशादयंवादोज्ञातेद्वैतंनविद्यतइत्यादिश्रुतेश्च ।



वःसत्यइत्युच्यते । तच्चभेदमिथ्यात्वे । नयुक्तमित्यर्थः । भेदकधर्मसत्यत्वोक्त्यन्यथानुपपत्त्याभेदस्यसत्यत्वंवक्तव्यमित्युक्तं । इदानींभेदस्यैवसत्यत्वेस्पष्टांश्रुतिमुदाहरति ॥ **प्रपंचइति** ॥ श्रुतेश्चसत्योभेदइत्यनुवर्तते । नन्विदंशांतिकेकर्मणिबेतालोत्थानमिव यावताभेदसत्यत्वायोदाहृतवाक्येप्रपंचमिथ्यात्वंप्रतीयतइत्यतस्तद्वाक्यद्वयंसम्यग्व्याचक्षाणस्तावत्प्रथमार्धंव्याचष्टे ॥ **प्रपंचइति** ॥ ननुप्रपंचोघटादिरुत्पद्यमानोविनाशवांश्चप्रमाणसिद्धः । अतोनेदमनिष्टापादनं । नापिविपर्ययेपर्यवसानमित्यतःप्रपंचशब्दार्थउक्तोभेदइति । उपपादनंप्रमाणेनकरिष्यति । विदेःसत्तार्थत्वमंगीकृत्यभवेतेतिव्याख्यातं । व्यत्ययोबहुलमित्यात्मनेपदंसत्ताचकादाचित्कीविवक्षितेत्याह ॥ **उत्पद्येतेति** ॥ अथवाभवेतेतिभूप्राप्तावात्मनेपदीवेत्यस्यविकल्पितण्यंतस्येदंरूपंसत्तांप्राप्नुयादित्यर्थः । तस्यतात्पर्यमुत्पद्येतेति । यदीत्यस्यतर्हीत्यनेननित्ययोगात्तर्हींतिपूरितं । ततश्चयदिजीवजडभेदोनश्येत्तदाजीवस्यजडत्वापत्त्यामोक्षशास्त्रवैयर्थ्यापत्तिरित्यादिरूपेणनिवर्ततेत्यस्यानिष्टत्वंद्रष्टव्यं । प्रसंगस्यविपर्ययपर्यवसानमाह ॥ **अतइति** ॥ नचनिवर्ततइत्यादौग्राह्यं । उत्पत्तिर्नचेत्किंशशशृंगादिवन्मिथ्येतिपृच्छति ॥ **किंत्विति** ॥ उत्तरमाह ॥ **नित्यएवेति** ॥ सार्वकालिकएवेत्यर्थः । वस्तुभूतस्यकादाचित्कस्वरूपलाभलक्षणोत्पत्त्यभावेसार्वकालिकत्वस्यैवप्राप्तेः । जीवेश्वरेप्रकृत्यादिनित्यस्वरूपभूतएवभेदोनादिनित्यइत्यवगंतव्यं । अतएवप्राक्भेदइतिसामान्यतःप्रकृतत्वेपिजीवेश्वरादिभेदइत्युक्तं । अतएवचसुधायामपीत्थमेवोक्तं । सन्न्यायरत्नावलीकारास्तुभेदोनामान्योन्याभावः । सचान्योन्यतादात्म्यापत्त्यैवनिवर्तनीयः।

भा० । प्रपंचोभेदःयदिविद्येतभवेतउत्पद्येततर्हिनिवर्तेत । अतोनजीवेश्वरादिभेदउत्पद्यते । किंतुनित्यएव ।

प्रतियोग्यापत्तेरेवाभावविपत्तित्वस्यप्रागभावेदृष्टत्वात् । नचकदापिपदार्थानामन्योन्यतादात्म्यमस्तीत्यनित्यानामपिभेदोनित्य एवेतिमन्यंते । यथाचनविरोधस्तथोपपादितमन्यत्रास्माभिः। ननुभेदपंचकस्यानादिनित्यत्वाद्युपपादनंप्रकृतासंगतं । नहिपूर्वंभेदस्तत्पंचत्वंवातस्यानादिनित्यत्वंवाप्रसक्तं। येनतदुपपादनमत्रेतिस्यादितिचेत्। उच्यते। अनादिमाययासुप्तोयदाजीवःप्रबुध्यते । अजमनिद्रमस्वप्नमद्वैतंबुध्यतेतदेति । पूर्वश्लोकेऽनादिमाययापरमेश्वरेच्छया प्रकृत्यादिनाचजीवजातस्यज्ञानावरणलक्षणंसुप्तत्वं तयैवपरमेश्वरादितत्वज्ञानलक्षणप्रबोधश्चोक्तः । तेनजीवेश्वरयोर्जडेश्वरयोर्जीवजडयोश्चभेदाःसंतीतिलब्धं ।प्रभोरिच्छयानिगडादिनापुरुषेबद्धेमुक्तेभेदत्रयदर्शनात् । प्राक्प्रभवःसर्वंभावानामितिभावशब्दोक्तानांजीवानांमिथोभेदोपिलब्धः । ततएवावरणानांजडानामपिमिथोभेदोर्थाल्लभ्यते । तेषांचपंचानामपिभेदानामनादिमाययाऽजमनिद्रमित्यादिविशेषणसामर्थ्यादनादित्वमपिलब्धं । तदिदंपंचानामपिभेदानामनादित्वंसत्यत्वंचोपपादयितुमिदंश्लोकद्वयमितिनासंगतिरिति । एवंभेदपंचकस्यानादिनित्यत्वंविपक्षेबाधकप्रसंगेनोपपाद्यतत्सत्यत्वेप्रमाणंवक्तुंश्रुतौमायामात्रमिदंद्वैतमित्युक्तं । तत्रद्वैतप्रपंचस्यमिथ्यात्वमुच्यतइतिप्रतीतिनिरासायमायामात्रपदंव्याचष्टे॥अतइति॥यतोभेदोनित्यएवातोब्रह्मवन्मिथ्यात्वायोगेनमायामात्रपदस्यायमेवार्थइत्यर्थः।मात्रमित्यस्यमाङ्माने रमुक्रीडायामितिधातुद्वयजत्वमभिप्रेत्यमातंरतंचेत्युक्तं । मातंविषयीकृतमित्यर्थः । एवंपदार्थमुक्त्वातात्पर्यार्थमाह ॥ भगवानिति ॥ जानाति भेदमितिशेषः । रमतेचास्मिन्भेदे भेदमंगीकरोतीत्यर्थः । यद्वास्मिन्भेदेसतिब्रह्मादिभिः



---

भा० । अतोमायया भगवत्प्रज्ञानेनमातंरतंचमात्रं । भगवाञ्जानातिरमतेचास्मिन्भेदइति ।

क्रीडतइत्यर्थः । अस्मिन्भेदइत्यनेनेदंद्वैतमितिप्राक्प्रपंचशब्दोक्तार्थस्यपरामर्शइतिसूचयति । इतिशब्दोहेतौ । नेद्वैतंभ्रांतिकल्पितमितिशेषः । नह्यविद्यमानमीश्वरप्रज्ञाविषयोभवति । भ्रांतत्वप्रसंगात् । नाप्यविद्यमानेभेदेब्रह्मादिभिःक्रीडनंयुक्तमितिभावः । ननुमायामात्रमिदंद्वैतमित्यनेनद्वैतमिथ्यात्वमुच्यतइत्येवव्याख्येयंउत्तरवाक्येऽद्वैतंपरमार्थतइत्यद्वैतस्यैवपारमार्थिकत्वोक्तेरित्यतस्तत्तात्पर्यमाह ॥ तच्चेति ॥ यत्प्रज्ञानेनमातंरतंचतच्चेत्यर्थः । अद्वैतंभेदशून्यमित्यर्थः । ननुकथमेतत् । भगवद्रूपस्यापि जीवादिभ्योभिन्नत्वात् । कथंवानेनायमर्थोलब्धइत्यतस्तद्वाक्यंव्याचष्टे ॥ परमार्थइति ॥ तसेःसार्वविभक्तिकत्वात्परमार्थइत्युक्तं । स्वतंत्रइत्यर्थः । स्वतंत्रंपरमार्थाख्यमितिस्मृतेः । परमार्थतइत्यस्यैवतृतीयांतत्वमंगीकृत्यार्थांतरमुक्तं ॥ तद्रूपेणेति ॥ स्वतंत्ररूपेणमत्स्यादिना । द्वयोर्भावोद्विता भेदइतियावत् । तस्याइदंधर्मिद्वैतं भिन्नमित्यर्थः । नद्वैतमद्वैतं । नन्वेतदयुक्तं । मायामात्रमिदंद्वैतमित्यनेनभेदस्यसत्यत्वेऽभिहितेभगवतस्तद्रूपेणभेदराहित्यकथनस्यासंगतत्वादित्यतोऽसंगतिपरिहारकतयापितस्यैवापेक्षितपूरणेनार्थमाह ॥ यदद्वैतमिति ॥ मायामात्रमिदंद्वैतमित्यनेनभेदस्यसत्यत्वोक्तौतर्ह्यद्वैतंबुध्यतेतदेतिव्यपदेशःकथमित्याकांक्षायांतद्गतिप्रदर्शनार्थमिदंवाक्यंप्रवृत्तमित्यर्थः । अनेनपरमार्थतइतिल्यब्लोपनिमित्तापंचमीत्युक्तंभवति । यदद्वैतंनामाद्वैतंबुध्यतइत्यनेनोच्यतेतत्परमार्थंभगवंतमपेक्ष्येत्यर्थः । नन्वनेनाद्वैतमितिव्यपदेशस्यकोर्थउक्तइत्यतआह ॥ स्वगतेति ॥ नास्तीत्यद्वैतमितिव्यपदेशस्यार्थइत्युक्तंभवत्यनेनेत्यर्थः । एवंमायामात्रमितिद्वितीयार्धेनभेदस्यसत्यत्वेप्रमाणमभिधायतत्रबाधकंचपरि

भा० । तच्चभगवद्रूपमद्वैतंपरमार्थोभगवांस्तद्रूपेणाद्वैतं । यदद्वैतंनामोच्यतेतत्परमार्थभगवदपेक्षयेत्यर्थः । स्वगतभेदोभगवतिनास्तीत्युक्तं ।

हृतं । इदानींतस्यमिथ्यात्वेबाधकप्रदर्शनार्थंविकल्पोविनिवर्त्तेतेतिवाक्यंप्रवृत्तमितिभावेनतदवतारयति ॥ **नचेति** ॥ केवलंकल्प नैवनतुवस्तुसत्वं मिथ्यैवेतियावत् । कुतोनेत्यतस्तत्रबाधकप्रदर्शनपरतयावाक्यंव्याचष्टे ॥ **यदीति** ॥ विकल्पोभेदोयदिकेन चिदज्ञानादिनाकल्पितःस्यात्तथापितदापिविनिवर्तेतबाध्येत । नकेवलंभेदस्योत्पत्त्यंगीकारेनिवृत्तिरापाद्यते । किंतुकल्पितत्वांगी कारेपीतिज्ञापनायापिशब्दः । यद्यपिपूर्वंनिवृत्तिर्विनाशः । अत्रतुबाधः । तथापिनिवर्त्तेतेतिशब्दसाम्यमात्रेणापिशब्दः । अव धारणार्थोवायं निवर्त्ततेत्यनेनसंबध्यते । तेनारोपितत्वस्यबाध्यत्वाव्यभिचारंसूचयति । नचनिवर्तते तस्मान्नकल्पितः किंतुसत्य एवेतिवाक्यशेषः । नन्वेतदयुक्तं । अद्वैतंबुध्यतइत्याद्युपदेशविरोधात् । ज्ञातेद्वैतंनविद्यतइतिभेदस्यब्रह्मज्ञाननिवर्त्यत्वोक्तेश्चे त्यतउपदेशादित्यर्धंव्याचष्टे ॥ **तस्मादिति** ॥ उपदेशादद्वैतंबुध्यतइत्याद्युपदेशादित्यर्थः । कुतइत्यतस्तंवक्तुंतावदज्ञातइतिपद च्छेदमभ्युपेत्यतदर्थमाह ॥ **केनापीति** ॥ ब्रह्मादिभिर्ज्ञातत्वात्तत्प्रसादंविनेत्युक्तं । तंवादंदर्शयितुमज्ञातेद्वैतंनविद्यतइतिवाक्यंव्या चष्टे ॥ **तद्गतइति** ॥ इत्ययमेववादइत्यन्वयः । नचैवमद्वैतंपरमार्थतइत्यनेनेदंगतार्थं उपसंहाररूपत्वात् । अतएवोक्तंतस्मादि ति । तत्रैवप्रमाणकथनाच्चनवैयर्थ्यमितिभावेनोपदेशादित्युक्तं । यदेवेहतदमुत्रयदमुत्रतदन्विहेत्यादेरित्यर्थः । एवंस्वयंश्रुतिंव्याख्या यतद्दार्ढ्यायप्रमाणमुदाहरति ॥ **जीवेति** ॥ गतइत्यस्यबुद्ध्याविविक्तस्योत्तरत्रापिसंबंधः । इत्येवंपंचभेदःप्रपंचकइत्युच्यतइत्यने

भा० । नचकल्पनामात्रोभेदः । यदिकेनचित्कल्पितोविकल्पस्तथापिनिवर्तेत । तस्मादुपदेशादयमेववादः । केनापितत्प्रसादेनविनाऽविज्ञातत्वादज्ञातोभगवांस्तद्गतोभेदोन विद्यतइति । जीवेश्वरगतोजीवेष्वथजीवजडात्मनोः । जडेशयोर्जडेष्वेवंपंचभेदःप्रपंचकः । प्रकृष्टमोक्षहेतुत्वात्तज्ज्ञानंप्रेतिकथ्यते ।



नश्रौतप्रपंचशब्दोनजगद्विस्तारवाचीकिंतुजातीयरोर्थेपंचन्शब्दाड्डुप्रत्ययः। एवंचपंचविधःपंचः।सचप्रकृष्टत्वात्प्रपंचः। सचप्रकर णप्राप्तोभेदएवेतिभावः । कथंतस्यप्रकृष्टत्वमित्यतआह ॥ **प्रकृष्टेति** ॥ तथाचमोक्षहेतुज्ञानविषयत्वेनभेदस्यापिप्रकृष्टत्वात्पंचभे दःप्रेतिकथ्यतइतिभावः । प्रकारांतरेणप्रपंचशब्दार्थमाह ॥ **प्रकृष्टेति** ॥ अयंपंचभेदः । अनेनपंचानांवर्गःपंचः । पंचद्दशतौव र्गेवेतिवाशब्देनपंचशब्दस्यनिपातनांगीकारात् । प्रकृष्टःपंचःप्रपंचः । प्रकृष्टताचमोक्षांगज्ञानतयाभवतीत्युक्तमेव । साचभेदसं बंधिनएवपंचकस्योपपन्ना । वैलक्षण्यंतयोर्ज्ञात्वामुच्यतेबध्यतेन्यथेत्यादेः । अतःप्रपंचोभेदपंचकइत्युक्तंभवति । एवंप्रपंचश ब्दार्थमुक्त्वावाक्यार्थमाह ॥ **यदीति** ॥ उत्पत्तिमतोभावस्यविनाशनियमादितिभावः । विपर्ययेपर्यवसानमाह ॥ **नेति** ॥ मो क्षेपिभेदश्रुतेरितिभावः । मायामात्रमिदंद्वैतमित्येतत्भेदसत्यत्वप्रतिपादनपरमितिभावेनव्याचष्टे ॥ **मायेति** ॥ तन्मितत्वात् तेन विषयीकृतत्वात् । अस्य भेदपंचकस्य । भ्रांतत्वंभ्रांतिकल्पितत्वं । अनेनविप्रतिपन्नोभेदोनभ्रांतिकल्पितः । विष्णुविज्ञानविषय त्वादित्यनुमानमुक्तंभवति । ननुविष्णुविज्ञानविषयोपिभेदोभ्रांतिकल्पितःकिंनस्यात् । नह्यस्मादादिज्ञानविषयोपिचंद्रभेदोन भ्रांतिकल्पितइत्यतआह ॥ **यदिति** ॥ नक्वचिद्भ्रांतत्वमस्येत्यत्रहेत्वंतरमाह ॥ **रमतेचेति** ॥ अत्रभेदे । अनेनविमतोभेदोन भ्रांतिकल्पितः । विष्णुरमणविषयत्वादित्यनुमानमुक्तंभवति । ननुचैत्ररमणविषयोपिस्वाप्नादिपदार्थश्चैत्रभ्रांतिकल्पितोभवत्ये

भा० । प्रकृष्टपंचकत्वाद्वाप्रपंचोयंप्रकीर्तितः । यद्ययंसादिरेवस्यान्निवर्तेतकदाचन । ननिवर्ततेयतस्तेननायंसादिर्भवेत्क्वचित् । मायेतिविष्णुविज्ञानंतन्मितत्वाच्चनक्वचित् । भ्रांतत्वमस्ययद्विष्णोर्नैवभ्रांतिःकथंचन । रमतेचात्रयद्विष्णुः

व। एवमत्रापिकिंनस्यादित्यतआह ॥ नहीति ॥ तस्यप्रेक्षावत्त्वादितिभावः। अतएवहेतौविष्णुग्रहणं नन्वेवंयदिभेदस्यसत्यत्वं स्यात्तर्ह्यद्वैतंबुध्यतेतदेत्यादिप्रयोगःकथमित्यतःप्राप्तमद्वैतंपरमार्थतइतिवाक्यंव्याचष्टे ॥ परमार्थइति ॥ स्वदेहादिनेतिशेषः। नन्वप्रसक्तप्रतिषेधोयमित्यतआह ॥ जडजीवेति ॥ जडेनदेहेनजीवेयथाभेदोस्तितथात्रनेत्यर्थः। यद्वा जडेघटादौयथास्वाव यवेन। जीवेचसंसारिणियथाचिंतनादिधर्मैश्चभेदोस्ति। खण्डितत्वेनभेदाभेदांगीकारात्। तथापरमार्थेहरौस्वावयवैःस्वधर्मैश्चभेदो नैवास्ति। तथाचस्वगतभेदराहित्यविवक्षयाद्वैतमित्युक्तिरितिभावः। भेदपंचकस्यमिथ्यात्वेबाधकोक्तिपरंविकल्पइतिवाक्यंव्याच ष्टे ॥ यद्ययमिति ॥ निवर्तते बाध्यते। ननुप्रपंचोयदीतिवाक्येनभेदसत्यत्वमुच्यतइत्यसत्। तथासतिभूतंभवद्भवि ष्यदितिसर्वमोंकारएव यच्चान्यत्रिकालातीतंतदप्योंकारएव सर्वंह्येतद्ब्रह्मेतिसर्वाभेदपरोपक्रमविरोधादित्यतःप्रबलोपसंहारानु सारेणैवोपक्रमोयोज्यतइतिभावेनाह ॥ तस्मादिति ॥ उपसंहारवाक्येभेदसत्यत्वस्यनिर्णयात्सर्वाभेदप्रतिपादकतयाप्रतीयमान स्योपक्रमवाक्यस्यभूतभविष्याख्यभवदाख्यवस्तुपराः। भूतंभवद्भविष्यदित्यभिधास्तदन्येचत्रिकालातीतादिशब्दाएकएवैकस्मिन्ने वास्मिन्नोंकाराख्येजनार्दनेवर्ततइत्येवमभिप्रायइत्यर्थः। अज्ञातेद्वैतंनविद्यतइतिवाक्यंव्याचष्टे॥ अज्ञातनामकइति ॥ पूर्वंविद्ये तेत्यस्यभवेतेत्यर्थउत्पत्तिश्चार्थलभ्येतिव्याख्यानंकृतं। इदानींविद्यतिरेवोत्पत्तिवाचीतिभावेनधातुंपठति ॥ विदिरिति ॥ धातुः

भा०। नहिभ्रांतौरमेद्धरिः। परमार्थेहरौनैवभेदोस्तिजडजीववत्। यद्ययंकल्पितोभेदःकस्मान्नैवनिवर्तते। तस्माद्भूतभविष्याख्यभवदाख्यपराभिधाः। तदन्येचैकएवास्मिन्नों काराख्येजनार्दने। अज्ञातनामकेतस्मिन्नभेदोस्तिकथंचनेतिब्रह्मतर्के। विदिःकादाचित्कस्वरूपलाभइतिचधातुः।

धातुव्याख्यानं । ननुप्रसिद्धव्याकरणेविद्यतिःसत्तार्थकएवप्रसिद्धोनतुकादाचित्कस्वरूपलाभार्थमितिचेन्न । तथासतिप्रसिद्धव्याकरणेभिदिर्विदारणार्थएवव्याख्यातइत्यन्योन्याभावार्थकोनस्यात् । नचक्रियावाचित्वमाख्यातुमेकैकोर्थःप्रदृश्यते । प्रयोगतोनुगंतव्याअनेकार्थाहिधातवइतिवचनेनभिदेर्विभागोन्यत्वंचार्थः । अन्यथासंयुक्तयोरोष्ठयोर्भिन्नावितिव्यवहारोनस्यादितिवाच्यं । एवंहिविदेरपिउत्पत्तिःसत्ताचार्थइतिभावेनाह ॥ **भिद्येतेतिवदिति** ॥ भिद्येतेत्यत्रभिदिर्धातुर्यथाप्रसिद्धव्याकरणाप्रसिद्धत्वेप्यन्योन्याभावार्थस्तथाविद्येतेतिशब्दांतर्गतविद्यतिरपिकादाचित्कस्वरूपलाभवाचीत्यर्थः। परमार्थेहरौनैवभेदोस्तीत्यनेनाद्वैतंपरमार्थतइतिवाक्यंव्याख्यातं । तत्कथमयमर्थोनेनलब्धइत्यतःपरमार्थतइतितसेर्विवक्षितमर्थमाह ॥ **परमार्थतइति** ॥ विश्वतःसर्वस्मिन्नंगेचक्षुर्यस्यासौतथोक्तः । यथाविश्वतइतितसिःसप्तम्यर्थेतथापरमार्थतइतितसिरपिसप्तम्यर्थेवर्ततइत्यर्थः । एवंपदार्थमुक्त्वावाक्यार्थमाह ॥ **परमार्थइति** ॥ नन्वेवंतर्हिपरमार्थोभगवानितिकथंप्राचीनंव्याख्यानमित्यतस्तद्व्याख्यानांतरमितिभावेनाह ॥ **परमार्थइति** ॥ ननुविद्येतेत्यत्रविद्यतिःसत्तार्थकएवकिंनस्यात् । प्रसिद्धत्वात् । किमप्रसिद्धोत्पत्त्यर्थांगीकारेणेत्यतआह ॥ **नहीति** ॥ प्रपंचोयदिविद्येत तर्हिनिवर्तेतेतियदिशब्दादिबलात्प्रसंगोयमितिज्ञायते । प्रसंगश्चव्याप्तिमूलः । तथाचविद्येतेत्यापादकतयोक्तार्थस्यनिवर्ततेत्यापाद्यतयोक्तनिवृत्त्याव्याप्तिरवश्यंभाविनी । नहिविद्यमानंनिवर्ततेइतिव्याप्तिरस्तिनित्ये

---

भा० । भिद्येतेतिवद्विद्येतेतिशब्दः । परमार्थतइतिविश्वतश्चक्षुरितिवत्सप्तम्यर्थे । परमार्थेद्वैताभावएवेत्यर्थः । परमार्थःपरमात्माद्वैतइतिप्रथमार्थेवा । नहिविद्यमानंनिवर्ततइतिनियमः ।

व्यभिचारात् । अतःप्रतीयमानान्वययोग्यताभावान्नविद्यमानत्वंविद्यतेरर्थइत्यर्थः । नन्वेवंतर्ह्युत्पत्त्यर्थांगीकारोप्यनुपपन्नः । उ
त्पद्यमानस्यापिप्रध्वंसस्यानिवृत्तेर्व्यभिचारादित्यतआह ॥ उत्पद्यमानमिति ॥ प्रायःप्रचुरंबहुलमितियावत् । प्रायइतिप्रध्वं
सव्यावृत्त्यर्थं । अनेनभावत्वेसतीत्यापादकविशेषणं विवक्षितमित्युक्तंभवति। नन्वेवंसतिविद्यतिःसत्तार्थकएवास्तु । विद्यमानंप्रा
योनिवर्ततइतिव्याप्तिसंभवात् । किमप्रसिद्धोत्पत्त्यर्थांगीकारेणेत्यतआह ॥ जीवेश्वरेति ॥ यदुक्तंविकल्पोविनिवर्तेतेतिभेदमि
थ्यात्वेबाधकमुच्यतइति तदसत् । तस्यविकल्पोभेदः केनचिदज्ञानादिनाकल्पितो निवर्ततेचेतिवस्तुस्थितिकथनरूपत्वेनप्रसंगरूप
त्वाभावादित्यतआह ॥ नचेति ॥ प्रपंचोविद्यतेनिवर्ततेचेत्यत्रापिबाधकंवदन्पूर्वत्रबाधकांतरमाह ॥ नतुनिवर्तेतेति ॥ प्रपं
चोयदिविद्येतेत्यादौग्राह्यं । यद्यत्रनिवृत्तिर्नापाद्यतेकिंतर्हिस्वरूपकथनमेवैतदित्यंगीक्रियते । तदायदिशब्दद्वयं विद्येतनिवर्तेत
विनिवर्तेतेतिश्रूयमाणंलिङ्प्रत्ययत्रयंचायुक्तंस्यात् । विरुद्धार्थकत्वात् । अनिष्टापादनरूपोह्ययंशब्दः । यदिशब्दसहितस्यलि
ङोयदिपर्वतोनिरग्निकःस्यात्तर्हिनिर्धूमोपिस्यादित्यादौअनिष्टापादनएवदृष्टत्वात् ।आपादनस्यचविपर्ययेपर्यवसानमावश्यकमित्य
निवृत्त्यादिकमेववाक्यसामर्थ्याल्लभ्यतेइतिभावः । एवमयुक्तत्वंयदिशब्दादेरुपपाद्यव्यर्थत्वंचोपपादयति ॥ कल्पितत्वमिति ॥
निवर्ततेनिवर्तिष्यतेनतुनिवर्तेतेति यद्यादिशब्दोपलक्षणमेतत् । यद्यत्रप्रपंचमिथ्यात्वमभिधित्सितंस्यात्तदायोयंप्रपंचोविद्यतइव

भा० । उत्पद्यमानंहिप्रायोनिवर्तते । जीवेश्वरप्रकृत्यादिकंबहुलंहिविद्यमानंननिवर्तते । नचकल्पितोविकल्पइतिपक्षेकल्पितोयदीतियदिशब्दोयुज्यते। कल्पितत्वंचेच्छ्रुतेरभिप्राय
अविद्यमानोयंप्रपंचोविनिवर्तते कल्पितोविकल्पोविनिवर्ततइत्येवशब्दःस्यात् । नतुनिवर्तेतेति ।



दृश्यते वस्तुतस्त्वविद्यमानः सनिवर्तिष्यतेअज्ञानेनकल्पितोविकल्पोनिवर्तिष्यतइत्येववक्तव्यं । नतुयद्यादिशब्दप्रयोगः व्यर्थ
त्वादित्यर्थः। ननुप्रपंचोयदीत्यत्रविकल्पोविनिवर्तेतेत्यत्रच वस्तुस्थितिकथनमितिभवद्भिरप्यभ्युपगतं । अस्वातंत्र्याच्चनास्त्येवे
त्येवंवाच्यंजगत्सदा। सदावृत्तेर्विद्यमानमितिब्रूयाद्यदिक्वचित्। तथापिनाशवद्धीदंप्रवाहाद्यस्यनित्यता।अतोनिवर्त्यमित्याहुःप्रपंचं
ह्यस्तियद्यपीतिवचनेनप्रपंचोविद्यतेनिवर्ततेचनसंशयइति । यदिकल्पयतीदंससएवविनिवर्तयेदितिवचनेन विकल्पःकेनचिदलोक
सिद्धेनपरमात्मनाकल्पितःस्थीयतामत्रेतिकल्पितस्तेनैवविनिवर्ततइत्यन्यत्रव्याख्याततत्वादितिचेत् । उच्यते । अयमभिप्रायोभा
ष्यकारस्य। सर्वथात्रोक्तरीत्याऽनिष्टापादनरूपत्वेनभेदपंचकस्यानादिसत्यतापरमेवेदंवाक्यंनतुपरोक्तरीत्यावस्तुस्थितिकथनरूपत्वे
नप्रपंचमिथ्यात्वपरं । तथासतियदिशब्दादिवैयर्थ्यप्रसंगात् । वस्तुस्थितिकथनपरत्वश्रद्धायामपितत्रोक्तरीत्यार्थोस्तु । नचात्रोक्त
दोषः । यदिशब्दस्त्ववस्तुत्वेचास्वातंत्र्येचसंशये । अवस्तुशब्दश्चाशक्तेह्यल्पशक्तौचकीर्त्यतइतिवचनेनयदिशब्दस्याशक्तत्वमल्प
शक्तित्वमस्वातंत्र्यंवार्थः । विद्येतनिवर्तेतेत्यत्राख्यातविपरिणामः । तथाचप्रपंचोजगदशक्तमल्पशक्ति । अस्वतंत्रंवाविद्यते तथा
पिनिवर्ततइतिनसंशयइत्यर्थः । अतएवपुत्रामेयदिविद्यंतेमरिष्यंत्येवतेध्रुवमितिधृतराष्ट्रवचनं । विकल्पःप्रपंचोयदिकेनचित्परमा
त्मनास्थीयतामत्रेतिकल्पितस्तदास्तेनैवनिवर्ततइत्यर्थः । यदिराज्यंकरोत्येषनश्यत्येतदसंशयमितिवत् । एवंचनास्मत्पक्षेयदिश
ब्दवैयर्थ्यं । आख्यातविपरिणामस्तुपरपक्षेपिसमइति । एवंपरपक्षेऽनुपपत्तिकथनस्योपयोगंदर्शयन्नुपसंहरति ॥ अतइति ॥ अ

भा० । अतःसत्यतापरमिदं वाक्यंभेदस्य ।

र्थांतरस्यायुक्तत्वात् । भेदासत्यत्ववादिनांनिंदनाच्चभेदसत्यत्वपरमिदंवाक्यद्वयमितिभावेनाह ॥ असत्यमिति ॥ तत्रैवहेत्वंतरमाह ॥ विद्येति ॥ आत्मनिपरमात्मनिजीवादिभ्योभेदज्ञानमेवविद्येत्यर्थः । जीवादिभ्योन्यं जुष्टंसेव्य मीशंभगवंतं तदेतत्सत्यमित्यादिप्रागुक्तप्रकारेणास्यमहिमानंयदापश्यतितदावीतशोकएवभवतीत्यर्थः । एवंचप्रपंचइतिश्लोकद्वयस्यभेदसत्यत्वपरत्वात्भेदसत्यत्वसमर्थनायैतच्छ्रुत्युदाहरणंनानुपन्नमितिस्मितं । एवंसर्वमस्थीत्यस्योत्तमपुरुषत्वेबाधकमुक्त्वोपसंहरति ॥ अतइति ॥ मितत्वात् । मितिरूपत्वात् । यद्वामितत्वात्प्रमितत्वादित्यर्थः ॥ खं० ॥ २१ ॥ ततश्चमनोहिंकारइत्याद्येकादशखण्डानामयमर्थः ॥ अत्रप्राणेषुपंचविधंसामोपासीतेत्यादौवक्तव्यं । हिंकारःप्रद्युम्नोमनोनामामनःस्थश्चेत्यादिपूर्ववत् । मनआदिस्थस्यहिंकारादिनाम्नोभगवतःगायत्रसामवाच्यत्वादिनोपास्तिःकर्तव्येतिभावेन गायत्रसामवाच्यत्वंतन्नियामकत्वंचाह॥ एतदिति ॥ एतत् प्राणस्थविष्ण्वाश्रितंगायत्रंसाम प्राणेषुइंद्रियस्थविष्णुरूपेषु प्रोतंतद्वाचकंतन्नियम्यंचेत्यर्थः । एवमुपासकस्यफलमाह ॥ सइति ॥ योधिकारीएततृहिंकारादिनामकमेवंमनआदिस्थत्वेनैतद्गायत्रं प्राणेषुप्राणस्थविष्णुरूपेषु प्रोतंचवेद सप्राणी प्राणस्थ

---

भा० । असत्यमप्रतिष्ठंतेजगदाहुरनीश्वरं ॥ एतांदृष्टिमवष्टभ्यनष्टात्मानोल्पबुद्धयइतिनिंदनाच्च । विद्यात्मनिभिदाबोधः । जुष्टंयदापश्यत्यन्यमीशमस्येत्यादिभेदज्ञानस्यप्रशंसनाच्च । अतोसनान्मितत्वाच्चास्मीतिभगवन्नामैवैतत् ॥ २१ ॥

उ० । मनोहिंकारोवाक्प्रस्तावश्चक्षुरुद्गीथःश्रोत्रंप्रतिहारःप्राणोनिधनमेतद्गायत्रंप्राणेषुप्रोतंसयएवमेतद्गायत्रंप्राणेषुप्रोतंवेदप्राणीभवतिसर्वमायुरेतिज्योग्जीवतिमहान्प्रजयापशुभिर्भवतिमहान्कीर्त्यामहामनाःस्यात्तद्व्रतं ॥ ११ ॥

विष्णुलाल्योभवति । सर्वमायुर्मोक्षलक्षणमेति ज्योक्सर्वज्ञःसन्जीवति प्रजयापशुभिर्महान्भवति । प्रकृष्टत्वेनजननात्प्रजेति ज्ञानं । पांतिशंसाधनंचेतिपशवोवेदाः तैर्महान्भवतीत्यर्थः । नचैवंज्योगित्यनेनपुनरुक्तिःपरोक्षापरोक्षज्ञानयोर्ग्रहणात् । लौकिक प्रजादिकमपियथायोग्यंतदिच्छूनांभवति कीर्त्यामहान्भवति । एतत्फलहेतूक्तभगवदुपासनांगतयाकिंचिद्व्रतमाह ॥ महामनाइ ति ॥ एवमुत्तरत्रापिव्याख्येयं ॥ एकादशःखंडः ॥ ११ ॥ एतदग्निस्थविष्ण्वाश्रितंरथंतरंसामाग्नौप्रोतमग्निस्थभगवद्रूपवाचकं तन्नियम्यंचेत्यर्थः । ब्रह्मवर्चस्वी ब्रह्मणोविष्णोर्वरणादेवचायितमभिवृद्धंस्वरूपतेजोब्रह्मवर्चः तद्वान्ब्रह्मवर्चस्वी मुक्तइतियावत् । संसृतावल्पतेजोजीवरूपंभगवान्मुक्तौमहत्तेजःकरोतीतिहिप्रमाणप्रमितं । अन्नादो यथेष्टान्नभोक्ताभवति । अग्निंप्रत्यक्अग्न्यभि मुखोनाचामेत् । नभक्षयेत् । ननिष्ठीवेत्श्लेष्मनिरसनंचनकुर्यात्तद्व्रतं ॥ द्वादशःखंडः ॥ १२ ॥ उपमंत्रयते रंतुंसंकेतंकरोति । ज्ञपयतेसुखमनुभवति । प्रतिस्त्रीसहशेतेयत्स्त्रियासहप्रतिशेते यत्स्त्रियासहाभिमुख्येनशयनंकरोतीत्यर्थः । कालंमैथुनसमयं । गच्छतिप्राप्नोति । तन्निधनं । नकेवलमेतावत् । पारं मैथुनपारं । गच्छति प्राप्नोति । तन्निधनं । मिथुनीभवति स्वभार्यात्या गीभवतीत्यर्थः । मिथुनान्मिथुनात्प्रजायते । अमोघरेताभवतीतियावत् । नकांचनपरिहरेत् । एकस्यैवयदिकर्मवशेनानेकभार्याः

---

उप० । अभिमंथतिसहिंकारोधूमोजायतेसप्रस्तावोज्वलतिसउद्गीथोंगाराभवंतिसप्रतिहारउपशाम्यतितन्निधनꣳसꣳशाम्यतितन्निधनमतेद्रथंतरमग्नौप्रोतꣳसयएवमेतद्रथं तरमग्नौप्रोतंवेद ब्रह्मवर्चस्व्यन्नादोभवतिसर्वमायुरेतिज्योग्जीवतिमहान्प्रजयापशुभिर्भवतिमहान्कीर्त्यानप्रत्यङ्ङग्निमाचामेन्ननिष्ठीवेत्तद्व्रतं ॥ १२ ॥ उपमंत्रयतेसहिंकारोज्ञपयतेसप्र स्तावःस्त्रियासहशेतेसउद्गीथःप्रतिस्त्रीसहशेतेसप्रतीहारःकालंगच्छतितन्निधनंपारंगच्छतितन्निधनमेतद्वामदेव्यंमिथुनेप्रोतꣳसयएवमेतद्वामदेव्यंमिथुनेप्रोतंवेदमिथुनीभवतिमिथुना

स्युस्तासुनकांचनपरित्यजेदित्यर्थः ॥ त्रयोदशःखंडः ॥ १३ ॥ उद्यन्हिंकारइत्यादिवाक्यंस्पष्टं । तपंत मादित्यं ॥ चतुर्दशःखंडः ॥ १४ ॥ संप्लवतेसंचरति । मेघोजायतेवर्षणोन्मुखोभवति । उद्गृह्णातिरजआदिकमितिशेषः । विरूपांश्चसरूपांश्चपशूनजावि रूपान् । गवाश्वरूपांश्चावरुंधेप्राप्नोतीत्यर्थः । वर्षंतं पर्जन्यं ॥ पंचदशःखंडः ॥ १५ ॥ वसंतइत्यादिकंप्रागुक्तमेव वैराजसामप्रोतत्वंवक्तुमनूद्यते । प्रजयापशुभिर्विराजतीत्यत्रप्रजापशुशब्दोक्तरीत्याज्ञानवेदयोर्ग्रहणं । महान्प्रजयापशुभि रित्यत्रप्रसिद्धाएवप्रजापशवइतिनपुनरुक्तिः ॥ षोडशःखंडः ॥ १६ ॥ लोकीभवति उत्तमलोकवान्भवतीत्यर्थः ॥ सप्तदशः खंडः ॥ १७ ॥ अजाहिंकारइत्याद्यपिपूर्वोक्तानुवादएवाधिकविधानार्थं ॥ अष्टादशःखंडः ॥ १८ ॥ अंगीभव तिदृढांगोभवति । अंगेनहस्तपादादिनानविहूर्च्छति । नकुटिलीभवति । पंग्वादिर्नभवतीत्यर्थः । नांगेषुविहूर्च्छतीतिपा

उप० ।--न्मिथुनात्प्रजायतेसर्वमायुरेतिज्योग्जीवतिमहान्प्रजयापशुभिर्भवतिमहान्कीर्त्यानकांचनपरिहरेत्तद्व्रतं ॥ १३ ॥ उद्यन्हिंकारउदितःप्रस्तावोमध्यंदिनउद्गीथो पराह्णःप्रतिहारोस्तंयन्निधनमेतद्बृहदादित्येप्रोत ऽसयएवमेतद्बृहदादित्येप्रोतंवेदतेजस्व्यन्नादोभवतिसर्वमायुरेतिज्योग्जीवतिमहान्प्रजयापशुभिर्भवतिमहान्कीर्त्यातपंतंननिंदेत्तद्व्रतं ॥ खं० ॥ १४ ॥ अभ्राणिसंप्लवतेसहिंकारोमेघोजायतेसप्रस्तावोवर्षतिसउद्गीथोविद्योततेस्तनयतिसप्रतिहारउद्गृह्णातितन्निधनमेतद्वैरूपंपर्जन्येप्रोत सयएवमेतद्वैरूपंपर्जन्येप्रोतं वेदविरूपाश्चसुरूपाश्चपशूनवरुंधेसर्वमायुरेतिज्योग्जीवतिमहान्प्रजयापशुभिर्भवतिमहान्कीर्त्यावर्षंतंननिंदेत्तद्व्रतं ॥ खं० ॥ १५ ॥ वसंतोहिंकारोग्रीष्मःप्रस्तावोवर्षाउद्गीथः शरत्प्रतिहारोहेमंतोनिधनमेतद्वैराजमृतुषुप्रोत ऽसयएवमेतद्वैराजमृतुषुप्रोतंवेदविराजतिप्रजयापशुभिर्ब्रह्मवर्चसेनसर्वमायुरेतिज्योग्जीवतिमहान्प्रजयापशुभिर्भवतिमहान्कीर्त्यार्तू तून्ननिंदेत्तद्व्रतं ॥ खं० ॥ १६ ॥ पृथिवीहिंकारोंतरिक्षंप्रस्तावोद्यौरुद्गीथोदिशःप्रतिहारःसमुद्रोनिधनमेताःशक्वर्योलोकेषुप्रोतावेदलोकीभवतिसर्वमायुरेतिज्योग्जीवतिमहान्प्रज यापशुभिर्भवतिमहान्कीर्त्यालोकान्ननिंदेत्तद्व्रतं ॥ खं० ॥ १७ ॥ अजाहिंकारोवयःप्रस्तावोगावउद्गीथोश्वाःप्रतिहारःपुरुषोनिधनमेतारेवत्यःपशुषुप्रोताःसयएवमेतारेवत्यःपशुषु प्रोतावेदपशुमान्भवतिप्रजयापशुभिर्भवतिमहान्कीर्त्यापशून्ननिंदेत्तद्व्रतं ॥ खं० ॥ १८ ॥ लोमहिंकारस्त्वक्प्रस्तावोमांऽसमुद्गीथोस्थिप्रतिहारोमज्जानिधनमेतद्यज्ञायज्ञीयमंगेषु



ठेप्ययमेवार्थः । यःसंवत्सरपर्यंतंगुरुकुलवासीसःसंवत्सरंसंवत्सरपर्यंतमज्ञोमत्तःसन्नाश्नीयात् । विहितभक्षणमपिनमत्तःसन्कुर्या दित्यर्थः । मज्जुमदकारिनाश्नीयात्सर्वदैवेतिशेषः ॥ एकोनविंशःखंडः ॥ १९ ॥ एतासामग्न्यादिदेवतानामेव । सलोकतां स मानलोकतांगच्छति । ततोप्युत्तमश्चेत्सार्ष्टितांसामीप्यंगच्छति । ततोप्युत्तमश्चेत्सायुज्यमेकंदेहत्वरूपंगच्छति।ब्राह्मणान्ननिंदेत्। ब्राह्मणेषुदेवतासंनिधानेनतन्निंदनेदेवतानिंदनस्यैवप्राप्तेरितिभावः ॥ विंशःखंडः ॥२०॥ त्रयीविद्याहिंकारइत्यादिनाहिंकारादि नामकप्रद्युम्नादेःऋग्वेदादित्रयादिगतत्वेनैकैकस्यरूपत्रयमुच्यते । एतत् त्रयीविद्यादिगतभगवदाश्रितंसाम नामविशेषानुक्तेरुक्ताव शिष्टंसर्वमितिगम्यते।सर्वस्मिन्पूर्णत्वात्सर्वनामके त्रयीविद्यादिसर्वगतभगवद्रूपे।प्रोतं तद्वाचकंतन्नियम्यंचेत्यर्थः।यःएतत् पंचविध भगवद्रूपं । एवंत्रयीविद्यादिगतत्वेनैतत्साम । सर्वस्मिन्भगवति।प्रोतंचवेद सःसर्वंभवतियादृशीउन्नतिःस्वयोग्यातांसर्वात्मनाप्राप्नो तीत्यर्थः।।१।। प्रद्युम्नादीनिपंचरूपाणिऋगादिस्थानभेदेनत्रीणित्रीणितिष्ठंतीत्युक्तं। तत्रश्लोकंपठन्माहात्म्यंतज्ज्ञानिनःफलांतरंचाह

उप० ।-प्रोत ऽसयएवमेतद्यज्ञायज्ञीयमंगेषुप्रोतंवेदांगीभवतिनांगेनविहूर्च्छतिसर्वमायुरेतिज्योग्जीवतिमहान्प्रजयापशुभिर्भवतिमहान्कीर्त्यासंवत्सरंमज्ज्ञोनाश्नीयात्तद्व्रतंमज्जुनाश्नी यादितिवा ॥ खं० ॥ १९ ॥ अग्निर्हिंकारोवायुःप्रस्तावआदित्यउद्गीथोनक्षत्राणिप्रतिहारश्चंद्रमानिधनमेतद्राजनंदेवतासुप्रोत ऽसयएवमेतद्राजनंदेवतासुप्रोतंवेदैतासामेवदेवतानांऽ सलोकतांसार्ष्टितांसायुज्यंगच्छतिसर्वमायुरेतिज्योग्जीवतिमहान्प्रजयापशुभिर्भवतिमहान्कीर्त्याब्राह्मणान्ननिंदेत्तद्व्रतं ॥खं०॥२०॥ त्रयीविद्याहिंकारस्त्रयइमेलोकाःसप्रस्तावोग्निर्वा युरादित्यःसउद्गीथोनक्षत्राणिवयांऽसिमरीचयःसप्रतिहारःसर्पागंधर्वाःपितरस्तन्निधनमेतत्सामसर्वस्मिन्प्रोतंसयएवमेतत्सामसर्वस्मिन्प्रोतंवेदसर्वंऽहभवति ॥ १ ॥

॥तादिति॥ तत्तत्रैषवक्ष्यमाणःश्लोकोभवति। प्रमाणत्वेनेतिशेषः । श्लोकंपठति॥यानीति॥यानिप्रद्युम्नादीनि पंचधापंचरूपाणि त्रीणिवर्तंते तेभ्योरूपेभ्योन्यद्वस्तुपरंज्यायः ब्रह्माद्यपेक्षयोत्तमोत्तमंनास्ति ।योधिकारीएतत् भगवद्रूपाणामेवपरमज्यायस्त्वंवेद ससर्ववेद सर्वशास्त्रार्थज्ञोभवति । अस्यैवसर्वशास्त्रार्थत्वात्।अस्मैज्ञानिनेसर्वादिशः सर्वदिग्वर्तिनोजनाः बलिंहरंति।इदंतुचतुर्मुखे मुख्यं । सर्वेस्मैदेवाबलमावहंतीत्युक्तेः । अन्येषुयथासंभवंबोध्यं । अत्रव्रतमाह ॥ सर्वमिति ॥ अस्मि असनान्मितिरूपत्वा च्चास्मिनामकंपरंब्रह्म । सर्वं गुणपूर्णमित्युपासीत । द्विरुक्तिःपूर्ववत् ॥ एकविंशःखंडः ॥ २१ ॥ एवंसामनाम्नोभगवतोव्यस्त समस्तोपास्तिरभिहिता । तत्रसाम्नउद्गानप्रकारंसप्रभेदमाह ॥ विनर्दीत्यादिना ॥ तत्रविनर्दिसाम्नोवृणइत्येतद्वाक्यं दुर्गमार्थंव्याख्यातुंसामशब्दस्यप्रसिद्धार्थप्रतीतिवारणायार्थंतावदाह ॥ सर्वदेति ॥ सर्वदासमस्तेनसामेतिश्रुत्यैवपूर्वंनिरुक्तेरि तिभावः । इदानींतद्वाक्यंव्याचष्टे ॥ तस्येति ॥ श्रुतौपशव्यमित्यग्नेरुद्गीथइत्यत्रउद्गीथशब्दःसर्वत्रसम्बध्यतइतिभावेनतस्या र्थउक्तउद्गानप्रकारइति।नचैवंसाम्नउद्गीथोविनर्दीत्येतावतावाक्यस्यपूर्णत्वात्। वृणइत्यनन्वितमित्यतोवाक्यभेदंकृत्वायोजयति॥ तदेवेति ॥ सामोद्गानप्रकारेविनर्दित्वस्यसिद्धत्वान्नैकवाक्यत्वंसंभवतीतिभावः। श्रुतावन्यत्रवृणइत्यनुक्त्वात्रैवतदुक्तेस्तदेवेत्ये वकारः।तत्रहेतुमाह ॥ सर्वेति ॥ उक्तार्थंद्रढयन्प्रमाणेनैवखंडंव्याचष्टे ॥विष्णोरिति॥ वृषभवत्वृषभनादवत्।अनेनविनर्दिसा



---

उ० । तदेषश्लोकोयानिपंचधात्रीणित्रीणितेभ्योनज्यायःपरमन्यदस्तियस्तद्वेदसवेदसर्वंसर्वादिशोबलिमस्मैहरंतिसर्वमस्मीत्युपासीततद्व्रतंतद्व्रतं ॥ २ ॥ खं० ॥ २१ ॥

भा० । सर्वदासमत्वात्सामभगवान् । तस्योद्गानप्रकारोविनर्दित्वृषभस्वरवन्मेघनर्दनवद्वा । तदेववृणे । सर्वोत्तमत्वात् । विष्णोःस्वरोवृषभवन्मेघनादवदेववा ॥

म्नउद्गीथइत्येतद्व्याख्यातं । पशव्यमित्यग्नेरुद्गीथइत्यस्यव्याख्यानं ॥ स्त्रीति ॥ अनिरुक्तःप्रजापतेरित्येतस्यार्थमाह ॥ गंभीर इति ॥ एतद्वदितिनिर्वक्तुमशक्यत्वादनिरुक्तइतिपदार्थमभिप्रेत्यानुपमइत्युक्तं । सोपमत्वस्यवक्ष्यमाणत्वात्तत्तात्पर्यमाह ॥ गंभीर इति ॥ निरुक्तःसोमस्येत्यस्यार्थमाह ॥ अथेति ॥ मृदुश्लक्ष्णंवायोरित्येतद्व्याचष्टे ॥ मृदुमेघेति ॥ श्लक्ष्णंबलवदिंद्रस्येति वाक्यंव्याचष्टे ॥ इंद्रस्येति ॥ स्तनयित्नुस्तीव्रमेघगर्जनं क्रौंचंबृहस्पतेरित्यस्यार्थमाह ॥ बृहस्पतेरिति ॥ अपध्वांतंवरुणस्येत्यस्यार्थो ॥ वरुणस्येति ॥ विष्णोःस्वरोवृषभस्वरवदित्युक्तं । मृदुमेघस्वरोवायोरित्युक्त्यावायुस्वरोपिवृषभस्वरवदित्युक्तं । मेघस्वरवृषभस्वरयोःसाम्यात् । अतएवविष्णोःस्वरोवृषभवन्मेघनादवदेवेत्युक्तं । गंभीरोनुपमोब्रह्मणइत्यनेनब्रह्मस्वरोपिवृषभस्वरवदित्युक्तं । वृषभमेघनादयोरेवगांभीर्यदर्शनात् । एवंत्रयाणांस्वरस्यैकप्रकारत्वप्रतीतौतत्रविशेषमाह ॥ एकस्येति ॥ एकस्यैकवर्षस्यपादवर्षसहितस्ययूनइतियावत् । वृषभस्यस्वरवदितिशेषः । तदंतराविंशतिवर्षादवाग्वर्षस्य । यद्वामेघनादवदिति गंभीरोनुपमइति मृदुमेघस्वरवदितिच विष्णुब्रह्मवायुगानांनादानांगंभीरत्वमुक्तं । तस्यैकप्रकारत्वप्रतीतिंनिवारयन्विशेषमाह ॥ एकस्येति ॥ तान्सर्वानेवोपसेवेतेत्यस्यसहेतुकमर्थमाह ॥ गायेदिति ॥ तस्मादेतेषामेवस्वराणांप्रशस्तत्वादेतैरेवस्वरैर्गायेत् । देवोद्गानसदृशोद्गानविधानमशक्यत्वादयुक्तमित्यतउक्तं ॥ यथाशक्तीति॥वारुणंत्वेववर्जयेदित्यस्यार्थोनविस्वरमिति॥तस्माद्वि

भा० । स्त्रीपशुस्वरवद्वह्नेर्गंभीरोऽनुपमोविभोः । ब्रह्मणस्त्वथसोमस्यसाक्षाद्धंटानिनादवत् । मृदुमेघस्वरोवायोरिंद्रस्यस्तनयित्नुवत् । बृहस्पतेःक्रौंचवच्चवरुणस्यतुविस्वरः । एकस्यपादवर्षस्यस्वरोविष्णोरुदाहृतः । वायोर्विंशतिवर्षस्यब्रह्मणस्तुतदंतरेतिच । गायेदेतैःस्वरैस्तस्माद्यथाशक्तिनविस्वरं ।

स्वरस्यानर्थहेतुत्वादित्यत्रापिसंबध्यते । अमृतत्वंदेवेभ्यआगायानीत्यागायेदित्यादिनाप्रसिद्धोद्गातुरेवंविधसंकल्पःकथ्यतइतिप्रतीतिनिरासायव्याचष्टे ॥ अधिकारीति ॥ तथाचतेनैवंविधःसंकल्पःकार्यइतिभावः । तर्ह्यन्येषांकथमित्यतआह ॥ अन्येषामिति ॥ कुर्यात् विभक्तिविपरिणामेनस्मृतिमित्यनुवर्तते । अन्यथास्मृतिकरणेबाधकमाह ॥ अवमंतेति ॥ तत्रहेतुमाह ॥ देवानामिति ॥ देवादीनामित्यर्थः । निगमयति ॥ अतइति ॥ ददाति देवादीनांमोक्षादिकमितिशेषः । ननुयदिहृदिस्थोमुख्यप्राण एवदेवादीनांमोक्षादिदाता तर्ह्यागायानीत्ययुक्तंस्यात् । प्रसिद्धोद्गातुरेवसंकल्पोक्त्यादिकर्तृत्वप्रतीतेः । नहिस्वस्यताद्दशफलदानासामर्थ्येतथासंकल्पादिकर्तृत्वोक्तिःसंभवतीत्यतआह ॥ संकल्पेति ॥ संकल्पोमनसाध्यानं । उक्तिर्वचनं । आदिपदेनोद्गानसंग्रहः । तर्हिप्रतीतिःकथमित्यतआह ॥ हिमुख्यतइति ॥ संकल्पोक्त्यादिकर्तृत्वस्यतस्मिन्नेवमुख्यत्वादित्यर्थः । अमुख्यतस्तत्कर्तृत्वविषयाप्रतीतिरितिभावः । आत्मनेस्वस्मैअन्नमागायानीत्यन्यथाप्रतीतिंवारयंस्तद्व्याचष्टे ॥ आत्मेति ॥ तस्माअन्नमुद्दिश्यागायेदितिशेषः । स्वात्मनएवान्नमागायानीत्यर्थःकस्मान्नस्यादित्यतआह ॥ ह्यर्थतइति ॥ हियस्मात्प्राणस्थहरेर्भोजनेऽर्थतोनांतरीयकतयाप्राणस्यभुजिर्भवेत् । तस्मान्नासावर्थइत्यर्थः । प्राणस्यदेवांतर्गतत्वाद्देवानांचामृतत्वमुद्दिश्यगानस्यकृतत्वेनस्वस्याप्य

भा० । अधिकारीसदौद्गात्रेमुख्यतःप्राणएवयत् । अतोमोक्षादिदानेसदेवादीनांक्षमोभवेत् । अन्येषांसददातीहमद्धृदिस्थइतिस्मृतिः । कार्याहिनान्यथाकुर्यादवमंतान्यथा भवेत् । देवानांमोक्षदानादौनहिमानुषईश्वरः । अतःप्राणोहृदिस्थोमेददातीतिस्मृतिर्भवेत् । संकल्पोक्त्यादिकर्ताचप्राणएवयतःसदा । आगायानीतियुज्येतेतस्मात्तस्मिन्हिमुख्यतः । आत्मेतिभगवान्विष्णुःप्राणस्थःपुरुषोत्तमः । तस्मादन्नंह्यर्थतस्तुप्राणस्यान्नभुजिर्भवेत् ।



मृतत्वसिद्धेर्नासावर्थइत्याह ॥ प्राणस्यापीति ॥ तर्हिविष्णोरपिदेवांतर्गतत्वात्तस्याप्यमृतत्वंप्रतिवायुरुद्गायति ॥ किमित्यतोनेत्याह ॥ विष्णोरिति ॥ फलमितिवर्तते । विष्णोरमृतत्वंफलंनेतिसंबंधः । कुतइत्यतस्तदमृतत्वस्यानादिनित्यत्वादित्याह ॥ क्वचेति ॥ चोहेतौ । विष्णोरमृतत्वमितिवर्तते । अंतवत्त्वसमुच्चयेवाचशब्दः । तथाचविष्णोरमृतत्वंआदिमदंतवच्चनक्वापीतियतइतिभावः । सर्वेस्वराघोषवंतोबलवंतोवक्तव्याः । इंद्रेबलंददानीत्यादिवाक्यंव्याचष्टे ॥ इंद्रइति ॥ इंद्रबलदानार्थमेवेंद्रेबलंददानीतिसंकल्प्यस्वरान्घोषबलात्मकान् घोषोनामध्वनिविशेषः । बलमित्यतिप्रयत्नउच्यते । घोषबलयुक्तान्ब्रूयादित्यनेनसर्वेस्वराइतिवाक्यंव्याख्यातं । अहंविष्णोःस्वात्मानमर्पयएवेतिसंकल्प्याग्रस्तानंतरेवाप्रवेशितानिरस्तान्बहिरेवानाक्षिप्तान् यद्वाअग्रस्तान्अदृष्टान् अनतिद्रुतोच्चारितानितियावत् । अनिरस्तान् । अनतिदूरोच्चारितानित्यर्थः । उपलक्षणमेतत् । विवृतप्रयत्नयुक्तांश्चोष्मणःशषसहान्ब्रूयादित्यनेनसर्वऊष्माणोऽग्रस्ताअनिरस्ताविवृतावक्तव्याः । प्रजापतेरात्मानंपरिददानीतिवाक्यंव्याख्यातंभवति । मोक्षयोग्यान्मृत्युवर्जितान्करिष्यामीतिसंकल्प्यसमस्तान्स्पर्शानपिकादिमावसानान्वर्णान्लेशतोप्यसंस्पृष्टान्ब्रूयादित्यनेनसर्वेस्पर्शालेशेनानभिहतावक्तव्याः मृत्योरात्मानंपरिहराणीतिवाक्यंव्याख्यातं । अत्रापिस्वराद्युच्चारयितृपुरुषमात्रस्यैतदुच्यतइति

भा० । प्राणस्याप्यमृतत्वंहिमुख्यमेवफलंयतः । देवांतर्भावतोविष्णोर्नामृतत्वंक्वचादिमत् । इंद्रेबलंददानीतिस्वरान्घोषबलात्मकान् । ब्रूयादग्रस्तानिरस्तानूष्मणःस्पर्शानपि । समस्तान्बलदानार्थमिंद्रेचैवप्रजापतेः । विष्णोःस्वात्मानमेवाहमर्पयेमृत्युवर्जितान् । मोक्षयोग्यान्करिष्यामीत्येवंसप्राणएवतु । कुर्या

प्रतीतिनिरासायाह ॥ अन्यस्त्विति ॥ नान्यथातुकथंचनेत्यतःपरमवमंतान्यथाभवेदितिवक्तव्यं । किंततइत्यतआह ॥ देवा
वमंतेति ॥ यतोतोन्यथानस्मरेदित्यन्वयः । तंयदिस्वरेषूपालभेतेंद्रंशरणंप्रपन्नोऽभूवंसत्वाप्रतिवक्ष्यतीत्येनंब्रूयादित्यादाववस्था
विशेषएवेंद्रादिशरणगतिध्यानंकर्तव्यमितिप्रतीतिनिरासायेंद्रंशरणंप्रपन्नोभूवंप्रजापतिंशरणंप्रपन्नोभूवं मृत्युंशरणंप्रपन्नोभूवमिति
वाक्यत्रयंव्याचष्टे ॥ इंद्रमिति ॥ नकेवलंस्वरपतित्वादिकमितिचशब्दः । सर्वेस्वराइंद्रस्यात्मानइतिवाक्यमिंद्रपदंप्रसिद्धेंद्र
परमितिप्रतीतिंवारयन्व्याचष्टे ॥ ऐश्वर्यादिति ॥ प्रसिद्धेंद्रपरत्वेनुपपत्त्यभावेपिवस्तुस्थितिकथनायैवंव्याख्यातं । एवमुत्तर
त्रापिद्रष्टव्यं । सर्वेऊष्माणःप्रजापतेरात्मानइतिवाक्यंप्रजापतिर्दक्षइतिप्रतीतिनिरासायव्याचष्टे ॥ ऊष्माधिपइति ॥ सर्वेस्प
र्शामृत्योरात्मानइतिवाक्यंमृत्युर्यमइतिप्रतीतिनिरासायव्याचष्टे ॥ मृत्युनामेति ॥ ननुप्राणस्योद्गातृत्वेकथमिदंघटते । इंद्रमृ
त्य्वोर्वाय्वनधिकत्वेनतस्यतच्छरणागतिध्यानासंभवादितिचेन्न । इतरोद्गात्रपेक्षयैवतत्प्रवृत्तेः । वायुविवक्षायांतुइंद्रमृत्युशब्द
योःतदंर्गतभगवत्परत्वादितिभावेनाह ॥ मानुषाणामिति ॥ आद्यस्तुशब्दोमानुषाणांवाय्वाद्यपेक्षयाऽपकर्षरूपविशेषद्योतकः ।
द्वितीयस्त्ववधारणार्थोवायुतएवेतिसंबध्यते । तृतीयस्तुवायोरितरोत्कर्षरूपविशेषमाह ॥ इतरेषांमानुषाणांवायुतःवाय्वादितःश

---

भा० । दन्यस्तुमत्स्थस्तुप्राणएवेद्दशःक्षमः । करोतीतिस्मरेन्नित्यंनान्यथातुकथंचन । देवावमंताहितमोयात्यसंशयतोयतः । अतइंद्रंप्रजापाख्यंविष्णुंमृत्युंचसर्वदा ।
शरणंगतोहमितिचध्यायेत्सर्वत्रसर्वदा । ऐश्वर्यादिंद्रनामातुवायुःस्वरपतिःसदा । ऊष्माधिपस्तुभगवान्विष्णुरेवप्रजापतिः । मृत्युनामातुसंहाराद्रुद्रःस्पर्शाधिपःस्मृतः । मानुषाणां
तुशरणमितरेषांतुवायुतः । वायोस्तुबलदानाद्यंमोक्षदानादिकंहरेः ।

रणंभवेत् । हरेरिंद्राद्यंतर्गतस्य । नन्विंद्रनामावायुःस्वरपतिरित्युक्तं । तथासतिवायोरुद्गातृत्वेइंद्रेबलंददानीतिस्मृत्यनुपपत्तेः न हिस्वस्मिन्स्वयंबलदइत्यतआह ॥ यस्मादिति ॥ सतासतावायेनकेनाप्युपालंभेकृतेप्रजापतिंशरणंप्रपन्नोभूवंसत्वाप्रतिपेक्ष्यती तिशापोदेयइत्ययुक्तं । सज्जनंप्रतिएवंशापस्यादेयत्वादित्यतआह ॥ सर्वोपद्रवेति ॥ कर्तरिषष्ठी । मृत्योरात्मानंपरिहराणीत्य स्यमृत्युवर्जितान् करिष्यामीतिव्याख्यानंकथंमृत्योःस्वरूपंपरिहराणीतिप्रतीतेरित्यतस्तदपेक्षिताध्याहारेणव्याचष्टे ॥ मृत्यो रिति ॥ इत्यर्थइतिशेषः । आत्मशब्दश्चात्रजात्यैकवचनइत्यपिद्रष्टव्यं । प्रजापतींद्रशब्दौविष्णुवायुपरावित्युक्तं प्रमाणांतरेण द्रढयति ॥ ब्रह्मेति ॥ ब्रह्माप्रजापतिश्चेतिशब्दाभ्यांविष्णुरुच्यते । यदान्यंप्रबोधयन्वर्तते अन्यप्रबोधकोष्माक्षरगतइतियाव त् । एवंपरेषांबोधकोयदेत्यत्रापिपरबोधकस्वरगतोयदेत्यर्थः । ब्रह्मप्रजापतींद्रशब्दान्विष्णुवाय्वोर्निर्वक्ति ॥ बृंहयतीति ॥ व्युत्पत्तिभिर्ब्रह्मप्रजापतींद्रशब्दैर्विष्णुवायूउच्यतेइतिशेषः । यद्यपिब्रह्मशब्दनिर्वचनंनश्रुत्यनुसारि तथापिप्रमाणेब्रह्मशब्दस्यप्र सक्तत्वात्तस्यनिर्वचनंकृतमितिमंतव्यं ॥खं०॥२२॥ ततश्चायंखण्डार्थः ॥ साम्नः समत्वात्सामनामकस्यभगवतःउद्गीथइतिवक्ष्य माणमत्रापिसंबध्यते । उद्गानप्रकारोविनर्दि सपादवर्षवृषभस्वरवन्मेघनर्दनवद्वा । तदेववृणे सर्वोत्तमत्वात् । अग्नेरुद्गीथः उद्गानप्र

---

भा० । यस्माद्वायुपदेयोग्यावहवस्त्विंद्रनामकाः । अतइंद्रेददानीतिस्मृतिःप्राणस्ययुज्यते इतिसामसंहितायां । सर्वोपद्रवकर्तॄणामसुराणांकुबुद्धिनां । उपालंभेकृतेयुक्तं विष्णुस्त्वांप्रतिपेक्ष्यति । रुद्रस्त्वांधक्ष्यतीत्यादिनान्यथातुकथंचनेतिच । मृत्योःसकाशादात्मानंपरिहराणीति । ब्रह्माप्रजापतिश्चेतिविष्णुरन्यंप्रबोधयन् । तथेंद्रनामावायुश्चपरेषां बोधकोयदेतिच । बृंहयतिप्रजाःपातिइदंरातीतिव्युत्पत्तिभिः ॥ २२ ॥

कारःपशव्यं। इतिशब्दउपमार्थः। स्त्रीपशुस्वरवत्। भगवत्स्वरस्यपुंपशुस्वरसादृश्यस्योक्तत्वात्।उद्गीथइत्यस्यसर्वत्रसंबंधः। प्रजापते
र्ब्रह्मणः। उद्गीथउद्गानप्रकारोऽनिरुक्तो निरुपमः। विंशतिवर्षावाग्वर्षस्यवृषभस्यस्वरवत्गंभीरश्चेतिग्राह्यं। सोमस्योद्गीथो निरुक्तः
सोपमः। घंटानिनादाख्योपमासहितइत्यर्थः। वायोरुद्गीथोमृदु मृदुमेघस्वरवत्श्लक्ष्णं। विंशतिवर्षस्यवृषभस्यस्वरवद्गंभीरमित्यर्थः।
इंद्रस्योद्गीथःश्लक्ष्णंगंभीरंबलमस्यातीतिबलवत्। स्तनयित्नुघोषवदित्यर्थः। बृहस्पतेरुद्गीथः क्रौंचं क्रौंचपक्षिस्वरवत्। वरुणस्यो
द्गीथः अपध्वांतं। भिन्नकांस्यरवसमं। विस्वरइतियावत्। किंततइत्यतआह ॥ **तानिति**॥ उद्गाता तान्भागवतादीन्बार्हस्पत्यंतान्
सर्वानेवस्वरान्उपसेवेत। यथाशक्तितत्तदुद्गानस्वरसदृशस्वरैरेवोद्गायेदित्यर्थः। एवकारव्यावर्त्यमाह॥ **वारुणमिति** ॥ वारुणमे
वस्वरं। तुविशेषेणवर्जयेत्। विस्वरत्वादित्यर्थः ॥ १ ॥ एवमुद्गातुरुद्गानेस्वरमुक्त्वा इदानींदेवादिविषयेआशास्यमाह ॥ **अमृ
तत्वमिति** ॥ उद्गाता अहंदेवेभ्यःअमृतत्वंमोक्षमुद्दिश्यागायानि। आगानंकुर्यामितिसंकल्प्यागायेत्। आगानंकुर्यात्। पितृ
भ्यःस्वधां मनुषेभ्यआशा माशासनीयमिष्टमितियावत्। पशुभ्यस्तृणोदकं यजमानायस्वर्गंलोकं आत्मनेप्राणस्थपरमात्मने।
अन्नमुद्दिश्यगायानीतिसंकल्प्यागायेत्। उद्गानंकुर्यादित्यर्थः। एवंसंकल्पःकार्यएव नैतद्विषयेप्रमादःकार्यइत्याह ॥ **एतानी
ति**। एतानि पूर्वोक्तानिदेवामृतत्वादीनि। मनसाध्यायन्नप्रमत्तःसंस्तुवीत ॥ २॥ ततःकिमितिचेत्। औद्गात्रेहिमुख्याधिकारी

उप०। विर्नर्दिसाम्नोवृणेपशव्यमित्यग्नेरुद्गीथोऽनिरुक्तःप्रजापतेर्निरुक्तःसोमस्यमृदुश्लक्ष्णंवायोश्श्लक्ष्णंबलवदिंद्रस्यक्रौंचंबृहस्पतेरपध्वांतंवरुणस्यतान्त्सर्वानेवोपसेवेतवारुणंत्वेवव
र्जयेत् ॥१॥ अमृतत्वंदेवेभ्यआगायानीत्यागायेत्स्वधांपितृभ्यआशांमनुष्येभ्यस्तृणोदकंपशुभ्यःस्वर्गंलोकंयजमानायान्नमात्मनआगायानीत्येतानिमनसाध्यायन्नप्रमत्तःस्तुवीत ॥२॥



वायुरेवान्येत्वमुख्याधिकारिणः। तत्रोद्गातायदिमुख्यवायुस्तर्हिदेवादीनांमोक्षादिदानेक्षमोभवेत्। नान्यथा। यदिचान्यस्तर्हिम
द्धृदिस्थोमुख्यप्राणएवदेवादीनांमोक्षादिकंददातीतिस्मृतिःकार्या। अन्यथामनुष्यमात्रस्यदेवादिमोक्षदानादौसामर्थ्याभावेनदे
वावमंतृत्वप्राप्त्यानर्थप्राप्तेः। नचान्यस्याऽगायानीतिसंकल्पानुपपत्तिः। मुख्यप्राणस्यैवतद्गतस्यसंकल्पकर्तृत्वेनतथास्मृतिमात्रस्या
नेनकर्तव्यत्वात्। एवमुद्गातुर्देवादिविषयेआशास्यमुक्त्वेदानीमुद्गात्रास्वरोष्मस्पर्शाक्षरेषुसम्यक्प्रयुक्तेष्वपियदिकश्चिद्धूर्त उपा
लंभंकरोतितदातंप्रतिवक्तव्यप्रकारंवक्तुंतावत्स्वरोष्मस्पर्शदेवताआह ॥ **सर्वेस्वराइति** ॥ सर्वेस्वराःअकारादयःषोडशस्वराः
इंद्रस्यपरमैश्वर्यादिदंरातीतिव्युत्पत्त्यावाइंद्रनाम्नोवायोरात्मानोदेहाःप्रतिमाइतियावत्। सर्वेऊष्माणःशषसहाःप्रजापतेःप्रजाःपा
तीतिप्रजापतिनाम्नोविष्णोरात्मानः। प्रतिमाःसर्वेस्पर्शाःकादयोमावसानावर्णाः। मृत्योर्मारणान्मृत्युनाम्नोरुद्रस्यात्मानःप्रति
माः। किंततइत्यतआह ॥ **तमिति** ॥ तमुद्गातारंयदिस्वरेषुसम्यगुच्चारितेष्वप्युपालभेत स्वरस्त्वयादुष्टःप्रयुक्तइत्युपालंभंकुर्याद
सुरस्तदाहमिंद्रंस्वराधिपतिंवायुंशरणंप्रपन्नोभूवंस्वराधिपतींद्रप्रसादात्सम्यगेवस्वरोच्चारणंकृतवानस्मीतियावत्। सइंद्रस्त्वात्वां
प्रतिवक्ष्यतिशिक्षारूपंवचनमितिशेषः। इत्येनमुपालंभकर्तारंप्रतिब्रूयात् ॥ ३ ॥ अथयद्येनमुद्गातारमूष्मसुसम्यक्प्रयुक्तेष्वपिउ
पालभेतोक्तरीत्योपालंभंकुर्यादसुरस्तदाहं प्रजापतिमूष्माधिपतिंविष्णुंशरणंप्रपन्नोभूवंसत्वात्वांप्रतिपेक्ष्यतिसंचूर्णयिष्यतीत्येनंब्रू

उप०। सर्वेस्वराइंद्रस्यात्मानःसर्वेऊष्माणःप्रजापतेरात्मानःसर्वेस्पर्शामृत्योरात्मानस्तंयदिस्वरेषूपालभेतेंद्रंशरणंप्रपन्नोभूवंसत्वाप्रतिवक्ष्यतीत्येनंब्रूयात् ॥ ३ ॥ अथय
द्येनमूष्मसूपालभेत। प्रजापतिंशरणंप्रपन्नोभूवंसत्वाप्रतिपेक्ष्यतीत्येनंब्रूया

यात् अथयद्येनंस्पर्शेषूपालभेतासुरस्तदामृत्युंस्पर्शाधिपंरुद्रंशरणंप्रपन्नोभूवंसःत्वांप्रतिधक्ष्यति । भस्मीकरिष्यतीत्येनंब्रूयात् ॥ ४ ॥ ननुकथंस्वरोष्मस्पर्शोच्चारणंकर्तव्यं यत्रान्यैरुपालंभेकृतेएवंवक्तव्यमित्यतःस्वराद्युच्चारणप्रकारंदर्शयति ॥ सर्वइति ॥ इंद्रेस्व राधिपतिवायौबलंददानीतिसंकल्प्येंद्रेबलदानार्थेसर्वेस्वराघोषवंतोध्वनिविशेषवंतोबलवंतोतिप्रयत्नवंतोवक्तव्याः । घोषपूर्वकम तिप्रयत्नेनस्वरोच्चारणंकर्तव्यमित्यर्थः । प्रजापतेरूष्माधिपतिविष्णोरात्मानंस्वात्मानमेवपरिददानिसमर्पयइतिसंकल्प्यसर्वेऊष्मा णःअग्रस्ताःअंतरेवाप्रवेशिताः । अनिरस्ताःबहिरेवानाक्षिप्ताः । विवृताःविवृतप्रयत्नयुक्ताःवक्तव्याः । मृत्योःस्पर्शाधिपतेःसकाशा दात्मानंमोक्षयोग्यंपरिहराणि । मोक्षयोग्यान्मृत्युवर्जितान्करिष्यामीति । संकल्प्यसर्वेस्पर्शालेशेनानभिहतालेशतोसंस्पृष्टाःवक्त व्याः । ननुस्वराद्युच्चारकपुरुषमात्रस्यकथमिंद्रेबलंददानीतिमृत्योरात्मानंपरिहराणीतिचसंकल्पः । तत्रासमर्थत्वादितिचेत् । औद्गात्रेमुख्याधिकारिणोमुख्यप्राणस्यैवस्वराद्युच्चारणेपिमुख्याधिकारित्वात् । नचैवमिंद्रेबलंददानीतिसंकल्पानुपपत्तिः । अ त्रेंद्रशब्देनवायुपदयोग्यानांऋजूनांग्रहणात् । अन्यैस्तुमद्धृदिस्थोमुख्यप्राणएवैवंकरोतीतिस्मृतिमात्रस्यकर्तव्यत्वादिति ॥ ५ ॥ द्वाविंशःखंडः ॥ २२ ॥ पूर्वंव्यस्तसमस्तसामोपासकानांस्वर्गमोक्षौफलत्वेनोक्तौ तत्रकेषांकिमितिनज्ञायते । अतस्तद्विवेके नाह ॥ त्रयोधर्मस्कंधाइत्यादिना । अत्राहुर्मायावादिनः यज्ञादिमान्प्रथमोगृहस्थ स्तापसोद्वितीयोवनस्थ स्तृतीयोब्रह्मचारी

उप० ।—दथययेनंस्पर्शेषूपालभेतमृत्युंशरणं प्रपन्नोभूवंसप्रतिधक्ष्यतीत्येनंब्रूयात् ॥ ४ ॥ सर्वेस्वराघोषवंतोबलवंतोवक्तव्याइंद्रेबलंददानीतिसर्वेऊष्माणोग्रस्तानिरस्ता विवृत्तावक्तव्याःप्रजापतेरात्मानंपरिददानीति । सर्वेस्पर्शालेशेनानभिहतावक्तव्यामृत्योरात्मानंपरिहराणीति ॥ २२ ॥

नैष्ठिकः सर्वएतेपुण्यलोकाभवंति । शिष्टस्त्वनुक्तःपरिव्राट्ब्रह्मसंस्थोमृतत्वंपुण्यलोकविलक्षणंमोक्षमेतीति । तन्मतनिरासायप्रमाणेनैवतात्पर्यमाह ॥ सर्वेति ॥ सर्वेषामाश्रमिणांधर्मैरित्यर्थः । यतिधर्मस्यापिपुण्यलोकसाधनत्वमस्ति । ब्रह्मज्ञानंचेत्सर्वेषामपिमोक्षोभवेत् । एवंचत्रयाणामेवपुण्यलोकोयतेरेवतद्विलक्षणोमोक्षइत्ययुक्तमितिभावः । तेभ्योभितप्तेभ्यःॐकारःसंप्रास्रवदिति ओंकारस्यवेदत्रयसारव्याहृतिसारत्वेनज्ञानमुक्तं । तत्कुतइत्यतस्तत्रोंकारएवेदंसर्वमितिश्रुत्यभिप्रेतंहेतुमाह ॥ ॐकारइति ॥ ब्रह्मणःगुणपूर्णस्य । अनेनगुणपूर्णत्ववाचकत्वंहेतुमभिप्रैति । तद्यथेतिश्रुत्युक्तंहेत्वंतरमाह ॥ सर्वेति ॥ ननुप्रत्यक्षबाधितमेतदित्यतआह ॥तद्व्याख्यात्वादिति॥सर्ववागात्मतोंकारस्य ननु ॐकारएवेदंसर्वमित्यत्र ॐकारस्यसर्वजगदात्मकत्वमुच्यतइत्ययुक्तंबाधात् ।इदंसर्वंशब्दजातमोंकारएवेति सर्वशब्दात्मकत्वमुच्यतइत्यप्यतएवायुक्तं । उक्ताभिप्रायश्चेत्तद्यथेत्यनेनगतार्थमित्यतः इदं शब्दस्योंकारविशेषणत्वमंगीकृत्यतद्वाक्यंव्याचष्टे ॥ इदंत्विति ॥ तुविशेषेणाव्यवधानेनप्रस्तुतत्वात्सः ओंकारः इदं इदमित्यनेनपरामृश्यतइत्यर्थः।चोवधारणे । सइत्यनेनसंबध्यते । अर्थपूर्णतः अर्थपूर्णत्वतः । पूर्णत्वार्थकत्वतइतियावत् । ततश्चेदमयमोंकारएवसर्वपूर्णत्ववाचीत्यर्थइत्युक्तंभवति । नचोंकारमुद्दिश्यसर्वमितिनपुंसकप्रयोगानुपपत्तिः । सर्वं पूर्णार्थकंयत्सःइदमोंकारएवेत्युद्देश्यविधेयभावस्यविवक्षितत्वात् । नचैवमपीदमोंकारइतिसामानाधिकरण्यानुपपत्तिः । छांदसत्वेनलिंगव्यत्ययोपपत्तेरितिभावः । अथवेदमित्यस्यसर्वशब्दान्वितत्वमेव सर्वशब्दस्यचनपुंसकत्वंसामान्येनपुंसकमितिन्यायेनाश्रितमितिचनलिंगव्य

भा० । सर्वधर्मैःपुण्यलोकोब्रह्मज्ञानाद्विमुच्यते । ॐकारोब्रह्मणोनामसर्ववागात्मकश्चसः । तद्व्याख्यात्वात्सर्ववाचांसर्ववागात्मताभवेत् । इदंतुप्रस्तुतत्वात्ससर्वंचाप्यर्थपूर्णतः ।

त्ययदोषइत्यभिप्रेत्याह ॥ **सर्वशब्देति** ॥ ततश्चेदंसर्वं सर्ववागर्थत्वेनप्रस्तुतंयत्पूर्णत्वंतद्वाची । ॐकारएवेत्यर्थइतिउक्तंभवति । अतएवोंकारोब्रह्मणोनामेतिप्रागुक्तं । एवमोंकारस्यसारार्थकत्वेनसर्ववाक्सारतोपपादकतयेदंवाक्यंव्याख्यायेदानींस्वरूपतःसर्ववागाधिक्योपपादकतयापिव्याचष्टे ॥**आधिक्यमिति** ॥ ॐकारस्यसर्वत्वंचाधिक्यमेवेतिसंबंधः।नन्वत्रेदमित्यस्यनसर्वशब्दविशेषणत्वं । स्वरूपाधिक्यस्यपूर्वमप्रस्तुतत्वेनपरामर्शासंभवादित्यतआह ॥ **प्रस्तुतमिति**॥ तदाधिक्यं तद्यथाशंकुनेतिपूर्ववाक्येनप्रस्तुतमित्यर्थः । ततश्चेदंप्रस्तुतंयत्सर्वस्वरूपतोधिकंसःॐकारएवेतियोजनोक्ताभवति। नतुतेभ्योभितप्तेभ्यॐकारःसंप्रास्रवदितिॐकारोव्याहृतिसारइत्युक्तं । तत्कथं।व्याहृतीनांत्रित्वात् । ॐकारस्यैकत्वात्।व्याहृतित्रयस्यवेदत्रयसारत्ववदत्रापिव्रक्तव्यत्वादित्यतआह॥ **अकाराद्याइति** ॥ प्रजापतिर्लोकानभ्यतपदित्यादौत्रयीविद्यासंप्रास्रवदित्यादौचोक्ताभितापनसंप्रास्रवणेतपःप्रस्रवणेएवेत्यन्यथाप्रतीतिनिरासायतयोर्विवक्षितमर्थंप्रमाणेनाह ॥**अस्मादयमिति**॥ तद्दृष्टिः सारत्वदृष्टिः । सारत्वज्ञानमेवसंप्रस्रावशब्दस्याप्यर्थइतिभावः।ब्रह्मणःपरमस्येत्युक्त्याश्रौतप्रजापतिशब्दोव्याख्यातः तेनप्रजापतिर्विराट्कस्यपोवेतिव्याख्यानंनिरस्तं।ननुयद्यत्रश्रुतौप्रजापतिशब्देनपरब्रह्मग्रहणंतर्हितस्यनित्यज्ञानत्वेनाभ्यतपदितिकादाचित्कव्यवहारः कथमित्यतआह॥ **नित्येति** ॥ अचीक्लृपत् ज्ञानव्यक्तिमकरोत् । ननुपरोक्तरीत्यात्रयोप्याश्रमिणःपुण्यलोकाभवंति । ब्रह्मसंस्थोयतिरेवामृतत्वमेतीत्येवयुक्तं । नतूक्तरीत्या

भा० । सर्वशब्दान्वितत्वाच्चनलिंगव्यत्ययोभवेत् । आधिक्यंचैवसर्वत्वंप्रस्तुतंतद्यथेतितदितिच । अकाराद्याःक्रमेणैवभूरादेःसाररूपिणः । अस्मादयंसारइतिज्ञानमेवाभितापनं । संप्रस्रावश्चतद्दृष्टिर्ब्रह्मणःपरमस्यहि । नित्यज्ञानोपिभगवान्क्रीडयाचीक्लृपद्यदा । तदाभितापशब्दोयंवर्ततेपरमात्मनीतिच ।



चत्वारोप्याश्रमिणःपुण्यलोकाभवंति । तएवब्रह्मज्ञानिनश्चेदमृतत्वंयांतीति ।तथासतिगृहस्थादिधर्मयज्ञादिवत्यतिधर्मस्याप्यत्रोक्तिप्रसंगादित्यतआह ॥ **तपःशब्देनैवेति** ॥ सर्वेंद्रियनिग्रहरूपत्वादालोचनात्मकत्वाच्चयतिधर्मस्येतिभावः । सर्वेषामप्याश्रमिणांज्ञानाभावेस्वस्वधर्मैःपुण्यलोकः सतिज्ञानेमुक्तिरित्यत्रप्रमाणांतरमाह ॥ **सर्वेषामिति** ॥ सर्वएतेपुण्यलोकाभवंतीतिसामान्येनोक्तं । तत्रकस्यकःपुण्यलोकइत्यतःप्रमाणेनैवतद्विवेचयन्उक्तमर्थंप्रमाणांतरेणद्रढयति ॥ **यज्ञेति** ॥ यतयस्तपसासूर्यमित्यनेनतपःशब्देनैवयतिधर्मश्चोक्तइत्येतदपिप्रमापितं । चत्वारोपिपरमहंसहंसकुटीजबहूदकाः । विशेषतःअसाधारण्येन।तेनसूर्यस्यार्चिरादिमार्गत्वेनोत्क्रांतगम्यत्वात्कथमेतदित्याशंकापरिहृता । वनस्थाःतपसैवर्षीन्ऋषिलोकान्गच्छंति । नैष्ठिकब्रह्मचारिणोगुरुशुश्रूषयावालखिल्यान्गच्छंतीत्यन्वयः । ब्रह्मसंस्थोयतिरेवामृतत्वमेतीत्यत्रकिंसंन्यासमात्रेणामृतत्वप्राप्तिरित्यभिप्रेतंउततस्यैवब्रह्मज्ञानंमोक्षश्चेति । तत्राद्यंदूषयति ॥**नचेति**॥कुतइत्यतः ज्ञानेनैवामृतत्वप्राप्तिश्रुतेरित्याह ॥**तमेवमिति**॥ तत्रैवसूत्रमपिपठति ॥ **विद्यैवेति** ॥ संन्यासमात्रेणमोक्षप्राप्तिर्नास्तीत्यत्रभगवद्वाक्यमपिपठति ॥ **नेति** ॥ नरोधयति ननिर्बंधयति । मोक्षदानायेतिशेषः ।

भा० । तपःशब्देनैवयतिधर्मश्चोक्तः । सर्वेषामाश्रमस्थानामज्ञानांपुण्यलोकता । अपरोक्षदृशांविष्णोरमृतत्वंनचान्यथेतिच । यज्ञाध्ययनदानैस्तुगृहीस्यात्सोमलोकगः । यतयस्तपसासूर्यंचत्वारोपिविशेषतः । गच्छंतितपसैवर्षीन्वनस्थाब्रह्मचारिणः । नैष्ठिकावालखिल्याश्चगुरुशुश्रूषयैवतु । यदिपश्यंत्येतएवसाक्षाद्देवंजनार्दनं । अमृतत्वंतदायांति नान्यथातुकथंचनेति । नचसंन्यासमात्रेणामृतत्वं । तमेवंविद्वानमृतइहभवतिनान्यःपंथाअयनायविद्यतइतिश्रुतेः । विद्यैवतुनिर्धारणादितिभगवद्वचनं । नरोधयतिमांधर्मोनसांख्यंयोगउद्धव ।

एतैरहंनमोक्षदइतिभावः। सांख्यं तत्वानांविवेचनं। योगोष्टांगयोगः। त्यागःसंन्यासः।गीतावाक्यमप्युक्तार्थेसंवादयति ॥नचेति॥ द्वितीयंदूषयति॥ तस्येति॥ चशब्देनपूर्वोक्तप्रमाणसमुच्चयः। तस्यमुक्तस्य पुत्राःपूर्वपुत्रा दायंधनक्षेत्रादिकं उपयंतीतिश्रुत्यर्थः। ननुयदिसर्वाश्रमिणांज्ञानेनमोक्षःतर्हिब्राह्मणस्यैवमोक्षइत्युक्तंस्यात्।तथा चप्रमाणांतरविरोधइत्यतः।सर्वेषामप्युपलक्षणयाप्रज्ञानेन मोक्षोविवक्षितइतिप्रमाणेनैवाह॥सर्वेति॥वाशब्दःचशब्दार्थः। ननुसर्वेषांमोक्षसद्भावेऽतिप्रयाससाध्येयत्याश्रमेप्रेक्षावत्प्रवृत्तिर्न स्यात्इत्यतआह ॥तथापीति॥ यद्यपिसर्वेषांमोक्षस्तथापिकुतइत्यतआह॥ज्ञानेति॥ज्ञानमेवद्वारंमोक्षसाधनेयस्यसज्ञानद्वारः। ननुगार्हस्थ्यादिकमपिज्ञानद्वारमेवतत्कथमेतदित्यतउक्तं विशेषेणेति । संन्यासस्यविशेषेणज्ञानद्वारत्वेश्रुतिमप्याह ॥ वेदांतेति ॥ शुद्धसत्वाःयतयः। संन्यासयोगाद्वेदांतविज्ञानेनसुनिश्चितभगवद्रूपार्थास्तइत्युत्तरेणान्वयः॥ खं० ॥२३॥ ततश्चायंखंडार्थः॥ धर्मस्कंधाधर्माख्यवृक्षस्यशाखाभूतास्त्रयःकेतइत्यतआह ॥ यज्ञइत्यादिना ॥ यज्ञोध्ययनंदानमित्येतैरुपलक्षितो गृहीप्रथमएकस्कंधः । तपएकः तपःशब्देनकायक्लेशात्मकमालोचनात्मकंचतपोगृह्यते । तेनतद्वानुपलक्षणीयः। तापसो वनस्थोयतिश्चद्वितीयस्कंधः। आचार्यकुलवासीब्रह्मचारी । आत्मानंस्वात्मानंआचार्यकुलेऽत्यंतमवसादयंश्चतृतीयस्कंधः।

भा०। नस्वाध्यायस्तपस्त्यागोनेष्टापूर्तंनदक्षिणेतिच । नचसंन्यसनादेवसिद्धिंसमधिगच्छतीतिच । तस्यपुत्रादायमुपयंतीत्यादेर्गृहस्थादीनामपिज्ञानिनांमोक्षःप्रतीयते। सर्ववर्णाश्रमाणांचज्ञानान्मोक्षोविनिश्चितः । अंत्यानांस्थावराणांवातथापियतिरुत्तमः । ज्ञानद्वारोयतोन्यासोविशेषेणभविष्यतीतिच । वेदांतविज्ञानसुनिश्चितार्थाःसंन्यासयोगाद्यतयःशुद्धसत्वाइतिच ॥ २३ ॥

उप०। त्रयोधर्मस्कंधायज्ञोध्ययनंदानमितिप्रथमस्तपएवद्वितीयोब्रह्मचर्याचार्यकुलवासीतृतीयोत्यंतमात्मानमाचार्यकुलेवसादयन्सर्वे

अत्यंतेतिविशेषणान्नैष्ठिकइतिलभ्यते । तएतेगृहस्थोवनस्थोयतिर्ब्रह्मचारीनैष्ठिकश्चेत्येतेसर्वेयदिनब्रह्मापरोक्षज्ञानिनस्तर्हिपुण्य लोकाःपुण्यसाध्योलोकोयेषांतेतथोक्ताभवंति । तत्रायंविवेकः । गृहिणोयज्ञाध्ययनदानैःसोमलोकंगच्छंति । परमहंसादि प्रभिन्नाश्चत्वारोपियतयस्तपसासूर्यलोकंगच्छंति । वनस्थास्तुतपसऋषिसेव्यप्रदेशान्गच्छंति । ब्रह्मचारिणोनैष्ठिकाश्चगुरुशु श्रूषयैववालखिल्यान्गच्छंतीति । ननुयज्ञादिसाधनैर्मोक्षएवकिंनस्यादित्यतआह ॥ **ब्रह्मसंस्थइति** ॥ यतोब्रह्मणिपरब्रह्मणि संस्थितःतदपरोक्षज्ञान्येवअमृतत्वंमोक्षमेति ॥ १ ॥ प्रायोमुमुक्षुजप्योमंत्रोवेदाद्यर्थकत्वादिनासर्वसारत्वादोंकारएवेतिआख्या यिकयाह ॥ **प्रजापतिरित्यादिना** ॥ प्रजापतिर्विष्णुलोकान् लोक्यतेपरमपरंचवस्त्वेभिरितिलोकाःशब्दराशयस्तानभ्यतप त् । किमत्रसारभूतमित्यपश्यत् । अभितप्तेभ्योदृष्टेभ्यस्तेभ्यःशब्दात्मकलोकेभ्यःत्रयीविद्या ऋगादिवेदविद्या संप्रास्रवत् । सा रत्वेनव्यज्ञायत । तांत्रयीविद्यामभ्यतपत् किमत्रसारभूतमित्यपश्यत् । तस्यास्त्रयीविद्याया अभितप्तायादृष्टायाः एतानिवक्ष्य माणानिअक्षराणि संप्रास्रवंतव्यक्तान्यभवन् । त्रयीविद्यासारत्वेनप्रजापतिनाज्ञातानीतियावत् । कानितान्यक्षराणीत्यतआह ॥ **भूर्भुवःस्वरिति** ॥ तानित्रीण्यक्षराण्यभ्यतपत् । किमत्रसारभूतमित्यपश्यत् । तेभ्योऽभितप्तेभ्यओंकारःअंकारोकारमकारात्म कःसंप्रास्रवत् । व्यक्तोऽभवत् । अकारोभूःसारत्वेनोकारोभुवःसारत्वेनमकारःस्वःसारत्वेनपरब्रह्मणाज्ञातइतियावत् । एवमोंका

---

उ० । एतेपुण्यलोकाभवंति । ब्रह्मसंस्थोमृतत्वमेति ॥ १ ॥ प्रजापतिर्लोकानभ्यतपत्तेभ्योभितप्तेभ्यस्त्रयीविद्यासंप्रास्रवत्तामभ्यतपत्तस्याअभितप्तायाएतान्यक्षराणिसं प्रास्रवंतभूर्भुवःस्वरितितानभ्यतपत्तेभ्योभितप्तेभ्यओंकारः

रस्योक्तंसर्वसारत्वंकुतइत्यतस्तदुपपादयति ॥ **तद्यथेति** ॥ ततृनिदर्शनंयथाशंकुनासर्वाणिपर्णानिसंतृण्णानिप्रोतानि । एवमोंकारेणप्रणवेनसर्वावाक्संतृण्णाप्रोता प्रणवव्याख्यानरूपाःसर्वात्राचइतियावत् ।तथाचसर्ववाग्व्याख्येयत्वात्सारत्वमितिभावः।सार्थकत्वाच्चसारत्वमितिभावेनोंकारार्थमाह ॥ **ॐकारएवेति** ॥ यत्सर्वपूर्णं पूर्णत्ववाचीतियावत् । सइदं पूर्वप्रस्तुतमोंकारएव। अथवेदमित्यस्यसर्वशब्देनान्वयः । तदर्थस्यापिसर्ववागर्थत्वेनप्रस्तुतत्वात् । अतोनलिंगव्यत्ययदोषः । यद्वास्वरूपतोधिकत्वाच्चोंकारस्यसारत्वमित्याह ॥ **ओंकारएवेति** ॥ इदं तद्यथेतिप्रस्तुतंयत्सर्वस्वरूपतोधिकंसॐकारएवेत्यर्थः । द्विरुक्तिरुक्तावधारणार्था ॥ २ ॥ **त्रयोविंशःखंडः** ॥ २३ ॥ पूर्वस्वर्गमोक्षफलकसामनामकभगवदुपास्तिरुक्ता । सांप्रतंविघ्नपरिहारद्वारापृथिव्यादिप्राप्तिमोक्षहेतुभूतसामैकदेशप्रतिपाद्यवस्वादिनिष्ठभगवदुपास्तिंशिष्यगुर्वाक्षेपसमाधानरूपाख्यायिकयाह ॥ **ब्रह्मवादिनइत्यादिना** ॥ अत्रप्रसिद्धवस्वादीनामेवअग्निवाय्वादिपरलोकद्वारादिमंत्रप्रतिपाद्यानांप्रातःसवनंप्रयच्छति । माध्यंदिनसवनंप्रयच्छंति । तृतीयसवनंप्रयच्छतीत्यादिना प्रातःसवनादिकर्तव्यसंपादकत्वमेवोच्यतइत्यन्यथाप्रतीतिपरिहारायखण्डतात्पर्यप्रमाणेनैवाह ॥ **वसुरुद्रेत्यादिना** ॥ आदितेयेषुआदित्येषुविश्वेषुदेवेषुभगवतिवस्वादिशब्दानांप्रवृत्तिनिमित्तस्वातंत्र्येणमुख्यत्वंवक्तुंईश्वरइत्युक्तं। प्रसिद्धवस्वादौचतच्छब्दवृत्तिरव्यक्ताधिकरणन्यायेनेतिसूचयितुंतेषुस्थितमित्युक्तं । मंत्राणांभगवत्परत्व

---

उ० । संप्रास्रवत्तद्यथाशंकुनासर्वाणिपर्णानिसंतृण्णान्येवमेतेनोंकारेणसर्वावाक्संतृण्णोंकारएवेद ꣳसर्वमोंकारएवेद ꣳसर्वं ॥२॥ **त्रयोविंशः खंडः** ॥ २३ ॥

भा० । वसुरुद्रादितेयेषुविश्वेषुस्थितमीश्वरं ।



मुपपादयितुंप्रभुमित्युक्तं । हरिरेवैतैर्मंत्रैःप्रार्थितोविघ्नपरिहारादीष्टदानेसमर्थोनेतरइतिभावः। दिवमंतरिक्षंभुवंच। अनेनप्रातःसवनंसंप्रयच्छंतीत्यादौप्रातःसवनादिकर्तव्यसंपादकत्वमेवनोच्यते । किंतुवस्वादयःस्वस्वामिकंप्रातःसवनादिकंतत्कालेकर्तव्यंनिर्विघ्नंसंपाद्य स्वस्वामिकपृथिव्यादिकमपिप्रयच्छंतीतिविवक्षितं। राज्यायविराज्यायस्वाराज्यायेतिमंत्रेषुपृथिव्यादिलोकप्राप्तेःप्रार्थितत्वात् । प्रार्थितादानेचतेषामप्रेक्षावत्त्वप्राप्तेरित्युक्तंभवति । नास्याब्रह्मविद्यायाःपृथिव्यादिलोकप्राप्तिरेवफलं अपितुमोक्षोपीतिपूर्ववद्व्यवस्थयाह ॥ **त्वज्ञइति** ॥ तुशब्दस्यपूर्वेणोत्तरेणचसंबंधः । ब्रह्मपरोक्षज्ञानीसन्यजमानोदिवंप्राप्नुयादपरोक्षज्ञानीसन् यजमानोमोक्षं तत्रत्यंसुखविशेषंप्राप्नुयादिति । तथाचवस्वादिस्थितहर्यनुसंधानेनयजमानोयज्ञादिकारी अन्यथायजमानस्य हर्यनुसंधानाभावे वरोलोकोभूरादिर्मोक्षश्च । ननुराज्यायेत्यादौपृथिव्यादिलोकप्राप्तिःप्रार्थितेत्ययुक्तं । तद्वाचकपदाभावादित्यतोराज्यादिपदमेवतद्वाचकमितिप्रमाणेनाह ॥ **राजानंपृथिवीलोकइति** ॥ नन्वेवंज्ञोमोक्षमित्ययुक्तं। मोक्षिलोकवाचकवैकुंठादिपदाभावादित्यतःपृथिव्यादीनामेवकतिपयमोक्षिलोकत्वमपीत्याह ॥ **एतेष्विति** ॥ एतेषुपृथिव्यादिषुलोकेषुमोक्षोमुक्तानां सुखंभोगविशेषः प्रमोदंतइतिवक्ष्यमाणत्वात् । विशेषिणामात्मत्वमात्रोपासनयोग्यानां। आत्मेत्येवपरंदेवमुपास्यहरिमव्ययं। केचिदत्रैवमुच्यंतेनोत्क्रामंतिकदाचन । अत्रैवचस्थितिस्तेषामित्यादेः । ननुयावच्छ्वेतंनगच्छति । योगीतावन्नमुक्तःस्यादित्युक्तेः

---

भा० । तन्नामानंहरिंमंत्रैर्लोकद्वारादिभिःप्रभुं । प्रार्थयित्वादिवंत्वज्ञोज्ञोमोक्षंप्राप्नुयात्तथा । यजमानोनान्यथातुलोकोस्यप्राप्यतेवरः । राजनंपृथिवीलोकेराज्यमित्युच्यतेबुधैः । विराज्यमंतरिक्षेतुस्वाराज्यंस्वर्गगंभवेत् । एतेषुमोक्षोपिभवेन्मानुषाणांविशेषिणां ।

कथमेतेषुमोक्षइत्यतउक्तंविशदमाह ॥ **श्वेतद्वीपमिति** ॥ तथेतिप्रमाणेप्रकृतसमुच्चयः । ततस्तेनविष्णुना । तुनाधरादिगतत्वेपि निर्दुःखत्वंनास्मदादिसाधारणमित्याह । भगवतोवस्वादिदेवतानामित्वेश्रुतिमप्याह ॥ **योदेवानामिति** ॥ चशब्दःपूर्वोक्तप्रमाणसमुच्चायकः । भगवतएव मुख्यतइतिशेषः । ननुमुमुक्षुभिर्भवतुभगवान्प्रार्थ्योनतुस्वर्गार्थिभिर्वस्वादिप्रार्थनयापितत्सिद्धेरित्यतस्तत्रप्रमाणमाह ॥ **त्रैविद्याइति** ॥ त्रैविद्यानाम येप्रतिकर्मभगवदनुसंधानरहिताः अवसानेस्वकृतमुत्तमबुद्ध्याभगवत्यर्पयंति ते । पूर्वप्रमाणसमुच्चयार्थश्चशब्दः । प्रार्थ्यएवेतिसंबंधः । स्वर्गार्थिभिरपीतिशेषः । ननुयदिस्वर्गार्थिभिरपिभगवान् प्रार्थ्यस्तर्हितेषामंतवत्फलंनस्यादित्यतस्तत्रकारणमाह ॥ **भगवत्स्वरूपस्येति** ॥ सम्यक्भगवत्स्वरूपापरिज्ञानादंतवत्फलं भवतीत्यत्रप्रमाणमाह ॥ **नतुमामिति** ॥ रागादंतवत्फलमित्यत्रापिप्रमाणमाह ॥ **गतागतमिति** ॥ ननुसम्यगपरिज्ञानादित्युक्तं सम्यक्ज्ञानंकीदृशंयदभावादंतवत्फलवत्त्वंत्रैविद्यानामित्याशंकायां विष्णुवैष्णवद्वेषाभावेतारतम्यज्ञानपुरःसरंविष्णुसर्वोत्तमत्वज्ञानमेवसम्यग्ज्ञानं । इदं चावश्यंश्रेयोर्थिनासंपाद्यमित्याशयेनान्यथानर्थानाह ॥ **सर्वोत्तमत्वस्येति** ॥ अज्ञानात् नास्तिताज्ञानात् । एवमुत्तरत्रापि । तमइत्यस्यविवरणमनुत्थानमिति । ननुब्रह्मादिद्वेषेभवतुतमः तेषांकादाचित्कापराधे

भा० । श्वेतद्वीपंतथागत्वाद्दृष्ट्वाविष्णुंचतेततः । अनुज्ञाताःप्रमोदंतेनिर्दुःखास्तुधरादिष्वितिच । योदेवानांनामधाएकएवेतिश्रुतेश्चभगवतएववस्वादिनामानि । त्रैविद्यामांसोमपाःपूतपापायज्ञैरिष्ट्वास्वर्गतिंप्रार्थयंतइतिवचनाच्चभगवानेवप्रार्थ्यः । भगवत्स्वरूपस्यसम्यगपरिज्ञानाद्रागाच्चतेषामंतवत्फलत्वं । नतुमामभिजानंतितत्त्वेनातश्च्यवंति ते । गतागतंकामकामालभंतइतिवचनात् । सर्वोत्तमत्वस्याज्ञानाद्विष्णोरंधंतमोभवेत् । तद्द्वेषात्किमुवक्तव्यंब्रह्मादिद्वेषतोपिवा । तारतम्यापरिज्ञानादनुत्थानंतमोभवेत् ।

कृतेतदपूजायांतानुद्दिश्यसम्यगग्निहोत्राद्यनुष्ठानेपिकिंतमएवफलमित्याशंकायांप्रसंगात्तत्राप्यनर्थांतरमाह ॥ अपराधकृते रित्यादिना ॥ निरयमेवगच्छतिनतमः । तुशब्दोनिरयेऽनित्यत्वंविशेषमाह । ननुविष्णुवैष्णवद्वेषशून्यंतारतम्यज्ञानपुरः सरंविष्णुसर्वोत्तमत्वज्ञानमेवसम्यग्ज्ञानं तदेवश्रेयःसाधनंचेत्तर्हिंपरोक्षताद्दशज्ञानवतांअस्मदादीनांइतरपुरुषार्थवत्कुतोनमो क्षइत्याशंकायामेतावन्मात्रंनमोक्षसाधनमित्याह ॥ अपरोक्षद्दशेरिति ॥ अनेनपश्येमत्वाराज्यायेत्याद्युपपादितं । ननुपूर्व पूर्वोक्तदोषविरुद्धहरिसर्वोत्तमत्वज्ञानादिगुणवतांपश्चादुक्तद्वेषादयोदोषाःकादाचित्काश्चेत्किंस्वकार्यकरणेशक्ताः नेत्याह ॥ पूर्व पूर्वगुणैरिति ॥ पूर्वपूर्वगुणैःपूर्वपूर्वोक्तदोषविरुद्धगुणैःहरिसर्वोत्तमत्वज्ञानादिभिःसहिताः उत्तरोत्तराःपश्चादुक्ताःद्वेषादयो दोषाःकादाचित्काइतिशेषः । स्वकार्यसाधनेनशक्ताः । नन्विदमयुक्तं । हरिसर्वोत्तमत्वज्ञान तत्स्नेह ब्रह्मादिस्नेह तारतम्यज्ञा नरूपगुणवतामपिकादाचित्काब्रह्माद्यपराधादयोदोषानरकादिकार्यकरणेशक्ताएवप्रमिताइत्यतउक्तस्यापवादमाह ॥ स्थानद्व येति ॥ हरिसर्वोत्तमत्वाज्ञानंतद्वेषश्चेत्येकंस्थानं । ब्रह्मादिद्वेषस्तत्तारतम्यापरिज्ञानंचेत्यपरंस्थानं । अथवाहरिसर्वोत्तमत्वाज्ञानं ब्रह्मादितारतम्याज्ञानंचमिथ्याज्ञानत्वेनक्रोडीकृतमेकंस्थानं । तदुभयद्वेषश्चद्वेषत्वेनैकीकृतमपरंस्थानं । तथाचैतत्स्थानद्वयोत्तरे तत्पश्चादुक्ताःकादाचित्कब्रह्माद्यपराधादयोदोषाः । पूर्वोक्तगुणवतामपिस्वकार्यकरणेशक्ताः । अत्रोदाहरणमाह ॥ मोक्षइति ॥

भा० । अपराधकृतेस्तेषांनिरयंत्वेवगच्छति । पूजायाअकृतेस्तेषांनवर्णेषुजनिर्भवेत् । सम्यक्कर्मानुष्ठानात्सर्गेनैवोपगच्छति । अपरोक्षद्दशेरौन्यान्मोक्षंनैवोपगच्छतीतिच । पूर्वपूर्वगुणैर्दोषानशक्ताउत्तरोत्तराः । स्थानद्वयोत्तरेशक्तामोक्षोनानपरोक्षिणः ।

हरिसर्वोत्तमत्वज्ञानादिसम्यक्कर्मानुष्ठानांतगुणवतामपिजिज्ञासूनामपरोक्षाद्दशेरौन्याख्यदोषःस्वकार्यमोक्षाभावसंपादकोयथेत्यर्थः । ननूक्तज्ञानवतामपरोक्षज्ञानंकथंनभवतीत्यपेक्षायामाह ॥ **विरुद्धरागिणामिति** ॥ तर्हिकदाभवेदित्यतआह ॥ **यावदिति** ॥ रागविनाशःनिषिद्धरागविनाशः । विरक्तःअनिषिद्धैहिकामुष्मिकविषयाभिलाषाशून्यः । अनेनरागादंतवत्फलमित्येतदुपपादितंभवति । अप्रमत्तश्चेत्युक्तमप्रमादमाह ॥ **अविस्मृतिरित्यादिना** ॥ द्वितीयंसदेतिपदंसर्वत्रसंबध्यते । उद्योगात् । श्रवणात् । विचारतश्चशास्त्राभ्यासइतिसंबंधः । शास्त्राभ्यासोसकृदावर्तनमित्यर्थः । ननुशास्त्रंनामकिं यस्याभ्यासःकार्यइत्यतआह ॥ **शास्त्रमिति** ॥ चोवधारणे । शास्त्रंतुपंचवेदाएवेतिसंबंधः । तुशब्दोमोक्षोपयोगित्वंविशेषमाह । अवधारणेनपाशुपतादिव्यावृत्तिः । ननुऋगादयश्चत्वारोवेदाःप्रसिद्धाः । पंचमोवेदोनामकइत्यपेक्षायामाह ॥ **भारतमिति** ॥ शैवब्राह्मपुराणव्युदासायभागवतमित्युक्तं । भगवद्विषयमित्यर्थः । तथाचभागवतादिवैष्णवपुराणमेवपंचमवेदकोटिनिष्ठमितिभावः । अपजहि परिघमितिमंत्रत्रयोक्ताःपरिघाःपापविशेषाइतिप्रतीतिंवारयन्तत्तात्पर्यमाह ॥ **त्रिलोकेति** ॥ त्रिलोकप्राप्तिप्रतिबंधकीभूताः प्रसिद्धार्गलतुल्याइत्यर्थः । नन्विदानीमस्मदादीनांपृथिवींप्राप्तानांप्रतिबंधकपरिघादर्शनात्कथंत्रयःसंतीत्युक्तं नचमरणानंतरमु

भा० । विरुद्धरागिणांनैवह्यपरोक्षदृशिर्भवेत् । यावद्रागविनाशःस्याद्विरक्तोभक्तिसंयुतः । सर्वदैवाप्रमत्तश्चपश्येदेवहरिंपरं । अविस्मृतिःसदाविष्णोरन्यथाज्ञानवर्जनं । शास्त्राभ्यासःसदोद्योगाच्छ्रवणाच्चविचारतः । निषिद्धकर्मणांत्यागःस्वधर्मस्यकृतिःसदा । अप्रमादइतिप्रोक्तःशास्त्रंवेदास्तुपंचच । भारतंपंचरात्रंचमूलरामायणंतथा । पुराणंभागवतंचैवपंचमोवेदउच्यतइतिच । त्रिलोकप्राप्तिपरिघास्त्रयःसंतिसनातनाः । तेषामग्न्यादिगोविष्णुरपहंतास्मृतोभवेत् ।



पलभ्यंतइतिवाच्यं । सर्वेषामपिभूतानामेवंप्रार्थनाभावेपिलोकत्रयान्यतमप्राप्तेःसिद्धत्वेनपरिघाऽपनयनस्याप्रार्थ्यत्वादित्यतआह ॥ **मृतइति** ॥ तथाचलोकप्राप्तेःसिद्धत्वेपितद्गतसुखभोगायपरिघाऽपनयनंप्रार्थ्यमेवेतिभावः । एषहवैयज्ञस्यमात्रांवेद यएवंवेदेत्यत्रयज्ञस्यमात्रांयाथात्म्यंवेदेत्यन्यथाप्रतीतिनिरासायतत्पदंप्रमाणेनव्याचष्टे ॥ **यस्त्रातीति** ॥ तुशब्दोवधारणे । हरिरेवयज्ञमात्रा नयज्ञयाथात्म्यमिति । अनेनयज्ञंमातिनिर्मातीतियज्ञमा यजमानस्तंत्रातीतियज्ञमात्राहरिरित्युक्तंभवति । वेदयएवंवेदेत्यंशंव्याचष्टे ॥ **तमेवमिति** ॥ योभक्तोएवंपूर्वोक्तप्रकारेणवेत्तिसएवतंवेत्तीतिसंबंधः । तज्ज्ञानंनमुख्यप्रयोजनमित्यतस्तत्साध्यंश्रुत्यभिप्रेतंप्रयोजनमाह ॥ **यातीति** ॥ मुक्तिंचेतिसंबंधः । एवशब्दः सइत्यनेनान्वेति । एवंचयएवमुक्तरीत्यावेदएषवैएषएवयज्ञस्यमात्रांभगवंतंवेद । ततश्चतत्प्रसादादज्ञश्चेत्स्वर्गंज्ञश्चेन्मुक्तिंयातीत्येतद्वाक्यंव्याख्यातंभवति ॥ खं० २४ ॥ ततश्चायं खंडार्थः । ब्रह्मवादिनः परब्रह्मवादिनःशिष्यावदंति । गुरून्प्रतीतिशेषः । किं यत् यदि प्रातःसवनंवसूनां वसुस्वामिकं अतो भूर्लोकोपिवसूनामेव । प्रातःसवनाधिपतीनामेवभूलोकाधिपतित्वात् । माध्यंदिनंसवनंरुद्राणामतोंतरिक्षलोकोपिरुद्राणामेव । माध्यंदिनसवनाधिपतीनामेवांतरिक्षलोकाधिपतित्वात् । तृतीयसवनमादित्यानांविश्वेषांदेवानांचातःस्वर्गलोकोपितेषामेव ।

भा० । मृतःसन्सुखभोगाययत्रगच्छतितत्रह । एकैकःपरिघोग्रेस्याद्गतेतस्मिंस्तुविष्णुना । यजमानःपृथिव्यादिलोकान्भोगाययातिहीतिच । यस्त्रातियज्ञमातारंयज्ञमात्राहरिस्तुसः । तमेवंवेत्तियोभक्तोयातिस्वर्मुक्तिमेवचेतिच ॥ २४ ॥

उप० । ब्रह्मवादिनोवदंतियद्वसूनांप्रातःसवनꣳरुद्राणांमाध्यंदिनꣳसवनमादित्यानांविश्वेषांदेवानांचतृतीयसवनंक्वतर्हियजमानस्यलोकइति

तृतीयसवनाधिपतीनामेवस्वर्गलोकपतित्वात् । तर्हिंक्वयजमानस्यज्ञस्याज्ञस्यवालोकोयदर्थमयंयजतेभूलोकादीनामन्याक्रांत
त्वात् । नचाज्ञस्यलोकांतराभावेपिज्ञानिनोन्यएवलोकोभविष्यतीतिवाच्यं । सच्चिदादिचतुर्गुणोपासकमनुष्योत्तमादीनामन्य
लोकसंभवेपिआत्मत्वमात्रोपासकानांमुक्तानामेष्वेवलोकेषुस्थित्यवश्यंभावात् । नचैवंयावच्छ्वेतंनगच्छतीत्यादिविरोधः । सकृ
च्छ्वेतद्वीपगमनाभ्युपगमादितिभावः । इतिवदंतीत्यन्वयः । तत्रगुरुभिरुक्तंसमाधानप्रकारमाह ॥ सयइति ॥ यःपुरुषःतद्व
क्ष्यमाणलोकप्राप्तिप्रकारंनविद्यात्सकथंकुर्यात् । यज्ञादिकमितिशेषः । यतोवक्ष्यमाणलोकप्राप्तिप्रकाराज्ञानेयज्ञादिकर्तृत्वमेवा
नुपपन्नमथकस्माद्विद्वान्कुर्यात् ॥ १ ॥ किंकर्तव्यमित्यतआह ॥ पुरेति ॥ सयजमानःप्रातरनुवाकस्यशस्त्रस्योपाकरणादुपक्र
मात्पुरा गार्हपत्यस्यजघनेनपश्चिमदेशइतियावत् । उदङ्मुखःउपविश्यवासवं वसुगतभगवद्देवताकंसामाभिगायति।गानमंत्रमाह॥
लोकेति ॥ हेवस्वंतर्गतभगवन्त्वं लोकद्वारं भूलोकप्राप्तिद्वारं अपावार्णू३अपावृणु अपगतावरणंकुरु। तेनद्वारेणवयंत्वांपश्येम
किमर्थंराज्यायेतिसंबंधः । कंपस्त्वाधिक्यार्थः । हुमित्यादिर्मंत्रबीजाक्षरं आधिक्येनपृथिवीलोकेराजनायेत्यर्थः । इतिसामाभि
गायतीत्यन्वयः । अथोक्तसामगानानंतरं । जुहोतिजुहुयात् । होममंत्रमाह ॥ नमइति ॥ लोकक्षितेलोकनिवासिने । क्षिनि
वासगत्योरितिधातुः। तदेवनिर्देशेनाह ॥ पृथिवीक्षितइति ॥ अग्नये वसुस्थितायादनादग्निनामकायभगवते नमोऽस्तु । मेमह्यं ।

उ० । समस्तंनविद्यात्कथंकुर्यादथविद्वान्कुर्यात् ॥ १ ॥ पुराप्रातरनुवाकस्योपाकरणाज्जघनेनगार्हपत्यस्योदङ्मुखउपविश्यवासवंसामाभिगायतिलो ३ कद्वारमपावार्णू ३
पश्येमत्वावयꣳराआआआआहुंआआआज्या ३ यो ३ आआआआइत्यथजुहोतिनमोग्नयेपृथिवीक्षितेलोकक्षिते

यजमानायलोकंयजमानप्राप्तियोग्यंलोकंविंदप्रापय । कोसौयजमानप्राप्तियोग्योलोकइत्यतआह ॥ एषइति ॥ एषवैभूलोकरूपोवैयजमानस्यलोकः । कुतः । अत्र भूलोकंप्रति । यजमानोहमायुषःपरस्तान्मरणानंतरमेतास्मि अतस्तंलोकंविंदेत्यर्थः । अत्रयजमानोयद्यपरोक्षज्ञानीतर्हिंचरमदेहत्यागरूपमरणानंतरं यद्यज्ञःतर्हिंप्रसिद्धमरणानंतरमितिविवेकः । स्वाहेत्यग्नौजुहोति । तदनंतरंहेवस्वंतर्गतभगवन्प्रार्थनादिनाप्रसन्नस्त्वंपरिघंभूलोकभोगविशेषप्राप्तिप्रतिबंधकीभूतंसनातनंप्रसिद्धार्गलसहितंयदस्तितदपजहिअपनयेत्युक्त्वोत्तिष्ठतिउत्तिष्ठेत् । एवंकृतेकिंस्यादित्यतआह ॥ तस्माइति ॥ तस्मैएवंप्रातरनुवाकात्पुरा यजमानायवसवःवसुनामकाःवसुस्थाःभगवद्रूपविशेषाःप्रसन्नाःसंतःप्रातःसवनंतत्कालकर्तव्यंसंप्रयच्छंतिनिर्विघ्नेनसंपादयंतीत्यर्थः।ततश्चभूलोकंतद्गतभोगविशेषंचसंप्रयच्छंतीत्यर्थः । एवमुत्तरत्रापियोजनाद्रष्टव्या । आग्नीध्रीयस्यदक्षिणाग्नेः रौद्रंरुद्रस्थरुद्रनामकभगवद्देवताकं।विराज्यायअंतरिक्षेविशेषेणराजनायवायवेरुद्रांतर्गताय ज्ञानादायुष्ट्वाद्वायुनामकायपरिघमंतरिक्षलोकप्रतिबंधकीभूतंयत्प्रसिद्धार्गलतुल्यमस्तितन्माध्यंदिनसवनंसंप्रयच्छंति।ततश्चांतरिक्षंतद्गतभोगविशेषंचसंप्रयच्छंतीतिभावः । आदित्यं आदित्यांतर्गतादित्यनामकभगवद्देवताकं वैश्वदेवंविश्वेदेवगतभगवद्देवताकं।स्वाराज्यायस्वर्गलोकेआधिक्येनराजनाय । अथादित्यसामगानानंतरं

---

उ० । लोकंमेयजमानायविंदैषवैयजमानस्यलोकएतास्म्यत्रयजमानःपरस्तादायुषःस्वाहापजहिपरिघमित्युक्त्वोत्तिष्ठतितस्मैवसवःप्रातःसवनꣳसंप्रयच्छंत्रिपुरामाध्यंदिनस्यसवनस्योपाकरणाज्जघनेनाग्नीध्रीयस्योदङ्मुखउपविश्यसरौद्रंसामाभिगायतिलो३कद्वारमपावार्णू३पश्येमत्वावयंविरा३आआआआहुंआआआज्या३यो३आआइत्यथजुहोतिनमोवायवेंतरिक्षक्षितेलोकक्षितेलोकंमेयजमानायविंदैषवैयजमानस्यलोकएतास्म्यत्रयजमानःपरस्तादायुषःस्वाहापजहिपरिघमित्युक्त्वोत्तिष्ठतितस्मैरुद्रामाध्यंदिनꣳसवनꣳसंप्रयच्छति

वैश्वदेवंसामाभिगायेत् । साम्राज्याय स्वर्गलोकएवसम्यग्राजनाय । तृतीयसवनंसंप्रयच्छंति ततश्च स्वर्गलोकंतद्गतभोगविशेषंच संप्रयच्छंतीतिभावः । एवंज्ञानिनःफलमाह ॥ एषइति ॥ योविष्णुभक्तःएवमुक्तरीत्यावेद एषवै एषएव यज्ञस्यमात्रां यज्ञंमातिनिर्मातीतियज्ञमेतियजमानउच्यते । तंत्रातीतियज्ञमात्राभगवान्तंवेद ततश्चतत्प्रसादादज्ञश्चेत्स्वर्गंज्ञश्चेन्मुक्तिंयातीतिभावः।द्विरुक्तिरध्यायार्थावधारणार्था ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितश्रीमच्छंदोगोपनिषद्भाष्यस्यटीकायां श्रीमद्वेदव्यासतीर्थपूज्यपादशिष्यवेदेशभिक्षुविरचितायांपदार्थकौमुद्यांद्वितीयाध्यायःसमाप्तः ॥ २ ॥



उ० । पुरातृतीयसवनस्योपाकरणाज्जघनेनाहवनीयस्योदङ्मुखउपविश्यसआदित्यँसवैश्वदेवꣳसामाभिगायतिलो३कद्वारमपावार्णू३पश्येमत्वावयंसाम्रा३आआआआहुंआआआज्या३यो३आआइत्यथजुहोतिनमआदित्येभ्यश्चविश्वेभ्यश्चदेवेभ्योदिविक्षिद्भ्योलोकक्षिद्भ्योलोकंमेयजमानायविंदतैषवैयजमानस्यलोकएतास्म्यत्रयजमानःपरस्तादायुषःस्वाहपहतपरिघमित्युक्त्वोत्तिष्ठतितस्माआदित्याश्चविश्वेचदेवास्तृतीयसवनंसंप्रयच्छंतिएषहवैयज्ञस्यमात्रांवेदयएवंवेदयएवंवेद ॥ २ ॥ चतुर्विंशःखंडः ॥ २४ ॥



श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ सूर्यादिस्थंहरिंनानारूपंवस्वादिसेवितं । सूर्यादिपालितद्वारंवंदेऽध्यात्माधिदैवगं ॥ १ ॥ पूर्वाध्यायांतेवसुरुद्रादित्यानांप्रातःसवनाद्याधिपत्यमस्तीत्युक्तं । तच्चतैर्नस्वमहिम्नाप्राप्तमितिवक्तुं तदुपास्यस्यआदित्यांतर्गतस्यभगवतोमहिमानंनिरूपयत्यस्मिन्नध्याये ॥ असौवाआदित्योदेवमध्वित्यादिना ॥ काव्यवदादित्यस्यप्रसिद्धमधुसाम्यमेवात्रोच्यतइतिव्याख्याननिरासाय ब्रह्मविद्यात्वंसंपादयन्खण्डपंचकंप्रमाणेनैवव्याचष्टे ॥ यआदित्यगतइत्यादिना॥सएव नत्वन्यइत्यर्थः । अनेनश्रौतोवैशब्दोव्याख्यातः । केननिमित्तेनभगवान्मधुनामेत्यतआह ॥ मद्धिरिति ॥ मदोधीयतेऽस्मिन्निितिमदधिः । मदाश्रयइतियावत् । सएवमध्वितिप्रोक्तइत्यर्थः । निर्वचनत्वाद्दशब्दस्यलोपइकारस्योकारइतिभावः । मदशब्दस्यमत्ततार्थत्वप्रतीतिवारणायविवक्षितार्थमाह ॥ मदइति ॥ एवंसंक्षेपतोमधुशब्दंनिरुच्य तद्विशदयितुंमदपदेनकथंसुखंलब्धमित्यतस्तावदक्षरार्थकथनपुरःसरंतद्दर्शयति ॥ अइतीति ॥ मदशब्दांतर्गतेनअइत्यनेनेत्यर्थः ॥ ज्ञानततिरिति ॥ माङ्मानइतिधातोर्मशब्दस्यज्ञानवाचित्वात् । तनुविस्तारइतिधातोश्चतकारस्यततिवाचित्वादित्यर्थः। नन्वेवंआधिक्येनज्ञानस्यततिरित्यर्थोलब्धः । नचसुखंतादृशमित्यतआह ॥ तद्वत्तेति ॥ नात्रज्ञानस्यततिरितिविवक्षितं । अपितुज्ञानेनततिःपूर्णत्वमिति । तथाचज्ञानवत्त्वंलब्धं । तदपिविषयत्वेनैवविवक्षितमितिभावः । नन्वथापीदमत्युक्तं सर्वेप्सितादाधिक्येनभ्रमादिसाधारणपरोक्षज्ञानमात्रविषयस्यसुखत्वासंभवात्साक्षिभास्यत्वात्तस्येत्यतआह ॥ तेनेति॥ ज्ञानशब्देनेत्यर्थः।

भा० । यआदित्यगतोविष्णुःसएवमधुनामकः । मदधिर्मध्वितिप्रोक्तोमदःसुखमिहोच्यते । अइत्याधिक्यमुद्दिष्टंमज्ज्ञानततिरुच्यते । तद्वत्तातातिरुद्दिष्टातेनानुभवईरितः ।

अनुभवः साक्षी । केचित्तु ज्ञानवत्त्वमेवविशदमाह ॥ तेनेति ॥ तेन ज्ञानततिशब्दस्यज्ञानवत्त्वार्थकत्वेन अनुभवोऽनुभवविषयः । ज्ञानततिशब्दार्थईरितइत्यर्थइत्याहुः । अक्षरार्थमुक्त्वापदार्थमाह ॥ अधिकइति ॥ अधिकः । आधिक्येन सर्वस्मादीप्सितादितियोग्यतयासम्बध्यते । सोयंमदइतिप्रोक्तः । सुखमेवहितथाविधमितिशेषः । एतदुपपादयितुंवनितादेर्विषयस्यनतथात्वमित्याह ॥ सर्वंहीति ॥ सर्ववनितादि हियस्मात्सुखसाधनं । सुखोपाधिकत्वेनैवज्ञायते । तस्मादुक्तंयुक्तमित्यर्थः । एवंमदशब्दार्थमुक्त्वामधुशब्दार्थमाह ॥ तत्पूर्णइति ॥ तच्छब्देनमदपरामर्शः । ननुमदधिरेवमध्वित्युक्तरीत्यामदाश्रयत्वमात्रंलभ्यते । नतुतत्पूर्णत्वं । तद्वाचकाभावादित्यतआह ॥ तृतीयइति ॥ इकारापेक्षयातृतीयउकारस्तदादेशभूतोऽतिशयार्थकः पूर्णत्ववाचीत्यर्थः । तृतीयोतिशयइतिमहाव्याकरणसूत्रादितिभावः । एवंमधुशब्दंनिरुच्येदानींदेवमधुशब्दार्थमाह ॥ देवानामिति ॥ उपजीव्यत्वंषष्ठ्यर्थइतिभावः । प्रसिद्धादित्यप्रतीतिवारणायादित्यशब्दमपिभगवतिनिर्वक्ति ॥ आदित्वादिति॥ आदित्वादित्यादिशब्दार्थः । आततत्वादिततिकारार्थः । ज्ञानरूपत्वतइतियकारार्थः । नन्वेवंमधुशब्दस्यभगवन्मात्रपरत्वेतस्यद्यौरेवतिरश्चीनवंशइत्यादिना प्रसिद्धमध्वपेक्षितसाम्योक्तिरयुक्तास्यादित्यतस्तदपिविवक्षितमित्याह ॥ प्रसिद्धेति ॥ चशब्दोव्याख्यानांतरसमुच्चयार्थः । देवानांमध्विवमध्विततर्पकत्वेनसाम्यान्मधुत्वमत्रेतिज्ञातव्यं । यस्मात्सःप्रसिद्धमधुवत्तस्मात्तिरोवंशा

भा० । अधिकोनुभवोयस्यसर्वस्मादीप्सितादपि । सोयंमदइतिप्रोक्तःसर्वंहिसुखसाधनं । तत्पूर्णोमधुनामास्यात्तृतीयोतिशयार्थकः । देवानामुपजीव्यत्वात्सदेवमधुनामकः । आदित्वादाततत्वाच्चज्ञानरूपत्वतस्तथा । आदित्यइतिसंप्रोक्तःप्रसिद्धमधुवच्चसः । तिरोवंशादिसंयुक्तो

दिसंयुक्तोवाच्योतस्तदत्रोच्यतइत्यर्थः । तस्यद्यौरेवतिरश्चीनवंशइत्येतदचेतनस्यद्युलोकस्यैवतिरोवंशत्वमुच्यतइतिप्रतीतिवारणायव्याचष्टे ॥ **द्युनाम्नीति** ॥ प्रकाशादिगुणैर्द्युनाम्नीश्रीस्तुश्रीरेवनलोकः । तर्हिकथंलोकेवृत्तिरित्यतस्तत्संबंधादित्यभिप्रेत्याह ॥ **द्युसंस्थितेति** ॥ एवमुत्तरत्रापिद्रष्टव्यं । साचतिरोवंशइतिप्रोक्ता तिरोवंशशब्दवाच्यातत्स्थानीयाचेत्यर्थः । तदपेक्षितंसाम्यमाह ॥ **वायोरिति** ॥ वायोश्चापूपत्वेनवक्ष्यमाणत्वादपूपाश्रयत्वेनसाम्यमितिभावः । अंतरिक्षमपूपइतिवाक्यमचेतनमात्रपरत्वपरिहारायव्याचष्टे ॥ **मध्वपूपइति** ॥ अंतरिक्षापूपशब्दवाच्योमारुतोमध्वपूपत्वेनविवक्षितइत्यर्थः । तस्यप्रसिद्धापूपसाम्यमाह ॥ **तस्मिन्निति** ॥ मधुत्वेनविवक्षितविष्णुस्थानत्वान्मधुस्थानत्वेनसाम्यमितिभावः । मारुतस्यांतरिक्षशब्दवाच्यत्वंकेननिमित्तेनेत्यतआह ॥ **सइति** ॥ समारुतः मरीचयःपुत्राइत्येतत् । मरीचयोरश्मयः । रश्मिस्थाआपोभौमाइतिव्याख्याननिरासायसम्यग्व्याख्यातुंतदपेक्षितमाह ॥ **वस्वाद्याइति** ॥ आद्यपदेनरुद्रादित्यादयोग्राह्याः । वक्ष्यंतइतिशेषः । इदानींतद्वाक्यंव्याख्याति ॥ **तत्पुत्राइति** ॥ अनेनमरीचयः सूर्यमरीचिस्थाःमरीच्याद्याऋषयःपुत्राःभ्रमरपुत्रस्थानीयाइतिव्याख्यातंभवति । सूर्यरश्मिषुसंस्थिताइतिनाडीस्थत्वेनसाम्यमुपपादयितुंश्रियस्तिरोवंशस्थानीयत्वेतच्छब्दनिर्वचनलब्धधर्मेणापिसाम्यमाह ॥ **तिर्यक्स्थित्वेति** ॥ किंबलाद्वशेकुर्यादित्यतउक्तंभक्त्यैवेति । तिरोवंशस्तच्छब्दवाच्या तत्स्थानीयाचेत्यर्थः ।

---

भा० । द्युनाम्नीचद्युसंस्थिता । प्रकाशादिगुणैःश्रीस्तुवायोराश्रयरूपतः । तिरोवंशइतिप्रोक्तामध्वपूपस्तुमारुतः । तस्मिन्सन्निहितोविष्णुर्विशेषेणयतःसदा । सोंतरिक्षमितिप्रोक्तःस्वांतःसम्यग्घरीक्षणात् । अंतरिक्षस्थितश्चासौवस्वाद्यामधुकारिणः । तत्पुत्रास्तुमरीच्याद्याःसूर्यरश्मिषुसंस्थिताः । तिर्यक्स्थित्वावशेकुर्याद्यस्माद्देवीरमाहरिं ।

केयंदेव्यास्तिर्यक्स्थितिरित्यतआह ॥ **तिर्यक्त्वमिति** ॥ साम्योपपादनायप्रसिद्धवंशोपितच्छब्दंतथैवनिर्वक्ति ॥ **तिर्यक्स्थित्वेति** ॥ स्वसंस्थं मध्वपूपं अनेनवशयतीतिवंशइतिनिर्वचनंसूचितं । अन्यद्योग्यतयालब्धमितिद्रष्टव्यं । वंशइत्युच्यतइतिशेषः । मारुतस्यप्रसिद्धापूपसाम्येयन्मध्वाश्रयत्वंनिमित्तमुक्तं तदप्यपूपशब्दनिर्वचनलब्धमेवेत्याह ॥ **यस्मिन्निति** ॥ अप्शब्दार्थआप्यमिति । अनेनअप्आप्यंउपउपस्थितंयस्मिन्नसावपूपइतिनिर्वचनंकृतंभवति । नन्वेतावतापिमधुभूतविष्णुस्थानत्वंकथंलब्धमित्यतआह ॥ **आप्यइति** ॥ मुक्तैःप्राप्यत्वादितिभावः । साम्यमुपपादयितुं प्रसिद्धमध्वपूपेप्येतदेवनिर्वचनमित्यभिप्रेत्यतत्रविवक्षितमाप्यमाह ॥ **मध्वाज्यादीति** ॥ आज्यादिमधु प्रसिद्धगं। प्रसिद्धमध्वपूपगमित्यर्थः । आप्यशब्दोलिंगव्यत्ययेनानुवर्तते । अविकारत्वादितिभावः । तस्ययेप्रांचोरश्मयइत्यादिवाक्यं प्रसिद्धमधुवच्चसइतिव्याख्यानपक्षेस्पष्टं । तथाहि । अस्यादित्यस्ययेप्रांचोरश्मयःप्राच्यांदिशिगतारश्मयस्ताएवास्यमध्वपूपस्यप्रांचोमधुनाड्यःप्राचीदिग्गतमध्वाधारच्छिद्राणीवेत्यर्थः । एवंदक्षिणारश्मयइत्याद्यपियोज्यमितिकेवलंभगवत्परत्वपक्षेतद्वाक्यजातंवासुदेवपरत्वेनव्याचष्टे ॥ **प्राच्यरश्मिष्विति** ॥ एवंसंकर्षणादयोपियेस्यदक्षिणारश्मयइत्यादावुच्यंतइतिज्ञेयं अतएवस्वरूपांशैरितिवक्ष्यति । नाडीशब्दमपितस्मिन्निर्व

भा० । भक्त्यैवातास्तिरोवंशस्तिर्यक्त्वंप्रणतिःस्मृता । तिर्यक्स्थित्वास्वसंस्थंतुवशीकुर्याद्यतस्ततः । वंशस्तिरश्चीनोन्योपियस्मिन्नाप्यमुपस्थितं । सोपूपआप्योभगवान् मध्वाज्यादिप्रसिद्धगं । प्राच्यरश्मिषुसंस्थस्तुरतिशंमानरूभतः । प्राच्यरश्मिरितिप्रोक्तोवासुदेवाभिधोहरिः ।



क्ति ॥ **एतद्विनेति** ॥ अंशो वासुदेवादिः । कःकिंप्राप्तुंएतद्विनानालमित्यतउक्तंविशदयति ॥ **स्वरूपांशैरिति** ॥ अंशिनंमूलरूपंप्राप्तुंप्रापिताअधिकारीस्वरूपांशैर्वासुदेवादिभिर्विनानालंनसमर्थोहीत्यर्थः । एवमिदंवाक्यपंचकमादिवाक्यंचदिङ्मात्रप्रदर्शनायभगवन्मात्रपरतयाव्याख्यातं । अवशिष्टानांवाक्यानांभगवन्मात्रपरत्वप्रकारस्तुप्रमाणांतरादवसेयइतिज्ञेयं । ऋचएवमधुकृतो यजूंष्येवमधुकृतः सामान्येवमधुकृतो अथर्वांगिरसएवमधुकृतः गुह्याएवादेशाःमधुकृतइतिवाक्यपंचकंमधुदृष्टांतपक्षेशब्दविशेषपरतावारणायक्रमेणव्याचक्षाणआदिवाक्यंतावद्व्याचष्टे ॥ **ऋग्वेदेत्यादिना** ॥ वसवएव तुविशेषेण ऋचोऋक्शब्दवाच्याः नशब्दविशेषाः । तत्रहेतुःऋग्वेदमानिनइति । अभिमानिनिशब्दस्यमुख्यत्वादितिभावः । हेत्वंतरमाह ॥ **अर्च्यत्वादिति** ॥ प्रथमंप्रातःसवनेविशेषादर्च्यत्वाच्चऋचइतिसंबंधः । चशब्दौपरस्परहेतुसमुच्चायकौ । द्वितीयवाक्यंव्याचष्टे॥ **यज्ञेत्यादिना** ॥ इंद्राद्याःरुद्रायजुरुद्दिष्टाः । यजुःशब्दवाच्याः । तत्रनिमित्तंयज्ञदेवताइति । अनेनयाज्यत्वंयजुःशब्दप्रवृत्तिनिमित्तमुक्तंभवति । इंद्रस्यरुद्रेषुप्रवेशःकुतइत्यतआह ॥ **इंद्रसखाइति** ॥ यतःकारणाद्रुद्राःइंद्रसखास्ततइंद्रस्यरुद्रेषुप्रवेशइत्यर्थः । इंद्रसहायतइतिक्वाचित्कःपाठः । तत्रइंद्रसहायत्वतइत्यर्थः । सचेंद्रोनप्रसिद्धइत्याह ॥ **इंद्रशब्दोदितइति** ॥ ननुवायोरिंद्रत्वेनतस्यरुद्रांतर्भावः । याज्यत्वाभावेनयजुःशब्देनग्रहणानुपपत्तेरित्याशंकायामितररुद्रापेक्षयातस्मिन्नेवमुख्यंयाज्यत्वमस्तीत्याह

भा० । एतद्विनानालमितिनाडीत्यंशउदाहृतः । स्वरूपांशैर्विनाप्राप्तुंनालंहिप्रापितांशिनं । ऋग्वेदमानिनश्चैववह्वयाद्यावसवस्त्वृचः । अर्च्यत्वात्प्रथमंचैवविशेषाद्यज्ञदेवताः । इंद्राद्यायजुरुद्दिष्टारुद्राइंद्रसखायतः । इंद्रशब्दोदितोवायुः

॥ **सयाज्यइति** ॥ सःमाध्यंदिनेसवनेसोमभुजांरुद्राणांपुरःपूर्वयाज्योयतोऽतउक्तमुपपन्नमित्यर्थः । अत्रेंद्रशब्देनप्रसिद्धेंद्रएववा
च्यःकिंनस्यादित्यतआह ॥ **सहीति** ॥ अत्ररुद्रांतर्गतोहींद्रःशंकरादिरुद्रमुख्यएववाच्यः । इंद्रेणमुखेनेतिवक्ष्यमाणत्वात् ।
शंकरपूर्वाणांरुद्राणांमुख्यश्चसवायुरेवप्रसिद्धोनपुरंदरइत्यर्थः । तृतीयंवाक्यंव्याख्याति ॥ **सामनामानइति** ॥ तत्रनिमित्तमा
ह ॥ **मासशइति** ॥ एकैकंमासंएकैकआदित्योभुंक्तेइतिद्वादशमासभोगिनोद्वादशादित्याइतिसमभोगात्सामनामानइतिभावः ।
वरुणेनमुखेनेत्यत्रापिआदित्याधिपतित्वेनोक्तोवरुणोनप्रसिद्धइत्याह ॥ **इंद्रइति** ॥ पुरंदरइत्यर्थः । ननुवरुणशब्देनान्यत्ररूढे
नकथंपुरंदरलाभइत्यतोयोगेनेत्याह ॥ **यज्ञेष्विति** ॥ ननुप्रसिद्धएववरुणःकिंनस्यादित्यतःपूर्ववद्बाधकमाह ॥ **आदित्याना
मिति** ॥ अत्रवरुणइतरादित्यापेक्षयामुख्यएवग्राह्यः । अन्यस्यतदाधिपत्यासंभावत् । आदित्यानामधिपतिश्चपुरंदरएवप्रसि
द्धोनाप्पतिरितिभावः । नन्विदमयुक्तं । इतरादित्येषुविष्णोरपिसत्त्वेनास्यतदाधिक्यासंभवादित्यतउक्तं । विष्णुनियोजितोहिस
इतिविष्णुनैवस्वेतरादित्याधिपतित्वंतस्यनियोजितमितिभावः । ननुसर्वादित्याधिपतित्वाद्विष्णुरेववरुणशब्देनविवक्षितःकिंन
स्यात् । अत्रोपासकाएवदेवामधुकृत्त्वेनविवक्षिताः । विष्णुस्तूपास्योमधुभूतः वरुणेनमुखेनेतिचोपासकस्यैवेतरोपासकमुख्य
त्वंविवक्षितं । अतोवरुणशब्देनेंद्रएवग्राह्योनविष्णुरित्याह ॥ **विष्णुरिति** ॥ युतःप्रविष्टः ॥ क्वचिन्नोपासकगणैर्युतइतिपाठः ।

भा० । सयाज्यःसोमभुक्पुरः । सहिशंकरपूर्वाणांरुद्राणांमुख्यएवच । सामनामानआदित्यामासशःसमभोगतः । इंद्रोवरुणउद्दिष्टोयज्ञेषुव्रियतेयतः । आदित्यानामधिप
तिःसहिविष्णुनियोजितः । विष्णुस्तूपास्यरूपत्वान्नोपासकगणेयुतः ।

तत्रोपासकगणांतर्गतोनभवतीत्यर्थः। चतुर्थवाक्यंव्याख्याति॥इतिहासपुराणानामिति॥अनेनाथर्वांगिरसइतिपदंइतिहासपुराणोपलक्षकमितिसूचितंभवति। अथर्वांगिरसांचसोमाद्याएवेतिसंबंधः। अभिमानिनइतिहेतुगर्भं। यतोभिमानिनोतोथर्वांगिरोनामकः॥ अपीति॥ अपिशब्दःइतिहासपुराणनामकत्वसमुच्चयार्थः। योगेनापिअथर्वांगिरोनामकत्वंतेषामाह ॥ अधरमिति॥ यतस्तेधरंवृष्टिंवर्तयेयुस्ततोथर्वाणः। तथांगानांरसाःनियामकाःयतस्ततोंगिरसः। अथर्वाणश्चांगिरसश्चेत्यथर्वांगिरसोथर्वांगिरोनामकाइत्यर्थः। धकारस्यथकारोनिर्वचनत्वात्। अंगेत्यत्राकारस्येकारोतिशयार्थः। अंगरसत्वंतेषांकथमित्यतउक्तं॥ मनस्त्वादिति॥ सोमस्यमनस्त्वात् मनोभिमानित्वात्। इतरेषांमरुतांप्राणरूपत्वात् प्राणापानादिरूपत्वात्। इंद्रियाभिमानित्वाद्वेत्यर्थः। अंगानांरसाइतिपूर्वेणसंबंधः। पंचमंवाक्यंव्याख्याति॥ गुह्येति॥ श्रुतौपार्थक्येनप्रयोगेपिगुह्यादेशाइत्येकमेवपदमितिभावेनगुह्यादेशइत्युक्तं। येब्रह्मपदेयोग्यास्तेब्रह्मणासहगुह्यादेशागुह्यादेशशब्दवाच्याइत्यर्थः। केननिमित्तेनतच्छब्दवाच्यत्वंतेषामित्यपेक्षायामाह॥ सर्वेति॥ अनेनगुह्यंगोप्यंआदिशंतीतिनिरुक्त्यासर्वगुह्योपदेष्टृत्वंनिमित्तमुक्तंभवति। तदुपपादयति॥ सर्वेषामिति॥ तेऋजवोहियस्मात्सर्वेषांगुरवःतस्मात्सर्वगुह्योपदेष्टारइतिसंबंधः। ब्रह्मैवपुष्पमित्येतत्शब्दाधिकारात्। प्रणवाख्यंपुष्पमित्यपव्याख्यानमितिसूचयन्सम्यग्व्याचष्टे॥ ब्रह्मेति॥ ब्रह्मशब्दप्रवृत्तनिमित्तवत्त्वेनतन्नामकत्वंयुक्तमित्याशयेनाह

भा०। इतिहासपुराणानांसोमाद्याअभिमानिनः। अथर्वांगिरसांचैवाप्यथर्वांगिरनामकाः। अधरंवर्तयेयुस्तेवृष्टिमंगरसास्तथा। मनस्त्वात्प्राणरूपत्वादथर्वांगिरसस्ततः। गुह्यादेशाब्रह्मपदेयेयोग्याब्रह्मणासह। सर्वगुह्योपदेष्टारःसर्वेषांगुरवोहिते। ब्रह्मेतिसर्ववेदानां

॥ अनंतत्वतइति ॥ अनंतावैवेदाइतिश्रुतेरनंतसंख्याकत्वतः । वृद्ध्यर्थकबृहधातोरानंत्यमप्यर्थएवेतिभावः । तावाएताऋच
एतमृग्वेदमभ्यतपन्नित्यादिवाक्यपंचकंऋगादीनांऋग्वेदादितापकत्वायोगाद्याचष्टे ॥ ऋग्वेदादीनिति ॥ तथाचऋचइत्यादि
कर्तृवाचकपदैःपूर्वप्रकृतावस्वाद्याःसाध्यांताःदेवाएवविवक्षिताः । तपनंचविचारएवेतिनकोपिदोषइतिभावः । ऋचएवमधुकृतइ
त्यादिवाक्यैःदेवानांमधुकृत्स्थानीयत्वमुक्तं । तदपेक्षितंसाम्यंदर्शयति ॥ मधुब्रह्मेति ॥ मधुव्यक्तिकृत्त्वेनसाम्यमितिभा
वः । ऋग्वेदादीनांपुष्पत्वमपिप्रसिद्धपुष्पसाधारणपुष्पशब्दप्रवृत्तिनिमित्तधर्मयोगेनेत्याह ॥ ज्ञानेति ॥ अनेनपोषकत्वमे
वपुष्पशब्दप्रवृत्तिनिमित्तमितिसूचितं । अस्यप्रसिद्धपुष्पसाधारण्यंदर्शयति ॥ अन्यत्रेति ॥ ताअमृताआपइतिवाक्यपं
चकंताःऋग्वेदादिगतावाचःअमृताःआपःअमृताप्स्थानीयाःमकरंदतुल्याइतियावदितिपुष्परसस्थानीयत्वकथनायप्रवृत्तंतत्रवेद
वाचाममृतत्वंकेननिमित्तेनेत्यतआह ॥ नित्यत्वादिति ॥ नित्यत्वादपौरुषेयत्वात् । ताइत्यनूद्यवेदवाचइतिव्याख्या
नं । सुरैःपेयायतइतिहेतुगर्भविशेषणं । सुरैर्भोग्यत्वात्पाल्यत्वादितिनिमित्तांतरं । अपूशब्दस्यपानपालनरूपोभयार्थक
धातुजत्वस्यप्रसिद्धेरितिभावः । भोग्यत्वादापईरिताः । भोग्यत्वंचकेनप्रकारेणेत्यतःसुरैःपेयाइतियोजनेत्यप्याहुः । ननु
कथंवेदाःपेयाः अद्रवरूपत्वादित्यतःपानशब्दार्थमाह ॥ वेदपानमिति ॥ पाठश्चेत्येतदेवेत्यध्याहृतेनैवशब्दसंबंधः । तस्या

भा० । नामानंतत्वतःस्मृतं । ऋग्वेदादींस्तुतेदेवाअन्नाद्यास्संव्यचारयन् । मधुब्रह्मव्यक्तिकृत्त्वात्तेवैमधुकृतःस्मृताः । ज्ञानपोषकरत्वात्तुवेदाःपुष्पाभिधाःस्मृताः ।
अन्यत्रमधुकृत्पोषान्नित्यत्वादमृताश्वताः । वेदवाचःसुरैःपेयाभोग्यत्वादापईरिताः । वेदपानंविचारश्चश्रवणंपाठएवच ।



भितप्तस्ययशस्तेजइत्यादिवाक्यपंचकं यशोविश्रुतत्वं तेजोदेहगतादीप्तिः इंद्रियंसामर्थ्योपेतैरिंद्रियैरवैकल्यं वीर्यंसामर्थ्यं
अन्नाद्यंचेत्येषरसोजायतेतिपरकीयव्याख्याननिरासायप्रमाणेनव्याचष्टे ॥ देवैरित्यादिना ॥ तथाचतस्यऋग्वेदस्या
भितप्तस्यविचारितस्यसकाशादित्यर्थउक्तोभवति । अजायतेत्यस्यार्थोव्यक्ततांगतइति । अन्नाद्यइत्यनूद्यसर्वानुग्रहशक्ति
त्वादितितात्पर्यंकथितं । तेनान्नेस्थित्वाऽद्यतेउपजीव्यतेसर्वैरित्यन्नाद्यमितिव्याख्यातमितिज्ञायते । बलरूपतः बलरूपत्वतः ।
रसानामेतिसंबंधः । तदादित्यमभितोश्रयदितिवाक्यमादित्यशब्दस्योक्तरीत्याभगवत्परत्वेऽसंगतंस्यात्ततोत्रादित्यशब्देनमण्डल
मेवविवक्षितमित्यभिप्रेत्यव्याचष्टे ॥ संस्थितइति ॥ सूर्यमण्डलस्याप्यंतरिक्षांतर्भावादपूपत्वेनतत्स्थत्वंभगवल्लक्षणंमधुनउपपन्न
मितिभावः । तद्व्यक्षरदितिवाक्यंदार्ष्टांतिकेयोजयति ॥ व्यक्षरदिति ॥ क्षरसंततदानविनाशयोरितिधातुः । तद्वाएतद्यदेतदा
दित्यस्यलोहितंरूपमित्येतदप्रतीतेर्व्याचष्टे ॥ ऋक्प्रोक्तइत्यादिना ॥ ऋक्प्रोक्तइतिश्रौततच्छब्दपरामृश्यकथनं । एवमुत्तर
त्रापिद्रष्टव्यं । सएवेतिश्रौतवैशब्दार्थकथनं । तेनसंकर्षणादिव्यावृत्तिः । सूर्यलौहित्येलोहिताकारःसंस्थितइत्यनेनलोहितंरूपमि
त्येतद्व्याख्यातं । अनेनआदित्यस्यतन्मण्डलस्ययदेतद्रोहितंरूपंतत्तत्रस्वयमपिलोकहिताकारंतद्वैऋग्वेदाद्यभिव्यक्तंवासुदेवाख्य
मेवमधुअतिष्ठदितिव्याख्यातंभवति । तदादित्यमभितोश्रयदितिवाक्यंप्रकारांतरेणव्याचष्टे ॥ प्राच्यरश्मिष्विति ॥ अनेन

भा० । देवैर्विचारितेभ्यश्चवेदेभ्योव्यक्ततांगतः । ज्ञानानंदस्वरूपत्वाद्यशस्तेजःस्वरूपकः । इंद्रियंपरमैश्वर्याद्वीर्यरूपश्चसर्वदा । सर्वानुग्रहशक्तित्वादन्नाद्योबलरूपतः ।
रसनामाचभगवान्संस्थितःसूर्यमंडले । व्यक्षरद्धर्ममोक्षादीन्देवानांभगवान्हरिः । ऋक्प्रोक्तोलोहिताकारोवासुदेवःपरःपुमान् । सएवसूर्यलौहित्येप्राच्यरश्मिषुसंस्थितः ।

तत्वासुदेवाख्यंमधुआदित्यमभितःपार्श्वतःपूर्वभागंप्राच्यरश्मिष्वितियावत् । आश्रयत् स्थितमभवदितिव्याख्यातंभवति । एवमेवदक्षरश्मिषुइत्यादिकंतदादित्यमभितोश्रयदित्यस्यतत्तत्पर्वगतस्यव्याख्यानमितिद्रष्टव्यं । तद्वाएतद्यदेतदादित्यस्यशुक्लरूपमितिवाक्यंव्याचष्टे ॥ **संकर्षणइति** ॥ पूर्ववदेवयोजनाद्रष्टव्या । तद्वाएतद्यदेतदादित्यस्यकृष्णंरूपमितिवाक्यंव्याचष्टे ॥ **प्रद्युम्नइति** ॥ तद्वाएतद्यदेतदादित्यस्यपरःकृष्णंरूपमितिवाक्यंव्याचष्टे ॥ **अनिरुद्धइति** ॥ परःकृष्णइत्यस्यार्थःसुकृष्णइति॥ तद्वाएतद्यदेतदादित्यस्यमध्यइतिवाक्यंयोजयति ॥ **मध्यइति** ॥ मण्डलमध्येऊर्ध्वरश्मिषुचेतिचशब्दान्वयः । क्षोभतइवेतिवाक्यमप्रतीतेर्व्याचष्टे ॥ **चलतीवेति** ॥ अचलोपिसन्तत्रसमाहितदृष्टेश्चलतीवदृश्यतइत्यर्थः । तत्रनिमित्तमाह ॥ **महामरीचीति** ॥ अत्रापितच्छब्दपरामृश्यंदर्शयितुमुक्तंसवाच्यःसर्ववेदानामिति । तेवाएतेरसानांरसाइत्याद्यप्रतीतेर्व्याचष्टे ॥ **एवंपंचात्मकइत्यादिना** ॥ एवंपंचात्मकोसौहरिःवेदानांसारभूतःउत्तमवाच्योयतोऽतएवरसानांरसतमइत्युच्यते । वेदानांनित्यताप्रदश्चयतोऽतएवामृतानाममृतश्चेत्युच्यतइतियोजना । एवंप्रमाणेनैतांविद्यांब्रह्मपरत्वेनव्याख्यायेदानींआपातप्रतीतमेवार्थमुपादाययत्परेणैवोक्तंब्रह्मातिरिक्तमेवाचेतनंऋग्वेदादिप्रतिपाद्ययागादिकर्मफलभूतंयशआद्यन्नाद्यपर्यंतंआदित्याश्रितंरोहितादिरूपतया

भा० । संकर्षणःशुक्लवर्णोयजुर्वेदोदितःप्रभुः । शुक्लवर्णेचसूर्यस्यदक्षरश्मिषुसंस्थितः । प्रद्युम्नःश्यामवर्णस्तुसामवेदोदितःप्रभुः । प्रत्यग्रश्मिषुसूर्यस्यश्यामवर्णेपिचस्थितः । अनिरुद्धःसुनीलश्चइतिहासपुराणयोः । अथर्ववेदेचोक्तस्सन्नुदग्रश्मिषुसंस्थितः । सुकृष्णेसूर्यरूपेचमध्येनारायणःप्रभुः । ऊर्ध्वरश्मिषुसंस्थश्चप्रोद्यदादित्यसप्रभः । महामरीचिपुंजेनचलतीवाचलोपिसन् । सवाच्यःसर्ववेदानामेवंपंचात्मकोहरिः । वेदानांसारभूतोसौवेदानांनित्यताप्रदः । अतोमृतानाममृतोरसानांरसएवचेतिसामसंहितायां ।

दृश्यमानंमधुतयातत्रोपासनार्थमुच्यतइतितदुपपत्तिविरुद्धमित्याशयेनाह ॥ **नचेत्यादिना** ॥ चशब्दः पूर्वोदाहृतप्रमाणविरोधसमुच्चायकः । अत्रहिवस्वादिपदप्राप्तिरूपपुरुषार्थप्रदत्वमेतद्विद्याप्रतिपाद्यस्योच्यते । नचतदुक्तविधस्याचेतनस्यप्रतिपाद्यत्वेसंभवति । तस्यतत्रास्वातंत्र्यादतउक्तरीत्याब्रह्मैवप्रतिपाद्यमितिभावः । अस्वातंत्र्योपपादनायैवाचेतनमात्रमित्युक्तं । चेतनानधिष्ठितमित्यर्थः । किंचोपसंहारेब्रह्मणएवोपदेश्यत्वकथनात्तदेवात्रप्रतिपाद्यंनान्यदित्याह ॥ **ज्येष्ठायेति** ॥ एतत्ब्रह्मैवप्रतिपाद्यंनाचेतनमित्येतत् । नन्वस्मिन्वाक्येपित्राब्रह्मोपदेशःकर्तव्यइत्युक्तत्वेपिनैतस्याविद्यायाःब्रह्मपरंतासिध्यतीत्यतःउक्तविद्यायाःब्रह्मपरत्वप्रतिपादकमुपसंहारगतंवाक्यांतरंपठति ॥ **यएतामिति** ॥ ब्रह्मणउपनिषदंब्रह्मोपनिषदं । षष्ठ्यर्थश्चप्रतिपाद्यप्रतिपादकभावइतिभावः । किंचाचेतनोपासनायाःमहत्तमब्रह्मादिपदप्राप्त्यादिप्रदत्वं साध्यानामेवैकोभूत्वेत्यादिनोच्यमानंसर्वथापिनसंभवतीत्याह ॥ **कथंचेति** ॥ अपिचोक्तार्थेसंमतित्वेनवक्ष्यमाणे नवैतत्रेत्यादिश्लोकेपरंब्रह्मैवप्रतिपाद्यतयावगम्यते । अतोत्रापितदेवप्रतिपाद्यमितिवक्तव्यमन्यथाश्लोकविसंवादापत्तेरित्याशयेनाह ॥ **नवैतत्रेति** ॥ कदाचनेत्यनंतरंदेवास्तेनाहंसत्येनमाविराधिषिब्रह्मणेतिश्लोकोप्यनुपपन्नःस्यादितिशेषः । तत्रपरब्रह्मणिदोषानवै नैव दोषाभावमेवैकदेशेनदर्शयन्नाह ॥ **ननिम्लोचइति** ॥ उदयास्तमयादिदोषाःतत्रनसंतीत्यर्थः । हेदेवास्तेनसत्येनब्रह्मणापरब्रह्मणातत्प्रसादेनाहंमाविराधिषिअवृद्धिंनप्रा

---

भा० । नचाचेतनमात्रमुपासितंपुरुषार्थप्रदानशक्तं । ज्येष्ठायपुत्रायपिताब्रह्मप्रब्रूयादितिवाक्यशेषाच्चैतदवगम्यते । यएतामेवंब्रह्मोपनिषदंवेदेतिच । कथंचाचेतनोपासनंब्रह्मादिपदप्रदंभवति । नवैतत्रननिम्लोचोनोदियायकदाचन ।

मुयामितिश्लोकार्थः । किंचैतद्विद्यावेत्तुर्नहवाअस्मदुदेति ननिम्लोचतिसकृद्दिवेत्यादिनोच्यमानंमुक्तिगंफलमेतद्विद्यायाःपरब्रह्म
परतामेवसंपादयति । नह्यन्यविद्ययामुक्तिगंफलंप्रमितं । स्यादेतत् । सकृद्दिवेत्यादिनोच्यमानंफलंयदिमुक्तिगंस्यात्तदेवकुतः ।
अमुक्तस्याप्यमुख्यतएतादृशफलसंभवादित्यतआह ॥ सकृद्दिवेत्यादि ॥ सकृत्सदेत्यर्थः । आदिपदेनसूर्योदयास्तमयाभावो
वाश्लोकोक्त्याऽवृद्ध्यभावोवाग्राह्यः । मुख्यार्थएवचश्रुतेर्वर्णनीयइतिभावः । यद्वानवैतत्रेत्यादिश्लोकोक्तमवृध्यभावरूपंसकृद्दिवे
त्युच्यमानंसदादिवसभवनरूपंचफलंमुक्तस्यैवमुख्यतोयुज्यते नान्यस्येत्येकवाक्यतयायोज्यं । किंचनास्यांविद्यायामचेतनमात्रं
प्रतिपाद्यं । यशस्तेजइंद्रियंवीर्यमन्नाद्यंरसोजायतेत्युक्तयशस्त्वतेजस्त्वाद्यनुपपत्तेः । नचामुख्यंतत्तत्रास्तीतिवाच्यं । मुख्यतए
वतेषांभगवतिसंभवेनामुख्यार्थग्रहणायोगादित्याह ॥ यशस्तेजइत्यादि ॥ कस्ययुज्यते नकस्यापि । तत्रप्रमाणाभावादिति
भावः । भगवत्यपितेषांकुतोमुख्यतःसत्वमितिचेत् । पूर्वोदाहृतप्रमाणेनैवतथाव्याख्यातत्वात् । प्रमाणांतराण्यप्याह ॥ तस्य
नामेत्यादिना ॥ समग्रस्येत्येतत्यथायोग्यंलिंगवचनविपरिणामेनसर्वत्रसंबध्यते । इतिषण्णामेवेतिसंबंधः । भगवांश्चहरिरेवे
ति कोनामलोकेभगवत्पदार्थइतिप्रमाणसिद्धइतिभावः । यद्वाभगश्चसमाभगप्रविशेत्यादौहरिरेवप्रसिद्धइतिभावः । रसोवैसः स
एवरसइत्यर्थः । सुखात्मकमित्यत्रषड्गुणविग्रहत्वोक्त्यायशऐश्वर्यंवीर्यंचलब्धं । स्वरुक्स्वप्रकाशइत्युक्त्याचतेजोरूपत्वं । ऐश्व

भा० । सकृद्दिवाहैवास्मैभवतीत्यादिचमुक्तस्यैवमुख्यतोयुज्यते । यशस्तेजइंद्रियंवीर्यमन्नाद्यरसत्वंचभगवंतंविनाकस्यमुख्यतोयुज्यते । तस्यनाममहद्यशः । ऐश्वर्य
स्यसमग्रस्यवीर्यस्ययशसःश्रियः । ज्ञानविज्ञानयोश्चैवषण्णांभगइतीरणा । रसोवैसः । सुखात्मकंषड्गुणविग्रहंपरंहृदिस्थितंब्रह्मनिरंजनंस्वरुक् ।



र्येत्यत्रापिऐश्वर्यंयशोवीर्याण्युक्तानि । अहेयत्वादहंपूर्णषड्गुणंनारायणाख्यं । तत्तेजोरश्मीद्रश्मिप्रेरकमित्यत्रापितेजःषड्गुणत्वो
क्त्याचयशऐश्वर्यंवीर्यंचेतित्रयंचोक्तं । इत्यादेश्चयशआदिकंभगवंतंविनाकस्यमुख्यतोयुज्यतइतिसंबंधः । आदित्यांतर्गतोभगवा
न्मधुतयोपास्यइतिभवन्मतमप्ययुक्तं । भगवतआदित्यांतर्गतत्वेमानाभावादित्यतआह ॥ ध्येयइति ॥ चशब्दःप्रागुक्तप्रमाणसमु
च्चयार्थः । यद्वाभगवतस्तेजोरूपत्वएवप्रमाणांतरमिदं । सवितृमंडलमध्यवर्तीत्यनेनवा हिरण्मयवपुरित्यनेनवा तस्यलाभादिति
द्रष्टव्यं । किंचास्तुकथंचिदचेतनेतेजोरूपत्वसंभवः । ऐश्वर्यादिकंतुसर्वथातत्रासंभावितमित्याह ॥ नचेति ॥ नचभगवतस्तद
संभावितमितिदर्शयितुंतस्यैश्वर्यवीर्यात्मकत्वेश्रुतिमपिप्रमाणयति ॥ ज्ञानात्मकइति ॥ शक्त्यात्मकःवीर्यात्मकोबलात्मकोवा ।
किंचचेतनंरोहितादिरूपंमधुतयैतद्विद्याप्रतिपाद्यमितिनयुक्तं । सर्वस्यापिस्वरवर्णपदात्मनोवेदस्यभगवन्मात्रपरतायाःसूत्रपुराण
श्रुतीतिहासैःप्रतिपादितत्वेनतद्विरोधापातादितिभावेनवेदस्यभगवत्परताप्रतिपादकंसूत्रादिकंपठति ॥ सर्वेति ॥ सर्ववेदनिर्णयो
त्पाद्यज्ञानंब्रह्म । कुतः । आत्मेत्येवोपासीतेत्यादिविधीनांअत्रह्येतेसर्वएकीभवंतीत्याद्यानांतदुक्तयुक्तीनांचसर्वाधिकारिसाधारण्यादि
तिसूत्रार्थः । एकैवव्याहृतिर्व्याहरणं एकप्रकारमेवनाम । निर्दोषगुणपूर्तिवाचकत्वादेकप्रकारता । प्राणेनारायणएवेतियोजना ।

भा० । ऐश्वर्यवैराग्ययशोविबोधवीर्यश्रियापूर्णमहंप्रपद्ये । अहंतत्तेजोरश्मीन्नारायणंपुरुषंजातमग्रतइत्यादेश्च । ध्येयःसदासवितृमंडलमध्यवर्तीनारायणइतिच । नचाचे
तनस्यैश्वर्यादिरूपत्वंयुज्यते । ज्ञानात्मकोभगवानैश्वर्यात्मकोभगवान्शक्त्यात्मकोभगवानितिचश्रुतिः । ॐसर्ववेदांतप्रत्ययंचोदनाद्यविशेषादितिसर्ववेदप्रतिपाद्यत्वंभगवतउक्तं
भगवता । ससर्वनामासचविश्वरूपःप्रसीदतांब्रह्ममहाविभूतिरितिच । सर्वेवेदायत्पदमामनंति ।

विष्णुरेवगीयतइतिसंबंधः । किंचमंत्रब्राह्मणरूपस्यवेदस्याप्राधान्येनकर्माद्यचेतनपरत्वेपिनोपनिषत्सुब्रह्मान्यदुच्यतइत्यतोपिन त्वद्याख्यायुक्तेत्याह ॥ उपनिषत्त्वादिति ॥ यत्किंचित्ब्रह्मान्यत् । कुतोनयुक्तमित्यपेक्षायांतत्रप्रमाणमाह ॥ विष्णुरिति ॥ अरण्येध्येतव्यत्वादारण्यकेउपनिषदि । मंत्रैरपिविशेषतइत्युक्त्याब्राह्मणस्येषदन्यपरत्वंसूचितंतद्दर्शयति ॥ कर्मार्थेचेति ॥ विष्णुरेकएवेतिसंबंधः । ननुकथमारण्यकेष्वन्यन्नोच्यतइति सूत्रात्मनोवायोःक्वचिदुक्तेः । क्वचित्तदुपास्त्युक्तेश्चेत्यतस्तदुक्तेःप्रयोजनमाह ॥ सूत्रात्मेति ॥ तद्विशिष्टत्ववित्तये वाय्वपेक्षयोत्तमत्वज्ञानाय । तस्यसूत्रस्याधिकंआऋद्धतनुत्वतः । सर्वविशिष्टप्रतिमात्वादितियावत् । तस्मात्कारणात्तस्मिन्विष्णोरुपास्त्यर्थंकुत्रचित्तदुपास्तिश्चोच्यतइतियोजना । किंचभागवतवाक्यरूपभगवद्वचनादभगवद्विषयस्यवचनस्यनिंदितत्वावगमात्सर्वासुशाखासुआरणमावर्तयेदितीतराधिक्येनोपनिषदभ्यासस्यविहितत्वाच्चनोपनिषत्स्वन्यदचेतनादिकमुच्यतइतिव्याख्यानंयुक्तमित्याह ॥ यस्यामित्यादिना ॥ हेअंगधीर । यस्यांवाचिमेपावनंपवित्रं अस्यजगतः स्थित्युद्भवत्राणनिरोधं त्राणंअन्नादिदानेनदैनंदिनानिष्टनिचयपरिहारेणचरक्षणं निरोधःसंहारः । एकवद्भावः । एत

---

भा० । तावाएताःसर्वाऋचःसर्वेवेदाःसर्वेघोषाएकैवव्याहृतिःप्राणएव । वेदेरामायणेचैवपुराणेभारतेतथा । आदावंतेचमध्येचविष्णुःसर्वत्रगीयते । नामानिसर्वाणियमाविशंतितंवैविष्णुंपरममुदाहरंतीत्यादेश्चउपनिषत्त्वाच्चविशेषतोनयत्किंचिदुच्यतइतिवक्तुंयुक्तं । विष्णुरुक्तःसर्ववेदैर्मंत्रैरपिविशेषतः । आरण्यकेविशेषेणनैवान्यत्किंचिदुच्यते । कर्मार्थेचब्राह्मणंस्यादमुख्यार्थविवक्षया । मुख्यतोविष्णुरेवैकोब्राह्मणेष्वपिकथ्यते । आरण्यकेष्वृतेविष्णुंनैवान्यत्किंचिदुच्यते । सूत्रात्मातूच्यतेविष्णोस्तद्विशिष्टत्ववित्तये । कुत्रचित्तदुपास्तिश्चतस्याध्यर्द्धतनुत्वतः । तस्मिन्विष्णोरुपास्त्यर्थंनान्यथाकिंचिदुच्यतइतिब्रह्मांडे । यस्यांनमेपावनमंगकर्मस्थित्युद्भवत्राणनिरोधमस्य ।

ह्लक्षणंकर्मनप्रतिपाद्यं । लीलावतारेधितकर्मवाकृष्णाद्यवतारेकृतंकंसहननादिरूपंचयस्यांनप्रतिपाद्यं तांवंध्यांनिष्फलांगिरंनबिभृ
यादितियोजना । अतीर्थीकृतं पात्रेऽप्रतिपादितं यःरक्षतिसःदुःखदुःखीअतिशयितदुःखभाक् । याआत्तंवीर्यंयाभिस्ताःआ
त्तवीर्याः याश्चयैर्हतभगैर्नृभिःश्रुताः अशरणेषुरक्षकारहितेषु तमःसु तांस्तान्नृक्षिपंति ताःमतिघ्नीःअन्यविषयाःकुकथाःयेऽघ
भिधोहरेररचनानुवादाःकर्तृत्वादिगुणानुवादशून्याःशृण्वंति । तेयन्नव्रजंति । तद्विश्वगुर्वधिकृतमित्युत्तरेणान्वयः । अभ्यासेनो
क्तत्वात्सतात्पर्यमित्युक्तं । सर्ववेदेषुविष्णुरेवोदितः उपनिषदिविशेषेणोदितोयतोतःसर्वत्रभगवदुपासनाएवोच्यंतइत्याशयेनतत्र
प्रमाणांतरंपठति ॥ अभ्यसेदिति ॥ अधियज्ञं यज्ञमधिकृत्यवर्तमानंब्राह्मणं । अधिदैवं देवानधिकृत्यवर्तमानंमंत्रं । अध्या
त्मं आत्मानंपरमात्मानंअधिकृत्यवर्तमानमारण्यकं । विशेषेणाभ्यसेदित्यर्थः । ननुविष्णुस्त्रिषूदितइत्ययुक्तं । तथात्वेऽधियज्ञ
त्वादिविरोधादित्यतस्तस्यविष्णुपरत्वप्रतिपादकंवाक्यमाह ॥ मामिति ॥ कर्मादिविधात्रीश्रुतिःमांप्रत्येवतद्विधत्ते । इंद्राद्यभि
धात्रीचमामभिधत्ते । चत्वारिवागित्यादिश्रुत्याहंविविधरूपत्वेनकल्प्यः । नसुरांपिबेदित्यादिश्रुत्याहमेवाप्रियादपोह्यः । एवंभूता

---

भा० । लीलावतारेधितकर्मवास्याद्वंध्यांगिरंतांबिभृयान्नधीरः । वित्तंत्वतीर्थीकृतमंगवाचंहीनांमयारक्षतिदुःखदुःखी । यन्नव्रजंत्यघभिदोऽरचनानुवादाःशृण्वंतियेन्यवि
षयाःकुकथामतिघ्नीः । यास्तुश्रुताहतभगैर्नृभिरात्तवीर्यास्तांस्तान्क्षिपंत्यशरणेषुतमःसुहंतेत्यादिभगवद्वचनाच्च । सर्वासुशाखास्वारणमावर्तयेदारणमावर्तयेदुपनिषदमावर्तयेदुपनि
षदमावर्तयेदित्युपनिषदभ्यासस्यतात्पर्यैविहितत्वादभगवद्विषयस्यनिंदितत्वाच्चनोपनिषत्स्वन्यदुच्यते । अभ्यसेदधियज्ञंचाप्याधिदैवंविशेषतः । अध्यात्मंचविशेषेणयस्माद्विष्णु
स्त्रिषूदितइतिस्कांदे । मांविधत्तेभिधत्तेमांविकल्प्योपोह्यइत्यहं ।

याःअस्याःश्रुतेरित्यभिप्रायमहमेववेद ॥ नमत्तोन्यइत्यर्थः ॥ खं० १–५ ॥ ततश्चायंखंडपंचकार्थः ॥ असौज्ञानिप्रत्यक्षविषयः आदित्वात्ततत्वाज्ज्ञानरूपत्वादादित्यनामाऽऽदित्यांतर्गतोभगवान् सुखपूर्णत्वात्मधु देवोपजीव्यत्वाच्चदेवमधुनामकोवै । अत्रसभगवानधिकारिबोधनायप्रसिद्धमधुनोपमीयतइत्यपिविवक्षितं। देवानांमध्विवमध्वितितर्पकत्वेनसाम्यात्। अतोस्यविवक्षितंतिरोवंशादिकमाह ॥ तस्यद्यौरेवेति ॥ तस्यादित्यनामकभगवल्लक्षणस्यमधुनःद्यौरेवप्रकाशादिगुणैःद्युनाम्नीद्युस्थिताश्रीरेवतिरश्चीनवंशः । तिरश्चीना प्रह्वीभावेनस्थित्वाहरिंवशीकरोतीतितिरश्चीनवंशनाम्नी । प्रसिद्धतिरोवंशस्थानीयामध्वपूपाश्रयत्वसाम्यात् । अंतरिक्षं स्वांतःहरिमीक्षतइत्यंतरिक्षनामाअंतरिक्षस्थश्चमरुत्अपूपः अप्आप्यंब्रह्मउपसमीपेस्थितंयस्मिन्नित्यपूपनामा । प्रसिद्धमध्वपूपतुल्यः मध्वाश्रयत्वसाम्यात् । ऋचएवमधुकृतइतिवक्ष्यमाणमधुकृत्पुत्रस्थानीयानाह ॥ मरीचयइति ॥ मरीचयःसूर्यमरीचिसंस्थामरीच्याद्याऋषयः पुत्राः प्रसिद्धमधुकृत्पुत्रस्थानीयाः । मध्वपूपनाडीसंस्थिताहिप्रसिद्धभ्रमरपुत्राः । मरीच्यादयोपिसूर्यमंडललक्षणक्षौद्रपटलस्थरश्मिलक्षणनाडीसंस्थिताइतिसाम्यात् ॥ १ ॥ तस्यादित्यस्ययेप्रांचःप्राच्यांदिशिगताःरश्मयस्ताएवास्यापूपस्यप्राच्योमधुनाड्यः । मध्वाधारच्छिद्रस्थानीयाइत्यर्थः । केवलभगवन्मात्रपरतापक्षेतुतस्यसवित्रंतर्यामिणोभगवतःयेप्रांचः प्राच्यांदिशिगतारश्मयः रतिशंमानरूपतोरश्मिशब्दवाच्याःरश्मिसंस्थाश्चवासुदेवादिरूपविशेषास्ताएवा

भा० । इत्यस्याहृदयंसाक्षान्नान्योमद्वेदकश्चनेत्यादेश्चभगवदुपासनाएवसर्वत्रोक्ताः ॥ खं० १—५ ॥

उ० । असौवाआदित्योदेवमधुतस्यद्यौरेवतिरश्चीनवंशोंतरिक्षमपूपोमरीचयःपुत्राः ॥ १ ॥ तस्ययेप्राञ्चोरश्मयस्ताएवास्यप्राच्यो



स्यभगवतःमधुनाड्यः मधुसुखपूर्णमूलरूपंप्राप्तुंवासुदेवंविनाअधिकारीनालमितिनाडीशब्दवाच्याःइतियोजनाद्रष्टव्या । एवमथयेऽस्यदक्षिणारश्मयइत्यादिवाक्यान्यपिमधुदृष्टांतपक्षेयथास्थितान्येवयोज्यानि । भगवत्परत्वपक्षेतूक्तरीत्याक्रमेणसंकर्षणप्रद्युम्नानिरुद्धनारायणपराणिद्रष्टव्यानि । भगवन्मात्रपरतयाव्याख्यानपक्षेअवशिष्टसर्ववाक्ययोजनाप्रकारस्तुआचार्यैर्नोक्तः । दिङ्मात्रप्रदर्शनस्यैतावतैवजातत्वात् । अतःप्रमाणांतरादेवावगंतव्यः । ऋचएवप्रातःसवने विशेषेणार्च्यत्वादृग्वेदाभिमानित्वाच्चऋङ्नामानोवह्न्याद्यावसवएव मधुकृतः भ्रमरस्थानीया मधुव्यक्तिकृत्त्वसाम्यात् । देवाअपिहिमधुनामकब्रह्मव्यक्तिकृतः । ऋग्वेदएवपुष्पं पुष्पस्थानीयः । ज्ञानपोषको ह्ययं । प्रसिद्धपुष्पमपिमधुकृत्पोषकमितिपोषकत्वेनसाम्यात् । ताऋग्वेदगतावाचःअमृताःअपौरुषेयत्वेनामृतशब्दवाच्याः । आपःआसम्यक्सुरैःपेयत्वादप्शब्दवाच्याश्च । प्रसिद्धपुष्पगतामृताप्स्थानीयमकरंदतुल्याइतियावत् । पेयत्वसाम्यात् । वाक्पानंनामश्रवणादिविचारएवेतिद्रष्टव्यं । इदानींमधुव्यक्तिप्रकारमाह ॥ ताइति ॥ ताएताएवऋचःपूर्वप्रकृतऋगभिमानिनोवह्न्याद्यावसवःएतंऋग्वेदंतल्लक्षणंपुष्पंअभ्यतपन्अपिबन् । संव्यचारयन्निति यावत् । तस्याभितप्तस्यसम्यक्पीतस्यपुष्पस्थानीयस्यवेदस्यसकाशात् । यशःज्ञानानंदस्वरूपत्वाद्यशोनामकं । तेजःतेजोरूपं । इंद्रियंपरमैश्वर्यादिंद्रियनामकं । वीर्यंवीर्यरूपं । अन्नेप्रसिद्धान्नेस्थित्वाऽद्यतइतिअन्नाद्यं । रसःबलरूपत्वाद्रसनामकं । परंब्रह्मा

उ० । मधुनाड्यःऋचएवमधुकृतऋग्वेदएवपुष्पंताअमृताआपस्तावाएताऋचएतमृग्वेदमभ्यतपंस्तस्याभितप्तस्ययशस्तेजइंद्रियंवीर्यमन्नाद्यंरसोजायत ॥ २ ॥

ख्यंमध्वजायत । व्यक्तमभवत् ॥ २ ॥ तत्परंब्रह्मव्यक्षरत् । देवानांधर्ममोक्षादीनितिशेषः । तत् ऋग्वेदाभिव्यक्तंवासुदेवाख्यं मधु । आदित्यमभितोऽश्रयत् । आदित्यमंडललक्षणापूपसंस्थमभवत् । आदित्यमंडलस्याप्यंतरिक्षांतर्भावादपूपत्वमुपपन्नमिति ध्येयं । यद्वातत् वासुदेवाख्यंमधु । आदित्यमभितःपार्श्वतःपूर्वभागगतप्राच्यरश्मिष्वितियावत् । अश्रयत् । स्थितमभवदित्य र्थः । आदित्यमंडलेस्थानविशेषमाह ॥ तद्वाइति ॥ यदेतत्आदित्यस्यरोहितंरूपं तत्तत्रस्वयमपिलोहिताकारंतत्ऋग्वेदाभि व्यक्तंएतत्यशआदिरूपं । वासुदेवाख्यमेवमध्वतिष्ठत् । प्रसिद्धमध्वपिसंपन्नंसद्धिक्षरति । पश्चादपूपंप्राच्यनाडीसंस्थंभवतीति साम्यं ॥ ३ ॥ प्रथमःखंडः ॥ १ ॥ अथयेस्यदक्षिणारश्मयइत्यादिव्याख्यातमेव । यजूंष्येवयजुर्वेदाभिमानिनोयाज्यत्वाद्यजुः शब्दवाच्याःवाय्वाद्याःरुद्राः । तानिवाएतानियजूंषिपूर्वप्रकृतयजुर्वेदाभिमानिनोरुद्राः । यदेतदादित्यस्यशुक्लंरूपंतत्तत्रतद्वैयजु र्वेदाभिव्यक्तंशुक्लवर्णएतत्यशआदिरूपसंकर्षणाख्यंमध्वभवत् । शिष्टंसमानं ॥ खं० ॥ २ ॥ सामान्येवमधुकृतःसामाभिमानि नोमासशःसमभोगवत्त्वेनसामशब्दवाच्याःआदित्याएव । यदेतदादित्यस्यकृष्णंरूपंतत्तत्र । तद्वैसामवेदाभिव्यक्तंकृष्णंरूपंएतत्

---

उ० । तद्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वाएतद्यदेतदादित्यस्यरोहितंरूपं ॥ ३ ॥ खं० ॥ १ ॥ अथयेऽस्यदक्षिणारश्मयस्ताएवास्यदक्षिणामधुनाड्योयजूंष्येवमधुकृतो यजुर्वेदएवपुष्पंताअमृताआपस्तानिवाएतानियजूंष्येतंयजुर्वेदमभ्यतपंस्तस्याभितप्तस्ययशस्तेजइंद्रियंवीर्यमन्नाद्यंरसोजायतततद्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वाएतद्यदेतदादित्यस्य शुक्लंरूपं ॥ खं० ॥ २ ॥ अथयेस्यप्रत्यञ्चोरश्मयस्ताएवास्यप्रतीच्योमधुनाड्यःसामान्येवमधुकृतःसामवेदएवपुष्पंताअमृताआपःतानिवाएतानिसामान्येतंसामवेदमभ्यतपंस्तस्या भितप्तस्ययशस्तेजइंद्रियंवीर्यमन्नाद्यंरसोजायतततद्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वाएतद्यदेतदादित्यस्यकृष्णंरूपं ॥ खं० ॥ ३ ॥

यशआदिरूपंप्रद्युम्नाख्यंमध्वाश्रितमभवत् । शिष्टंसमानं ॥ खं० ॥ ३ ॥ अथर्वांगिरसः अथर्वणाआंगिरसाचदृष्टाःमंत्राअथर्वांगिरसः । इतिहासपुराणोपलक्षणमेतत् । तदभिमानिनोअधरंवृष्टिप्रवर्तकत्वेनांगानांरसत्वेनचाथर्वांगिरोनामकाःसोमाद्याःदेवाः । इतिहासपुराणमितिद्वंद्वैकवद्भावश्च । अथर्वांगिरसामप्युलक्षणमेतत् । ताअमृताइत्यत्रेतिहासपुराणस्यार्थतएकप्रकारत्वेनामृतत्वंद्रष्टव्यं । यदेतदादित्यस्यपरःपरंअतिशयेनकृष्णंरूपंतत्तत्र तद्वै । इतिहासपुराणाथर्वांगिरोमंत्राभिव्यक्तंअनिरुद्धाख्यंसुनीलंमध्वतिष्ठत् । शिष्टंपूर्ववत् ॥ खं० ॥ ४ ॥ गुह्याएवादेशाःसर्ववेदाभिमानिनोगुह्योपदेष्टृत्वेनगुह्यादेशशब्दवाच्याःऋजवःब्रह्मैववेदराशिरेव । बृहधातोर्वृद्ध्यर्थत्वेनानंत्यवाचित्वात् । वेदानांचानंतावैवेदाइतिश्रुतेरनंतत्वादितिभावः । यदेतदादित्यस्यमध्यंतत्तत्रमध्ये तद्वै । सर्ववेदाभिव्यक्तंप्रोद्यदादित्यसप्रभंनारायणाख्यंमध्वतिष्ठत् । सनारायणःक्षोभतइवस्वस्मिन्समाहितदृष्टेःपुंसोमहामरीचिपुंजेनाचलोपिचलतीवदृश्यतइत्यर्थः । वेदानामितरशब्दापेक्षयोत्कर्षंवदन्वासुदेवादिरूपाणामृगादिवेदवाच्यत्वमुक्तमुपसंहरति ॥ तेवाइति ॥ तेवाएतेरोहितादिरूपावासुदेवाद्याःपंचरसानांरसाः । आद्यरसशब्देनविवक्षितार्थमाह ॥

---

उ० । अथयेस्योदञ्चोरश्मयस्ताएवास्योदीच्योमधुनाड्योथर्वांगिरसएवमधुकृतइतिहासपुराणंपुष्पंताअमृताआपःतेवाएतेथर्वांगिरसएतदितिहासपुराणमभ्यतपंस्तस्याभितप्तस्ययशस्तेजइंद्रियंवीर्यमन्नाद्यंरसोजायततद्व्यक्षरत्तदादित्यमभितोश्रयत्तद्वाएतद्यदेतदादित्यस्यपरःकृष्णंरूपं ॥ खं० ॥ ४ ॥ अथयेस्योर्ध्वारश्मयस्ताएवास्योर्ध्वामधुनाड्योगुह्याएवादेशामधुकृतोब्रह्मैवपुष्पंताअमृताआपस्तेवाएतेगुह्याआदेशाएतद्ब्रह्माभ्यतपंस्तस्याभितप्तस्ययशस्तेजइंद्रियं वीर्यमन्नाद्यंरसोजायततद्व्यक्षरत्त दादित्यमभितोश्रयत्तद्वाएतद्यदेतदादित्यस्यमध्येक्षोभतइवतेवाएतेरसानांरसा

वेदा**ह्**ीति ॥ वेदाःरसाःश्रेष्ठाः । हिप्रसिद्धाइत्यर्थः । तेषांवेदानामेतेवासुदेवादयोरसाःउत्तमवाच्याइत्यर्थः । अमृताइ त्युक्तममृतत्वं नवेदानांस्वातंत्र्येणेतिवदन्निगमयति ॥ **तानिवाइति** ॥ तानिवाएतानिपूर्वप्रकृतवासुदेवादीनिपंचरूपाणिअमृ तानिअमृतत्वप्रदानि । प्रथमामृतशब्देनविवक्षितमर्थमाह ॥ **वेदाइति** ॥ वेदापौरुषेयस्वस्यप्रामाणिकत्वंहिशब्दार्थः ॥ खं० ॥ ॥ ५ ॥ ७ ॥ एवंपंचरूपिणंभगवंतंमधुतयाप्रपंचेननिरूप्येदानींकेकस्यामृतस्यसेवकाः किंचतेषांफलमित्याकांक्षायांतत्सर्वंपंच भिःखंडैर्निरूपयति ॥ **तद्यदित्यादिना** ॥ तत्रवसवउपजीवंतीत्युक्तमुपजीवनंनभोक्तृत्वं एतदेवामृतंदृष्ट्वेत्यस्यासंगतत्वापत्ते रतोत्रविवक्षितमुपजीवनमाह ॥ **प्रथमामृतस्यद्रष्टारइति** ॥ तथाचउपजीवंतीत्यस्यपश्यंतीत्यर्थउक्तोभवति । अग्निनामुखेने त्यत्राग्नेर्वस्वात्मताप्रतीयते । नचेदंसंभवति । असंगतत्वात् । अग्नेःकथंचिद्देवाख्यत्वसंभवेपिइंद्रेणमुखेनेत्यादावस्यार्थस्यासंभ वाच्चेत्यतस्तात्पर्यमाह ॥ **अग्निपूर्वकाइति** ॥ तथाचाग्निनामुखेनप्रधानेनसहाग्निप्रधानाःसंतइतियावदित्यर्थउक्तोभवति । नवै देवाअश्नंतिनपिबंतीतिवाक्यस्यान्नाद्यंरसोजायतेतिवचनात्कबलग्रासमश्नंतीतिप्राप्तं तत्प्रतिषिध्यतेअनेनवाक्येनेतिव्याख्यानंनि रासायतात्पर्यमाह ॥ **यावत्पश्यंतीति** ॥ तथाचयावदेतदेवामृतंदृष्ट्वातृप्यंतितावद्देवानैवाश्नंतिनपिबंति विषयभोगविरक्ताभ वंतीत्यर्थउक्तोभवति । परव्याख्यातु अनेनैवप्रमाणेनविरोधात् अन्नाद्यंरसइतिवाक्यस्यभगवत्परतायाःप्रमितत्वेनकबलग्रासा

उ० । वेदाहिरसास्तेषामेतेरसास्तानिवाएतान्यमृतानाममृतानिवेदाह्यमृतास्तेषामेतान्यमृतानि ॥ खं० ॥ ५ ॥

भा० । प्रथमामृतस्यद्रष्टारोवसवस्त्वग्निपूर्वकाः । यावत्पश्यंतितिंविष्णुंतावत्तेनान्यभोगिनः ।



शनस्याप्राप्तत्वेनप्रतिषेधायोगाच्चायुक्तेतिध्येयं ॥ खंडपंचके तएतदेवरूपमभिसंदिशंतीतिवाक्यं एतदेवरूपंअभिलक्ष्यअधुनाभो गावसरोनास्माकमितिबुद्ध्याऽभिसंविशंति । उदासते । यदाचैतस्यामृतस्यभोगावसरोभवेत्तदैतस्मादमृतादमृतभोगनिमित्त मित्यर्थः । एतस्माद्रूपादुद्यंतिउत्साहवंतोभवंतीत्यादिपरप्रलापनिरासायक्रमेणयथावद्व्याचक्षाणस्तावदादिवाक्यंव्याचष्टे ॥ **एतदेवेति** ॥ विशंत्येवेत्येवशब्दान्वयः । अभीत्यस्यार्थोऽद्धेति । निश्चयेनेत्यर्थः । ततश्चभगवद्रूपाच्चसमुद्यंत्येवेत्य न्वयः । एवकारद्वयेनपरोक्तव्युदासः । अप्रामाणिकत्वात्प्रमाणविरोधाच्च । स्वेच्छयैवानायासेनैव । स्वः परमात्मा तदिच्छयैवेतिवा । समुद्यंतिनिर्गच्छंति । तथाशब्दःसमुच्चये । द्वितीयखण्डस्थमेतदेवरूपमितिवाक्यंव्याचष्ट ॥ **एवमिति** ॥ यथावसव एवंशिवाद्याद्वितीयंरूपंविशंति । ततोबहिःसमुद्यंतिचेत्यर्थः । इंद्रेणमुखेनेत्यस्यव्याख्यानंवायुसंस्थि ताइति । वाय्वाश्रयाइत्यर्थः । अनेनमुखशब्दस्यप्राधान्यवाचित्वमुपपादितंभवति । ननुवायोर्नरुद्रांतर्भावःसंभवति । तस्यब्रह्म पदयोग्यत्वेनसाध्यांतर्भावात् । द्वितीयामृतद्रष्टृरुद्रांतर्भावेचरुद्राणामेवैकोभूत्वेतिवक्ष्यमाणरुद्रपदप्राप्तिप्रसंगात् । नचैकस्य पदद्वयंदृष्टमित्यतआह ॥ **वायोरिति** ॥ हिरण्यगर्भत्वात्भाविहिरण्यगर्भत्वात् । उदाहृतंप्रमाणेषुरुद्रपदंसाध्यपदंचेतिपदद्वयं नेतररुद्रसाध्यसाधारण्येनेत्याह ॥ **रुद्राणामिति** ॥ सर्वशइतिरुद्राणामित्यत्रापिसंबध्यते । साध्यानामाश्रयत्वमप्युदाहृतमिति

भा० । एतदेवविशंत्यद्धामोक्षेतेततएवच । स्वेच्छयैवसमुद्यंतिमुक्ताःसंतोबहिस्तथा । एवंद्वितीयरूपंतुशिवाद्यावायुसंस्थिताः । वायोर्हिरण्यगर्भत्वात्पदद्वयमुदाहृतं । रुद्राणामाश्रयत्वंचसाध्यानामपिसर्वशः ।

संबंधः । अनेनेंद्रेणमुखेनब्रह्मणामुखेनेत्युक्तमुभयत्रप्राधान्यमुपपादितंभवति । तदुभयाश्रयत्वंवायोरुपपादयति ॥ अतइति ॥ चोऽवधारणे । अतएव रुद्रसाध्याश्रयत्वादेव । वायोरेवयजुर्विचारः । तथा सर्ववेदात्मनः सर्ववेदरूपस्यब्रह्मणोपिविचारःविशेषतः रुद्राद्यपेक्षयाविशेषेण स्यादितियोजना । ब्रह्मणइत्यनेनवेदराशेरितिविवक्षितं । ब्रह्मैवपुष्पमित्युक्तत्वादित्याशयेनतत् सर्ववेदात्मनइतिविवृतं । नकेवलंसंसारेवायुरुभयाश्रयइत्याह ॥ उभयाश्रयइति ॥ हियस्मान्मोक्षेप्युभयाश्रयस्तस्मात्सर्वदोभयाश्रयइत्यर्थः । अनेनेंद्रेणमुखेनब्रह्मणामुखेनेत्येतत् एतदेवरूपमभिसंविशंतीत्यत्रापिसंबध्यतइत्युक्तंभवति । अथयत्तृतीयमित्यादेरुद्यंतीत्यंतस्यतात्पर्यमाह ॥ द्रष्टारइति ॥ एतदेवविशंति । ततोबहिःसमुद्यंतिचेतिशेषः । शक्रमुख्यादितेःसुताःइत्यलुक्समासः । अलुग्दर्शनानादरसूचकः । आदित्याइत्यर्थः । शक्रमुख्याइत्यनेनवरुणेनमुखेनेत्येतदुक्तार्थं । अथयच्चतुर्थममृतमित्यादेरुद्यंतीत्यंतस्यतात्पर्यमाह ॥ चतुर्थस्यत्विति ॥ द्रष्टारइत्यादिकमनुवर्तते । सोमाद्याइत्यनेनसोमेनमुखेनेत्येतदुक्तार्थं । अथ यत्पंचमममृतमित्यादेरुद्यंतीत्यंतस्यतात्पर्यमाह ॥ पंचमस्यचेति ॥ साध्यपदव्याख्यानंऋजवइति । ब्रह्मणामुखेनेत्यस्यार्थकथनं ब्रह्ममुख्याहीति । ऋजूनामेतद्दर्शनादिकंप्रमाणसिद्धमितिहिशब्देनाह । नन्वेवंसरस्वतीशेषसुपर्णतत्पत्नीनांवस्वादिषुकुत्राप्यप्रविष्टत्वात् मधूपास्त्यभावःस्यादित्याशंकायांसाध्यांतर्भावमाह ॥ सुपर्णइत्यादिना ॥ ननुब्रह्मणैवमुखेनेत्युक्तं मुक्तौब्रह्मणः

भा० । अतोयजुर्विचारश्चसर्ववेदात्मनस्तथा । वायोरेवविचारःस्याद्ब्रह्मणोपिविशेषतः । उभयाश्रयःसमोक्षेपिवायुरेवहिसर्वदा । द्रष्टारोथतृतीयस्यशक्रमुख्या दितेः सुताः । चतुर्थस्यतुसोमाद्यामरुतःपंचमस्यच । ऋजवोब्रह्ममुख्याहिसुपर्णःशेषएवच ।

सकलसाध्यमुखत्वमयुक्तं । ब्रह्मणोपिऋजुत्वेनसाध्यपदोक्तऋजुमुखत्वासंभवादित्यतआह ॥ अन्योन्येति ॥ तथाशब्दोप्यर्थः । यद्यपिब्रह्मणांसमता तथाप्यन्योन्यमुखतायुज्यते । मुखशब्देनाप्राधान्याभावमात्रस्यविवक्षितत्वादितिभावः । यथाऽप्राधान्याभावमात्रेणेतरसाध्यान्प्रतिब्रह्मणःमुखत्वं । तथानसाध्यपदोक्तवागादीन्प्रतीत्याह ॥ वाक्शेषादेरिति ॥ विशेषतोपि प्राधान्येनापि । मुखमितिसंबंधः । ननुरुद्रस्यैवशेषत्वात्तस्यचद्वितीयामृतद्रष्टृत्वात्कथंसाध्यांतर्भावेनांत्यामृतद्रष्टृत्वमित्यतआह ॥ द्रष्टेति ॥ इतीत्यध्याहार्यं । अंतगस्यचेत्युभयस्यापीतिसंबंधः । किंशिवत्वावस्थायामुभयद्रष्टेतिजिज्ञासायामुक्तंविशदयति ॥ मोक्षइति ॥ मोक्षार्थं परतःपरजन्मनि । शेषत्वावस्थायांउभयस्यापिद्रष्टा । शेषभावतोन्यत्रतुशिवत्वावस्थायांएकस्यैवद्रष्टेतिविवेकः । यद्वापरतःशेषभावतः शेषत्वानंतरं । मोक्षइतियावत् । उभयस्याप्यमृतस्यद्रष्टा । अन्यत्ररुद्रत्वेत्वेकस्येतियोजना । पूर्वंप्राप्तपदानांवस्वादीनांमोक्षलक्षणंफलमुक्तं । इदानींअप्राप्तपदानांतत्पदयोग्यानांमधूपासकानांकिंफलमितिजिज्ञासायांवस्वादिपदप्राप्त्यादिकंफलमितिप्रतिपादयितुंसयएतदेवममृतंवेदेत्यारभ्यैतस्माद्रूपादुदेतीत्यंतंवाक्यंखंडपंचकेपिप्रवृत्तं तत् तत्तत्पदायोग्यानामपिमधूपास्त्यातत्तत्पदप्राप्त्यादिर्भवतीतिप्रतीतिनिरासायव्याचष्टे॥ येचेति ॥ देवाः देवत्वयोग्याः । श्रौताभिशब्दार्थोसंशयमिति । तस्यनिश्चयार्थत्वेनपूर्वंव्याख्यातत्वात् । वसूनामेवैकोभूत्वारुद्राणामेवैकोभूत्वेत्यादिनावस्वादिभोग्यदेशकालाधिप

---

भा० । सरस्वतीसुपर्णीचवारुणीसाध्यनामकाः । अन्योन्यमुखतामुक्तौब्रह्मणांसमतातथा । वाक्शेषादेर्मुखंब्रह्मामुक्तावपिविशेषतः । द्रष्टोभयस्यापिशिवोद्वितीयस्यांतगस्यच । मोक्षेत्वन्यत्रचैकस्यपरतःशेषभावतः । येचैतत्पदयोग्याःस्युर्देवाःपंचमहागणाः ।

त्यंउक्तं । तदेवप्रतिदिनंतत्तद्भोग्यदेशकालविशेषकथनेनविशदयितुंसयावदादित्यइतिवाक्यपंचकंप्रवृत्तं । तस्यपरव्याख्याननिरासायतात्पर्यप्रमाणेनैववदंस्तावदादिवाक्यतात्पर्यमाह ॥ उदेत्यास्तमयमिति ॥ परव्याख्यानंतुतत्प्रत्याख्यानावसरेदर्शयिष्यामः । पर्वते उदयपर्वते । उदेत्य यावत् यावतादेशेनकालेनच । पर्वतेऽस्तपर्वते । अस्तमयंयातितावतःउदयास्ताद्रिमध्यस्यदेशस्य । दिवारूपकालस्यचेत्यपिग्राह्यं । सयावदादित्यःपुरस्तादुदेतापश्चादस्तमेताद्विस्तावद्दक्षिणतउदेतेत्यादिद्वितीयवाक्यतात्पर्यमाह॥ततश्चेति॥ततश्चास्तमयात् पूर्वोक्तास्तगिरिप्राप्तिरूपास्तमयमारभ्ययावत्देशेनकालेनार्धरात्रंअर्धरात्रपर्यंतं यंदेशविशेषंप्रति यातितद्देशकालयोरस्ताद्रिमध्यदेशार्धरात्ररूपकालयोःरुद्राईशाइत्यर्थः । दक्षिणतःउदेतोत्तरतोस्तमेतेत्यस्यार्थः दक्षिणादुत्तरमित्यादि । वसुभोग्यदेशकालापेक्षयाकियंतौरुद्रभोग्यदेशकालावित्यपेक्षायां यावदादित्यःपुरस्तादुदेतापश्चादस्तमेताद्विस्तावदित्युक्तमित्यभिप्रेत्यतत्तात्पर्यमाह ॥ **वसुभोग्यादिति** ॥ वसुभोग्यात्देशात्कालाच्चअर्धकालंअर्धकालःवसुभोग्यादेवार्धकालश्चेतिसंबंधः। सयावदादित्योदक्षिणतउदेतोत्तरतोस्तमेता द्विस्तावत्पश्चादुदेतापुरस्तादस्तमेतेत्यादितृतीयवाक्यतात्पर्यमाह ॥ **अर्धरात्रादिति** ॥ अर्धरात्रात्परतोयामः तावताकालेनगंतव्योदेशश्चादित्यदैवतः। अनेनादित्यानामेवतावदाधिपत्यमित्युक्ता

भा० । तेषामपियदोपासानिश्छिद्रामधुनामके । तदावस्वादितांप्राप्यमुक्तिमेष्यत्यसंशयं । उदेत्यास्तमयंयावद्यातिभानुस्तुपर्वते । उदयास्ताद्रिमध्यस्यवसवःपतयःस्मृताः । ततश्चास्तमयाद्यावदर्धरात्रंदिवाकरः । दक्षिणादुत्तरंयातिकिंचित्पूर्वसमन्वितं । तद्देशकालयोरीशारुद्रावायुपुरःसराः । वसुभोग्यादर्धकालमर्धदेशस्तथैवच । रुद्रभोज्योऽर्धरात्रात्तुयामआदित्यदैवतः ।

॥ ९५ ॥

र्थं । पूर्वमार्गःपूर्वमार्गकः। कालोयामलक्षणः। तावताकालेनगंतव्योदेशश्च । अनेनपश्चादुदेतापुरस्तादस्तमेतेत्युक्तार्थं । रौद्रदेशात्कालाच्च । अनेनद्विस्तावदित्युक्तार्थं । सयावदादित्यःपश्चादुदेतापुरस्तादस्तमेता द्विस्तावदुत्तरतउदेतादक्षिणतोस्तमेतेत्यादिचतुर्थवाक्यतात्पर्यमाह॥**ततःपरइति** ॥ ततःआदित्यदैवताद्यामात्परोर्धयामःकालः । तावताकालेनगंतव्योदेशश्चमारुतउद्दिष्टइत्यनेनमरुतामेवतावदाधिपत्यमित्यंशोव्याख्यातः । सौम्यात् । उत्तरात्दक्षिणमार्गकइत्यनेनोत्तरतउदेतादक्षिणतोस्तमेतेत्युक्ततात्पर्यं । द्विस्तावदित्यंशतात्पर्यमाह ॥ **आदित्यार्धश्चदेशतइति** ॥ कालोपिग्राह्यः । तथाचमारुतोदेशःकालश्चआदित्यार्धः । आदित्यसंबंधिदेशकालार्धइत्यर्थः।नन्वत्रदक्षिणतउदेतोत्तरतोस्तमेता । पश्चादुदेतापुरस्तादस्तमेता । उत्तरतउदेतादक्षिणतोस्तमेतेत्यादौअर्धरात्रयामतदर्धादिकालेषुप्रसिद्धोदयास्तमयावनुपपन्नौ । अतोत्रगौणावेवतौविवक्षिताविर्त्याह ॥ **पश्चात्पश्चादिति** ॥ पूर्वपूर्वोक्तदेशेषु उदेत्यपश्चात्पश्चादुत्तरत्रोक्तदेशेषुअस्तमुपैतिचेत्यन्वयः । यद्वापश्चात्पश्चात्स्वापेक्षयापश्चाद्देशएवउदेति पूर्वतःस्वाभिमुखेदेशेऽस्तमुपैतिचेति । अयंभावः । सविताअस्ताद्रिंविहायदक्षिणादुत्तरंयातियदातदा सवितुःस्वपश्चात्तनदेशस्थःगम्यापेक्षयादक्षिणदिगवस्थितोयोस्ताद्रिस्तत्प्राप्तिरस्ताद्रिस्थानांसवितृसामीप्येनदक्षिणोदयत्वेनविवक्षिता । स्वाभिमुखोत्तरदेशविशेषप्राप्तिस्तेषामेवाकिंचिद्दूरगत्वसाम्येनोत्तरास्तमयत्वेनविवक्षिता । एवंपश्चिमात्पूर्वंयदायातिसवितातदापश्चिमदेशविशेषस्थानांसवितृसामीप्येनोदयस्तेषामेवसवितुःपूर्वदेशविशेषगमनेदूरगत्वेनास्तमयः । एवमन्यत्रापीति । वक्ष्यतिचैतत् आतपस्याल्पकालतइत्यादि

भा० । पश्चिमात्पूर्वमार्गस्तुरौद्रादर्धःप्रकीर्तितः । ततःपरोर्धयामस्तुसौम्याद्दक्षिणमार्गकः । मारुतःकालउद्दिष्टआदित्यार्धश्चदेशतः । पश्चात्पश्चादुदेत्येवपूर्वतोस्तमुपैतिच ।

ना । ततःपरोर्धयामस्त्वित्युक्तंविवृणोति ॥ ततस्तदर्धकालेनेति ॥ ततः आदित्यकालानंतरं तदर्धकालेन आदित्यकालार्धेन येनेतिशेषः । सयावदादित्यउत्तरतउदेतादक्षिणतोस्तमेताद्विस्तावदूर्ध्वंउदेताऽर्वागस्तमेतासाध्यानामेवतावदाधिपत्यमितिपंचमवाक्यतात्पर्यमाह ॥ उदेत्येति ॥ तदर्धेन मारुतकालार्धेन येनकालेनेतिशेषः । देशोपिग्राह्यः । मुख्यत्वाद्ब्रह्मग्रहणं । इतरेपिसाध्याग्राह्याः । उदेत्येत्यनेनोर्ध्वंउदेताअर्वागस्तमेतेत्युक्तार्थं । तदर्धेनेत्यनेनद्विस्तावदित्यंशोव्याख्यातः । ब्रह्मेत्यनेनसाध्यानामेवतावदाधिपत्यमित्युक्तार्थं । ननुषष्टिघटिकात्मकोह्यहोरात्रः तस्यविभागेवस्वादिभ्यःउक्तक्रमेणकृतेपिईषदूनंघटिकाद्वयमवशिष्यते तस्यदेवतानोक्तेत्यतस्ताएवतद्देवतेत्याशयेनतदंतर्भावायस्पष्टंकालविभागमाह ॥ एकेति ॥ ततइत्यनंतरंतदर्धाइत्यावर्तनीयं । खंडचतुष्टयेपिश्रुतंद्विस्तावदितिवाक्यंक्रमेणवस्वादिकालार्धपरत्वेनव्याख्यातमपिविप्रतिपत्तेस्तथातद्वाक्यादप्रतीतेश्चसम्यग्व्याख्याति ॥ रौद्रइति ॥ द्विरित्यस्यार्थोद्विगुणीभूतइति । द्विगुणीभूतःरौद्रःकालोयावान्तावान्वसुकालोभवतीतिद्विस्तावदित्यस्यार्थइत्यर्थः । पर्यवसितमाह ॥ अर्धइति ॥ वसुकालादर्धोरौद्रःकालइत्यर्थः । अनेन सआदित्यःयावत् । यावतिदेशेकालेचदक्षिणतउदेताउत्तरतोस्तमेताद्विस्तावत् तावतःकालस्यदेशस्यचद्विर्द्विगुणंकालं पुरस्तादुदेतापश्चादस्तमेतेति

भा० । ततस्तदर्धकालेनचोत्तरादुदितस्तथा । अस्तंदक्षिणतोयातिसकालोमारुतःस्मृतः । उदेत्येंद्रपुरेचोर्ध्वमर्वागुदयपर्वते । अस्तमेतितदर्धेनब्रह्मातस्यपतिःस्मृतः । एकत्रिंशत्तुघटिकाःसाधिकावसुदैवताः । तदर्धारुद्रदैवत्यास्ततआदित्यदैवताः । तदर्धामारुताब्राह्मास्तदर्धादेशतस्तथेतिच । रौद्रोद्विगुणीभूतोवसुलोकोयावांस्तावान्भवतीतिद्विस्तावदर्धइत्यर्थः ।

श्रुत्यर्थउक्तोभवति । अहरादिकालविशेषाणांवस्वादिदेवताकत्वंप्राधान्यक्रमेणयुक्तिभिरप्युपपादयति ॥ **ब्राह्मइति** ॥ ब्राह्मे मुहूर्तेचोत्थायेतिस्मृतौप्रसिद्धेश्च ब्रह्मदेवताकत्वेनेतिशेषः । अर्धरात्रात्परयामस्यादित्यदेवताकत्वप्रसिद्धेर्युक्तिर्नोक्ता । उदाहृतव क्ष्यमाणप्रमाणैश्चतत्सिद्धिरितिभावः । अपररात्रस्यसौम्यकालत्वेयुक्त्यंतरमाह ॥ **सौम्यकालत्वाच्चेति** ॥ शीतस्यसोमधर्म त्वादितिभावः । नन्वेतावताऽस्तुसोमदेवताकत्वंमरुद्देवताकत्वंकुतस्तस्यकालस्येत्यतआह ॥ **मारुतकालत्वाच्चेति** ॥ अह्नोऽ ग्न्यादिवसुदेवताकत्वेयुक्तिमाह ॥ **आग्नेयेति** ॥ उदयात्पूर्वमर्धघटिकाऽस्तमयात्परतअर्धघटिकेतिसैकघटिकं कालं कालाध्वनोरि तिद्वितीया । ननुसर्वमहोवसुस्वामिकं । रात्रिरेवरुद्रादिस्वामिकेतिनयुक्तं । अहरेकदेशयोर्माध्यंदिनसायंसवनयोरुद्रादित्यादि देवताकत्वादित्यतआह ॥ **अहःसर्वमिति** ॥ सर्वेअहःवसूनांतुसामान्यान्नविशेषतइतिवक्ष्यमाणेनविशेषेणप्रदत्तं । परेषामेव रुद्रा दीनामेव । चस्त्वर्थः । रात्रिर्विशेषेणरुद्रादीनामेवदत्तेत्यर्थः । परे रुद्राद्याः । ननुरुद्राणांकथंमाध्यंदिनंसवनंदत्तं । तस्याहरेक देशत्वेनवसुकालत्वादित्यतउक्तं । विशेषत इति । वसूनांसामान्येनान्याधीनतयास्वामित्वेपिरुद्राणांविशेषतोऽनन्याधीनत्वेनत त्कालस्वामित्वमितिभावः । माध्यंदिनं सवनमितिशेषः । तृतीयंचेत्यत्रचस्त्वर्थः । पूर्ववत्विशेषेणेत्यर्थः । सवनमितिवर्तते ।

---

भा० । ब्राह्मेमुहूर्तइत्युषःकालस्यप्रसिद्धेश्च । रौद्रकालइतिपूर्वरात्रस्यप्रसिद्धेःसार्धरात्रस्य । सौम्यःकालइत्यपररात्रस्यसौम्यकालत्वाच्चतस्मिन्कालेशीतमुत्पद्यते । मारु तकालत्वाच्चवायुश्चवाति । आग्नेयकालत्वादेवाह्निसैकघटिकंहोमकर्मणिविशेषतःप्रवर्तते । अहःसर्ववसूनांतुपरेषांरात्रिरेवच । प्रदत्ताविष्णुनापूर्वंनालमित्यब्रुवन्परे । पुनर्विशेषतो दत्तंरुद्राणांमरुतांतथा । माध्यंदिनंतृतीयंचाप्यादित्यानांप्रदत्तवान् । विश्वेषामपिदेवानां

विशेषतइत्यनेनसूचितंविशदयति ॥ **सामान्यादिति** ॥ ननुब्रह्मणईषदूनघटिकाद्वयाधिपत्यमित्युक्तं । तन्महतोल्पमल्पस्यम
हदितिविरुद्धमित्याशंकांपरिहरन्नुक्तंविशदयति ॥ **सर्वस्येति** ॥ यद्यपिविशेषतोब्रह्मा सर्वस्यापिकालस्याधिपतिरितरेचतदधी
नतयैकदेशाधिपतयः। तथापिईषदूनघटिकाद्वयस्येतरत्यागेनसएवाधिपतिरित्युक्तमुपपन्नमितिभावः। द्वयोर्द्वयोरहोरात्रिभागयो
र्माध्यंदिनतृतीयसवनयोर्विशेषेणरुद्रादित्यादिदेवताकत्वं वसुस्वामिकत्वंतुसामान्येनेत्युक्तं। तत्रकिंसर्वस्याप्यह्नःवसवःसामान्ये
नेशाः उतमाध्यंदिनतृतीयसवनयोरेवेतिजिज्ञासायामाह ॥ **माध्यंदिनइति** ॥ तुशब्दोवधारणे । तद्भृत्यत्वादेववसूनांराज्य
मिष्यतइतिसंबंधः। तद्भृत्यत्वादित्यनेनसामान्यादित्युक्तंसामान्यंस्पष्टीकृतमितिज्ञातव्यं । प्रातःकालोविशेषतोनन्याधीनतया
वसूनांभोग्यइतिशेषः। तत्रापिनसर्वथास्वातंत्र्यमित्याह ॥ **तत्रापीति** ॥ अत्रवायुशब्देनब्रह्माविवक्षितः । सर्वस्याधिपतिर्ब्रह्मे
त्युक्तत्वात्। प्रसंगात्वस्वादीनांलोकविभागंचाह ॥ **एवमीति** ॥ प्रातःसवनेयथा । एवंपृथिव्यामाधिपत्यंवसूनामितिशेषः ।
माध्यंदिनसवनेयथा। एवंरुद्राणामित्यादियोज्यं। अनेन यद्वसूनांप्रातःसवनंरुद्राणांमाध्यंदिनंसवनंआदित्यानांविश्वेषांचदेवानांतृ
तीयसवनं क्वतर्हियजमानस्यलोकइत्युक्तमुपपादितंभवति । स्वाराज्यंपर्येतेत्यत्रस्वाराज्यंस्वराड्भावंगच्छतीत्यपव्याख्याननिरा

---

भा० । सामान्याद्वसुनामहरितिच । सर्वस्याधिपतिर्ब्रह्मारुद्रायास्तुद्वयोर्द्वयोः । वसवस्त्वह्नएवेशाःसामान्यान्नविशेषतइतिच । माध्यंदिनेतृतीयेचरुद्रादेराज्यमिष्यते ।
तद्भृत्यत्वाद्वसूनांतुप्रातःकालोविशेषतः। तत्रापिवाय्वधीनत्वमग्न्यादीनांप्रकीर्तितं । एवंपृथिव्यांरुद्राणामंतरिक्षेप्रकीर्तितं । मरुतांचद्युलोकेशाआदित्याःपरिकीर्तिताः। सर्वेषाम
धिपोब्रह्माद्युवादीशस्तुमारुतः। ।त्रिलोकाधिपतिश्चेंद्रस्तेषामप्यधिपोहरिरितिच ।



सायस्वाराज्यशब्दार्थमाह ॥ **स्वाराज्यमिति** ॥ भोगो विषयानुभवः।ननुस्वाराज्यशब्दस्यकथंविषयानुभववाचकत्वमप्रसिद्धेरि
त्याशंकायांयोगेनेत्याह॥**स्वरंजनादिति** ॥ अनेनस्वंरंजयतिसुखयतीतिस्वराट्स्वराडेवस्वाराज्यमितिनिर्वचनंसूचितंभवति। परो
क्तार्थेतुआधिपत्यपदेनपौनरुक्त्यं । व्याख्यानव्याख्येयभावश्चागतिकागतिरितिभावः। एवंसयावदादित्यःपुरस्तादुदेतापश्चादस्त
मेताद्विस्तावद्दक्षिणतउदेतोत्तरतोस्तमेतेत्यादिवाक्यचतुष्टयंदैनंदिनदक्षिणाद्युदयपरतयाव्याख्यायेदानींतत्परिशुद्धयेयत्परव्या
ख्यानंसयावदादित्यःपुरस्तादुदेतापश्चादस्तमेताद्विस्तावत्ततोद्विगुणकालंदक्षिणतउदेतोत्तरतोऽस्तमेतारुद्राणांतावद्भोगकालः ।
तथापश्चादुत्तरतऊर्ध्वमुदेताविपर्ययेणास्तमेतापूर्वस्मात्पूर्वस्मात्द्विगुणोत्तरोत्तरेणकालेनअमरावत्यादीनांपुरीणांद्विगुणोत्तरेणका
लेनोद्वासोयदातद्दैवदक्षिणाद्युदयश्चेति । तद्दूषयति ॥ **नत्वित्यादिना** ॥ अमरावत्यादीनांपुरीणांद्विगुणोत्तरोत्तरेणकालेनोद्वा
सइतितावदनुपपन्नं। तथात्वेतदधिपतीनामिंद्रादीनामपिद्विगुणोत्तरोत्तरकालेननाशापत्तेः। नचेष्टापत्तिः। इंद्रनाशे इंद्रापेक्षयायमो
द्विगुणंकालंतिष्ठति ।यमनाशे यमाद्वरुणोद्विगुणंकालंतिष्ठतितन्नाशेवरुणापेक्षयासोमोद्विगुणकालंतिष्ठतिइत्यत्रप्रत्यक्षाद्यन्यतमप्र
माणाभावेनअप्रामाणिकत्वादितिभावः। किंचैवंसयावदादित्यउत्तरतउदेतादक्षिणतोस्तमेताद्विस्तावदूर्ध्वउदेताऽर्वागस्तमेतेत्येत
त्सर्वथानुपपन्नंत्वन्मतेसोमतत्पुर्योर्नाशेततोद्विगुणकालंब्रह्मतत्पुर्योरवस्थानंह्येतद्वाक्यप्रतिपाद्यं। नचतत्संभवतीत्याह॥**नचसोमा
दिति** ॥ पुर्युपलक्षणमेतत्। एवमुत्तरत्रापि। कुतोनतिष्ठतीत्यतआह ॥ **द्विपरार्धमिति** ॥ हीतिद्विपरार्ध्यंधिष्ण्यमध्यासितइति

---

भा० । स्वाराज्यंभोगःस्वरंजनात्। नत्विंद्रायमोद्विगुणकालंतिष्ठतितस्माद्वरुणस्तस्मात्सोमइत्यत्रकिंचिन्मानं । नचसोमाद्विगुणमेवब्रह्मातिष्ठति । द्विपरार्धंहितस्यकालः ।

प्रमाणप्रसिद्धिमाह । एवमिंद्रादीनांद्विगुणेनोत्तरोत्तरेणकालेनावस्थानमप्रामाणिकमित्युक्तं । इदानींप्रमाणविरुद्धंचेत्याह ॥ इंद्रादयइति ॥ ननुब्रह्मणोद्विपरार्धमवस्थानेपितदर्धंसोमःतदर्धंवरुणःतदर्धंयमःतदर्धमिंद्रस्तिष्ठतीतिइंद्रस्यब्रह्ममानेनसपादषड्वर्षमवस्थानादुत्तरोत्तरंद्विगुणकालंअवस्थानंकिंनस्यादित्यतोवाह ॥ इंद्रादयइति ॥ इंद्रयमवरुणसोमाःमन्वंतरमात्रंस्वस्वपदेषुतिष्ठंतीतिहिप्रमाणसिद्धं । अतस्तद्व्याख्यानंतद्विरुद्धमितिभावः । वस्वाभिमानिकपूर्वदेशंपरित्यज्यकालांतरेरुद्राभिमानिकदक्षिणदेशेउदेतीतियोवस्वादीनांदेशविभागनियमउक्तः सोपिप्रमाणाभावेनायुक्तइत्याह ॥ **नचवसूनामित्यादिना** ॥ पूर्वएवदेशइत्येवमेवशब्दस्यसर्वत्रसंबंधः । अन्यत्रान्यः । इंद्रपुर्युद्वासेपूर्वोदयद्विगुणकालंदक्षिणोदयइत्यत्रदूषणांतरंवक्तुमाह ॥ तत्पक्षइति ॥ तत्पक्षे दक्षिणाद्युदयस्यपूर्वोदयद्विगुणकालत्वपक्षे । रुद्रैःसह रुद्रांतर्भावात् दक्षिणत्वप्राप्तेः दक्षिणोदयकालस्वामित्वप्राप्तेः । ततः किमित्यतआह ॥ अतइति ॥ उपलक्षणंचैतत् । इंद्रस्यनाशांगीकारविरोधश्चेत्यपिद्रष्टव्यं।ननुनष्टइंद्रोन्यः रुद्रांतःप्रविष्टस्त्विंद्रोवायुरेवेतिनविरोधइत्यतआह ॥ **नचेति** ॥ इंद्रपुर्युद्वासेनदक्षिणाद्युदयांगीकारेदूषणांतरमाह ॥ इंद्रादिपुरीणामित्यादिना ॥ इंद्रादीनांतत्पुरीणांचेत्यर्थः । उद्वासत्वेनेतिपाठे। भवितृप्रधानोनिर्देशः । एवमंगीकारे दक्षिणाद्युदयांगीकारे।तत्षोडशगुणत्वात् पूर्वोदयकालषोडशगुणत्वात् ऊर्ध्वोदयस्य। ऊर्ध्वोदयकालस्य। एकेंद्रात्परत एकेंद्रनाशानंतरं।अनिंद्रत्वं दक्षिणाद्युदयकालस्येतिशे

---

भा० । इंद्रादयोहिमन्वंतरमात्रंतिष्ठंति । नचवसूनांपूर्वोदेशोरुद्राणांदक्षिणआदित्यानांपश्चिमोमरुतामुत्तरएव । नान्यत्रेत्यत्रप्रमाणमस्ति । तत्पक्षेरुद्रैःसहइंद्रस्यदक्षिणत्वप्राप्तेश्च । अतइंद्रादेवेंद्रस्यद्विगुणकालत्वमितिविरोधः । नचेंद्रशब्देनवायुस्तैर्गृहीतः । इंद्रादिपुरीणामुद्वासेनैवमंगीकारेतत्षोडशगुणत्वादूर्ध्वोदयस्यैकेंद्रात्परतोनिंद्रत्वमेवस्यात् ।

षः । अयंभावः त्वन्मतेदक्षिणाद्युदयकालेएकेंद्रात्परतःइंद्राभावएवस्यात् । तथाचतदुद्दिष्टकर्मविलोपेवेदाप्रामाण्यप्रसंगः । नचपूर्वेंद्रस्तदानीमस्तीतिवाच्यं । त्वयातत्पुरीसहितस्यतस्योद्वासेनदक्षिणाद्युदयांगीकारात् । नचेंद्रतत्पुर्योरुद्वासानंतरमल्पकालेएवप्रलयात्कर्मप्रवृत्तिरेवनास्तीतिवाच्यं । ऊर्ध्वोदयकालसमाप्त्यनंतरंहिप्रलयोंगीकृतः । ऊर्ध्वोदयकालस्यचपूर्वोदयकालषोडशगुणत्वात् । इंद्रनाशानंतरमेवनप्रलयइतिबहुतरकालेकर्मप्रवृत्त्यादिसत्त्वेनतदभावापत्तिरनिष्टैवेति । आदिपदबहुवचनाभ्यांयमनाशानंतरंपश्चिमाद्युदयकालस्यायमत्वस्यादित्याद्यपिसूचितं । किंचत्वत्पक्षेऊर्ध्वोदयकालसमाप्त्यनंतरमपिनप्रलयःसंभवति । अथततऊर्ध्वउदेत्येत्युत्तरखंडेऊर्ध्वोदयकालसमाप्त्यनंतरमपिआदित्यसद्भावांगीकारात् । नह्यादित्योपेतःकालःप्रलयइतिप्रामाणिकमित्याह ॥ अथेत्यादिना ॥ अस्मन्मतेआदित्यशब्दस्यभगवत्परत्वात् । तस्यचप्रलयेवस्थितत्वान्नदोषइतिसूचनायतत्पक्षेइत्युक्तं । पश्चादपि ऊर्ध्वोदयकालसमाप्त्यनंतरमपि । उपसंहारेकारणंवदन्उपसंहरति ॥ इत्यादीति ॥ पूर्ववस्वादीनांपूर्वादिदेशनियमोऽप्रामाणिकइत्युक्तं । इदानींप्रमाणविरुद्धश्चेत्याह ॥ वस्वादीनामिति ॥ यद्यपिपरव्याख्याननिराकरणस्योपसंहृतत्वान्नेदंयुक्तं । तथाप्यनंतदोषदुष्टत्वेपीत्यस्यप्रौढिवादत्वनिरासायपुनर्दूषणोक्तिरित्यवसेयं । तुशब्दोवधारणे । सर्वेषामपिवस्वादीनांदेवानांसर्वदिक्षुपुराणिसंत्येवेत्यन्वयः । ननुसर्वदेवानांसर्वदिक्ष्वपिपुराणिसंतिचेदिंद्रस्यपूर्वस्यांदिशियमस्यदक्षिणस्यांपुरमित्यादि

---

भा० । अथततऊर्ध्वउदेत्येतितत्पक्षेपश्चादप्यादित्यभावात्कल्पांतप्रलयोपिनस्यात् । इत्याद्यनंतदोषदुष्टत्वेपिग्रंथाल्पत्वायैवोपरम्यते । वस्वादीनांतुसर्वेषांसर्वदिक्षुपुराण्यपि ।

विशेषोक्तिःकथमित्यतआह ॥ एवमपीति ॥ धीवृत्त्यै ध्यानार्थं । कथ्यते पुरमितिशेषः । किंचस्यादयंवस्वादीनांदेशनियमो यदींद्रपुर्युद्वासानंतरंरुद्रादयःसंतीतिप्रामाणिकंस्यात् । तेषामिंद्रपरिवारत्वेनेंद्रनाशेवस्थित्यसंभवात् । अतोनत्वदभिप्रेतोदेशनियमोयुक्तइत्याह ॥ ऐंद्र्याइति ॥ उदयाभावोऽवस्थित्यभावः । उपसंहरति ॥ अतइति ॥ प्रमाणाभावात्तद्विरोधाच्च । एतत्वस्वादीनांनियतदेशत्वकल्पनं । यत्किंचित्फल्गित्यर्थः । किंचकालांतरभाविदक्षिणाद्युदयस्यासुरमतत्वाद्दैनंदिनोक्तदक्षिणाद्युदयस्यचदेवरहस्यत्वान्नत्वद्व्याख्यानंयुक्तं । किंत्वस्मद्व्याख्यानमेवेत्याशयेनताद्दगाख्यायिकामाह ॥ उदेतीत्यादिना ॥ पूर्वतःपूर्वस्यां दिशि । नियमोनन्यथाभावः । उद्दिष्टःउपदिष्टः । सूर्यप्रतीतिशेषः । पुनःशब्दःसमुच्चये । पुराहिरण्यकेनहिरण्याक्षेणचसूर्यस्य द्विगुणंद्विगुणकालंद्विगुणोत्तरोत्तरेणकालेन । दक्षिणादिषुउदित्वापश्चान्मध्येव्यवस्थितिः । ब्रह्माणंयाचितेतियोजना । मध्येव्यवस्थितिरित्यनेनाथततऊर्ध्वंउदेत्येत्येतत्खंडस्यापित्वदीयंव्याख्यानमासुरमतमेवेतिसूचयति । तदातस्मिन्समयेऽसुराणांदेवत्वं चयाचितमितिशेषः । तत्वरद्वयं । ननुयदिसवरस्त्वयानदत्तः तर्हिंदक्षिणाद्युदयोभविष्यतीतित्वद्वचनंअप्रमाणंस्यादित्यतःस्वो

भा० । संत्वेवमपिधीवृत्त्यैप्रत्येकंदिक्षुकथ्यतइतिच । ऐंद्र्याउद्वासेरुद्राणामेवोदयाभावइतिचदोषः । अतोयत्किंचिदेतत् । उदेतिपूर्वतःसूर्योनिम्लोचतिचपश्चिमे । एवंनियमउद्दिष्टोब्रह्मणाविष्णुचोदनात् । द्विगुणंद्विगुणंकालमुदित्वादक्षिणादिषु । मध्येव्यवस्थितिःपश्चाद्ब्रह्माणंयाचितापुरा । हिरण्यकेनसूर्यस्यहिरण्याक्षेणवैपुनः । तदासुराणांदेवत्वं ब्रह्मातत्प्रददौतयोः । तच्छ्रुत्वेंद्रादिभिःप्रोक्तःकथंप्रादावराविमौ । देवताहिविनश्येयुरेवंदत्तेवरेत्वया । इत्युक्तोदैवतैःप्राहब्रह्मालोकपितामहः । नमयासवरोदत्तोदैतेयानांसुराः क्वचित् । येनयुष्मद्विनाशःस्यात्ततोव्येतुचवोभयं ।



त्त्यभिप्रायंदेवान्प्रत्याह ॥ दक्षिणाद्युदयइत्यादिना ॥ दैनंदिनःदिनेदिनेभवःक्वचिच्चेत्यन्वयः । ननुत्वदभिप्रेतोदैनंदिनोदक्षिणाद्युदयःकीद्दशइत्यपेक्षायांतंविविच्याह ॥ अर्धनाडीति ॥ रविर्नित्यशःपूर्वरात्रेतुपूर्वरात्रएव । अर्धनाड्युत्तराःसकाष्ठाःपंचदश नाडीःदक्षिणादुत्तरांदिशंगच्छेदितियोजना । अनेनदक्षिणोदयोत्तरास्तमयौदर्शितौ । तथोक्तंपुरस्तात् । अत्रनाडीशब्दोघटिकापरः । काष्ठाशब्दश्चघटिकाष्टमांशपरइत्यवधेयं । अनेनयदुक्तमीषदूनंघटिकाद्वयमवशिष्यतइतितस्यकाष्ठोनघटिकाद्वयमवशिष्यतइत्येवार्थः । तन्मध्येचकाष्ठाद्वयसहितघटिकायावसुकालेंऽतर्भावः । अवशिष्टस्यसकाष्ठार्धनाड्यात्मकस्यकालस्यरुद्रकालेंऽतर्भावइत्युक्तंभवतीतिज्ञातव्यं वसुरुद्रकालयोरेवसाधिकासकाष्ठेतिविशेषाधिक्योक्तेरन्यत्रतदभावादेवावशिष्टकालविभागःकृतोनान्यत्रेतिभावः । तदर्धमित्यत्रचनसाकाष्ठार्धनाड्युत्तरपंचदशघटिकार्धकालंदेशंचेत्यर्थः । अनेनक्रमेणोत्तरत्रापितत्तदर्धविवक्षायामहोरात्रात्मककालस्यषष्टिघटिकातोप्यधिक्यापत्तेः । किंतुपंचदशघटिकार्धमित्येवव्याख्येयं । अधिकस्याल्पस्याविवक्षितत्वादितिज्ञातव्यं । एवमुत्तरत्रापि । पश्चिमात्पूर्वंगच्छेदित्यनेनपश्चिमोदयपूर्वास्तमयावुक्तौद्रष्टव्यौ । उत्तराद्दक्षिणांदिशंगच्छेदित्यनेनउत्तरोदयदक्षिणास्तमयौदर्शितौ । ऊर्ध्वादित्यनेनोर्ध्वोदयादर्वागस्तमयावुक्तौ । ननुभवतुत्वदभिप्रेतोदैनंदिनोदक्षिणाद्युदयएताद्दशस्तथापि द्विगुणंकालमुदित्वेतिप्रार्थितत्वादुक्तदैनंदिनदक्षिणाद्युदयस्यपूर्वोदयस्यपूर्वोदयाद्द्विगुणत्वादिकथमित्यतस्तत्रापिस्वाभिप्रेतमर्थं

भा० । दक्षिणाद्युदयोयस्तुसहिदैनंदिनोमया । अभिप्रेतोनैवचायंकालांतरगतःक्वचित् । अर्धनाड्युत्तरानाडीःसकाष्ठानित्यशोरविः । पंचादशोत्तरांगच्छेत्पूर्वरात्रेतुदक्षिणात् । तदर्धंपश्चिमात्पूर्वंतदर्धंचोत्तरादपि । दक्षिणांचतदर्धंसऊर्ध्वादर्वाक्चगच्छति । दक्षिणाद्युदयस्त्वेषनतुकालांतरेक्वचित् ।

माह ॥ **यदेति** ॥ उत्तरस्माद्दक्षिणाद्युदयकालात्पूर्वःपूर्वोदयकालः । नन्वेवंयदिदक्षिणाद्युदयोविवक्षितस्तर्हिंउत्तरपुरीसंस्थाना
मस्मदहर्मानसमानमहर्मानंनस्यात् । अनेकेषामुदयास्तमयानांप्राप्तत्वादित्यतस्तदप्यहोस्मदहःसममेव । तत्रोक्ताश्चोदयास्तमयाः
गौणाएवविवक्षिताइत्याह ॥ **अहरिति** ॥ अहःसाम्येपिअन्येषुदक्षिणाद्युदयस्थानत्वेनोक्तदेशविशेषेषुउदयास्तमयाविवनमुख्यौ ।
तत्रमुख्यार्थसादृश्यंनिमित्तमाह । क्षिप्रंक्रमशोगिर्यावृत्तेरातपस्यतेजोमंडलस्याल्पकालतइति । अयंभावः । यद्देशस्थानांतेजोमं
डलंसमीपवर्ति तेषामुदयइव । मंडलसामीप्यसाम्यात् । प्रसिद्धोदयोहिमंडलमस्माकंसमीपवर्ति ततउक्तकालैर्गंतव्यतत्तद्देश
विशेषगमनेदूरगमनसाम्येनपूर्वेषामस्तमयइव प्रसिद्धास्तमयेपिमंडलमस्माकंदूरंयातीति । ननुभवतुत्वदभिप्रेतोदक्षिणा
द्युदयोदैनंदिनःतथाप्यस्माकमनिष्टमेव । हिरण्यकेनदक्षिणाद्युदयेऽसुराणांदेवत्वस्यप्रार्थितत्वात् । भवताचतस्यदत्तत्वात्
दैनंदिनदक्षिणाद्युदयेअसुराणांदेवत्वप्राप्तेरित्यतआह ॥ **कालांतरइति** ॥ भवतुकालांतरभाविदक्षिणाद्युदयापेक्षयाद्वितीय
वरदानं तथाप्यनिष्टमेव । भवदिच्छयासूर्यस्यकालांतरेदक्षिणाद्युदयेऽसुराणांदेवत्वप्राप्तेरित्यतआह ॥ **समयश्चेति** ॥
नित्योनियतः तमेवसमयमाह ॥ **पूर्वस्मादिति** ॥ तथेत्यनंतरंइतिशब्दोध्याहार्यः । केनचित्निमित्तेनपुरुषेणवा का

---

भा० । यदोत्तरस्माद्द्विगुणःपूर्वोभवतिवैसुराः । तदापिद्विगुणत्वंस्यात्तन्मयात्रविवक्षितं । अहःसाम्येपिक्रमशआतपस्याल्पकालतः । गिर्यावृतेःक्षिप्रमन्येषूदयास्तमयाविव ।
कालांतरेभाविनंतुदक्षिणाद्युदयंपुनः । अपेक्ष्यैववरोदत्तोद्वितीयोदेवतामया । समयश्चकृतोनित्योमयासूर्यस्यचानघाः । पूर्वस्मादुदयोनित्यःपश्चिमेस्तमयस्तथा । नियमो
नान्यथायंस्यात्कदाचित्केनचित्क्वचित् । तस्मान्नवोभयंक्वापिप्रोक्ताइत्थंसुरास्तदा । विशोकाअभवन्सर्वेययुःस्वंस्वंनिवेशनमितिच ।

लांतरभाविदक्षिणाद्युदयासत्वमेवब्रह्मणोभिप्रेतमतःसकदापिनभविष्यतीत्यत्रमोक्षधर्मसंवादमपिवक्तुमाह ॥ एतदेवेति ॥ एत
देव कालांतरेदक्षिणाद्युदयासत्वमेव । उदाहरिष्यमाणमोक्षधर्मवचनस्यअभिप्रायाप्रतीतेस्तात्पर्यमाह ॥ देवानिति ॥ मोक्षधर्म
वचनमुदाहरति ॥ दैतेययोरिति ॥ सुरान्प्रतिब्रह्मणोक्तं । अविज्ञायेतिसंबंधः । अविज्ञानमात्रेणकथंतथोक्तिरित्यतउक्तं ।
दैतेययोरिति । यस्माद्ब्रह्मणारवेःप्रागुदयविषयेनियमःकृतःतस्मान्नकदाचनतद्भवेदितिसंबंधः ॥ खं० ६ ॥ १० ॥ ततश्चायंख
ण्डपंचकार्थः ॥ तत्प्रसिद्धं । यत्प्रथममममृतंवासुदेवाख्यंतत्वसवःप्राप्तपदाःउपजीवंति । श्रवणादिरूपविचारानंतरंपश्यंती
त्यर्थः । अग्निनामुखेनप्रधानेनसहिताः अग्निप्रधानकाइत्यर्थः । इतरवसून्प्रतिसउपदेष्टेतिभावः । उपजीवंतीत्युक्तापरो
क्षज्ञानेविषयवैराग्यंकारणमितिदर्शयंस्तत्साध्यमाह ॥ नवाइति ॥ यावदेवामृतंदृष्ट्वातृप्यंतिमुक्तिंप्राप्नुवंति । तावत्देवाःनाश्नं
तिनपिबंति । उपलक्षणयासमस्तविषयभोगविरक्ताभवंतीत्यर्थः । तृप्यंतीत्युक्तमेवविवृणोति ॥ एतदेवरूपमिति ॥ एतदंतः
प्रविष्टाभवंतीत्यर्थः । उद्यंतिस्वेच्छयैवबहिरपिनिर्यांति ॥ १ ॥ एवंप्राप्तपदानांवसूनांसायुज्यरूपमुक्तिफलमभिधायाधुनाऽ

---

भा० । एतदेवमोक्षधर्मेषुबलिवासवसंवादउक्तं । देवान्प्रतिब्रह्मणोवचनंरहस्यत्वादविज्ञायबलिनादक्षिणाद्युदयउक्तः । इंद्रेणतुब्रह्मवचनंजानतादक्षिणाद्युदयोनास्ती
त्युक्तं । दैतेययोर्वरंज्ञात्वात्वविज्ञायसुरान्प्रति । ब्रह्मणोक्तंहिबलिनावासवंप्रत्युदीरितं । दक्षिणाद्युदयांतेतुत्वांजेष्यामिपुरंदर । इत्युक्तस्तमुवाचेंद्रोनकदाचनतद्भवेत् । ब्रह्मणा
नियमोयस्मात्कृतःप्रागुदयोरवेः । इत्युक्त्वातुजगामेंद्रोदिवमैरावतस्थितइतिच ॥ खं० ६—१० ॥

उ० । तद्यत्प्रथमममृतंतद्वसवउपजीवंत्यग्निनामुखेननवैदेवाअश्नंतिनपिबंत्येतदेवामृतंदृष्ट्वातृप्यंतितएतदेवरूपमभिसंविशंत्येतस्माद्रूपादुद्यंति ॥ १ ॥

प्राप्तपदानांवसुपदयोग्यानामेतद्विद्यासाध्यंफलमाह ॥ सयइति ॥ योधिकारीएतत् अमृतंएवंवेदसवसूनामेवैकोभूत्वावसुभोग्यदेशकालाधिपोभूत्वाऽग्निनामुखेनप्रधानेनतदुपदेशेनेतियावत् । एतदेवामृतंदृष्ट्वेत्यादिपूर्ववत् ॥ २ ॥ ननुवसुभोग्यौदेशकालौकियंतौ यदधिपोयंभवतीत्युक्तमित्यपेक्षयामाह ॥ सयावदादित्यइति ॥ आदित्यः यावत् यावताकालेन काष्ठाद्वयसहितैकत्रिंशद्घटिकात्मकाहर्लक्षणेन तत्कालगंतव्यदेशेनच पुरस्तादुदयाद्रौउदेत्यपश्चादस्ताद्रावस्तमेता तावत् तावत एवउदयास्ताद्रिमध्यस्यैवदेशस्योक्तपरिमाणाहर्लक्षणस्यैवकालस्यचवसूनामाधिपत्यमस्ति । सःपूर्वोक्तोधिकारीतत्पर्येतापरितोगंता । नकेवलमाधिपत्यंपर्येता । किंतुस्वाराज्यं स्वंरंजयतीतिस्वराट् स्वराडेवस्वाराज्यं विषयानुभवरूपोभोगः तमपिपर्येता । अधिगच्छतीत्यर्थः ॥ ३ ॥ षष्ठःखंडः ॥ ६ ॥ अथयद्वितीयममृतंसंकर्षणाख्यं शिष्टंपूर्ववत् । ननुकौतौरुद्रभोग्यौदेशकालौयदधिपोयंभवतीत्युक्तमित्यपेक्षायामाह ॥ सयावदादित्यइत्यादिना ॥ आदित्यःयावत् । यावतादेशेनकालेनच दक्षिणतउदेतातद्देशगतान्प्रतिस्वसामीप्येनउदयंप्राप्तइवोत्तरतोस्तमेता तान्प्रत्येवदूरगमनेनोत्तरदेशविशेषेऽस्तंप्राप्त इवतावतः

---

उ० । सयएतदेवममृतंवेदवसूनामेवैकोभूत्वाग्निनैवमुखेनैतदेवामृतंदृष्ट्वातृप्यतिसएतदेवरूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ २ ॥ सयावदादित्यःपुरस्तादुदेतापश्चादस्तमेतावसूनामेवतावदाधिपत्यंस्वाराज्यंपर्येता ॥ ३ ॥ खं० ॥ ६ ॥ अथयद्द्वितीयममृतंतद्रुद्राउपजीवंतींद्रेणमुखेननवैदेवाअश्नंतिनपिबंत्येतदेवामृतंदृष्ट्वातृप्यंतितएतदेवरूपमभिसंविशंत्येतस्माद्रूपादुद्यंति ॥ १ ॥ सयएतदेवममृतंवेदरुद्राणामेवैकोभूत्वेंद्रेणैवमुखेनैतदेवामृतंदृष्ट्वातृप्यतिसएतदेवरूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ २ ॥



कालस्यदेशस्यचरुद्राणामाधिपत्यंसोधिकारीतत्पर्येता । तत्रस्वाराज्यंभोगंचपर्येता । ननुरुद्रभोग्यौदेशकालौवसुभोग्यदेशकालापेक्षयाकियंतावित्यपेक्षायांतदर्धभूतावित्याह ॥ पुरस्तादित्यादिना ॥ आदित्यःयावत् यावताकालेनसकाष्ठार्धनाड्युत्तरपंचदशघटिकात्मकपूर्वरात्ररूपेणतद्गंतव्यदेशेनचदक्षिणतःउदेतोत्तरतोस्तमेता तावत्तावतःकालादेःद्विर्द्विगुणंकालंपुरस्तादुदेतापश्चादस्तमेतारुद्रभोग्यदक्षिणोदयकालाद्यपेक्षयावसुभोग्यःपूर्वोदयकालादिर्द्विगुणइत्यर्थः । तथाचरुद्रभोग्यकालादेर्वसुभोग्यकालाद्यर्धतापर्यवस्यतीतिभावः ॥ ३ ॥ सप्तमःखंडः ॥ ७ ॥ अथयत्तृतीयममृतंप्रद्युम्नाख्यं । शिष्टंपूर्ववत् ॥ २ ॥ नन्वादित्यभोग्यौदेशकालौ । यदधिपोयंभवतीत्युक्तमित्यतआह ॥ सयावदादित्यइत्यादिना ॥ आदित्यःयावत् यावताकालेनदेशेनच पश्चादुदेतातद्देशगतान्प्रतिस्वसामीप्येनोदयंप्राप्तइव पुरस्तात्पूर्वदेशविशेषेऽस्तमेता तान्प्रत्येवकिंचिद्दूरगमनसाम्येनास्तंप्राप्तइवतावत्तावतोदेशस्यकालस्यचादित्यानामाधिपत्यंवर्ततेसःतत्पर्येता स्वाराज्यंभोगंचपर्येता । नन्वादित्यभोग्यौदेशकालौरुद्रभोग्यदेशकालापेक्षयाकियंतावित्यपेक्षायांतदर्धभूतावित्याह ॥ दक्षिणतइत्यादिना ॥ आदित्यःयावत् यावताकालेनदेशेनच पश्चादुदेतापुरस्तादस्तमेता तावत् तावतःकालस्यदेशस्यच द्विर्द्विगुणंदक्षिणतउदेताउत्तरतोस्तमेता आदित्यभो

---

उ० । सयावदादित्यःपुरस्तादुदेतापश्चादस्तमेताद्विस्तावद्दक्षिणतउदेतोत्तरतोस्तमेतारुद्राणामेवतावदाधिपत्यंस्वाराज्यंपर्येता ॥ ३ ॥ खं० ॥ ७ ॥ अथयत्तृतीयममृतंतदादित्याउपजीवंतिवरुणेनमुखेननवैदेवाअश्नंतिनपिबंत्येतदेवामृतंदृष्ट्वातृप्यंतितएतदेवरूपमभिविशंत्येतस्माद्रूपादुद्यंति ॥ १ ॥ सयएतदेवममृतंवेदादित्यानामेवैकोभूत्वावरुणेनैवमुखेनैतदेवामृतंदृष्ट्वातृप्यतिसएतदेवरूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ २ ॥ सयावदादित्योदक्षिणतउदेतोत्तरतोस्तमेताद्विस्तावत्पश्चादुदेतापुरस्तादस्तमेताऽऽ

ग्यपश्चिमोदयकालाद्यपेक्षयारुद्रभोग्यदक्षिणोदयकालादिर्द्विगुणइत्यर्थः । तथाचादित्यभोग्यकालादेःरुद्रभोग्यकालाद्यर्धताप र्यवस्यतीतिभावः । अनयैवरीत्योत्तरखंडद्वयगतमिदंवाक्यंव्याख्येयं ॥ ३ ॥ अष्टमःखंडः ॥ ८ ॥ चतुर्थममृतंअनिरुद्धाख्यं ॥ खं० ॥ ९ ॥ पंचमममृतंनारायणाख्यं । शिष्टंसमानं ॥ दशमःखंडः ॥ १० ॥ एवंप्रतिदिनंपूर्वाद्युदयंकुर्वन्नादित्यनामाहरि र्मधुतयोपास्यइत्युक्तं । इदानींप्रलयेपिकिमेवमुदयादिकंकरोतीत्यपेक्षायांनेत्याह ॥ अथततइति ॥ प्रसिद्धादित्यपरतानिरा सायखंडंप्रमाणेनैवव्याचष्टे ॥ अथेति ॥ श्रुतौकर्तृवाचिपदाभावादादित्यपदानुवृत्तिमभिप्रेत्यभगवतितन्निर्वक्ति ॥ आदिमू लतइति ॥ आदिकारणत्वादित्यर्थः । ततऊर्ध्वइत्यस्यतात्पर्यार्थोमंडलादूर्ध्वंगच्छतीति । उदेत्येत्यस्यार्थोवैकुंठलोकंप्राप्येति ।

---

उ० । दित्यानामेवतावदाधिपत्यंस्वाराज्यंपर्येता ॥ ३ ॥ खं० ॥ ८ ॥ अथयच्चतुर्थममृतंतन्मरुतउपजीवंतिसोमेनमुखेननवैदेवाअश्नंतिनपिबंत्येतदेवामृतंदृष्ट्वातृप्यंतितएतदेवरूपमभिसंविशंत्येतस्माद्रूपादुद्यंति ॥ १ ॥ सयएतदेवममृतंवेदमरुतामेवैकोभूत्वासोमेनैवमुखेनैतदेवामृतंदृष्ट्वातृप्यतिसएतदेवरूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ २ ॥ सयावदादित्यःपश्चादुदेतापुरस्तादस्तमेताद्विस्तावदुत्तरतउदेता दक्षिणतोस्तमेतामरुतामेवतावदाधिपत्यंस्वाराज्यंपर्येता ॥ ३ ॥ खं० ॥ ९ ॥ अथयत्पंचमममृतं तत्साध्याउपजीवंतिब्रह्मणामुखेननवैदेवाअश्नंतिनपिबंत्येतदेवामृतंदृष्ट्वातृप्यंतितएतदेवरूपमभिसंविशंत्येतस्माद्रूपादुद्यंति ॥ १ ॥ सयएतदेवममृतंवेदसाध्यानामेवैकोभूत्वाब्रह्मणै वमुखेनैतदेवामृतंदृष्ट्वातृप्यतिसएतदेवरूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ २ ॥ सयावदादित्यउत्तरतउदेतादक्षिणतोस्तमेताद्विस्तावदूर्ध्वउदेताऽर्वाङस्तमेतासाध्यानामेवतावदा धिपत्यंस्वाराज्यंपर्येता ॥ १० ॥



भा० । अथसूर्यस्थितोविष्णुरादित्यस्त्वादिमूलतः । आदानाद्वापिदेवानामूर्ध्वंगच्छातिमंडलात् । प्राप्यवैकुंठलोकंचनोदेत्यस्तंनचैतिसः । एकलःप्रलयेस्थाता

अनेनउतूऊर्ध्वंवैकुंठंएत्यप्राप्येत्यर्थउक्तोभवति । मध्यइत्यस्यार्थःप्रलयइति । प्रलयकालइत्यर्थः । तस्यस्थितिसृष्टिकालमध्यत्वादितिभावः । देवास्तेनाहंसत्येनमाविराधिषिब्रह्मणेत्यत्र ब्रह्मणाब्रह्मस्वरूपेणमाविराधिषिमाविराध्येयमप्राप्तिर्ब्रह्मणोमाभूदितिव्याख्यानंअयुक्तं । अप्रामाणिकत्वात् । प्रमाणविरोधाच्चेतिभावेनतद्व्याचष्टे ॥ देवताइत्यादिना ॥ देवाइत्यस्यार्थोदेवताइति । कदाचनेत्यस्यतात्पर्यंनसंशयइति । तेनसत्येनसत्यवचनेन सत्येनब्रह्मणेतिवा । विराधिषीत्यस्यार्थोव्यृद्धिंसमृद्धिराहित्यंप्राप्नुयामिति । विराधिषीत्यत्रकर्तुरप्रतीतेस्तंदर्शयितुमाह ॥ इत्युवाचेति ॥ नहवाअस्माउदेतिननिम्लोचति । सकृद्दिवाहैवास्मैभवतियएतामेवंब्रह्मोपनिषदंवेदेतिवाक्यंअन्वयंदर्शयन्नेवमुक्तपरतयाव्याचष्टे ॥ एतामित्यादिना ॥ सकृदित्यस्यार्थोनित्यमिति । अनुदयास्तकंयथाभवतितथेतिक्रियाविशेषणं । अनेन नहवाअस्माउदेतीत्याद्युक्तार्थंतद्धैतद्ब्रह्माप्रजापतयउवाचेतिवाक्यंब्रह्माहिरण्यगर्भःप्रजापतयेविराजेइत्यन्यथाप्रतीतिनिरासायव्याचष्टे ॥ तदेतदिति ॥ तदेतज्ज्ञानंमधुनामकभगवज्ज्ञानं । यद्यप्यस्माइमामद्भिरित्यादिवाक्यमप्रतीतेर्व्याचष्टे ॥ पूरयित्वेति ॥ धनस्यपूर्णामित्यस्यतात्पर्यंरत्नैःपूरयित्वेति । अद्भिःपरिगृहीतामित्यस्यतात्पर्यंसप्तसमुद्रिणीमिति । एतदेवततोभूयइत्यस्यार्थो नैवपूर्यतेगुरुदक्षिणेति । सर्वाधिकारिकत्वप्रतीतिनिरासा

---

भा० । देवतानात्रसंशयः । तेनसत्येननव्यृद्धिमाप्नुयांब्रह्मणाक्वचित् । इत्युवाचपुराब्रह्मादेवेभ्यःसचतुर्मुखः । एतांविद्यांतुयोवेदनित्यमस्यदिवाभवेत् । वैकुंठधामसंस्थस्यमुक्तस्यानुदयास्तकं । तदेतद्भगवान्विष्णुःप्रादाज्ज्ञानंविरिंचये । विरिंचिर्मनवेप्राहप्रजाभ्योमनुरेवच । पूरयित्वातुपृथिवींरत्नैःसप्तसमुद्रिणीं । दत्वापिगुरवेनैवपूर्यतेगुरुदक्षिणा ।

यैंतद्विद्योपास्तौयोग्यानाह ॥ देवाइति ॥ माविराधिषिब्रह्मणेतिवाक्यंपूर्वंब्रह्मणाव्यृद्धिंनप्राप्नुयामितिव्याख्यातमपिब्रह्म णाचतुर्मुखेनव्यृद्धिंविशेषेणऋद्धिंइत्यन्यथाप्रतीतिनिरासायविशदयति ॥ ब्रह्मणेत्यादिना ॥ खं० ॥ ११ ॥ ततश्चायंखंडा र्थः ॥ अथोदयास्तमयप्रचारानंतरं । प्रलये आदित्यनामाभगवान् । ततोमंडलादूर्ध्वः ऊर्ध्ववैकुंठलोकं । गच्छतीतिशेषः । उदेत्य उत्ऊर्ध्ववैकुंठप्राप्य नैवोदेता । नास्तमेता तत्रैतादृशोदयादिकंनकरोतीत्यर्थः । किंतुएकलः एकप्रकारएव । मध्ये स्थितिसृष्टि कालमध्ये स्थाता ॥ १ ॥ एवंवैकुंठधाम्निआदित्यनाम्नोहरेरुदयास्तमयाभावेप्रमाणमाह ॥ श्रुतिः । तत् तत्रोक्तार्थे । एषःव क्ष्यमाणःश्लोकइति । तत्र वैकुंठगतआदित्यनाम्निहरौ नैव दोषाइतिशेषः । दोषाभावमेकदेशेनदर्शयन्नाह ॥ ननिम्लोचइ त्यादिना ॥ नोदियाय नोद्गतः । उदयास्तमयादिदोषास्तत्रनसंतीत्यर्थः । हेदेवास्तेनसत्येन भगवान्निर्दोषइत्यादिनासत्यवच नेनशपथरूपेणाहंब्रह्मणा परब्रह्मणा तत्प्रसादादितियावत् । माविराधिषि अवृद्धिंनप्राप्नुयामितिदेवान्प्रतिब्रह्मणोवचनं । स त्येनब्रह्मणेतिवासंबंधः ॥ २ ॥ एतद्विद्यावेत्तुर्मुक्तिरूपंफलमाह ॥ नहवाअस्माउदेतीति ॥ योधिकारीएतांब्रह्मोपनिषदं एव

भा० । देवास्तूपासनायोग्याएकैकस्यामृतस्यहि । सर्वस्योपासनेब्रह्मातदन्येज्ञानमात्रके । उपासनेनैवयोग्यास्तद्योग्याहिसुरायतइतिदेवश्रुतौ । ब्रह्मणापरेणमाविराधिषि । भगवत्प्रसादादवृद्धिंनप्राप्नुयामित्यर्थः ॥ ११ ॥

उ० । अथततऊर्ध्वउदेत्यनैवोदेतानास्तमेतैकलएवमध्येस्थाता ॥१॥ तदेषश्लोकः । नवैतत्रननिम्लोचोनोदियायकदाचन । देवास्तेनाहंसत्येनमाविराधिषिब्रह्मणेति नहवाअस्माउदेतिननिम्लोचतिसकृद्दिवाहैवास्मैभवतियएतामेवंब्रह्मोपनिषदंवेद ॥ ३ ॥



मुक्तप्रकारेण वेद । अस्मैसविता । नोदेतिननिम्लोचति । किंतुसकृत्सदा । दिवैवभवतिहेतिसंबंधः ॥ ३ ॥ महदुपदेशपरंपरा प्राप्ताचेयंविद्याऽतोमहतीत्याशयेनाह ॥ तद्धैतदिति ॥ तदेतत् मधुतयाभगवज्ज्ञानं । ब्रह्माविष्णुः । प्रजापतयेविरिंचाय । मनवेस्वायंभुवाय । प्रजाभ्यःइक्ष्वाकुप्रभृतिभ्यः । इयंचातिगोप्यत्वान्नयस्मैकस्मैचनवाच्येत्याह ॥ तद्धैतदुद्दालकायेत्यादि ना ॥ यस्मादुद्दालकायआरुणयेज्येष्ठायपुत्रायपिता तदेतद्ब्रह्म प्रोवाच ॥ ४ ॥ तत्तस्मा दिदंब्रह्म अन्योपिपिता ज्येष्ठायैवपु त्रायप्रब्रूयादितियोजना । प्रणाय्यायप्रणयवतेंतेवासिनेवा । ब्रह्मब्रूयादितिसंबंधः ॥ ५ ॥ एतद्विद्योपदेष्टुःसदृशगुरुदक्षिणाभा वाच्चैषामहतीत्याह ॥ यदीति ॥ यदिअस्मैएतद्विद्योपदेष्ट्रे अद्भिःसमुद्रैः परिगृहीतांपरिवृतां । धनस्यरत्नादिधनेनपूर्णामपी मांपृथ्वींदद्यात् । गुरुदक्षिणात्वेनेतिशेषः । तर्ह्यपि तादृशपृथिवीदानंनैतद्विद्यादानसमं । किंतुततःतादृशपृथ्वीदानादपि एतदेव एतद्विद्यादानमेव भूयोऽधिकमित्यर्थः । द्विरुक्तिरुक्तावधारणार्था ॥ ६ ॥ एकादशःखंडः ॥ ११ ॥ एवंआदित्यांतर्गतस्यभग वतोवस्वादिसर्वदेवतोपास्यत्वादिरूपंमहिमानंनिरूप्येदानींतत्प्रतिपादकगायत्रीनिष्ठस्यगायत्रीनाम्नोभगवतःषड्विधत्वादिरूपोमहि मानिरूप्यते ॥ गायत्रीत्यादिना ॥ इदंसर्वंभूतं प्राणिजातं । यत्किंच स्थावरंजंगमंवातत्सर्वं । गायत्रीवैइत्यन्यथाप्रतीतिनि

उप० । तद्धैतद्ब्रह्माप्रजापतयउवाचप्रजापतिर्मनवेमनुःप्रजाभ्यस्तद्धैतदुद्दालकायारुणयेज्येष्ठायपुत्रायपिताब्रह्मप्रोवाच ॥४॥ इदंवावतज्ज्येष्ठायपुत्रायपिताब्रह्मप्रब्रूयात्प्रणा य्यायवांतेवासिनेनान्यस्मैकस्मैचन ॥ ५ ॥ यद्यप्यस्माइमामद्भिःपरिगृहीतांधनस्यपूर्णांदद्यादेतदेवततोभूयइत्येतदेवततोभूयइति ॥ ६ ॥ एकादशःखंडः ॥ ११ ॥

भा० । यदिदंकिंचभूतंप्रभूतंपरिपूर्णंतत्सर्वंगायत्रीभगवानेव । भूबहावितिधातोः । बहुःपूर्णतायामितिच ।

रासायगायत्रीवाइदंसर्वंभूतंयदिदंकिंचेतिवाक्यंअन्वयप्रदर्शनपूर्वकंव्याचष्टे ॥ **यदिदमिति** ॥ भूतमित्यनूद्यप्रभूतमितिव्याख्यानं तस्यैवलब्धार्थप्रदर्शनं परिपूर्णमिति । यच्छब्दश्रवणात्तदित्यध्याहृतं ।वाइत्यस्यार्थः एवेति । नान्यदित्यर्थः । अनेनभूतशब्दवाच्यतयावक्ष्यमाणस्यमत्स्यादेःसर्वांतस्थितस्यचरूपस्यगायत्रीनामकभगवदभिन्नांशत्वमुक्तंभवति । ननुभूधातोःसत्तार्थत्वप्रसिद्धेः कथंभूतंप्रभूतमितिव्याख्यातमित्यतआह ॥ **भूबहाविति** ॥ नन्वथापिपूर्णमितिलब्धार्थकथनमयुक्तं । बहुत्वस्यसंख्याविशेषरूपस्यापूर्णसर्ववस्तुसाधारण्यादित्यतआह ॥ **बहुरिति** ॥ तथाचपूर्णस्यैवमुख्यतोबहुशब्दवाच्यत्वेनप्रसिद्धत्वात् । मुख्यस्यैवचग्राह्यत्वात्तत्पर्यायेणापिभूतशब्देनपूर्णमेवग्राह्यमितिभावः । एवमादिवाक्यंस्ववाक्येनव्याख्यायतत्स्थेमन्त्रेगायत्र्यावाग्रूपायाःसर्वात्मकत्वमत्रोच्यतइतिपरकीयव्याख्याननिरासायचप्रमाणेनैवखंडंव्याचष्टे॥ **यदिदमित्यादिना**॥ परितोदेशतोगुणतःकालतश्चपूर्णमितिभूतशब्दार्थकथनं । तथाचयदिदंपरितःपूर्णंमत्स्यकूर्मादिरूपकंसर्वांतःस्थितंच । तदिदंसर्वंभगवान् गायत्रीनामाविष्णुरेवेतिसंबंधः । भगवतिगायत्रीशब्दंनिर्वक्तुंप्राप्तंगायतिचत्रायतेचेतिवाक्यंकर्माप्रतीतेर्गानस्वरूपाप्रतीतेश्चतदुभयंदर्शयन्व्याचष्टे॥ **तदिति** ॥ तेनोच्चारितत्वादित्यर्थः । तथाचवेदोच्चारणमेवात्रगानंविवक्षितमितिभावः । भूतमितिपूर्णमितिव्याख्यानं । तत्कथंशब्दलब्धमित्यतस्तद्दर्शयति ॥ **भूमेति** ॥ भूतमितिभूमाप्रोक्तः । भूबहावितिधातोः । भूमाचपुरुषोत्तमोमत्स्यादिरूपीप्रोक्त

---

भा० । यदिदंपरितःपूर्णमत्स्यकूर्मादिरूपकं । तदिदंभगवान्विष्णुःसर्वांतःस्थितएवच । तन्निःसृतत्वाद्वेदानांगायकत्रातिचाखिलं । अतोगायत्रिनामासौवासुदेवःपरः पुमान् । भूमाभूतमितिप्रोक्तःपूर्णत्वात्पुरुषोत्तमः ।

स्तस्यपूर्णत्वात्भूमशब्दस्यचतदर्थत्वेनप्रसिद्धत्वात् । बहुःपूर्णतायामित्युक्तेरितिभावः । यद्भूतंप्रभूतंपूर्णंतत्सर्वंगायत्रीनामाविष्णुरेवेतिव्याख्यानमयुक्तं । मुक्तानांरमायाश्चपूर्णत्वेनविष्णुत्वापत्तेरतउक्तंविशदयति ॥ **अनन्यापेक्षमिति** ॥ उद्रिक्तंपूर्णमत्स्यादि ततश्चानन्यापेक्षत्वेनपूर्णत्वंविशेषणीयमितिभावः । सर्वस्यविनियामकंसर्वांतस्थितं । यद्यदितिवीप्सासर्वरूपसंग्रहार्था । एतादृशंअनन्यापेक्षमुद्रिक्तं । अतोनातिप्रसंगइतिभावः । अनेनगायत्रीनाम्नोहरेरत्रविवक्षितषड्विधरूपमध्येयद्गायत्रीसंस्थंगायत्रीनामकंतदेवप्रथमंरूपंभूतशब्दोक्तं । मत्स्यादिसर्वांतस्थितंचद्वितीयमितिविवक्षितमित्युक्तंभवति । तस्यतृतीयंरूपंवक्तुं वाग्वैगायत्रीतिवाक्यंप्रवृत्तं तद्गायत्र्याःशब्दात्मकत्वमुच्यतइतिव्याख्यानमप्रामाणिकमित्याशयेनव्याचष्टे ॥ **सएवेति** ॥ गायत्रीनामैव । वैशब्दार्थएवेति । सएववाङ्नामानान्यइत्यनेनास्यतदभिन्नांशत्वमुक्तंइतिज्ञातव्यं । वाङ्नामकत्वंकेननिमित्तेनेत्यतउक्तंवचनादिति । अनेनवक्तीतिवागितिनिर्वचनंसूचितंभवति । वाचिसंस्थितइत्येतदधिष्ठानकथनार्थं । एवंपृथिव्यामपिसंस्थितइत्यादिकमपिज्ञातव्यं । वाङ्नामाहरिःकिंरूपइतिजिज्ञासायामाह ॥ **हयशीर्षाख्यइति** ॥ ननुगायत्रीसंस्थोपिभगवान् किमाकारइत्याकांक्षायामाह ॥ **गायत्र्यामिति** ॥ सहयशीर्षाख्यः गायत्रीनाम्नोविष्णोश्चतुर्थरूपंवक्तुंयावैसागायत्रीत्यादिवाक्यंप्रवृत्तं । तत्प्रसिद्धपृथिवीमात्रपरमितिप्रतीतिनिरासायव्याचष्टे ॥ **सएवेति** ॥ गायत्रीनामैव । अस्यांहीदंसर्वंभूतंप्रतिष्ठितं ।

---

भा० । अनन्यापेक्षमुद्रिक्तंसर्वस्यविनियामकं । यद्यत्तत्तद्विष्णुरेवनान्यदेतादृशंकचित् । सएवभगवान्विष्णुर्वाङ्नामावाचिसंस्थितः । वचनाद्धयशीर्षाख्योगायत्र्यांच सआस्थितः । सएवपृथिवीनामापृथिव्यामपिसंस्थितः ।

एतामेवनातिशीयंतइतिवाक्यद्वयंप्रसिद्धपृथिवीमात्रपरत्वपक्षेनुपपन्नंस्यादित्याशयेनविष्णुपरतोपपादकतयाक्रमेणव्याचष्टे ॥ **विष्णाविति** ॥ नातिशेते नातिवर्तते । कुतइत्यतआह ॥ **सहीति** ॥ सहरिःसर्वाधिकःप्रसिद्धोयतइत्यर्थः । नहिप्रसिद्धपृथिव्याःमुख्यतःसर्वभूताश्रयत्वं नवातांकोपिनातिशेतइतिसंभवतीतिभावः । पृथिवीशब्दवाच्यत्वेनिमित्तंदर्शयन्पंचमरूपप्रतिपादकंयावैसापृथिवीइयंवावसायदिदमस्मिन्पुरुषेशरीरमितिवाक्यंप्रसिद्धशरीरपरताप्रतीतिनिवारणायव्याचष्टे ॥ **पृथुत्वादित्यादिना** ॥ स एवपृथिवीनामैव नान्यः इत्यनेनभिन्नस्थानत्वेनरूपयोर्भेदशंकानकार्येतिदर्शितं । एवमुत्तरत्रापि । शरीरस्यांतरंतःशरीरंपुरुषस्तस्मिन्गतोंतःशरीरगः शरित्वात्सुखरतिरूपत्वात् । अनेनअस्मिन्पुरुषेशरीरमित्यस्यतात्पर्यमुक्तं । पुरुषइतिसप्तम्यानिर्दिष्टंपुरुषंप्रदर्शयन्नुक्तंविशदयति ॥ **पुरुषइति** ॥ उक्तंशरीरशब्दप्रवृत्तिनिमित्तंविशदयन्षष्ठरूपप्रतिपादनायप्रवृत्तंयद्वैतत्पुरुषेशरीरमित्यादिवाक्यंप्रसिद्धहृदयमात्रपरताप्रतीतिवारणायव्याचष्टे ॥ **योसावित्यादिना** ॥ हृदयशब्दंविष्णौनिर्वक्ति ॥ **अयनादिति** ॥ अयनात्ज्ञानात् । स्थितेर्वा । सैषाचतुष्पदाषड्विधागायत्रीतिवाक्यंसैषाचतुष्पदाषडक्षरचतुष्पदाषड्विधावाक्भूतपृथिवीशरीरहृदयप्राणरूपासतीषड्विधेतिव्याख्याननिरासायब्रह्मपरतयैवोद्देश्यविधेयभावव्यत्यासेनव्याचष्टे ॥ **गायत्र्यामि**

भा० । विष्णौहिपृथिवीसंस्थेजगत्सर्वंप्रतिष्ठितं । नातिशेतेचतंकश्चित्सहिसर्वाधिकोहरिः । पृथुत्वात्पृथिवीनामासएवांतःशरीरगः । शरित्वादीरणाच्चवशैरीरंभगवानजः । पुरुषोजीवउद्दिष्टस्तस्मिन्नेवस्थितोविभुः । योसौजीवेस्थितोविष्णुःशरीरमितिनामकः । शंत्वाचरतिरूपत्वादीरणाच्चसएवतु । जीवचैतन्यरूपस्यहृदयेपिव्यवस्थितः । अयनाद्धृदिविष्णुस्सहृदयंकीर्तितोबुधैः । गायत्र्यांसंस्थितोविष्णुःस्त्रीरूपःसूर्यसप्रभः ।

॥१०५॥

**त्यादिना** ॥ पूर्वंचतुष्पात्त्वस्यानुक्तत्वादुत्तरत्रषड्विधत्वस्याकथनाच्चनयथास्थितएवोद्देश्यविधेयभावः । तथाचसैषाषड्विधागायत्रीचतुष्पदेतियोजनोक्ताभवति । तत्रषड्विधेत्यनुवादवाक्यंतावत्गायत्र्यामित्यादिनाषड्विधउच्यतइत्यंतेनग्रंथेनव्याख्यायते । सूर्यसप्रभःप्रथमइतिशेषः । तथाचस्वसाहित्येनषड्विधत्वंज्ञातव्यं । स्त्रीरूपइत्यनेनस्त्रीलिंगोपपत्तिरुक्ता । एवमुत्तरत्रापि । एवमनुवादकंवाक्यंव्याख्यायेदानींचतुष्पदेतिविधायकांशंपादोस्यसर्वाभूतानीतिवक्ष्यमाणमंत्रानुसारेणव्याचष्टे ॥ **त्रिभिरिति** ॥ पादोस्यसर्वाभूतानित्रिपादस्यामृतंदिवीतिमंत्रंअस्यपादःसर्वाणिभूतानितेजोबन्नादीनिस्थावरजंगमानिवात्रिपात् । त्रयःपादाअस्यसोयंत्रिपात्अमृतंपुरुषाख्यंसमस्तस्यगायत्र्यात्मनोदिविद्योतनवतिस्वात्मन्यवस्थितमित्यप्रामाणिकव्याख्याननिरासायसम्यग्व्याचष्टे ॥ **भिन्नपादइत्यादिना** ॥ सर्वभूतानीत्यस्यार्थःसर्वजीवाइति । ननुपादइतिचतुर्थोभागः तथाचकथंभिन्नत्वेपादत्वमित्यतआह ॥ **तस्येति** ॥ तथाचसर्वजीवानांतस्यभगवतःज्ञानादिनासादृश्याद्गौणंपादत्वमितिभावः । त्रिपादस्यामृतंदिवीत्यंशंव्याचष्टे ॥ **स्वरूपपादाइति** ॥ अमृतशब्दार्थःस्वरूपेति । किंशब्दवाच्यास्त्रयःपादाइत्यपेक्षायामाह ॥ **नारायणइति** ॥ श्वेतद्वीपगोनारायणः अनंतासनगोवासुदेवः वैकुंठस्थोवैकुंठः इतिशब्दवाच्याइतिशेषः । ननुवैकुंठस्यसत्यलोकोपरिस्थितत्वादस्तुवैकुंठस्य

भा० । द्वितीयश्चैवमत्स्यादिर्भूतनामावतारगः । तृतीयोवाचिसंस्थश्चस्त्रीरूपोहयशीर्षकः । चतुर्थःपृथिवीसंस्थःस्त्रीरूपःपीतवर्णकः । जीवस्यांतर्गतोव्याप्यशरीरमितिनामकः । पंचमस्तद्धृदिस्थश्चषष्ठोहृदयनामकः । गायत्रीनामकोविष्णुरेवंषड्विधउच्यते । त्रिभिःस्वरूपपादैश्चभिन्नेनैकेनचैवहि । गायत्रीनामकोविष्णुश्चतुष्पात्संप्रकीर्तितः । भिन्नपादास्तस्यजीवास्तस्यसादृश्यमात्रतः । स्वरूपपादाविष्णोस्तुत्रयोहिदिविसंस्थिताः । नारायणोवासुदेवोवैकुंठइतितेत्रयः ।

दिविस्थितत्वं नतुनारायणवासुदेवयोः श्वेतद्वीपानंतासनयोर्भूप्रदेशस्थितत्वादित्यतस्तद्घटयन्नाह ॥ अनंतेति ॥ तथाचशब्दौ परस्परसमुच्चये । हरेरनंतशयनंचनारायणाख्यंतथानंतासनंवासुदेवाख्यंरूपंबहुलक्षोच्छ्रितेनित्येचित्प्रकृत्यात्मनिविमानेयतःसंस्थितंततएवश्रुतौदिवीतिकथितमित्यन्वयः । नित्यत्वोपपादनायचित्प्रकृत्यात्मनीत्युक्तं । विमानइतिजात्येकवचनं । विमानयोरित्यर्थः। ननुविमानस्यबहुलक्षोच्छ्रितत्वेपिततोपिबहुलक्षोच्छ्रितस्यस्वर्गस्यैवद्युत्वादनंतशयनानंतासनयोःकथंदिविस्थितत्वमित्यतस्तद्घटयन्नाह ॥ लोकेति ॥ तथाचभूर्भुवः स्वरितिलोकत्रयविवक्षायांलक्षयोजनोच्छ्रितांतरिक्षोपरितनानांश्वेतद्वीपानंतासनवैकुंठानांद्युत्वात्तत्स्थंरूपत्रयंदिविसंस्थितमित्युपपन्नमितिभावः । ननूक्तरीत्यारूपत्रयस्यदिविस्थितत्वेपिअथयदतःपरोदिवइत्यादिनोच्यमानंदिवःपरत्वंकथमित्यतआह ॥ दिवइति ॥ भगवान्त्रिरूपः । एतच्चतद्वाक्यव्याख्यावसरएवस्पष्टंकरिष्यति । यद्वैतद्ब्रह्मेतीदंवावतदित्यादिहृदयआकाशइत्यंतंवाक्यंप्रसिद्धाकाशप्रतिपादकमितिप्रतीतिनिरासायप्रकारांतरेणगायत्रीनामकस्य भगवतःचतुष्पात्त्वप्रतिपादनपरतयाव्याचष्टे ॥ परंब्रह्मेति ॥ श्रौतब्रह्मशब्देनपरमेवविवक्षितमित्याशयेनपरमित्युक्तं । सर्वगः शरीरांतर्बहिश्चव्याप्तइत्यर्थः । बृहधातोर्देशतोपिवृद्ध्यभिधायकत्वात् । तथाचचतुर्षुरूपेष्विदंप्रथममितिभावः । द्वितीयंरूपंदर्शयितुंप्राप्तं इदंवावतद्योयंबहिर्धापुरुषादाकाशइत्यंशंव्याचष्टे ॥ सएवेति ॥ वावेत्यस्यार्थएवेति । सएवसर्वगएवेत्यनेनरूपभेद

भा० । अनंतशयनंचैवतथानंतासनंहरेः । बहुलक्षोच्छ्रितेनित्ये विमानेनियतंस्थितः । चित्प्रकृत्यात्मनिततोदिवीतिकथितंश्रुतौ । लोकत्रयविवक्षायांपरतोलक्षयोजनात् । सर्वद्यौरितिविज्ञेयंततस्तेदिविसंस्थिताः । दिवःपरश्चभगवान्सप्तलोकविवक्षया । परंब्रह्मेतिभगवान्सर्वगःसंप्रकीर्तितः । सएवजीवस्यबहिर्हृदयाकाशआस्थितः ।

शंकानिरासः। हृदयाकाशेजडशरीरगहृदयाकाशे। तृतीयरूपप्रदर्शकंयोवैसबहिर्धापुरुषादाकाशइत्यादिकंव्याचष्टे ॥ **योयमिति**॥ चतुर्थरूपाभिधायकंयोवैसोंतःपुरुषआकाशइत्यादिवाक्यंव्याचष्टे ॥ **व्याप्तोजीवांतरइति** ॥ जीवहृदिजीवस्वरूपहृदि। निगमयति ॥ **एवंचेति** ॥ चोवधारणे। चतुष्पात्त्वमेवेतिसंबध्यते। तेनपरोक्ताकाशत्रैविध्यप्रतिपादनपरत्वनिरासः । तदेतत्पूर्णमप्रवृत्तीतिवाक्यंतदेतत्हार्दंनभः। पूर्णंअपरिच्छिन्नं। अप्रवृत्तिअनुच्छित्तिधर्मकमित्यप्रामाणिकव्याख्याननिरासायसम्यग्व्याचष्टे॥ **सएवेति** ॥ यःप्राक्षड्विधत्वादिनानिरूषितः पूर्णःदेशतःकालतोगुणतश्च यद्वासएवयोजीवस्वरूपहृदयगइत्यर्थः। अतएवयोवैसोंतर्हृदयआकाशस्तदेतत्पूर्णमित्यव्यवहितरूपस्यैवपूर्णत्वादिकथनमुपपद्यते। पूर्वव्याख्यानेत्विदमुपलक्षणत्वेनोक्तमितिज्ञातव्यं। अन्यकर्तृकप्रवृत्तिविषयत्वाभावःकथमप्रवृत्तिशब्दार्थइत्यतस्तंदर्शयितुंतावत्प्रवृत्तिशब्दार्थमाह ॥ **अन्यैरिति** ॥ कर्मणिप्रत्ययइतिभावः। इदानीमप्रवृत्तिशब्दार्थंसहेतुकमाह॥**अप्रवर्त्यइति**॥ततश्चाप्रवृत्तीतिशेषः। हरिश्चसदाऽप्रवर्त्यएवनित्यस्वतंत्रत्वात्। ततश्चाप्रवृत्तिइतिगीयतइतियोजना। प्रवर्तयतीतिप्रवृत्तिःप्रवर्तकः। नविद्यतेप्रवृत्तिःप्रवर्तकोयस्यसोअप्रवृत्तिरितिकर्तर्येवप्रत्ययमभिप्रेत्यप्रकारांतरेणाप्रवृत्तिशब्दार्थमाह ॥ **अस्येति**॥ पूर्णामप्रवर्तिनीमित्यादिवाक्यंदृष्टफलमात्रप्रतिपादकमितिप्रतीतिनिरासायव्याचष्टे॥**पूर्णेति**॥ योग्यतापेक्षयापूर्णाअप्रवर्तनीत्यस्यार्थःस्वतंत्रेति। स्वावरानधीनेत्यर्थः। शाश्वतीत्यनेनमुक्तसंबंधीदंफलमिति

---

भा० । योयंहृदयगःसोथजीवांतर्व्याप्यसंस्थितः । व्याप्तोजीवांतरेयोसौसजीवहृदिसंस्थितः । एवंचापिचतुष्पात्त्वंवासुदेवस्यकीर्तितं । सएवपूर्णोभगवानप्रवर्त्यस्तथाखिलैः। अन्यैःप्रवर्त्यतेयोसौसप्रवृत्तीतिगीयते । अप्रवर्त्योहरिर्नित्यस्वतंत्रत्वात्सदैवच । अस्यप्रवृत्तिर्नास्तीतिसोप्रवृत्तीतिकीर्तितः। पूर्णास्वतंत्राश्रीश्चास्यवेत्तुर्भवतिशाश्वती।

सूचितं । अन्यगतस्यशाश्वतत्वाभावात्॥ गायत्र्युपासायासर्वेषामप्यधिकारसद्भावात् । सर्वेषामपीदंफलंकिंमुख्यं नेत्याह ॥ साक्षादिति ॥ मुख्यतइत्यर्थः । अनन्यतंत्रेत्यनेनस्वतंत्रेत्युक्तंविवृतं । अन्यथा अमुख्योपासकस्येतरस्य । नन्वनन्यतंत्रेत्येतदयुक्तं । चतुर्मुखश्रियोपिविष्णुतंत्रत्वादित्यतआह ॥ **विष्ण्वति** ॥ अस्य श्रियइतिशेषः । विष्णुशब्देन रमाप्युपलक्ष्यते । तथाचविष्णुव्यतिरिक्तस्वेतरानधीनत्वमेवानन्यतंत्रत्वंविवक्षितमितिनकोपिदोषइतिभावः । नन्विदंरुद्रादिसाधारणंअतःकथमस्यैवमुख्यमित्युक्तमित्यतआह ॥ **परेषामिति** ॥ तस्यतंत्रतातदधीनत्वं । तथाचरुद्रादयोनविष्णुमात्रव्यतिरिक्तस्वेतरानधीनाः ब्रह्माधीनतायाअपिसत्त्वात् । अतःउक्तंफलंतस्यैवेतिभावः । तदपिरुद्रादिमानुषांतानांनैकप्रकारेणेत्याह ॥ **यथेति** ॥ परेषामितिवर्तते । यथाक्रमेणेत्युक्तंक्रममेवाह ॥ **योग्यतेति**॥ यद्वा अस्तुब्रह्मणइदंफलंमुख्यं इतरेषांकथमित्यतआह ॥ **योग्यतेति**॥ भवेत् अत्रोक्तंफलमितिशेषः । एवमेतांविद्यांब्रह्मपरतयाप्रमाणेनव्याख्यायेदानींयत्परेणशब्दात्मिकागायत्र्येवात्रप्रतिपाद्येतिव्याख्यातंतत्रबाधकंभगवत्परतासाधकंचदर्शयति ॥ **ब्रह्मशब्दाचेति** ॥ चशब्दःपूर्वोदाहृतप्रमाणसमुच्चायकः । एवार्थोवा । भगवानेवेतिसंबंधः । तेनपरोक्तव्यावृत्तिः । अत्रहियद्वैतद्ब्रह्मेतिगायत्र्यांब्रह्मशब्दःश्रूयते । ब्रह्मशब्दमुख्यार्थश्चभगवानेवेत्यन्यत्रोपपादितं । अतोत्रगायत्रीभगवानेवेतिनिश्चीयतइतिभावः । एवंभगवत्परतानिश्चायकश्रुतिमभिधायोपसंहारेतथाविधलिंगंचा

भा० । साक्षाद्गायत्र्युपासायांयोग्यएकश्चतुर्मुखः । तस्मादनन्यतंत्रास्यश्रीर्भवेन्नान्यथाक्वचित् । विष्णुमंत्रत्वमस्यस्यात्परेषांतस्यतंत्रता । यथाक्रमेणतंत्रत्वंयोग्यताक्रमतोभवेदितिसत्तत्वे । ब्रह्मशब्दाचभगवानित्यवसीयते ।



स्तीत्याशयेनाह ॥ **पूर्णेति** ॥ अत्रोच्यमानमितिशेषः । मुख्यंयतोऽतोभगवानेवेत्यवसीयतइतिसंबंधः । विशेषानुक्तेःपूर्णत्वं । अनन्यनियम्यत्वरूपमप्रवर्तित्वंचमुख्यमेवग्राह्यं । तच्चनान्यस्यप्रतिपाद्यत्वेसंभवतीतिभावः । समाख्यामप्याह ॥ **तावानस्येति** ॥ पुरुषसूक्तस्यहिभगवत्परत्वमन्यत्रोपपादितं । तत्समाख्यानाच्चात्रापिभगवानेवप्रतिपाद्यइत्यवसीयतइतिभावः । एवमस्याविद्यायाःभगवत्परतामुपपाद्येदानींयदुक्तंगायत्रीवाइदंसर्वंभूतमित्यत्रभूतंमत्स्यादिदितितत्समर्थनाययत्परेणोक्तंभूतंप्राणिजातंस्थावरजंगमात्मकमितितद्दूषयति ॥ **पादोस्येति** ॥ अयंभावः । अत्रहिगायत्र्याःषड्विधत्वंचतुष्पात्त्वंचोच्यतेभूतमिति । षड्विधांतर्गतंतद्यदिप्राणिजातंविवक्षितंस्यात्तदापुनरुक्तिप्रसंगः । स्थावरजंगमात्मकसर्वजीवानांपादोस्यविश्वाभूतानीत्यनेनचतुष्पादांतर्भावस्योक्तत्वात् । अतोत्रभूतशब्देनमत्स्याद्यवताररूपमेवग्राह्यं । नप्राणिजातमिति । स्यादेतत् । यदिपादोस्येत्यत्रजीवाः विवक्षिताःस्युःनचैतदस्ति । तथात्वेभिन्नानांतेषामभिन्नैस्त्रिभिस्सहपाठायोगायोगात् । अतोनपौनरुक्त्यमित्याशंकायांभिन्नानामभिन्नैःसहपाठंसदृष्टांतंप्रमाणैरेवोपपादयति ॥ **द्वाविंशेष्वित्यादिना** ॥ जीवोपिपृथुःहरेःसान्निध्याद्यथावतारेषूक्तोऋषिभिर्याचितोभेजेनवमपार्थवंवपुरित्यादौतथापादेषुचतुर्षुजीवोपिईरितः । पादोस्येत्यत्रभिन्नामभिन्नैःसहोक्तौकिंनिमित्तमित्यपेक्षाया

भा० । पूर्णाप्रवृत्तित्वंचतस्मिन्नेवमुख्यं । तावानस्येतिमंत्राच्च । पादोस्यविश्वाभूतानीतिजीवानांचतुष्पादांतर्भावात् । भूतंयदिदंकिंचेतिषड्विधांतर्भूतंभूतंमत्स्याद्यवताररूपमेव । द्वाविंशेष्ववतारेषुजीवोप्युक्तोयथापृथुः । तथापादेषुचतुर्षुसान्निध्याज्जीवईरितः । यथाकालःपुमान्व्यक्तप्रकृतिश्चपरस्यतु । विष्णोरूपाणिगण्यंतेपररूपेणवैसह । एवंभूतानिगण्यंतेभिन्नान्यपिपदैःसह । मूर्तामूर्तेयथारूपेब्रह्मणस्तुतथैवच । भिन्नान्यपितुभूतानिपदानिस्वपदैःसहेतिप्राथम्ये ।

मुक्तंसान्निध्यादिति । पुमान्ब्रह्मा । पररूपेणमत्स्यादिना । पदैःस्वरूपभूतैः । ननुकुतएवंभिन्नानांजीवानामभिन्नैःसहोक्तिसमर्थ
नीयाजीवाअप्यभिन्नाएवेतिकिंनस्यात्तथासतिपादशब्दोप्युपपन्नःस्यादित्यतआह ॥ **सुदर्शनाख्यमिति** ॥ यदिजीवोपिभगवत्स्व
रूपभूतएवपादोविवक्षितस्स्यात्तदाभागवतादौत्रिपात्त्वेनोक्तिरनुपपन्नास्यात्अपितुचतुष्पात्त्वेनैवस्यात् । जीवस्यभिन्नत्वेतुस्वरू
पभूतपादत्रयवत्त्वेनत्रिपात्त्वोक्तिरुपपन्नेतिभावः । चशब्दःद्वात्रिंशेष्वित्यादिपूर्वोदाहृतवक्ष्यमाणप्रमाणविरोधसमुच्चायकः । न
न्वेवंकथंपादशब्दप्रयोगोदृष्टत्वादित्यतस्तत्पर्यायांशशब्दप्रयोगोभिन्नेपिदृष्टइत्याह ॥ **सुवर्चलेति** ॥ सूर्यपत्नीसंज्ञा । भगवतःअं
शउदाहृतः । सर्वदेतिसंसारेमुक्तौचेत्यर्थः ॥ खं० ॥ १२ ॥ **ततश्चायंखंडार्थः** ॥ गायत्रीवैगायत्रीनामागायत्रीसंस्थस्त्रीरूपोहयशी
र्षाख्योभगवान्प्रसिद्धःवक्ष्यमाणषाड्विध्यांतर्गतमिदंप्रथमंरूपं । तस्यद्वितीयंरूपमाह ॥ **गायत्रीवाइति** ॥ यदिदंकिंचभूतंप्रभू
तंअनन्यापेक्षंपूर्णंमत्स्यादिसर्वांतस्थितंचतदिदंसर्वंगायत्रीवैगायत्रीनामाभगवानेव । एवंचभूतशब्दाभिधेयंमत्स्यादिसर्वांतस्थितं
चद्वितीयंरूपमित्युक्तंभवति । अस्यैवतृतीयंरूपमाह ॥ **वागिति** ॥ गायत्रीनामाभगवान्वाग्वैवाक्संस्थोवचनाद्वाङ्नामास्त्री
रूपोहयशीर्षाख्यएवनतुतद्भिन्नइत्यर्थः । वाङ्नामकस्यभगवद्रूपत्वंकुतइत्यतस्तल्लक्षणयोगादित्याह ॥ **वाग्वाइति** ॥ इदंसर्वंभूतं

---

भाष्यं । सुदर्शनाख्यंस्वास्त्रंतुप्रायुङ्क्तदयितंत्रिपादितिश्रीभागवतेप्रयोगाच्चनजीवोभगवत्स्वरूपं । सुवर्चलायथासूर्यपत्न्यंशःसमुदाहृता । एवंजीवाभगवतोवस्तुभेदेपिसर्व
देतिच ॥ खं० १२ ॥

उप० । गायत्रीवाइदꣳसर्वंभूतंयदिदंकिंचवाग्वैगायत्रीवाग्वाइदꣳसर्वंभूतंगायतित्रायतेच ॥ १ ॥

प्राणिजातंवाग्वैवाङ्मामकभगवदधीनमेव । यदधीनायस्यसत्तातत्तदित्येवभण्यतइतिवचनात् । वाचाहिप्रवर्ततेनिवर्ततेचलोकः । सर्वप्रवर्तकत्वंचभगवल्लक्षणंप्रसिद्धमेवेतिभावः । ननुहयशीर्षाख्यस्यगायत्रीसंस्थस्यगायत्रीशब्दवाच्यत्वंकेननिमित्तेनेत्यपेक्षाया माह ॥ **गायतिचेति** ॥ वेदान्गायतिनिःसारयति प्रथमोवक्तेतियावत् । त्रायतेचाखिलमितिशेषः । इतिगायत्रीतिसंबंधः ॥ १ ॥ उक्तानुवादपूर्वकंचतुर्थंरूपमाह ॥ **यावैसेत्यादिना** ॥ यावैसागायत्री तत्संस्थःतन्नामाभगवान् साइयंवाव इयंखलु । इयंकेत्य पेक्षायामाह ॥ **येयमिति** ॥ पृथुत्वात्पृथिवीनामापृथिवीसंस्थस्त्रीरूपोभगवान् । अस्यापिभगवद्रूपत्वंकुतइत्यतःसर्वाश्रयत्वसर्वो त्तमत्वरूपतद्धर्मयोगादित्याह ॥ **अस्यामित्यादिना** ॥ अस्यांपृथिवीसंस्थेस्त्रीरूपेभगवति भूतंप्राणिजातं नातिशीयंतेनातिव र्तंते तदपेक्षयानीचाइतियावत् । भगवल्लक्षणत्वेनप्रसिद्धमिदंधर्मद्वयमस्यामपिप्रसिद्धमितिदर्शयितुंहिशब्दः ॥ २ ॥ उक्तमनुव दंस्तदभिन्नंपंचमंरूपमाह ॥ **यावाइत्यादिना** ॥ यासापृथिवीवैपृथिवीनाम्नीप्रसिद्धा साइयंवावइयंखलु । इयमित्युक्तमेवविश दयति ॥ **यदिदमिति** ॥ अस्मिन्प्रत्यक्षसिद्धेपुरुषेजीवे यदिदंशरीरंसुखरतिरमणरूपत्वात्तन्नामकंभगवद्रूपं । अस्यापिभगवद्रूप त्वंपूर्ववदुपपादयितुमाह ॥ **अस्मिन्हीति** ॥ इंद्रियाश्रयत्वंसर्वोत्तमत्वंचभगवल्लक्षणंजीवांतर्यामिणिप्रसिद्धमितिहिशब्दार्थः ॥ ३ ॥ उक्तानुवादेनास्यषष्ठंरूपमाह ॥ **यद्वैतदिति** ॥ पुरुषेजीवे शरीरंशरीरशब्दाभिधेयं यत्तद्वैप्रसिद्धंभगवद्रूपं तत्इदंवाव

---

उप० । यावैसागायत्रीयंवावसायेयंपृथिव्यस्याꣳहीदꣳसर्वंभूतंप्रतिष्ठितमेतामेवनातिशीयंते ॥ २ ॥ यावैसापृथिवीयंवावसायदिदमस्मिन्पुरुषेशरीरमस्मिन्हीमेप्राणाःप्रति ष्ठिताएतदेवनातिशीयंते ॥ ३ ॥ यद्वैतत्पुरुषेशरीरमिदंवावतद्यदिदमस्मिन्नंतःपुरुषेहृदयमस्मिन्हीमेप्राणाःप्रतिष्ठिताएतदेवनातिशीयंते ॥ ४ ॥

वक्ष्यमाणंखलु । तत्किं यदिदमस्मिन्पुरुषेजीवेंतःस्वरूपहृदीतियावत् । विद्यमानंहृदयंहृद्ययनाद्धृदयनामकंभगवद्रूपं । अस्याप्युक्तरीत्याभगवद्रूपत्वमुपपादयति ॥ अस्मिन्हीति ॥ ४ ॥ एवंभगवतोगायत्रीभूतवाक्पृथिवीशरीरहृदयलक्षणंषड्विधत्वंनिरूप्यतदनुवदंश्चतुष्पात्त्वमाह ॥ सैषेति ॥ सैषाषड्विधागायत्रीचतुष्पदेतियोजना । केतेचत्वारःपादाः कुत्रचतिष्ठंति किमेकप्रकाराः इत्याशंकानिरासायस्वोक्तंभगवतश्चतुष्पात्त्वंऋक्संमत्यादृढीकुर्वन्विशदयति ॥ तदेतदिति ॥ तदेतद्भगवतश्चतुष्पात्त्वंऋचामंत्रेणाभिउक्तशंकात्रयमभितःउत्तरत्वेनेतियावत् । अनुआनुकूल्येनोक्तं ॥ ५ ॥ तंमंत्रंपठति ॥ तावानिति ॥ अस्यपुरुषस्य महिमा तावान्पूर्वोक्तः नकेवलमेतावान्पुरुषः किंतुततःपूर्वोक्तमहिम्नोपिज्यायान् । अधिकमाहात्म्योपेतः । तदेवमाहात्म्यंदर्शयति ॥ पादइत्यादिना ॥ अस्यपुरुषस्य सर्वासर्वाणि भूतानिजीवाः पादःभिन्नांशः ज्ञानादिनातत्सादृश्यात् । अमृतंस्वरूपभूतंत्रिपात्पादत्रयंनारायणवासुदेववैकुंठसंज्ञं दिविभूर्भुवस्सुवरितिलोकत्रयविवक्षायांलक्षयोजनोच्छ्रितांतरिक्षोपरितनेषु द्युसंज्ञिकेषुश्वेतद्वीपानंतासनवैकुंठेषु तिष्ठतीतिशेषः । इतिउक्तमित्यन्वयः ॥ ६ ॥ गायत्रीनाम्नःप्रकारांतरेणचतुष्पात्त्वमाह ॥ यद्वैतदित्यादिना ॥ तत्गायत्रीनामकंभगवद्रूपंब्रह्मवै सर्वगंखलु । तथाचेदंशरीरांतर्बहिर्व्याप्तंरूपंप्रथमं । एतदनुवदन्द्वितीयंरूपंदर्शयति ॥ यद्वैतदिति ॥ यत्तत्ब्रह्मसर्वगंवैप्रसिद्धं तत्इदंवाव इदंखलु । इदंकिं योयंपुरुषात्जीवस्वरूपात् बहिर्धाबहिः जडहृदये आ

उप० । सैषाचतुष्पदाषड्विधागायत्रीतदेतदृचाभ्यनूक्तं ॥ ५ ॥ तावानस्यमहिमाततोज्यायांश्चपुरुषः । पादोस्यसर्वाभूतानित्रिपादस्यामृतंदिवीति ॥ ६ ॥ यद्वैतद्ब्रह्मेतीदंवावतद्योयंबहिर्धापुरुषादाकाशोयोवैसबहिर्धापुरुषादाकाशः ॥ ७ ॥



समंतात्काशतइत्याकाशनामास्ति । अनेनजीवस्यबाह्यहृदयगंरूपंद्वितीयंरूपमित्युक्तंभवति । एतदनुवादपूर्वकंतृतीयंरूपमाह ॥ योवाइत्यादिना ॥७॥ योबाह्यहृदयगः । सःअयं । अयंवावकः योयमंतःपुरुषेजीवांतर्व्याप्यसंस्थितः आकाशःआकाशनामा । पूर्वानुवादपुरःसरंतुरीयंपादमाह ॥ योवाइति ॥ अंतःपुरुषेजीवांतर्व्याप्तः सआकाशःआकाशनामा ॥ ८ ॥ अयंवाव कोयं योयमंतर्हृदयेजीवस्वरूपहृदिसंस्थितःआकाशः आकाशनामा । अस्यमहिमानमाह ॥ योवाइति ॥ सयोवैअंतर्हृदयेजीवहृद्गतःआकाशनामातदेतत्पूर्णंदेशतःकालतःगुणतश्च । अप्रवर्तिअन्यैःप्रवर्त्यंयत्तत्प्रवृत्ति नप्रवृत्तिअप्रवृत्ति । अथवानविद्यतेप्रवृत्तिःप्रवर्तकोयस्यतदप्रवृत्ति । एतत्उक्तसर्वरूपसाधारणं । उपलक्षणत्वेनचरमस्योक्तमितिज्ञातव्यं । एतद्विद्यावेत्तुःफलमाह ॥ पूर्णामिति ॥ यश्चतुर्मुखपदयोग्योमुख्योधिकारीएवमुक्तरीत्यागायत्रीनामानंभगवंतंवेदसःपूर्णांस्वयोग्यतानुसारेणपूर्णांअप्रवर्तिनींविष्णुव्यतिरिक्तस्वेतरानधीनांश्रियंइहमुक्तौचलभतइत्यर्थः । इतरेचस्वस्वयोग्यतानुसारेणश्रियंलभंतइत्यपिद्रष्टव्यं ॥९॥ द्वादशःखंडः ॥१२॥

यदिदमस्मिन्पुरुषेहृदयमितियोयमंतःपुरुषआकाशइति हृत्पुरगत्वेनप्रकृतस्यपरब्रह्मणःस्वस्वोपासनानुरूपफलप्रदद्वारपालकत्वरूपोमहिमानिरूप्यते ॥ तस्यहवाइत्यादिना ॥ अत्रप्राङ्सुषिःसप्राणस्तच्चक्षुः दक्षिणःसुषिःसव्यानस्तच्छ्रोत्रं प्रत्यङ्सुषिःसोऽपानःसावाक् उदङ्सुषिःससमानस्तन्मनः ऊर्ध्वःसुषिःसउदानःसवायुरितिवाक्यपंचकेनक्रमेणतत्तत्सुषिप्राणव्यानापानसमानो

उप० । अयंवावसयोऽयमंतःपुरुषआकाशोयोवैसोंतःपुरुषआकाशः ॥ ८ ॥ अयंवावसयोऽयमंतर्हृदयआकाशोयोवैसोंतर्हृदयआकाशस्तदेतत्पूर्णमप्रवर्तिपूर्णामप्रवर्तिनीं श्रियंलभतेयएवंवेद ॥ ९ ॥ खं० १२ ॥

दानानांचक्षुःश्रोत्रवाङ्मनसाकाशाभेदःआदित्यचंद्राग्निपर्जन्यवाय्वभेदश्चोच्यतइतिप्रतीयते । नचतत्संभवति । बाधात् । अतोयथावत्खंडप्रमाणेनैवव्याचक्षाणस्तावदादिवाक्यंव्याचष्टे ॥ **प्राणेति** ॥ प्राणःश्वासरूपजडवायुवृत्तिः । एवमुत्तरत्रव्यानादिपदेनतत्तन्नामकजडवायुवृत्तिरेवग्राह्या । चक्षुस्तदभिमानी । सयोस्यप्राङ्सुषिरित्यस्यतात्पर्यं प्रागिति । अस्येत्यस्यार्थो हरेरिति । अथयोस्यदक्षिणःसुषिःसव्यानइतिद्वितीयंवाक्यंव्याचष्टे ॥ **दक्षिणेति** ॥ दक्षिणाधिपतिःदक्षिणद्वाराधिपतिः । श्रीरित्यस्यार्थोलावण्यरूपइति । अथयोस्यप्रत्यङ्ङित्यादितृतीयंवाक्यंव्याचष्टे ॥ **पश्चिमेति** ॥ वागपानात्मकः वागपानाभिमानी । ब्रह्मवर्चसमित्यस्यार्थोब्रह्मतेजइति । वेदाध्ययनलब्धंतेजइत्यर्थः । अन्नमन्नाद्यं देवताऽभिमानिनी । अथयोस्योदङ्सुषिरितिचतुर्थंवाक्यंव्याचष्टे ॥ **उत्तरेति** ॥ पर्जन्यशब्दार्थइंद्रइति । आत्मकोभिमानीव्युष्टिशब्दार्थऐश्वर्येति । कीर्त्यैश्वर्यात्मकत्वंनतदभिमानित्वमात्रं किंतुतद्रूपत्वमपीतिभावेननित्यमित्युक्तं । मुक्तावप्यनुवर्तमानस्यस्वरूपत्वात् । अतएवतेजोन्नाद्येष्वपिएवमेवविवक्षितमितिध्येयं । अथयोस्योर्ध्वःसुषिरित्यादिपंचमंवाक्यंव्याचष्टे ॥ **ऊर्ध्वेति** ॥ ऊर्ध्वद्वाराधिपश्चप्रधानवायुरेव । अत्रापिवायोराकाशोदानाद्यभिमानित्वेनैवाकाशादिशब्दवाच्यत्वमित्यभिप्रायेणतान्शब्दांस्तस्मिन्निर्वक्ति ॥ **आकाशइत्यादिना** ॥ एव

---

भा० । प्राणाभिमानीचक्षुश्चसूर्यएवह्युदाहृतः । तेजोन्नाद्यभिमानीचप्राग्द्वाराधिपतिर्हरेः । दक्षिणाधिपतिस्सोमोव्यानःश्रोत्राभिमानवान् । यशोलावण्यरूपश्चपश्चिमद्वारपस्तथा । वागपानात्मकोवह्निर्ब्रह्मतेजोन्नदेवता । उत्तरद्वारपास्त्विंद्रःसमानोमनआत्मकः । कीर्त्यैश्वर्यात्मकोनित्यमूर्ध्वद्वारपएवच । प्रधानवायुराकाशःसार्वज्ञादुन्नतेस्तथा । उदानऊर्जितत्वात्सओजःपूर्णत्वतोमहः ।

मादित्यचंद्राग्नींद्रेषुप्राणादिव्यानाद्यपानादिसमानादिशब्दानिर्वक्तव्याः ॥ तेवाएतेपंचब्रह्मपुरुषाइति वाक्यंब्रह्मणश्चतुर्मुखस्यपुरुषाःवेदपुरुषाइतिवाऽन्यथाप्रतीतेर्यथावद्व्याचष्टे ॥ **परस्येति** ॥ ब्रह्मशब्दस्यपरब्रह्मणिमुख्यत्वान्मुख्यार्थस्यैवचग्राह्यत्वादितिभावः । षष्ठ्यालब्धमर्थंदर्शयति ॥ **द्वारपाइति** ॥ स्वर्गस्यलोकस्यद्वारपाइत्येतत्तात्पर्यमाह ॥ **विष्णुलोकइति** ॥ सर्वदैव । ननुविष्णुलोकेजयादेरेवद्वारपत्वप्रसिद्ध्याकथमेतेषांद्वारपत्वमतआह ॥ **आंतरेति** ॥ बाह्यतःद्वारपाइतिबुद्ध्याविविक्तमनुवर्तते । तेजस्व्यन्नादोभवति । श्रीमान्यशस्वीभवति । ब्रह्मवर्चस्व्यन्नादोभवति । कीर्तिमान्पुष्टिमान्भवति । ओजस्वीमहस्वान्भवतीतिफलप्रतिपादकवाक्यपंचकस्यतत्तद्वारपसमानमेवतेजआदिकंतत्तदुपासकानामित्यन्यथाप्रतीतिनिरासायतात्पर्यमाह ॥ **एवमेतानिति** ॥ सयएतानेवमितिवाक्यंप्रसिद्धस्वर्गलोकप्राप्तिपरतानिरासायव्याचष्टे ॥ **विष्णुलोकमिति** ॥ स्वरूपभूतरमणज्ञानात्मकत्वात्स्वर्गशब्दोविष्णुलोकपरइतिभावः । शूरपुत्रकत्वप्रतीतिनिरासायवीरइत्यस्यतात्पर्यमाह ॥ **सुसंततिरिति** ॥ त्रिपादस्यामृतंदिवीत्यनेननारायणादिमूर्तित्रयस्यश्वेतद्वीपानंतासनवैकुंठाख्यद्युस्थितत्वमुक्तं । तस्यैवदिवःपरत्वादिरूपंमाहात्म्यं तदधिष्ठितानांचश्वेतद्वीपादीनांविश्वतःपृष्टत्वादिनेतरलोकवैलक्षण्यं तस्यभेदशंकानिरासायहृद्गतेनैक्यंचप्रतिपादयितुंअथयदतःपरइत्यादिवाक्यंप्रवृत्तं । तत्तथाऽप्रतीतेर्व्याचष्टे ॥ **योसावित्यादिना** ॥ यदित्यनेनप्रकृ

---

भा० । परस्यब्रह्मणस्त्वेतेपुरुषाःपंचकीर्तिताः । द्वारपाहृदयेचैवविष्णुलोकेचसर्वदा । आंतरद्वारपाह्येतेजयाद्याबाह्यतःस्मृताः । एवमेतानुपास्यैवतद्गुणांशांशभाग्भवेत् । विष्णुलोकंतथागच्छेद्ब्रह्मवेदपिसुसंततिः । योसौवैकुंठगोविष्णुःसप्तलोकोपरिस्थितः ।

तद्युस्थितपरामर्शइतिदर्शयितुंवैकुंठगइत्युक्तं । वैकुंठस्यद्युस्त्वेनोक्तत्वात् । उपलक्षणंचैतत् । श्वेतद्वीपानंतासनयोरपिद्यु
स्त्वेनोक्तत्वात्तद्गतौनारायणवासुदेवावपिग्राह्यौ । दिवःपरइत्यनेनोक्तंदिवःपरत्वंवैकुंठस्योपपादितुमुक्तं ॥ **सप्तलोकेति** ॥ ए
तच्चोत्तरत्रस्पष्टंभविष्यति । नारायणवासुदेवयोरपिदिवःपरत्वमग्रेदर्शयिष्यति । सएवत्रिरूपोभगवान् । सर्वतइत्यस्यार्थः सर्वे
षुलोकेष्विति । निर्धारणेसप्तमी । अस्याउच्चेष्वितिसंबंधः । विश्वतइत्यनूद्यब्रह्मणइतिव्याख्यानं । पृष्टेष्वित्यस्यार्थःउच्चेष्विति ।
उत्तमेष्वित्यस्यार्थः उत्तमलोकेष्विति । अनुत्तमेष्वित्यस्यार्थः प्रत्यवरेषुचेति । चोवधारणे । एकइत्यनेनसंबध्यते । यदिदमस्मि
न्नंतःपुरुषेज्योतिरित्यस्यतात्पर्यंपुरुषेषुचसर्वेष्विति । तथाचैवंयोजना । योसौवैकुंठगः यश्चश्वेतद्वीपानंतासनगोविष्णुः सएवस
र्वलोकेषुमध्येउच्चेषु तथाविश्वतोब्रह्मणःउच्चेषुउत्तमलोकेषु तथाप्रत्यवरेषुलोकेषु सर्वेषुपुरुषेषुच संव्यवस्थितः सचएकएवेति ।
ऐक्यंचइदंवावतद्यदिदमस्मिन्नंतःपुरुषेज्योतिरित्यनेनोक्तमितिज्ञातव्यं । प्रकृतसर्वलोकगमनूद्यतस्यपुरुषांतःस्थितत्वविधानात् ।
भगवतःउक्तपुरुषांतःस्थितत्वेप्रमाणप्रदर्शनायतस्यैषादृष्टिरित्यादिवाक्यंतत् उष्णिमाग्नेर्धर्मोतस्तद्दृष्टिःकथंभगवत्प्रमापिकेत्याशंका
मपाकुर्वन्व्याचष्टे ॥ **प्राणसंस्थइति** ॥ वैशब्दश्चशब्दार्थः । यतःसविष्णुःप्राणसंस्थः प्राणश्चाग्नौसंव्यवस्थितः अग्निश्चस्पर्शेनत्व
गिंद्रियेणदृश्यते ततःसातदृष्टिरिव अग्न्याश्रितप्राणगविष्णुदृष्टिरिवेत्यर्थः । तत्रैवप्रमाणांतरप्रतिपादकंतस्यैषाश्रुतिरित्यादिवा

भा० । सएवसर्वलोकेषुविश्वतोब्रह्मणस्तथा । उच्चेषूत्तमलोकेषुतथाप्रत्यवरेषुच । पुरुषेषुचसर्वेषुसएकःसंव्यवस्थितः । प्राणसंस्थःसवैविष्णुःप्राणोग्नौसंव्यवस्थितः ।
स्पर्शेनदृश्यतेचाग्निस्तद्दृष्टिरिवसाततः ।



क्यमप्रतीतेर्व्याचष्टे ॥ **सप्राणइत्यादिना** ॥ पिधायविद्यमानेन । तथाचप्राणकर्तृकस्तुतिरूपश्रुतिविषयतयाहृदिभगवत्सिद्धिः ।
नहीतरवदधिकार्युत्तमप्राणस्यापिभगवदसंनिधौतत्स्तुतिरुपपन्नेतिभावः । चक्षुष्यःश्रुतोभवतीतिवाक्यमैहिकमात्रपरमित्यन्यथा
प्रतीतिनिरासायव्याचष्टे ॥ **तद्विद्वानिति** ॥ तत् पुरुषांतर्विद्यमानंज्योतिरुक्तरीत्यादृष्टंचश्रुतंचेत्येतत् । चक्षुष्यइत्यस्यार्थेदिव्य
चक्षुरिति । अनेनचक्षुष्योदर्शनीयइतिव्याख्यानमप्रामाणिकमितिज्ञातव्यं । यस्मादुपासीतेत्यनेनयएवंवेदसचक्षुष्यादिर्भवतीति
यस्मात्तस्मादुपासीतेतिहेतुहेतुमद्भावेनयोजनोक्ता । ननुतदेतत्कीर्तिंश्चेत्यत्रयशःकीर्तिशब्दयोरेकार्थत्वात्तदेतच्छ्रीश्चयशश्चेतिप्र
कृतयशःपदंविहायकीर्तिपदोपादानेकिंकारणमित्यतोऽर्थभेदंकारणमाह ॥ **दिक्ष्विति** ॥ व्याप्तंयशइत्युच्यते। दिक्षुयानादितिनिर्व
चनादित्यर्थः । विश्वतःपृष्टेष्वित्यादिकंप्रमाणेनव्याख्यातमपिस्वयंविशदयन्ननुत्तमेषूत्तमेष्वित्येतत्प्रकारांतरेणव्याचष्टे ॥ **सर्वतः
पृष्टेष्वित्यादिना** ॥ आदिपदेनेतरेपिलोकाग्राह्याः । तेषुसर्वतःपृष्टत्वादिकंछत्रिन्यायेनेतिद्रष्टव्यं । ततस्तेभ्योलोकेभ्यः । अ
न्यःलोकः । ननुसर्वतःपृष्टत्वंवैकुंठस्यैवयुक्तं । नतुक्षीरसागरानंतासनयोर्भूसंबद्धयोरतःकथमेतदित्यतःकयाचिद्विवक्षयैतदुपप
न्नमितिप्रमाणेवाह ॥ **पृथिवीस्थेष्विति** ॥ तथाचसर्वतःपृष्टत्वमनंतासनेपार्थिवसर्वलोकविवक्षया अंतरिक्षात्मकसर्वलोकविव

भा० । सप्राणःस्तौतितंविष्णुंसास्तुतिःश्रूयतेसदा । कर्णौपिधायतद्विद्वान्दिव्यचक्षुःसुकीर्तिमान् । मुक्तोभूत्वाभवेद्यस्मादुपासीतैवसंततमितिसत्तत्त्वे । दिक्षुयानाद्यशो
व्याप्तंकीर्तिःप्रत्यक्षतःस्तुतिरितिशब्दनिर्णये । सर्वतःपृष्टेषुसर्वतउच्चेषुवैकुंठक्षीरसागरानंतासनादिषु । विश्वतोब्रह्मणोप्युच्चेषु ।ततउत्तमोनास्तीत्यनुत्तमाः । सर्वतःस्वयमुत्तमाः ।
पृथिवीस्थेषुसर्वोच्चोलोकोऽनंतासनात्मकः । अंतरिक्षात्मकेभ्यश्चश्वेतद्वीपेस्थितोहरिः । द्यात्मकेभ्यश्चसर्वेभ्योवैकुंठश्चोच्चउच्यते ।

क्षयाश्वेतद्वीपेद्व्यात्मकसर्वलोकविवक्षयाचवैकुंठे उक्तमितिनानुपपत्तिरितिभावः । नन्वथयदतःपरोदिवइतिवाक्यंद्युस्थितमूर्तित्रयपरमितिव्याख्यातं । तदयुक्तं । द्युस्थितस्यदिवःपरत्वायोगात् । इत्यतःतदपिविवक्षाभेदेनोपपन्नमितिप्रमाणेनैवाह ॥ पृथिव्यांद्यौरित्यादिना ॥ तत्परेमेर्वादिभ्यःपरे । तथाचपृथिव्यांमहामेरोर्द्युत्वात्तत्परानंतासनस्यदिवःपरत्वंआकाशेसूर्यमंडलस्यद्युत्वात्तत्परश्वेतद्वीपस्यदिवःपरत्वंदिवींद्रसदनस्यद्युत्वात्तत्परवैकुंठस्यदिवःपरत्वमुपपन्नमितिज्ञातव्यं । अतएवश्रुतावतोदिवइत्युक्तं । ननुसत्यलोकोच्चवैकुंठेविश्वतःपृष्टत्वसंभवेपिश्वेतद्वीपानंतासनयोःकथंतादित्यतस्तदपिविवक्षाविशेषेणोपपन्नमितिप्रमाणेनैवाह ॥ पृथिव्यामित्यादिना ॥ ब्रह्मणःसदनमित्यन्वयः । जयंतंवैजयंतं । तथाचविश्वतःपृष्टत्वंमेरुस्थब्रह्मसदनापेक्षयानंतासनस्यअंतरिक्षगवैजयंतापेक्षयाश्वेतद्वीपस्य सत्यलोकगसदनापेक्षयावैकुंठस्य विवक्षितमित्यत्रापिनानुपपत्तिरितिभावः । ततःविश्वतःपरइत्युदिताइतिशेषः । रथस्येवघोषोनिनदःऋषभकूजितमिवशब्दोनदथुरित्यप्रामाणिकंव्याख्यानमित्याशयेनस्वयंप्रमाणेनैवतदुभयंव्याचष्टे ॥ **निनदइति** ॥ चक्षुष्यइतिदिव्यचक्षुरितिव्याख्यातं । तत्तेनकथंलब्धमित्यतःप्रमाणेनैवतन्निरुच्यदर्शयति ॥ **चक्षुष्यइति** ॥ तथाचब्रह्मद्रष्टृत्वाभिप्रायेणैवदिव्यचक्षुरितितात्पर्यमुक्तमितिभावः ॥ खं० १३ ॥ **ततश्चायंखंडार्थः** ॥ तस्ययदिदमस्मिन्नंतःपुरुषेहृदयमितिप्रकृतस्यएतस्ययोयमंतःपुरुषआकाशइत्युक्तस्यहृदयस्यहृद्ययनाद्धृदयनामकस्यपरब्रह्मणःपंचपंचसं

---

भा० । पृथिव्यांद्यौर्महामेरुराकाशेसूर्यमंडलं । दिवींद्रसदनंचैवतत्परेतुदिवःपरे । पृथिव्यांब्रह्मणोमेरौजयंतंत्वंतरिक्षगं । तृतीयंसत्यलोकंचसदनंत्रिविधंस्मृतं। तेभ्योनंतासनाद्यायत्परतोविश्वतःपरइतिसत्तत्वे । निनदःसमुद्रघोषःस्यान्नदथुर्मेघसंभवइतिच । चक्षुष्यश्चक्षुषिब्रह्मण्येषयातीत्युपासकइतिच ॥ खं० १३ ॥

उप० । तस्यहवाएतस्यहृदयस्यपंचदेवसुषयः

ख्याकाःदेवसुषयः सुषिपदेनतत्रत्याद्वारपालक्ष्यंते। तथाचदेवभूताःसुषयोद्वारपाइत्यर्थः । अतएवाग्रेस्वर्गस्यलोकस्यद्वारपाइत्ये वोक्तिः। उपास्याइतिशेषः। देवसुषयोदेवनिर्गमद्वाराणीत्यप्याहुः। कोदेवःकस्मिन्द्वारेकथमुपासितःकीदृशंफलंप्रयच्छतीत्याकांक्षा यामाह ॥सयोस्यप्राङ्सुषिरित्यादिना॥अस्यहार्दस्यपरब्रह्मणःसयःप्राङ्सुषिःतत्स्थोद्वारपःसआदित्यःसप्राणःप्राणनामकजड वायुवृत्त्यभिमानी तच्चक्षुश्चक्षुरभिमानी तदेतदादित्यरूपं तेजोन्नाद्यंप्रसिद्धतेजोन्नाद्यभिमानीत्युपासीत यएवंवेदोपासीत सतेज स्व्यन्नादोभवति। आदित्यगुणभूततेजःप्रभृत्यंशांशभाग्भवतीत्यर्थः ॥ १ ॥ दक्षिणःसुषिःतत्स्थोद्वारपः सचंद्रमाः सचव्यानः तन्नामकजडवायुवृत्त्यभिमानी तच्छ्रोत्रंतदभिमानी तदेतच्चंद्रमसोरूपंश्रीर्लावण्यंयशःदिक्षुयातीतियशःसर्वत्रव्याप्तं। तदुभयाभि मानीत्युपासीत श्रीमान्यशस्वीभवति चंद्रगुणभूतश्रीप्रभृत्यंशांशभाग्भवतीत्यर्थः ॥ २ ॥ एवमुत्तरत्रापितत्तद्वारपोक्तगुणांशां शभाक्त्वंतत्तदुपासकानांद्रष्टव्यं। प्रत्यङ्सुषिःतत्स्थोद्वारपः सोग्निः सोपानोपानाभिमानी सावाक्वागिंद्रियाभिमानी तदेत दग्नेरूपंब्रह्मवर्चसं। वेदाध्ययनजातंतेजो न्नाद्यंप्रसिद्धंतदुभयाभिमानीत्युपासीत। शिष्टंपूर्ववत् ॥ ३ ॥ उदङ्सुषिस्ततस्थोद्वारपोयः सपर्जन्यनामेंद्रः ससमानस्तदभिमानी तन्मनःतदभिमानी तदेतदिंद्रस्यरूपं कीर्तिःप्रत्यक्षतः स्तुतिः व्युष्टिरैश्वर्यं तदुभयाभिमानी

---

उप० ।—सयोस्यप्राङ्सुषिःसप्राणस्तच्चक्षुःसआदित्यस्तदेतत्तेजोन्नाद्यमित्युपासीततेजस्व्यन्नादोभवतियएवंवेद ॥ १ ॥ अथयोस्यदक्षिणःसुषिःसव्यानस्तच्छ्रोत्रंसचंद्रमाः तदेतच्छ्रीश्चयशश्चेत्युपासीतश्रीमान्यशस्वीभवतियएवंवेद ॥ २ ॥ अथयोस्यप्रत्यङ्सुषिःसोपानःसावाक्सोऽग्निस्तदेतद्ब्रह्मवर्चसमन्नाद्यमित्युपासीतब्रह्मवर्चस्व्यन्नादोभवतियएवं वेद ॥ ३ ॥ अथयोस्योदङ्सुषिःससमानस्तन्मनःसपर्जन्यस्तदेतत्कीर्तिश्चव्युष्टिश्चेत्युपासीतकीर्तिमान्व्युष्टिमान्भवतियएवंवेद ॥ ४ ॥

त्युपासीत ॥४॥ ऊर्ध्वःसुषिःतत्स्थोद्वारपोयःसवायुः प्रधानवायुः सउदानस्तदभिमानी उन्नतेरुदानशब्दवाच्यः सआकाशःआका शाभिमानी सार्वज्ञादाकाशनामा तदेतद्वायोरूपं ओजःतदभिमानी ऊर्जितत्वादोजःशब्दवाच्यं महस्तदभिमानी पूर्णत्वान्म हःशब्दवाच्यमित्युपासीत । एवमादित्यचंद्राग्नींद्राणामपिप्राणादिव्यानादिअपानादिसमानादिशब्दवाच्यत्वंद्रष्टव्यं ॥ ५ ॥ नि गमयति ॥ तेवाइति ॥ ब्रह्मणःपरब्रह्मणःहार्दस्यपुरुषाःभृत्याःद्वारपाइत्यर्थः । किंहृदयपुर्येवद्वारपाः नेत्याह ॥ स्वर्गस्यलो कस्येति ॥ स्वरूपभूतरमणज्ञानात्मकस्यविष्णोर्लोकस्यद्वारपाः । जयाद्याःबाह्यद्वारपाःएतेत्वांतरद्वारपाइतिज्ञातव्यं । एवंवेत्तुः फलमाह ॥ सयइति ॥ अस्यकुलेवीरोजायतेसुसंततिर्भवति । स्वर्गंलोकंस्वरूपभूतरमणज्ञानात्मकंलोकंविष्णुलोकं । यएतानेवं पंचेतिपुनरुक्तिः । प्रतिपद्यतइत्युक्तफलांतरविवक्षया ॥ ६ ॥ त्रिपादस्यामृतंदिवीत्यनेनद्युस्थितत्वेनोक्तमूर्तित्रयस्यदिवःपरत्वादि रूपंमाहात्म्यंतदधिष्ठितानांलोकानांचसर्वतःपृष्टत्वादिनेतरलोकवैलक्षण्यंभेदशंकानिरासायतस्यैवहृदयगतेनाभेदंचप्रतिपादयति॥ अथयदतःपरइत्यादिना ॥ अथद्वारपोपास्तिकथनानंतरं पुनर्भगवन्माहात्म्यमेवोच्यतइत्यर्थः । यत्श्वेतद्वीपानंतासनवैकुंठ गतंमूर्तित्रयंतत् । अतो बुद्धिस्थतयाविवक्षितायाःदिवः परःपरं । एतच्चभाष्येस्पष्टं । ज्योतिस्तेजोमयं विश्वतोब्रह्मसदनेभ्यः

उप० । अथयोस्योर्ध्वःसुषिःसउदानःसवायुःसआकाशस्तदेतदोजश्चमहश्चेत्युपासीतौजस्वीमहस्वान्भवतियएवंवेद ॥ ५ ॥ तेवाएतेपंचब्रह्मपुरुषाःस्वर्गस्यलोकस्यद्वारपाः सयएतानेवंपंचब्रह्मपुरुषान्स्वर्गस्यलोकस्यद्वारपान्वेदास्यकुलेवीरोजायतेप्रतिपद्यतेस्वर्गंलोकंयएतानेवंपंचब्रह्मपुरुषान्स्वर्गस्यलोकस्यद्वारपान्वेद ॥ ६ ॥ अथयदतःपरोदिवोज्यो तिर्दीप्यतेविश्वतः

पृष्टेषुउच्चेषु सर्वतःसर्वलोकेभ्यः पृष्टेषुउच्चेषु अनुत्तमेषु नविद्यतेउत्तमलोकोयेभ्यस्तेषुस्वयमेवोत्तमेषु श्वेतद्वीपानंतासनवैकुंठेषु । दीप्यतेप्रकाशते । यद्वा अनुत्तमेषुप्रत्यवरेषुलोकेष्वित्यर्थः । अत्रविश्वतःपृष्टत्वंसर्वतःपृष्टत्वंचभाष्येस्पष्टं । तत्रैवद्रष्टव्यं । तत् सर्वलोकेषुदीप्यमानंतेजः इदंवावइदंखलु । इदंकिं यदिदमस्मिन्नंतःपुरुषेपुरुषहृदये ज्योतिरस्तितत् । अथपुरुषांतस्तत्सद्भावेप्र माणमाह ॥ तस्येति ॥ तस्यहृद्गतस्यपरब्रह्मणः एषादृष्टिः अयंसाक्षात्कारः ॥ ७ ॥ एषाका । यत्रयत् अस्मिन्शरीरेसंस्पर्शे नशरीरसंबद्धेनत्वगिंद्रियेणोष्णिमानंविजानातीतिएतत्एषा ॥ अयंभावः । त्वगिंद्रियेणतावच्छरीरगतेवह्नावौष्ण्यंदृश्यतेवह्नौ चप्राणःप्राणेचभगवान्अतःएषादृष्टिस्तस्यैवेति । तत्रैवप्रमाणांतरमप्याह ॥ तस्येति ॥ तस्यहृदयगतस्यभगवतः । एषाप्राणे नक्रियमाणाश्रुतिःस्तुतिरूपापुरुषांतःस्थितप्राणेनक्रियमाणस्तुतिविषयतयाऽत्रपरब्रह्मसिद्धिरितिभावः । कासौश्रुतिरित्यतोयेदानी मस्मदादिभिरपिश्रूयतेसेत्याह ॥ यत्रेति ॥ यत्रयदायामितिवा । कर्णावपिगृह्यवर्तमानःपुरुषःनिनदमिवसमुद्रघोषमिव । नदथु रिवनदथुमिव । मेघघोषमिवज्वलतोग्नेर्घोषमिवचउपशृणोति । एतत्एषा एतादृशप्रमाणगम्यत्वेनोपासनापिकर्तव्येत्याह ॥ त देतदिति ॥ तदेतत्हार्दंब्रह्म दृष्टंदृष्टमिव दृष्टलिंगानुमेयं श्रुतंस्तुतिरूपश्रुतिप्रतिपाद्यं इत्युपासीत । एवमुपासकस्यफलमाह ॥ चक्षुष्यइति ॥ चक्षुषिब्रह्मणियातीतिचक्षुष्यःदिव्यचक्षुः श्रुतःसुकीर्तिमान्भवतिमुक्तावितिशेषः । एवमुक्तप्रकारेणवेदोपास्ते।

उप० ।—पृष्टेषुसर्वतःपृष्टेष्वनुत्तमेषूत्तमेषुलोकेष्विदंवावतद्यदिदमस्मिन्नंतःपुरुषेज्योतिस्तस्यैषादृष्टिः ॥ ७ ॥ यत्रैतदस्मिञ्छरीरेसंस्पर्शेनोष्णिमानंविजानातितस्यैषाश्रुतिर्य त्रैतत्कर्णावपिगृह्यनिनदमिवनदथुरिवाग्नेरिवप्रज्वलतउपशृणोतितदेतद्दृष्टंचश्रुतंचेत्युपासीतचक्षुष्यःश्रुतोभवतियएवंवेदयएवंवेद ॥ ८ ॥ त्रयोदशःखण्डः ॥ १३ ॥

॥११३॥

द्विरुक्तिर्विद्यावधारणार्था ॥ ८ ॥ त्रयोदशःखंडः ॥ १३ ॥ हृद्गतस्यैवोपास्त्यंतराणिदर्शयंस्तद्यदिदमस्मिन्नंतःपुरुषेज्योतिरिति हृद्गतेनबहिष्ठस्यैक्यमुक्तं । तद्धृद्गतस्याणुत्वेनबहिष्ठस्यव्याप्तत्वेननोपपन्नमित्याशंकामपिहृद्गतस्यव्याप्तत्वोपपादनेनपरिहरति ॥ सर्वंखल्विवत्यादिना ॥ तत्रसर्वंसमस्तंइदंजगन्नामरूपविकृतंप्रत्यक्षादिविषयंब्रह्म । कथंसर्वस्यब्रह्मत्वमित्यतआह । तज्जलानितीति ॥ तस्माद्ब्रह्मणोजातमतस्तज्जं तथातस्मिन्नेवब्रह्मणिलीयतेऽतस्तल्लं तथातस्मिन्नेवकालेऽनितिप्राणितिचेष्टतेतोनित्येवं ब्रह्मात्मतयात्रिषुकालेषुविशिष्टं । तद्व्यतिरेकेणासदतस्तदेवेदमित्यादिपरकीयंव्याख्यानमप्रामाणिकंप्रमाणविरुद्धंचेत्याशयेनखंडं प्रमाणेनैवव्याचष्टे ॥ इदंब्रह्मेत्यादिना ॥ ब्रह्मसर्वांतस्थत्वेनातिसामीप्यादिदमित्युच्यतइत्यर्थः । सर्वमित्युच्यते । तदित्यनूद्यब्रह्मेतिव्याख्यानं । चोवधारणे । तेनतद्ब्रह्मैवजलान्नजगदितिपरोक्तव्यावृत्तिः । ननुजगदपिब्रह्मगंपरंपरयाजलानित्यतउक्तं ॥ साक्षादिति ॥ अव्यवधानेनेत्यर्थः । नात्रब्रह्मशब्देनामुख्यार्थविवक्षेतिदर्शयन्जलान्शब्दंनिर्वक्ति ॥ योसाविति ॥ योविष्णुरसौजलेऽनितिचेष्टतेयतोऽतोजलानित्युच्यतइत्यर्थः । विष्णुर्जलेऽनितीतिकुतइत्यतस्तत्रश्रुतिंप्रमाणयन्नाह ॥ आनीदवातमिति ॥तुशब्दएवार्थे । यंआनीदवातमितिवेदवाक्स्फुटंनिरवकाशतयाऽवदत्सब्रह्मैव । कथमित्यतोन्यस्मिन्नेतद्वाक्यतात्पर्यासंभवादित्याशयेनोक्तंअप्रकेतेऽपरिमितेसलिलइति । नह्यगाधेचेतनप्रकृत्यात्मनिप्रलयजलेऽन्यस्यसुखेनावस्थानंसंभवतीति । अयंमंत्रार्थः । प्रलयकालेतदेकंसर्वोत्तमंअवातंवातप्रेरणयाविनैवस्वधयासुखेनैवनतुसुखप्राप्त्याद्यर्थंआनीत्अचेष्टत । तस्मादन्यत्परःपरं

---

भाष्यं । इदंब्रह्मातिसामीप्यात्सर्वंपूर्णगुणत्वतः । तच्चब्रह्मजलान्साक्षाद्योसौविष्णुर्जलेऽनिति । आनीदवातमितियंवेदवागवदत्स्फुटं । अप्रकेतेतुसलिलेब्रह्म

किंचननास । तमश्चेतनप्रकृत्यात्मकमग्रेप्रलयेआसीत् । यत्तमोऽप्रकेतमपरिमितंसलिलंभूत्वासीत्तेनेदंसर्वंगूढं गूहितमासीदिति । तत्रैवप्रमाणांतरमप्याह ॥ नारायणोपीति ॥ सविष्णुर्नारायणशब्दवाच्योपियतइत्यर्थः। नारायणशब्दवाच्यश्चापोनाराइत्यादि नाप्रलयार्णवशाय्येवप्रसिद्धइतिभावः । हृद्गतस्यैवोपास्त्यंतरविधायकंअथखलुक्रतुमयःपुरुषइत्यादिवाक्यंतदप्रतीतेर्व्याचष्टे ॥ य स्मादित्यादिना ॥ अनेनखलुशब्दोहेत्वर्थइत्युक्तंभवति । अस्यतस्मादित्युत्तरेणान्वयः । हेतुहेतुमद्भावोपपादनायक्रतुमयत्वंविशद यितुंयथाक्रतुरित्यादिवाक्यंतस्यकर्मविशेषार्थत्वप्रतीतिनिवारणायक्रतुशब्दार्थंदर्शयंस्तात्पर्यमाह ॥ क्रतुस्त्विति ॥ तुशब्दएवार्थे निश्चितंज्ञानमेवनान्यदिति । मृतौमुक्तौ । तादर्थ्येसप्तमी । स्वयोग्यज्ञानाधीनमुक्तिमानितियावत् । सक्रतुंकुर्वीतेत्यस्यतात्पर्यमाह॥ तस्मादिति॥विष्णाविति शेषोक्तिः।तथाचपुरुषोधिकारीयस्मात्क्रतुमयःस्वयोग्यज्ञानानुसारिफलवान्।तस्माद्विष्णौक्रतुंस्वयोग्यता नुसारेणनिश्चयज्ञानरूपोपासनांकुर्वीत । अन्यथास्वयोग्यफलालाभादित्युक्तंभवति । महागुणइत्यनेनमनोमयइत्यादेरुत्तरग्रंथस्यो पासनाविषयविष्णुविशेषगुणप्रतिपादकत्वेनसंगतिरुक्तेतिज्ञातव्यं । मनोमयइत्यादिकमप्रतीतेर्मनोविकारित्वादिप्रतीतेश्चव्याचष्टे ॥महाज्ञानेत्यादिना ॥ मयटःप्राचुर्यार्थत्वंस्वरूपार्थत्वंचेत्याशयेनमहाज्ञानात्मकत्वादित्युक्तं। तुशब्दोवधारणार्थः। नतुमनोविका

---

भाष्यं । नारायणोपिसः । इतिशांतउपासीतयस्माज्ज्ञानमयःपुमान् । क्रतुस्तुनिश्चितंज्ञातंतद्वशःपुरुषोमृतौ । तस्माद्विनिश्चितंज्ञानंकुर्याद्विष्णौमहागुणे । महाज्ञानात्मकत्वात्तुप्रोक्तोविष्णुर्मनोमयः । यस्माद्बलशरीरोसावतःप्राणशरीरकः । आसमंतात्प्रकाशात्सआकाशात्माप्रकीर्तितः । सर्वगंधादिरूपश्चभोक्ताचैषांसदैवहि । इतिनिश्चयकृद्यातितमेवपुरुषोत्तममितिसद्गुणे ।

रित्वादिति। आइत्यनुवादेनसमंतादितिव्याख्यानं । अवशिष्टस्यतात्पर्यंसर्वगंधादिरूपश्चेति। पुनरुक्तस्यसर्वकर्मासर्वकामइत्यादे स्तात्पर्यंभोक्तेति । एतमितःप्रेत्येत्यादेस्तात्पर्यंअपेक्षितंपूरयन्नाह ॥ इतीति ॥ तमेवयातीतिश्रुतौशेषोक्तिः । वाक्यद्वयस्यसर्वगंधा दिरूपश्चभोक्ताचैषामितिव्याख्यातत्वेपितदेकस्यैववाक्यस्यार्थद्वयप्रदर्शनमितिप्रतीयते। अतोविवच्यदर्शयति॥एकत्रेति॥ एकत्रा दिवाक्येसर्वगंधादिनातत्प्रतिपादकेनवाक्येनप्राकृतगंधादिरूपत्वेऽनित्यत्वंस्यादित्यतउक्तं॥ चिदानंदात्मकेति ॥ अन्यत्रचरमेवा क्येतद्वोक्तृत्वमुच्यतइत्यनुवर्तते । अतोनपौनरुक्त्यमितिशेषः॥ खं० १४॥ततश्चायंखंडार्थः॥ब्रह्म हृदयगतंयत्परंब्रह्म । इदं हृद यगत्वादेवातिसमीपगं। सर्वं पूर्णगुणं । खल्वित्युक्तार्थप्रसिद्धिद्योतकोनिपातः । तज्जलानितिजलेऽनितिचेष्टतइतिशांतोभगवन्नि ष्टबुद्धिः। उपासीत। उपास्त्यंतरमपिसहेतुकमाह॥ अथखल्वित्यादिना ॥अथोपास्त्यंतरमारभ्यतइत्यर्थः। खल्वितिहेत्वर्थे । पुरु षोधिकारी॥क्रतुशब्दश्चोपासनापरपर्यायस्येत्थमेवेतिनिश्चयरूपज्ञानस्यवाचकः॥अभिप्रेतहेतुहेतुमद्भावोपपादनायात्रविवक्षितंक्रतुम यत्वंदर्शयति॥यथाक्रतुरिति ॥ यथायादृशःक्रतुर्यस्यसयथाक्रतुः। तथातदनुरूपफलवान् । इतः अस्माल्लोकाद्देहाद्वा प्रेत्यमृत्वा भवतिमुक्तौस्वयोग्यज्ञानानुसारिफलवान्भवतीत्यर्थः । तथाचपुरुषोयस्मात्क्रतुमयःस्वयोग्यज्ञानानुरूपफलवान्तस्मात्सविष्णौ

---

भाष्यं । एकत्रसर्वगंधादिनाचिदानंदात्मकसर्वगंधादिरूपत्वमुच्यते । अन्यत्रतद्भोक्तृत्वं ॥ खं० १४ ॥

उप० । सर्वंखल्विदंब्रह्मतज्जलानितिशांतउपासीताथक्रतुमयःपुरुषोयथाक्रतुरस्मिँल्लोकेपुरुषोभवतितथेतःप्रेत्यभवतिसक्रतुंकुर्वीत ॥ १ ॥



क्रतुंस्वयोग्यंनिश्चयज्ञानंउपासनमितियावत् । कुर्वीतकुर्यादित्युक्तंभवति ॥ १ ॥ एवंविहितोपासनायामुपसंह्रियमाणगुणान्द र्शयति ॥ मनोमयइत्यादिना ॥ मनोमयोमहाज्ञानात्मकः। प्राणशरीरोबलशरीरः। भारूपोदीप्तिरूपः। सत्यकामोऽवितथेच्छः। सत्यसंकल्पःसफलसंकल्पः । संकल्पोनामकर्मारंभकालीनमनोवृत्तिविशेषः । आसमंतात्काशतइत्याकाशः । काशनंचात्रज्ञानं विवक्षितमितिनभारूपइत्यनेनपौनरुक्त्यमितिध्येयं । आत्माआदानादिकर्ता । सर्वकर्मातत्तन्नियामकतयासर्वकर्मकर्ता । का म्यंतइतिकामाःद्रव्याणि । गंधरसशब्दौगुणांतरस्याप्युपलक्षकौ । सर्वमिदमभ्यात्तःप्राप्तः सर्वमिदमभिअभितःआत्तोधृतःस्थित इतिवा । नविद्यतेनुग्रहमंतरेणवाक्यंयस्यसोवाक्यः । नविद्यतेआदरःआश्चर्यंयस्यसःनादरः । अवाक्यश्चासौनादरश्चसोवाक्यना दरः । लौकिकइवनिरर्थकवाक्यरहितोऽवाक्यः नादरःआत्मसंभावनारहितइत्यप्याहुः ॥ २ ॥ हृद्गतस्याणोर्महताबाह्येनैक्यमुप पादयितुंतस्याणुत्वमनूद्यमहत्त्वमप्युपास्यमाह ॥ एषमइत्यादिना ॥ यएषःमेहृदयेंऽतरात्माव्रीह्यादेरणीयान्अतिशयेनाणुःसएष मेहृदयेंतरात्मा । पृथिव्यादिभ्योज्यायानत्यंतस्थूलइत्यर्थः ॥ ३ ॥ अचिंत्यैश्वर्येणलोकदृष्ट्याविरुद्धत्वेनदृश्यमानप्रामाणिकसर्व गुणभोक्तृत्वात्तस्यनेदमसंभावितमित्याशयेनाह ॥ सर्वकर्मेत्यादिना ॥ अत्रैतावद्गुणभोक्तृत्वंविवक्षितमतोनपूर्वाभेदः । निग

---

उप० । मनोमयःप्राणशरीरोभारूपःसत्यसंकल्पआकाशआत्मासर्वकर्मासर्वकामःसर्वगंधःसर्वरसःसर्वमिदमभ्यात्तोऽवाक्यनादरः ॥ २ ॥ एषमआत्मांतर्हृदयेणीयान्व्री हेर्वायवाद्वासर्षपाद्वाश्यामाकतंडुलाद्वैषमआत्मांतर्हृदयेज्यायान्पृथिव्याज्ज्यायानंतरिक्षाज्ज्यायान्दिवोज्यायानेभ्योलोकेभ्यः ॥ ३ ॥ सर्वकर्मासर्वकामःसर्वगंधःसर्वरसःसर्वमिदम भ्यात्तोऽवाक्यनादरः

मयति ॥ एषमइति ॥ एतद्ब्रह्मअस्मिंश्चक्रतुंकुर्वीतेतिसंबंधः । उपसनाकालेकर्तव्यमित्थंभावंसूचयन्नेवमुपासकस्यफलमाह ॥ एतमिति ॥ इतोदेहात् ॥ प्रेत्यमृत्वै तंमदुपास्य मभिसंभविता यातास्मीति यस्यस्यात् । उपासनेतिकर्तव्यरूपाबुद्धिरितिशेषः । सतंप्राप्नोत्येव । तत्रविचिकित्सासंशयोनास्तीत्यर्थः । श्रुतिःस्वोक्तार्थेऋषिसंमतिमाह ॥ इतीति ॥ शांडिल्योह शांडिल्य इतिप्रसिद्धःऋषिःइतिपूर्वोक्तरीत्याआहस्मोक्तवान्किल । द्विरुक्तिरादरार्था ॥ ४ ॥ चतुर्दशःखंडः ॥ १४॥ एभ्योलोकेभ्यो ज्यायानितिभगवान्महानित्युक्तं । तत्राकाशवदशरीरोमहानितिप्रतीतिनिरासायविग्रहेणैवमहानितिदर्शयन्वायुजनकबाहुमत्त्वादिनाभगवदुपास्तीराह ॥ अंतरिक्षोदरइत्यादिना ॥ अविद्यमानमेवभावनार्थमाकारवत्तयोच्यतइतिप्रतीतिवारणायखंडंप्रमाणेनैवव्याचक्षाणस्तावत्कोशइवानेकधर्मसादृश्यात्कोशइत्यपव्याख्यानमितिभावेनकोशशब्दार्थमाह ॥ कइत्यादिना ॥ अंतरिक्षोदरइत्यादिकमंतरिक्षादेरुदराद्यभेदप्रतीतिवारणायव्याचष्टे ॥ तस्योदरइत्यादिना ॥ तथाचांतरिक्षमुदरेयस्यसोंतरिक्षोदरः । भूमिर्बुध्नयोर्यस्यसभूमिबुध्नइतिव्यधिकरणोबहुव्रीहिरित्युक्तंभवति । उत्तरंबिलमित्यस्यतात्पर्यंशिरोविवरगेति । अनेनसप्तसुप्रथमेतिसूत्राद्बिलामितिसप्तम्यर्थइत्युक्तंभवति । स्रक्तयःकोणाइत्यप्रामाणिकमित्याशयेनदिशोह्यस्यस्रक्तयइत्येतत्व्याचष्टे ॥ दिश

उप० । एषमआत्मांतर्हृदयएतद्ब्रह्मैतमितःप्रेत्याभिसंभवितास्मीतियस्यस्यादद्धानविचिकित्सास्तीतिहस्माहशांडिल्यःशांडिल्यः ॥ ४ ॥ खं० ॥ १४ ॥

भा० । कइत्यानंदउद्दिष्टउशइच्छाप्रकीर्तिता । आनंदेच्छास्वरूपोसौकोशोविष्णुःप्रकीर्तितः । तस्योदरेंतरिक्षंचपृथिवीपादबुध्नयोः । शिरोविवरगायौश्चदिशोबाहुषुसंस्थिताः ।

इति ॥ बाहुष्वित्यनेनस्त्रक्तयइतिप्रथमासप्तम्यर्थइत्युक्तंभवति । नजीर्यतीत्येतत्तात्पर्यमाह ॥ **अजरोयमिति** ॥ वसु प्राणिकर्मफलाख्यंधीयतेस्मिन्निनितिवसुधानइत्यप्रामाणिकव्याख्याननिरासायवसुधानइत्येतद्व्याचष्टे ॥ **वसवइति** ॥ वसवइत्यनूद्यदेवतागणाइतिव्याख्यानं । तस्मिन्सर्वमिदंश्रितमित्यस्यसर्वंसमस्तंप्राणिकर्मफलंसहतत्साधनैःश्रितमितिव्याख्यानेसर्वशब्दार्थसंकोचएवदोषइत्याशयेनतदनुवदति ॥ **तस्मिन्निति** ॥ दिशोबाहुषुसंस्थिताइत्युक्तं ॥ तत्रबाहुचतुष्टयमध्येकोबाहुःकिंदिगाश्रयःकिंनामाकिंचधत्तइतिजिज्ञासायांविवेकार्थंप्राप्तंतस्येत्यादिवाक्यमन्यथाप्रतीतिनिरासायव्याचष्टे ॥ **प्राचींदिगिति** ॥ प्राचीदिक्संस्थिताअस्मिन्निनितिप्राचीदिक्संस्थितः । प्राच्याश्रयइत्यर्थः । एवमुत्तरत्रापि । अन्यथादिशोबाहुषुसंस्थिताइत्यनेनविरोधादितिध्येयं । संस्थितःप्रवर्तकइत्यन्ये । ऊर्ध्वगःउपरितनः । जुहूशब्दंतस्मिन्निर्वक्ति ॥ **जुहूरिति** ॥ हुदानादनयोरितिधातोरितिभावः । अधरोर्वाक्तनः । सहमानशब्दंतस्मिन्निर्वक्तुंमानशब्दार्थंतावदाह ॥ **मानमिति** ॥ यतइत्यस्योत्तरत्रान्वयः । शंखोवेदात्मकः वेददेवताभिमन्यमानः । इदानींसहमानशब्दार्थमाह ॥ **शंखसहितइति** ॥ यतएवंमानशब्दलभ्यःशंखःअतइत्यर्थः । प्रकारांतरेणजुहूशब्दार्थमाह ॥ **जुहोतीति** ॥ उत्तरःउपरितनः । राज्ञीशब्दविवक्षितमर्थंदर्शयति ॥ **राजीयुक्ते**

---

भा० । अजरोयंमहाविष्णुर्वसवोदेवतागणाः । तेषांनिधानंभगवांस्तस्मिन्सर्वमिदंश्रितं । प्राचीदिक्संस्थितस्तस्यबाहुर्दक्षिणऊर्ध्वगः । जुहूःसहोमकर्तृत्वाद्धुंक्तेह्येतेनकेशवः । दक्षिणस्त्वधरोबाहुर्दक्षिणादिक्स्थितोविभोः । सहमानेतिसंप्रोक्तोमानंवेदात्मकंयतः । शंखोवेदात्मकःशंखसहितोदक्षिणाधरः । बाहुर्जुहोतिचक्रेणशत्रूनित्यथवाजुहूः । प्रतीचीदिक्स्थितस्तस्यवामबाहुस्तथोत्तरः । राजीयुक्तगदायुक्तोराज्ञीनामप्रकीर्तितः । अधरोवामबाहुर्यउत्तरादिक्स्थितोविभोः ।

ति ॥ राजीशब्दोदीप्तिवाची ॥ एवंचराज्ञादीप्तिमतागदाख्येनायुधेनाधिष्ठिताराज्ञीत्युक्तंभवति ॥ यद्वाराज्ञीशब्दोरागपर्यायः । तथाचाऽरातिभटशोणितरागयोगाद्राज्ञीगदातयायुतापिराज्ञीनामेतिद्रष्टव्यं । उक्तंहि । दिग्धामरातिभटशोणितकर्दमेनेति । सुभूताशब्दार्थमाह ॥ **श्रियइति** ॥ कांतेरित्यर्थः । एवंचभूतंभूतिः · सुभूतेनशोभनकांतिमतापद्मेनाधिष्ठितत्वात्सुभूतानामेत्युक्तंभवति । वायुंदिशांवत्संवेदेत्यस्यदिग्वायुशब्दयोःप्रसिद्धार्थताप्रतीतिवारणायतात्पर्यमाह ॥ **दिङ्नामानश्चेति** ॥ तेबाहवः । महावायुःप्रधानवायुः । तेभ्यःचतुर्भ्यः । किमेकरूपस्यैववायोरुत्पत्तिरितिजिज्ञासायामुक्तंविवृण्वन्नपुत्ररोदंरोदितीत्येतदप्रतीतेर्व्याचष्टे ॥ **धर्मज्ञानादिरूपेणेति** ॥ आदिपदेनवैराग्यैश्वर्ययोर्ग्रहणं । एवंसतिपुत्रोभवतिनरोदितीत्यल्पार्थत्वंप्रतीयते । तांनिवारयन्नुक्ताभिप्रायमाह ॥ **नजायतइत्यादिना** ॥ सोहमेवमितिवाक्यंकस्येतिनप्रतीयतेअतोव्याचष्टे ॥ **वायुमिति** ॥ पुत्रतयाउत्पन्नेतिशेषः । अमुनेतिवक्ष्यमाणमत्राप्यनुवर्ततइत्याशयेनतत्तात्पर्यमाह ॥ **हरेःप्रसादेति** ॥ अत्रापिपूर्ववदल्पार्थत्वप्रतीतिनिरासायाभिप्रायमाह ॥ **अजरेत्यादिना** ॥ अस्मीतिशेषः । नन्वेवंचेद्रमायाएतज्ज्ञानानंतरमेवमुक्तिरितिप्राप्तमतआह ॥ **अनादीति** ॥ अनादिकालतइत्यर्थः । अरिष्टंकोशमित्येतदप्रतीतेर्व्याचष्टे ॥ **अविनष्टमित्यादिना** ॥ अरिष्टमित्यस्यार्थोऽवि

---

भा० । श्रियआधारपद्मित्वात्सुभूतानामकःस्मृतः । दिङ्नामानश्चतेप्रोक्ताधर्मज्ञानातिदेशनात् । तेभ्योजातोमहावायुर्दिशांवत्सस्ततःस्मृतः । धर्मज्ञानादिरूपेणविष्णोर्बाहुचतुष्टयात् । जातंवायुंविदित्वैवपुत्रोभूत्वानरोदिति । नजायतेनम्रियतेमुक्तोभूत्वासुखीभवेत् । वायुंहरेस्सुतंज्ञात्वानाहंपुत्रतयाऽरुदं । हरेःप्रसादसामर्थ्यादजराचामराह्यहं । अनादिकालसंबंधादित्युवाचपुरारमा । अविनष्टपरानंदकामंविष्णुंसदाह्यहं ।

नष्टमिति । परानंदकाममितिकोशमित्यस्य । कशब्दःपरानंदवाची । उशब्दश्चेच्छापरपर्यायकामवाचीत्यर्थः । प्रपद्यइतिप्रयोगात्कादाचित्कप्रपत्तिप्रसक्तिपरिहारायसदेत्युक्तं । तथाचक्रियाप्रबंधेलडित्युक्तंभवति । अमुनेत्यस्यार्थस्तत्प्रसादेनेति । अमुनेतित्रिरुक्तिरादरार्थेतिसूचयति ॥ **केवलमिति** ॥ प्राणंप्रपद्यइतिवाक्यंप्रसिद्धप्राणपरताप्रतीतिनिरासायव्याचष्टे ॥ **प्राणमिति** ॥ प्राणमित्यनूद्यसर्वप्रणेतारमितिव्याख्यानं । अनेनप्रणयतीतिनिर्वचनंसूचितंभवति । सर्वप्रणेतृत्वोपपादनायकेशवमित्युक्तं ब्रह्मरुद्रप्रवर्तकं । प्राणोवाइदंसर्वंभूतंयदिदंकिंचेतिसर्वजगदात्मकत्वंप्राणस्योच्यतइतिप्रतीतिनिरासायव्याचष्टे ॥ **प्रभूतमित्यादिना** ॥ प्राणएवविष्णुःप्राणनामाविष्णुरित्यर्थः । वैशब्दार्थएवेति । तद्व्यावर्त्यप्रदर्शनंनास्तीति । तमेवतत्प्राप्स्यथेतिवाक्यंतच्छब्दपरामृश्यंदर्शयन्अपेक्षितपूरणेनव्याचष्टे ॥ **तस्मादिति** ॥ तत्इत्यस्यार्थस्तस्मादिति । अस्याउपासनायाअप्येवंफलवत्त्वदर्शनादित्यर्थः ।प्राणभूर्भुवःस्वःपदैर्वासुदेवादिमूर्तिचतुष्टयंप्रतिपाद्यमित्यभिप्रेत्यतान्शब्दान्तत्रनिरुच्यदर्शयन्पृथिवींप्रपद्येंतरिक्षंप्रपद्येइत्यादिवाक्यगतपृथिव्यादिशब्दानपिप्रसिद्धपृथिव्यादिपरताप्रतीतिनिरासायसंकर्षणादौनिर्वक्ति ॥**प्राणनामेत्यादिना** ॥ पृथिव्यांस्थितइतिशेषः । एवमंतरिक्षइत्यादावपि । अस्यजगतःआयुश्चआयुप्रदश्चयतःततत्स्मात्वायुनामेतिसंबंधः । परानंदप्रदत्वतः

---

भा० । प्रपद्येतत्प्रसादेनकेवलंनात्मशक्तितः । प्राणंसर्वप्रणेतारंप्रपद्येकेशवंसदा । प्रभूतंयदिदंकिंचित्प्रादुर्भावात्मकंहरेः । मत्स्याद्यंतत्प्राणएवविष्णुर्नास्त्यत्रसंशयः । तस्मान्मत्स्यादिरूपंतंविष्णुमेवप्रपद्यथ । हेजनाइत्यवोचत्सालक्ष्मीःसर्वाःप्रजाःप्रति । प्राणनामावासुदेवोमोक्षंस्वान्प्रणयेद्यतः । संकर्षणस्तुभूर्नामाभूषयेज्ज्ञानतोयतः । सपृथ्व्यांपृथिवीनामास्वात्मानंप्रथयेद्यतः । अंतरिक्षेंतरिक्षाख्योयतःसाध्वंतरीक्षते । दिवियुनामासविभुःसर्वक्रीडाकरत्वतः । प्रद्युम्नश्चभुवोनामासृष्टयायद्भावयेज्जगत् । सोम्निनामापरोवह्याव

स्वरित्यत्रसुशब्दस्यशोभनत्ववाचित्वात्। वइत्यस्यसुखवाचित्वादितिभावः। यथोक्तं। अनंतसुखोयव्याहृतीरितइति। साम्यंस्वरूपाणांतत्तेनप्राणंप्रपद्यइत्यादिवाक्येनसोहमेवमित्यादिरमावाक्यमितिव्याख्यातं। तदयुक्तं। पुल्लिंगश्रवणात्तस्याश्चस्त्रीत्वादित्यत आह ॥ पुल्लिंगेनेति ॥ तर्हीतिशेषः। इयंचपुंवच्छक्तिमतीतिभावः। क्वचित्तुश्रीश्चेतिपाठस्तदायदीत्यस्ययस्मादित्यर्थः ॥ खं० १५ ॥ ततश्चायंखंडार्थः ॥ कोशःआनंदेच्छास्वरूपोविष्णुरंतरिक्षमुदरेयस्यासावंतरिक्षोदरः। भूमिर्बुध्नयोर्मूलयोःपादमूलयोरितियावत्। यस्यसभूमिबुध्नः। विग्रहवतोपिनाशोनाशंक्यइत्याह ॥ नजीर्यतीति ॥ नजरावान्भवति। ननयतीतियावत्। अस्यलोकाश्रयविग्रहस्यभगवतोदिशश्चतस्रःस्रक्तयःशाखाःबाहवइतियावत्। प्रथमासप्तम्यर्थे। स्रक्तिषुदिशःस्थिताइत्यर्थः। अस्यभगवतउत्तरंबिलंशीर्षसंबंधिविवरं। अत्रापिप्रथमासप्तम्यर्थे। तस्मिन्द्यौःद्युलोकस्तिष्ठतीत्यर्थः। नकेवलंलोकाश्रयः किंतु तत्रत्यदेवाद्याश्रयश्चेत्याह ॥ सएषइति ॥ सएषःयथोक्तगुणःकोशःआनंदेच्छारूपोविष्णुः। वसवोदेवतागणाःधीयंतेस्मिन्निति वसुधानः। तस्मिन्कोशशब्दवाच्येविष्णौ। इदंप्रत्यक्षादिसिद्धंसर्वंजगत्श्रितमाश्रितं ॥ १ ॥ दिशश्चतस्रःस्रक्तिशब्दवाच्यबाहु

---

भा०। त्तिसर्वंयतोहुतं। वायुनामासवायुस्थोवात्यायुश्चयतोस्ययत्। आदित्याख्यःसआदित्येआददात्यायुरस्ययत्। स्वर्नामात्वविरुद्धोसौपरानंदप्रदत्वतः। ऋग्वेदाख्यःसऋग्वेदेज्ञानंवेदयतेयतः। यजुर्वेदोयजुर्वेदेयज्ञंवेदयतेयतः। सामवेदःसामवेदेसाम्यंवेदयतेह्ययं। एवंचतुर्विधंतत्वंतदवोचमहंहरेः। इत्युवाचेंदिरादेवीस्तुवंतीपरमं हरिमितिच। पुल्लिंगेनोच्यतेस्त्रीचपुंवच्छक्तिमतीयदीतिच ॥ खं० १५ ॥

उप०। अंतरिक्षोदरःकोशोभूमिबुध्नोनजीर्यतिदिशोह्यस्यस्रक्तयोद्यौरस्योत्तरंबिलंसएषकोशोवसुधानस्तस्मिन्सर्वमिदꣳश्रितं ॥ १ ॥

संस्थाइत्युक्तं । तत्रबाहुचतुष्टयमध्येकोबाहुःकिंदिगाश्रयः किंनामा किमायुधयुक्तश्चेतिजिज्ञासायां तत्सर्वंविविच्यदर्शयति ॥ **तस्येत्यादिना**॥प्राचीदिक्प्राचीदिगाश्रयत्वात्तच्छब्दवाच्योदक्षिणोर्ध्वबाहुः। जुहोतिदानादनेकरोतीतिजुहूर्नाम । अथवाचक्रेणशत्रूञ्जुहोतीतिजुहूः । शत्रुनाशकचक्रवानितियावत् । दक्षिणादक्षिणदिगाश्रयोदक्षिणाधरबाहुः सहमानानाममानंवेददेवताभिमन्यमानःशंखः तेनसंहितःप्रसिद्धइत्यर्थः।प्रतीचीप्रतीचीदिगाश्रयोवामोर्ध्वबाहुःराज्ञीनामराज्ञादीक्षितागदारूपायुधेनअधिष्ठिताराज्ञीतिप्रसिद्धेत्यर्थः । अथवादैत्यशोणितरागयोगाद्राजीगदातयाधिष्ठितापिराज्ञीत्यर्थः । उदीचीउदीचीदिगाश्रयोवामाधरबाहुः । सुभूतानामभूतंभूतिः कांतिरितियावत् । एवंचसुभूतेनशोभनकांतिमतापद्मेनाधिष्ठितापिसुभूतेतिप्रसिद्धेत्यर्थः । नकेवलंबाहूनांतत्तद्दिगाश्रयत्वादिमात्रं किंतुधर्मज्ञानवैराग्यैश्वर्यरूपवायुजनकत्वंचज्ञातव्यमित्याशयेनाह ॥ **तासामिति** ॥ तासांचतिसृणांप्राच्याद्याश्रयाणांजुह्वादिनामिकानांबाहुरूपस्रक्तीनांवायुर्महावायुःधर्मादिरूपेणवत्सःपुत्रः। तथाचजुहूजातोधर्मः सहमानजातंज्ञानं राज्ञीजातंवैराग्यं सुभूतजातमैश्वर्यमितिविवेकोद्रष्टव्यः। एवंवेत्तुःफलमाह ॥ **सयएवमित्यादिना** ॥ योधिकारीएवमुक्तरीत्याएतंधर्मादिरूपंवायुंदिशांधर्मज्ञानातिदेशनेनदिङ्नामकानांबाहुरूपस्रक्तीनांवत्संवेदसःपुत्ररोदंपुत्रोभूत्वारोदनंनरोदितिनकरोतीत्यर्थः। कस्यापिपुत्रोनभवतिमुक्तोभवतीतिभावः । एवंवायुंदिग्वत्संज्ञात्वैतत्फलमाप्तवान्कश्चिदस्तिकिमितिजिज्ञा

छां०वे०३३ उप० । तस्यप्राचीदिक्जुहूर्नामसहमानामदक्षिणाराज्ञीनामप्रतीचीसुभूतानामोदीचीतासांवायुर्वत्सःसयएतमेवंवायुंदिशांवत्संवेदनपुत्ररोदंरोदितिसोहमेतमेवंवायुंदिशांवत्संवेदमापुत्ररोदंरुदं ॥ २ ॥

सायामाह ॥ **सोहमित्यादिना** ॥ रमावाक्यमिदं । पुंवच्छक्तिमत्त्वाच्चसइतिपुलिंगशब्दवाच्यत्वंतस्याः । सोहमेवमुक्तरीत्याएतं चतूरूपंवायुंदिशांधर्मज्ञानातिदेशनात्तन्नामिकानांचतसृणांबाहुरूपस्त्रक्तीनांवत्संवेदपुत्ररोदंपुत्रतयोत्पन्नासतीरोदनंमारुदंनाकार्षं । अनादितएवाजरामराचाऽभवमित्यर्थः ॥ २ ॥ अमुनेतिवक्ष्यमाणमत्रापिसंबध्यते । एवंचामुनाहरिप्रसादेनैवेदंफलमाप्तमित्युक्तं भवति । नकेवलमिदमेवफलंमयाप्तं । किंतुकोशोनजीर्यतीत्युक्तोपासनानुरूपमपिफलांतरमाप्तमित्याह ॥ **अरिष्टंकोशमिति** ॥ अहंअरिष्टंअविनष्टंकोशंपरानंदेच्छारूपंविष्णुंसदाप्रपद्येउपासे । प्राप्ताचास्मीत्यर्थः । किमुपास्तिबलात्तंनिरुध्य नेत्याह ॥ **अमुनेति** ॥ तत्प्रसादेनेत्यर्थः । त्रिरुक्तिरादरार्था । उपास्त्यंतराणिविधातुंतत्ररुच्युत्पादनायतादृगुपासनयामयाफलमाप्तमितिताव दादौदर्शयतिरमा ॥ **प्राणंप्रपद्यइत्यादिना** ॥ प्राणं सर्वंप्रणयतीतिवा स्वान्मोक्षंप्रणयेदितिवा प्राणनामानंवासुदेवं । भूः ज्ञानेनभूषयतीतिभूर्नामकंसंकर्षणं । भुवः भावयतीतिभुवोनामकंप्रद्युम्नं ।स्वः परानंदप्रदत्वेनस्वर्नामकमनिरुद्धं ॥ ३ ॥ किंततइत्यतःप्राणंप्रपद्यइत्यादिनोक्तानांवासुदेवादीनांचतुर्णामभिप्रेतंमाहात्म्यंविशदयंतीभवद्भिरप्येवमुपास्तिःकार्येतिविधत्ते ॥ **अथयदवोचमित्यादिना** ॥ यदिदंकिंचभूतंप्रभूतंपूर्णमत्स्याद्यंतत्सर्वंप्राणोवै । प्राणनामावासुदेवएवयस्मात्तस्माद्धेजनास्तंमत्स्याद्यभिन्नंवासुदेवमुपासनयाप्राप्स्यथ । तत्प्राप्तिहेतुभूतामुपास्तिंकुरुतेतियावत् । एवंतमेवतत्प्राप्स्यथेतिवाक्यं अथयदवोचंभूःप्रपद्यइति अथय

उप० । अरिष्टंकोशंप्रपद्येऽमुनाऽमुनाऽमुनाप्राणंप्रपद्येऽमुनाऽमुनाऽमुनाऽभूःप्रपद्येऽमुनाऽमुनाऽमुनाभुवःप्रपद्येऽमुनाऽमुनाऽमुनाऽस्वःप्रपद्येऽमुनाऽमुनाऽमुना ॥ ३ ॥ अथयदवोचंप्राणंप्रपद्यइतिप्राणोवाइदꣳसर्वंभूतंयदिदंकिंचतमेवतत्प्राप्स्यथ ॥ ४ ॥

॥११९॥

दवोचंभुवःप्रपद्यइति अथयदवोचंस्वःप्रपद्यइति वाक्यत्रयशेषत्वेनापियोजनीयं ॥ ४ ॥ पृथिवींपृथिवीसंस्थं प्रथयतीतिपृथिवीनामकं । अंतरिक्षंअंतरिक्षसंस्थं अंतरीक्ष्यतइत्यंतरिक्षनामकं । दिवंक्रीडाकरत्वेनद्युनामानंतद्गतंचसंकर्षणमवोचं । अतोयूयमपितंलोकत्रयव्यापिनंतत्तल्लोकनामानंसंकर्षणमुपासनयाप्राप्स्यथ ॥ ५ ॥ अग्निमग्निस्थंसर्वंहुतमत्तीत्यग्निनामकं । वायुंवातीतिवाः। आयुःप्रदत्वादायुः । वाश्चासावायुश्चेतिवायुनामानंवायुस्थं । आदित्यंअस्यायुराददातीत्यादित्यनामानमादिस्थंप्रद्युम्नमहंप्रपद्ये यतोतोयूयमप्यग्न्यादिदेवांतर्गतंतत्तन्नामानंप्रद्युम्नमुपासनयाप्राप्स्यथ ॥ ६ ॥ ऋग्वेदं ऋचंज्ञानंवेदयतइतिऋग्वेदनामानंऋग्वेदस्थं । यजुर्वेदं यजुर्यज्ञंवेदयतइतियजुर्वेदनामानंतत्संस्थं । सामवेदंसाम्यंवेदयतइतिसामवेदनामानंतत्संस्थमनिरुद्धं अहंप्रपद्येऽतोयूयमपिऋगादिवेदव्यापिनंतत्तद्वेदनामानंअनिरुद्धमुपासनयाप्राप्स्यथेति ॥७॥ **पंचदशःखंडः** ॥१५॥ उक्तवक्ष्यमाणानेकभगवदुपास्तीनामायुषःक्षणिकत्वेनदेहस्यचरोगोपहतत्वेनानुष्ठानमशक्यमित्याशंकायामायुर्वृद्ध्यर्थंरोगपरिहारार्थंचपुरुष(स्य)यज्ञरूपामुपास्तिमाह ॥ **पुरुषोवावयज्ञइत्यादिना** ॥ अत्रपुरुषस्ययज्ञसाम्यंकाव्यइवोच्यतइतिप्रतीयते । नतूपासार्थं । तथोपासाविधायकाभावात् । ब्रह्मसंबंधश्चनप्रतीयते । अतोब्रह्मसंबंधंदर्शयन्नपेक्षितंपूरयन्खंडंप्रमाणेनैवव्याचष्टे ॥ **विष्णिवति** ॥ वावेत्य

उप० । अथयदवोचंभूःप्रपद्यइतिपृथिवींप्रपद्येंतरिक्षंप्रपद्येदिवंप्रपद्यइत्येवतदवोचं ॥५॥ अथयदवोचंभुवःप्रपद्यइत्यग्निंप्रपद्येवायुंप्रपद्येआदित्यंप्रपद्यइत्येवतदवोचं ॥ ६ ॥ अथयदवोचंस्वःप्रपद्यइत्यृग्वेदंप्रपद्येयजुर्वेदंप्रपद्येसामवेदंप्रपद्यइत्येवतदवोचंतदवोचं ॥ ७ ॥ **पंचदशःखंडः** ॥ १५ ॥

भा० । विष्णुपूजार्थयज्ञोहमित्युपासनमादरात् । कुर्वीतपुरुषोनित्यं

स्यार्थोनित्यमादरादिति । पुरुषस्ययज्ञरूपत्वेसाम्येनसवनत्रयस्थानीयंकिंचिन्नोक्तमतस्तद्दर्शयति ॥ **तस्येति** ॥ उत्तमंप्रसिद्ध सवनत्रयापेक्षयाबहुत्वादुत्तमफलसाधनत्वाच्चेतिभावः । विशेषतःप्रातःसवनादिस्थानीयंदर्शयितुंतस्ययानीत्यादिकोपनिषत् ॥ तत्रतस्ययानिचतुर्विंशतिवर्षाणीतिप्रथमवाक्यंमध्यमांतिमचतुर्विंशतिवर्षाणीतिप्रतीतिंवारयन्व्याचष्टे ॥ **चतुर्विंशादिति** ॥ विंशतिशब्दपर्यायोविंशच्छब्दः । आयुरितिवर्तते । चतुर्विंशतिवर्षसंख्याकमायुरित्यर्थः । पूर्वमेवेतिसंबंधः। सब्रूयादित्यारभ्यागदो भवतीत्यंतवाक्यस्यसब्रूयादित्यादिनावसूनाज्ञापयतीतिप्रतीतिवारणायतात्पर्यमाह ॥ **प्रार्थयित्वेति** ॥ अथयानिचतुश्चत्वारिंशद्वर्षाणीतिवाक्यंअंतिमचतुश्चत्वारिंशद्वर्षाणीतिप्रतीतिंवारयन्व्याचष्टे ॥ **मध्यइति** ॥ चतुर्विंशत्यष्टचत्वारिंशद्वर्षरूपायुषोर्मध्येविद्यमानंचतुश्चत्वारिंशद्वर्षसंख्याकमायुरित्यर्थः । मध्यमंमाध्यंदिनं । सब्रूयात्प्राणारुद्राइत्यादेरगदोभवतीत्यंतस्यवाक्यस्यरुद्राज्ञापकत्वप्रतीतिवारणायतात्पर्यमाह ॥ **रुद्राणामिति** ॥ अत्रगतमितिशेषः । अथयान्यष्टचत्वारिंशद्वर्षाणीतिवाक्यंयत्किंचिदष्टचत्वारिंशद्वर्षप्रतीतिनिवारणायव्याचष्टे ॥ **ततइति** ॥ उत्तरमितिशेषः । अष्टचत्वारिंशद्वर्षसंख्याकमायुरित्यर्थः । अत्रापिसब्रूयात्प्राणाआदित्याइत्यादेरादित्याज्ञापकत्वभ्रमवारणायतात्पर्यमाह ॥ **आदित्यानामिति** ॥ अत्रोक्तमहिदासस्यभगवदवतारत्वे सहषोडशंवर्षशतंअजीवदित्युक्ताल्पायुष्ट्वानुपपत्तिः । रोगाद्युपतापेप्रार्थनेनतत्परिहाररूपफलकथनायोगाच्च । तथोत्तरखंडोक्त

---

भा० । तस्ययत्षोडशोत्तरं । शतमायुस्तत्सवनत्रयमीरितमुत्तमं । चतुर्विंशत्तुयत्पूर्वंप्रातःसवनमेवतत् । प्रार्थयित्वावसूंस्तद्वत्पुमान्मृत्युमपानुदेत् । मध्येचतुश्चत्वारिंशन्मध्यमंसवनंस्मृतं । रुद्राणांप्रार्थनेनात्रपुमान्मृत्युमपानुदेत् । ततोष्टचत्वारिंत्तुतृतीयंसवनंस्मृतं । आदित्यानांप्रार्थनेनतद्वन्मृत्युमपानुदेदितिसर्वयज्ञे ।

कृष्णस्यापिभगवदवतारस्यग्रहणेसोपिपासएवबभूवेतिनयुज्यते। नहिसर्वविद्याभिज्ञस्यसदातनस्यभगवतःपरिच्छिन्नायुरात्मकयज्ञविद्याश्रवणादिनान्यविद्याभ्योपिपासत्वंसंभवति । अतोत्रोक्तोमहिदासःउत्तरत्रोक्तःकृष्णश्चकावितिजिज्ञासायामाह॥ महिदास इति ॥ महिदासःअत्रोक्तः । अन्यःभगवदवतारान्महिदासात्कृष्णश्चोत्तरखंडोक्तः।अन्यएवभगवदवतारात्कृष्णात् । अतउपनिषदुक्तंफलंतयोरुपपन्नमितिवाक्यशेषः । स्यादेतत् । यदिभगवदवताराततिरिक्तौमहिदासकृष्णौस्यातां । तदेवकुतः । तत्रप्रमाणाभावादित्याशंकायांतत्सद्भावेप्रमाणमाह ॥ महिदासइति ॥ तुशब्दःप्रकृतत्वानुसंधानार्थः। ऐतरेयोमहिदासोभगवदवतारादन्योस्तिदेवकीसुतःकृष्णोपिभगवदवताराद्द्वितीयःकपिलश्चभगवदवतारादन्यः । नन्वेतेसुरादिषुकेइतिजिज्ञासायामाह ॥ त्रय इति॥ पुरेत्यस्योत्तरत्रान्वयः ।नन्विदमयुक्तं । अत्रोक्तमहिदासस्यैतरेयत्वश्रवणात्उत्तरोक्तकृष्णस्यचदेवकीसुतत्वश्रवणात्। अन्यत्रोक्तकपिलस्यापिआसुरिप्रभृतिशिष्यकत्वश्रवणात् । तेषांचक्रमेणभगवदवतारमहिदासादिधर्मत्वात् । नचान्यमहिदासकृष्णयोर्भगवन्नामित्वेऽन्यकपिलतच्छिष्ययोर्भगवदवतारकपिलतच्छिष्यनामित्वेचनिमित्तमस्ति । प्रशिष्यनामैक्यंचश्रूयमाणमनुपपन्नं । वेदप्रतिपाद्याश्चैतेश्रूयंते । नहिनराणांकारणेनविनावेदप्रतिपाद्यतायुक्ता। अतएतेभगवदवताराएव । फलकथनंतुकथंचिन्नेयमित्याशंकायांनामैक्यादौनिमित्तमाह ॥ पुरेत्यादिना ॥ एतइतिवर्तते ॥ विष्णुनास्वस्यनामैक्यंतन्मात्रास्वमातुश्चनामैक्यं

---

भा० । महिदासोऽन्यःकृष्णश्चान्यएव । महिदासस्त्वैतरेयःकृष्णोन्योदेवकीसुतः । कपिलश्चद्वितीयोन्यस्त्रयएतेपुरानराः । संगत्योचैस्तपस्तेपुर्ब्रह्मणेपरमेष्ठिने । मातुःस्वस्यचनामैक्यंविष्णुनास्यादितिह्युभौ । स्वात्मशिष्यप्रशिष्याणांनामैक्यंकपिलस्तथा । एवमेवचवेदोक्ताभवेमेतित्वतंद्रिताः।तान्वरान्प्रददौतेषांब्रह्मालोकपितामहः ।

स्यादित्यभिप्रायेणेत्यर्थः । नामैक्यंविष्णुरूपकपिलतच्छिष्यप्रशिष्यैरितिशेषः । एवमेवविष्णुरूपमहिदासादिवदेवऐतरेयत्वा दिनावेदोक्ताश्चेतिसंबंधः । चशब्दस्तन्मातृशिष्यप्रशिष्याअपितन्मात्रादिनामिनआसन्नित्याह ॥ मुनयोप्यासन्हिशब्दोयमर्थः प्रसिद्धइत्याह । यस्मादेवंवरान्प्रददौतस्मादितिहेत्वर्थेवा । उक्तार्थेकालकीयगतमेवस्थानांतरस्थंवाक्यमुदाहरति ॥ **महिदास इति** ॥ षोडशशतंजीवीत्युक्तःश्रुतावितिशेषः । अत्रकारणमाह ॥ **त्रयइत्यादिना** ॥ खं० १६ ॥ **ततश्चायंखंडार्थः** ॥ पुरुषो धिकारीजीवः अहंविष्णुपूजार्थंयज्ञइत्युपासनंकुर्वीत । वावेतिनिपातसमुदायस्तस्यादरनैरंतर्यरूपेत्थंभावद्योतकः । अत्रपुरुषस्य यज्ञरूपत्वेप्रसिद्धयज्ञसाम्येनभाव्यं । प्रसिद्धयज्ञेचसामान्यतःसवनत्रयात्मकमेकंप्रसिद्धं तच्चात्रतस्ययत्षोडशोत्तरंशतमायुस्तदि तिज्ञेयं । अथतत्रप्रातःसवनंतत्स्थानीयमत्राह ॥ **तस्ययानीति** ॥ तस्यपुरुषस्य तस्यायुषोमध्येयानिपूर्वाणिचतुर्विंशतिवर्षाणि तत्प्रातःसवनं चतुर्विंशतिवर्षाणांप्रातःसवनत्वंकथमित्यतआह ॥ **चतुर्विंशत्यक्षरेति** ॥ किंततइत्यतआह ॥ **गायत्रंहीति** ॥ **प्रातःसवनंगायत्रं** । गायत्रीछंदस्कंप्रसिद्धं । तथाचचतुर्विंशतिवर्षात्मकस्यायुषःप्रातःसवनजाप्यगायत्र्यक्षरसंख्यासाम्या

भा० । तस्मात्तन्नामिनश्चासंस्त्रयस्तेमुनयोपिहि । महिदासस्त्वैतरेयोबह्वृचोपनिषद्गतः । साक्षात्सभगवान्विष्णुस्तन्नामैकोमुनिर्ह्यभूत् । कृष्णस्तुवासुदेवाख्यःपरमात्मैवकेवलं । तन्नामादेवकीपुत्रस्त्वन्योप्यभवदंजसा । कपिलोवासुदेवाख्यःसाक्षान्नारायणःप्रभुः । तन्नामाकपिलोन्यस्तुशिष्यनाम्नासहाभवत् । सषोडशशतंजीवीमहिदासोपरस्त्वृषिः । घोरशिष्यस्तथाकृष्णःकपिलश्चकुशास्त्रकृत् । त्रयएतेवरंप्राप्यब्रह्मणःपरमेष्ठिनः । कृतकृत्याःप्रमुमुदुस्तन्नामानश्चतेभवन्नितिकालकीये ॥ खं० ॥ १६ ॥

उप० । पुरुषोवावयज्ञस्तस्ययानिचतुर्विंशतिवर्षाणितत्प्रातःसवनंचतुर्विंशत्यक्षरागायत्रीगायत्रंहिप्रातस्सवनं



त्प्रातःसवनत्वोक्तिरितिभावः। प्रसिद्धयज्ञेप्रातःसवनंवसुस्वामिकंप्रसिद्धं।अतोत्राप्युक्तंप्रातःसवनंवसुस्वामिकमित्याह॥**तदस्येति**॥ अस्यपुरुषयज्ञस्यतत्उक्तंप्रातःसवनंवसवोदेवाःअन्वायत्ताःअनुगताःस्वामिनइत्यर्थः । नन्वग्न्यादीनांवसूनामधिदैवरूपाणामध्या त्मंपुरुषायुष्यविशेषात्मकप्रातःसवनस्वामिताकथमित्यतआह॥ **प्राणावाइति** ॥ तएवाध्यात्मंप्राणाइंद्रियाभिमानिनोवसवोवसु शब्दवाच्यत्वेनविवक्षिताइत्यर्थः। तेषुवसुशब्दप्रयोगेनिमित्तमाह॥ **एतइति** ॥ हियस्मादिदंसर्वंपुरुषादिप्राणिजातमेतेवासयंति तस्माद्वासनाद्वसवइत्यर्थः । प्राणेषुहिदेहेवसत्सुसर्वमिदंवसतिनान्यथेतिभावः ॥ १ ॥ किंचप्रातःसवनेप्रार्थितावसवस्तत्र प्रसक्तविघ्नान्परिहृत्यमाध्यंदिनसवनपर्यंतंतत्संपादयंतीतिप्रसिद्धं । तदप्यत्रास्तीत्याह ॥ **तंचेदिति** ॥ तंपुरुषयज्ञसंपादि नमधिकारिणं एतस्मिन्प्रातःसवनरूपेचतुर्विंशतिवर्षात्मकेवयसि किंचित्ज्वरादिकमुपतपेत्दुःखमुत्पादयेत्तदासपुरुषःआत्मानं यज्ञंमन्यमानोब्रूयात्प्रार्थयेत् वसूनितिशेषः । किमिति । हेप्राणाइंद्रियदेवाःवासनाद्वसुसंज्ञायूयं इदंचतुर्विंशतिवर्षात्मकं मेम मयज्ञरूपस्यप्रातःसवनंवर्ततेतत् । माध्यंदिनंसवनंअनुसंतनुतमाध्यंदिनेनसवनेनतद्रूपेणायुषासहितंकुरुतेत्यर्थः । माहंयज्ञोयु ष्माकंप्राणानांवसूनांप्रातःसवनेशानांमध्ये भवतांतत्राधिपत्येसतीतियावत् । एवमुत्तरत्रापि । विलोप्सीयविलुप्येयविच्छिद्येयेत्य र्थः । इतिशब्दःप्रार्थनमंत्रसमाप्त्यर्थः । प्रार्थनंमोघंकिं नेत्याह ॥ **उद्धैवेति** ॥ ततःप्रार्थनात्ततोज्वरादेरुदेत्येवहउद्गच्छत्येवहि।

उप० । तदस्यवसवोन्वायत्ताःप्राणावाववसवएतेहीदꣳसर्वंवासयंति ॥ १ ॥ तंचेदेतस्मिन्वयसिकिंचिदुपतपेत्सब्रूयात्प्राणावसवइदंमेप्रातस्सवनंमाध्यंदिनꣳसवनमनुसंतनुतेतिमाहंप्राणानांवसूनांमध्येयज्ञोविलोप्सीयेत्युद्धैवततएत्यगदोहभवति ॥ २ ॥

तदेवविवृणोति ॥ अगदइति ॥ व्याधिरहितोभवतीत्यर्थः ॥ २ ॥ अथयानिचतुश्चत्वारिंशद्वर्षाणीत्यादिपूर्ववद्व्याख्येयं । रोदयंतिप्राणिदेहेस्वानवस्थानेनातोरुद्राइत्यर्थः । इदंसर्वंशब्दादिविषयजातं ॥ ३ ॥ ४ ॥ आददतिविषयीकुर्वंति ज्ञापयंत्यत आदित्याइत्यर्थः । तृतीयसवनंवर्तते । तदायुःषोडशोत्तरंवर्षशतंअनुसंतनुततेनपूर्णेनायुषासहितंकुरुत । यज्ञंसमापयतेत्यर्थः ॥ ५ ॥ ६ ॥ एवंस्वात्मानंयज्ञतयोपास्यनिर्विघ्नंपूर्णमायुःप्राप्तवानस्तिकिमितिजिज्ञासायामस्तीत्याह ॥ एतद्धस्मेत्यादिना ॥ एतत्पुरुषस्ययज्ञत्वेनोपासनंवैकिलतद्विद्वान्तत्पुरुषयज्ञोपासनंविद्वान्महिदासोनामतःइतरायाअपत्यमैतरेयोभगवदवतारमहिदासादन्योमुनिःआहस्म । हेगदसःत्वंमेयज्ञरूपस्यममैतच्छरीरंकिंकिमर्थमुपतपसि । योहंयज्ञोऽनेनत्वत्कृतोपतापेननप्रेष्यामिनमरिष्यामि । अतोवृथातवश्रमइत्यर्थः ।इत्याहस्मेतिसंबंधः । स एवंनिश्चयः । षोडशंवर्षशतंअजीवत् । अन्योपियःएवं यथोक्तंपुरुषयज्ञंवेदोपास्तेसोप्येवंनिश्चयःषोडशंवर्षशतंजीवतीत्यर्थः ।क्वचित्प्राहेतिपठ्यते । तदेतिशब्दोऽध्याहार्यः । इतिरमाप्राहेत्यर्थः । ॥ ७॥ **षोडशःखंडः** ॥ १६ ॥ ननुप्रसिद्धयज्ञेदीक्षोपसदस्तुतशस्त्राणिदक्षिणासोष्यत्यसोष्टेतिशब्दोवभृथश्चेत्येतानिसंति तत्स्था

---

उप० ।अथयानिचतुश्चत्वारिंशद्वर्षाणितन्माध्यंदिनꣳसवनंचतुश्चत्वारिंशदक्षरात्रिष्टुप्त्रैष्टुभंमाध्यंदिनꣳसवनंतदस्यरुद्राअन्वायत्ताःप्राणावावरुद्राएतेहीदꣳसर्वꣳरोदयंति॥३॥ तंचेदेतस्मिन्वयसिकिंचिदुपतपेत्सब्रूयात्प्राणारुद्राइदंमेमाध्यंदिनꣳसवनंतृतीयंसवनमनुसंतनुतेतिमाहंप्राणानांरुद्राणांमध्येयज्ञोविलोप्सीयेत्युद्धैवततएत्यगदोहभवति ॥४॥ अथयान्यष्टाचत्वारिंशद्वर्षाणितत्तृतीयसवनमष्टाचत्वारिंशदक्षराजगतीजागतंतृतीयसवनंतदस्यादित्याअन्वायत्ताःप्राणावावआदित्याएतेहीदꣳसर्वमाददते ॥ ५ ॥ तंचेदेतस्मिन्वयसिकिंचिदुपतपेत्सब्रूयात्प्राणाआदित्याइदंमेतृतीयसवनमायुरनुसंतनुतेतिमाहंप्राणानामादित्यानांमध्येयज्ञोविलोप्सीयेत्युद्धैवततएत्यगदोहैवभवति ॥ ६ ॥ एतद्धस्मवैतद्विद्वानाहमहिदासऐतरेयःसकिंमएतदुपतपसियोहमनेनप्रेष्यामीतिसहषोडशंवर्षशतमजीवत्सहषोडशंवर्षशतंजीवतियएवंवेद ॥ ॥ **षोडशःखंडः** ॥ १६ ॥

नीयानिकानिसंतिपुरुषयज्ञइतिजिज्ञासायामाह ॥ **सयदशिशिषतीत्यादिना** ॥ अप्रतिपत्तिविप्रतिपत्तिनिरासायखंडंप्रमाणेनेवव्याचक्षाणस्तावदादिवाक्यंव्याचष्टे॥**स्वरूपभूतेत्यादिना**॥ अस्येत्यस्यार्थःपुरुषस्वरूपभूतयज्ञस्येति।दीक्षापूर्वभावित्वसाम्यात्। अथयदश्नातीत्यादिव्याचष्टे ॥ **भोजनेत्यादिना** ॥ उपसदोयज्ञांगयजमानव्यापारविशेषाः । दीक्षानंतर्यसाम्यात् । अथयद्धसतीत्यादिव्याचष्टे॥ **व्यवायेत्यादिना**॥ तुशब्दस्तेषांविहितत्वरूपविशेषवाची । स्तुतशस्त्रात्मकाःसामगानमंत्रात्मकाः । शब्दवत्त्वसाम्यात् । अथयत्तपइत्यादिव्याचष्टे ॥ **तपइत्यादिना** ॥ अस्यपुरुषयज्ञस्य । दक्षिणाधर्मपोषकत्वसाम्यात् । तस्मादाहुरितिवाक्यंव्याचष्टे ॥ **सोष्यतीत्यादिना** ॥ तस्मादित्यस्यार्थस्ततइति । पुरुषस्ययज्ञरूपत्वादित्यर्थः । पुनरुत्पादनमित्यस्यार्थःपुत्रजन्मनीति । तथाचयथायज्ञेदेवदत्तः पूर्वंसोमंसोष्यति । अनंतरंसोममसोष्टेतिशब्दःप्रयुज्यतेतथाऽत्रापियजमानस्यपुत्रजन्मनिपुनरुत्पादनरूपेआसन्नेयजमानभार्यापुत्रंसोष्यति। सतिचतस्मिन्नसोष्टेत्याहुरितिसोष्यत्यसोष्टेतिशब्दवत्त्वमुभयत्रसममित्यर्थः। ननुपुत्रजन्मपुरुषस्यकथंपुनरुत्पादनमित्याशंकायांतदुपपादयति ॥ **हीत्यादिना** ॥ पुनरुत्पत्तिनिरूपणस्यप्रथमोत्पत्तिज्ञानाधीनत्वात्तामाह ॥ **प्रथमेति** ॥ पितुर्यजमानस्योत्पत्तिःप्रथमाप्रसवःपुत्रस्यपुत्रजन्मेतियावत् । सातस्यपुनरुत्पत्तिःपुत्रदेहस्यतद्देहांशत्वात् । आत्मावैपुत्रनामासीतिश्रुतेरितिहिशब्दार्थः । अन्येतु प्रसवोमातुरितिशेषः । तर्हिप्रथमोत्पत्तिःकेतिजिज्ञासायामाह

---

भा० । स्वरूपभूतयज्ञस्यक्षुत्पिपासाऽरतिस्तथा । दीक्षाभोजनपानेचरतिश्चोपसदःस्मृताः । व्यवायहासभक्षास्तुस्तुतशस्त्रात्मकाःस्मृताः । तपोदानार्जवाहिंसाःसत्यमप्यस्यदक्षिणा । सोष्यत्यसोष्टेतिततोयज्ञवत्पुत्रजन्मनि । आहुर्हिपुनरुत्पत्तिःप्रसवःप्रथमापितुः ।

॥ **प्रथमेति** ॥ उत्पत्तिरित्यनुवर्ततइत्याहुः । तन्मरणमेवावभृथइत्येतद्व्याचष्टे ॥ **यज्ञस्नानमिति** ॥ समाप्तिसाम्यात् । सोंत
वेलायामित्येतदप्रतीतेरेकार्थत्वप्रतीतेश्चव्याचष्टे ॥ **तदेति** ॥ अंतवेलायामित्यस्यार्थःतदामरणकालइति । प्रतिपद्येतेत्यस्यार्थो
ध्यायेदिति । सइत्यस्यार्थःपुमानिति । यज्ञरूपइत्यर्थः । एतदनंतरंश्रुतावेवमुपासनयाऽपरोक्षज्ञानंतेनचभगवत्प्राप्तिर्भवतीतिव
क्तव्यं । अत्रचार्थद्वयेऋचौप्रमाणत्वेनप्रस्ताव्योदाहरतिश्रुतिः ॥ **तत्रैतइत्यादिना** ॥ तदृग्द्वयंसूर्यपरताप्रतीतिनिरासायक्रमे
णानूद्यव्याकुर्वन्प्रथमांतावद्व्याचष्टे ॥ **आदिदित्यादिना** ॥ इदित्यस्यार्थएवेति । पश्यंति उक्तोपासनया । दिवेतितृतीयापं
चम्यर्थेतिभावेनदिवइत्युक्तं । परइत्यस्यार्थःपरतइति । तदेवविशदयति ॥ **वैकुंठइति** ॥ इध्यतइतिसामान्यतोवर्तमानऋ
ध्युक्तेर्ऋद्धिरल्पाकादाचित्कीचेतिप्रतीतिंवारयन्नाह ॥ **ऋद्धतममेवेति** ॥ यद्यपिऋद्धतममेवसर्वदातथापिलोकदृष्ट्याइध्यतइ
त्युच्यतइतिभावः । वैकुंठस्यदिवःपरत्वंप्रागुक्तंस्मारयति ॥ **अथयदतइति** ॥ नन्वत्रेध्यतइत्युच्यमानमादित्यमंडलमेवकिंनस्या
दित्यतआह ॥ **नचेति** ॥ तस्यांतरिक्षगतत्वादितिभावः । उद्वयमितिद्वितीयांऋचमन्वयंदर्शयन्व्याचष्टे ॥ **उत्तरमिति** ॥
ज्योतिःपश्यंतः उक्तोपासनयेतिशेषः । स्वरानंदरूपंज्योतिरितिवर्तते । ज्योतिःपश्यंतःस्वःपश्यंतःइत्युक्त्याज्योतिःस्वःपदार्थयो

भा० । यज्ञस्नानंतुमरणंतदाध्यायेत्त्रयंपुमान् । भगवन्नक्षयोसित्वमच्युतोऽसिगुणैस्सदा । प्राणाच्चसुखितोनित्यमाधिक्येनेतिचिंतयेदितिसत्तत्वे । आदित्तस्मादेवतत्प्रसा
दादेव । प्रत्नस्यपुरातनस्यानादेर्भगवतोरेतसोरतिरूपस्यज्योतिःपश्यंति । वासेनरमयतीतिवासरं । दिवःपरतोवैकुंठेयदिध्यते । ऋद्धतममेवसर्वदा । अथयदतःपरइत्युक्त
त्वाच्च । नचादित्यमंडलंदिवःपरतः । उत्तरंज्योतिःपश्यंतःस्वरानंदरूपंपरिपश्यंतोवयंतमसउदगन्म ।



भेदप्रसक्तावाह ॥ **उत्तरमिति** ॥ नन्वेवंज्योतिरेवचेत्स्वस्तर्हिज्योतिःपश्यंतःस्वःपश्यंतःइतिदृशिद्विरुक्तिर्व्यर्थास्यादित्यतआह
॥ **द्विरुक्तिरिति** ॥ पूर्वंउउद्वयंतमसस्परीतिवाक्यंउदित्येतत्अगन्मेत्यनेनान्वितं । तथाचतमसउदगन्मोद्गताःस्मइत्यर्थइति
व्याख्यातं । इदानींप्रकारांतरेणव्याचष्टे ॥ **उदाख्यमिति** ॥ तमसोदुर्गायाःउत्तममितिसंबंधः । अथवातमसोनिर्गत्येतिशेषः ।
ननुभवेदिदंव्याख्यानं । यदिभगवतउदाख्यत्वंप्रामाणिकंस्यात्तदेवकुतइत्यतस्तत्रप्रमाणमाह ॥ **तस्येति** ॥ देवंदेवत्रेत्येतत्अप्रती
तेरन्वयप्रदर्शनपूर्वकंवाक्यार्थतात्पर्यार्थदर्शनेनव्याचष्टे ॥ **देवत्रादेवमिति** ॥ नन्वादित्यपरमेवेदंवाक्यं नभगवत्परं सूर्यमितित
च्छ्रुतेः । देवंदेवत्रेत्यस्यस्वावरोत्तमत्वेनसूर्येपिसावकाशत्वात् । दिवःपरत्वलिंगादपिश्रुतेर्बलवत्त्वादितिचेन्न । दिवःपरत्वलिंगस्य
निरवकाशतयाबाधायोगात् । श्रुतेश्चभगवत्यपिसावकाशत्वादित्याशयेनसूर्यशब्दंभगवतिनिर्वक्ति ॥ **सूरिभिरिति** ॥ प्रमाण
विरोधाच्चनादित्यपराविमौमंत्रावित्याशयेनैतद्व्याख्यानरूपंप्रमाणमुदाहरति ॥ **रतिरूपमिति** ॥ रेतसइत्यस्यतात्पर्यंरतिरूपमि
ति । हृदिपश्यंति । एधवृद्धौइंधीदीप्तावितिधातुद्वयस्यापिरूपमिध्यतइत्येतदित्याशयेनोक्तंयत्पूर्णंसर्वदाभातीति । उत्तरमुत्तरमु

भाष्यं । उत्तरंज्योतिःपश्यंतस्तदेवोत्तरंस्वश्चपश्यंतः । द्विरुक्तिस्तात्पर्यार्था । उदाख्यंज्योतिरुत्तमंतमसःसकाशादगन्मप्राप्ताःस्मेत्यर्थः । तस्योदितिनामेतिश्रुतेः ।
देवत्रादेवंदेवविषयेपिदेवंदेवानांदेवमित्यर्थः । सूरिभिःप्राप्यत्वात्सूर्यं । रतिरूपंपरंज्योतिरनादेःकेशवस्ययत् । तत्प्रसादेनपश्यंतिहृद्दिवासाद्रतिप्रदं । यत्पूर्णंसर्वदाभाति
वैकुंठेपरतोदिवः । तदुदाख्यंप्रपश्यंतोनिर्गत्यतमसोवयं । ज्योतिरानंदसद्रूपमुत्तमोत्तमसूत्तमं । देवानांदैवतंसाक्षात्सूरिप्राप्यंपरंपदं । प्राप्तास्मवासुदेवाख्यमितिमं
त्रदृगब्रवीदितिनारायणीये ॥ **खं० १७** ॥

त्तममितिपदत्रयार्थःउत्तमोत्तमसूत्तममिति ॥ खं० १७ ॥ ततश्चायंखंडार्थः ॥ सोधिकारीअशिशिषति अत्तुमिच्छतीतियत्। पिपासति पातुमिच्छतीतियत् । यच्चेष्टाप्राप्तिनिमित्तंनरमतइतिताःक्षुत्पिपासारतयोस्यस्वरूपभूतयज्ञस्यदीक्षाः पूर्वभावित्वसाम्यात्। दुःखसाम्यादित्यप्याहुः ॥ १ ॥ अथेतिसाम्यांतरकथनप्रारंभार्थ। एवमग्रेपि। सःअश्नातीतियत् पिबतीतियत् इष्टलाभेनरमतइतियत् तत्भोजनादिकमुपसदैर्यज्ञांगयजमानव्यापारविशेषैः। समानतामेति । दीक्षानंतर्यसाम्यात् ॥२॥ अथसःहसतीतियत् जक्षतिभक्षयतीतियत् यच्चमैथुनंचरतीति तत्हासादिकं स्तुतैःसामगानैः शस्त्रैःशंसनमंत्रैश्चसमानतामेति । शब्दवत्त्वसाम्यात् ॥ ३ ॥ अथयत्तपःकायक्लेशात्मकं शास्त्रविचाररूपंवा दानंसत्पात्रेन्यायार्जितवित्तादेः आर्जवंधर्ममार्गेमनोवाक्कायकर्मणामेकप्रकारत्वं अहिंसाव्यर्थहिंसाभावः सत्यवचनं ताअस्यपुरुषयज्ञस्यदक्षिणाः धर्मपोषकत्वसाम्यात् ॥ ४ ॥ तस्मात्पुरुषस्ययज्ञरूपत्वादेवा स्यपुरुषस्यपुनरुत्पादनंपुत्रजन्मरूपंयदाआसन्नंतदाअस्यभार्यापुत्रंसोष्यति यदाचैतद्भवतितदाऽसोष्टेत्याहुः। प्रसिद्धयज्ञेयथादेवदत्तःसोमंसोष्यतिइतिपूर्वं मनंतरंचसोममसोष्टेतिशब्दःप्रयुज्यते । तथात्रापिसोष्यत्यसोष्टेतिशब्दसंबंधोस्तीतिभावः । पुरुषस्यस्वपितुःसकाशाज्जन्मप्रथमं स्वस्मात्पुत्रजन्मपुनरुत्पादनरूपं पुत्रदेहस्यापिस्वदेहांशत्वादि

---

उप० सयदशिशिषतियत्पिपासतियन्नरमतेताअस्यदीक्षाः ॥ १ ॥ अथयदश्नातियत्पिबतियद्रमतेतदुपसदैरेति ॥ २ ॥ अथयद्धसतियज्जक्षतियन्मैथुनंचरतिस्तुतशस्त्रैरेवतदेति ॥ ३ ॥ अथयत्तपोदानमार्जवमहिंसासत्यवचनमितिताअस्यदक्षिणाः ॥ ४ ॥ ददात्यात्मदक्षिणंवाएतद्यत्सत्रमितितस्मादाहुःसोष्यत्यसोष्टेतिपुनरुत्पादनमेवास्यतन्मरणमेवावभृथः ॥ ५ ॥

तिद्रष्टव्यं । तन्मरणं पुरुषमरणं अस्यपुरुषयज्ञस्यावभृथो यज्ञस्नानं समाप्तिसाम्यात्॥५॥अत्रतात्पर्यद्योतनायस्तुतिरूपमर्थवाद माह ॥ तद्धैतदित्यादिना ॥ घोरोनामतः आंगिरसःगोत्रतः । तत्पूर्वखंडोक्तं एतत्एतत्खंडोक्तं पुरुषयज्ञप्रकारं कृष्णायदेव कीपुत्राय भगवदवतारादन्यस्मैकस्मैचिद्दषये उक्त्वावक्ष्यमाणंभगवदुपासाप्रकारंचोवाच । सोपिपासएवान्यविद्याभ्योबभूव । अस्यामेवविद्यायांनिष्ठावान्जातइतियावत् । अन्येतुपिपासएवेतिपाठमभिप्रेत्यसोपिपिपासादिदीक्षादिमांश्चबभूवेत्याहुः । घोर आंगिरसःकृष्णायकिमुवाचेतिजिज्ञासायांतदाह ॥ सइत्यादिना ॥ सःएवंयथोक्तयज्ञवित् अंतवेलायांअवभृथरूपमरणकाले एतत्त्रयंवक्ष्यमाणभगवद्धर्मत्रयंप्रतिपद्येतध्यायेत् । हेभगवन्त्वं अक्षितमक्षयोसि अच्युतंगुणैरच्युतोसि प्राणशंसितंप्राणादाधि क्येनसुखितोसि इतिप्रतिपद्येतेत्यन्वयः । एतादृशयज्ञध्यानेनापरोक्षज्ञानं तेनभगवत्प्राप्तिरूपंफलंच प्रतिपद्यतइतिवक्तव्यं । अ स्मिन्नर्थद्वयेऋचौप्रस्ताव्योदाहरति ॥ तत्रेति ॥ तत्रोक्तेर्थद्वये एतेवक्ष्यमाणेद्वेऋचौ भवतः ॥ ६ ॥ प्रत्नस्यपुरातनस्यानादेरे तसःरतिरूपस्यभगवतःवासेनरमयतीतिवासरंयत्दिवादिवः परःपरेवैकुंठेइध्यतेपूर्णमेवसदाभाति । तज्ज्योतिःआत्इत्अस्मा देवउक्तोपासनासाध्यभगवत्प्रसादादेवेतियावत् । सूरयःपश्यंति । स्वरानंदरूपंज्योतिःपरिपश्यंतोवयं । पुनःपश्यंतइत्युक्तिरा दरार्था । तमसोऽज्ञानाद्यनर्थादुदगन्मउद्गतास्मः । नकेवलमेतावत् किंतुदेवत्रादेवं देवविषयेपिदेवं देवानांदेवमित्यर्थः । सूरि

उप० । तद्धैतद्घोरआंगिरआंगिरसःकृष्णायदेवकीपुत्रायोक्त्वोवाचापिपासएवबभूवसोंतवेलायामेतत्त्रयंप्रतिपद्येताक्षितमस्यच्युतमसिप्राणसंशितमसीतितत्रैतेद्वेऋचौभ

छां०वे०३ ४ वतः ॥ ६ ॥ आदित्प्रत्नस्यरेतसउद्वयंतमसस्परिज्योतिष्पश्यंतउत्तरं स्वःपश्यंतउत्तरंदेवंदेवत्रासूर्यमगन्मज्योतिरुत्तममितिज्योतिरुत्तममिति ॥७॥ सप्तदशःखंडः ॥१७॥

भिःप्राप्यत्वात्सूर्यं तन्नामकमुत्तरमुत्तरमुत्तमं । उत्तमोत्तमसूत्तमं ज्योतिर्वासुदेवाख्यं अगन्मप्राप्तास्मः । उत्उदाख्यं । ज्योतिरितिसंबंधः । तमसोनिर्गत्येतिशेषः । तथाचात्रनक्रियावृत्तिर्नवावाक्यभेदइतिद्रष्टव्यं । इतिशब्दस्यभवतइत्यनेनसंबंधः । द्विरुक्तिरुक्तावधारणार्था ॥ ७ ॥ **सप्तदशःखंडः** ॥ १७ ॥ लब्धायुषःपुरुषस्यतत्सार्थक्यार्थमध्यात्ममधिदैवतंचभगवदुपास्तिंतत्फलंचाह ॥ **मनोब्रह्मेत्यादिना** ॥ अत्रांतःकरणादिकमब्रह्मैवब्रह्मतयोपास्यमुच्यतइतिपरव्याख्यानमप्रामाणिकंप्रमाणविरुद्धंचेत्याशयेनाकाशोब्रह्मेत्युभयमादिष्टंभवत्यध्यात्मंचाधिदैवतंचेतिवाक्यमप्रतीतेःप्रमाणेनैवव्याचष्टे ॥ **मनःसंस्थइत्यादिना** ॥ तुशब्दोविशेषार्थः । तमेवाह ॥ **साक्षादिति** ॥ साक्षादनन्याधीनत्वेनमनःसंस्थोनरुद्रादिरिवेति । मनोनामकइत्यपिग्राह्यं । सएवेत्युक्त्यास्थानभेदेनभेदशंकापरिहृतेतिज्ञातव्यं । तथाचाध्यात्मंमनोनामकस्यभगवतोधिदैवमाकाशेमनआकाशनामकंरूपद्वयमस्तीत्युक्तंभवति । ब्रह्मणःमनआकाशनामकत्वंकेननिमित्तेनेतिजिज्ञासायामाह ॥ **मननादित्यादिना** ॥ आइत्यनुवादेनसमंतादितिव्याख्यानं । तदेतच्चतुष्पादित्यादिकंअध्यात्मंजडवागादिपर मधिदैवंचाग्न्यादिदेवतामात्रपरमितिप्रतीतिनिरासायव्याचष्टे ॥ **वासुदेवादीति** ॥ तन्नामातत्तन्नामा । वागेवब्रह्मणश्चतुर्थःपादः । सोग्निनाप्राणएवब्रह्मणश्चतुर्थःपादः । सवायुनेत्यादिवाक्यचतुष्टयतात्पर्यमाह ॥ **वागादिस्थइत्यादिना** ॥ अत्रापिसएवेत्यनेनस्थानभेदनिमित्तभेदशंकापरिहारः ।

भा० । मनःसंस्थस्तुयोदेवःसाक्षान्नारायणःप्रभुः । मननान्मनआकाशआसमंतात्प्रकाशनात् । वासुदेवादिभेदेनसवागादिषुसंस्थितः । अग्न्यादिषुचतन्नामावागादिस्थःसएवतु । अग्न्यादिस्थैःसहैवेशोभाति



तुशब्दःस्वस्यस्वसाहित्योपपादकविशेषार्थः । तमेवाह । ईशोघटितघटकशक्तिमानिति । सहेत्यनेनाग्निनेत्यादितृतीयासहार्थइत्युक्तंभवति । तपतीत्यस्यकर्मानुक्तेस्तदाह ॥ **दुष्टानिति** ॥ अथशब्दःसमुच्चयार्थः । भातिचतपतिचेत्यादिफलप्रतिपादकवाक्यचतुष्टयंव्याचष्टे ॥ **एवमित्यादिना** ॥ कीर्तिशब्दापुनरुक्ततयायशःशब्दमनुवदंस्तदर्थमाह ॥ **ज्ञानेति** ॥ ब्रह्मवर्चसेनेत्यस्यार्थोब्रह्मसंप्राप्त्येत्यादि । वरित्यस्यवरणेनेत्यर्थमभिप्रेत्याह ॥ **संप्राप्येति** ॥ तस्यैवभावप्रधानत्वमभिप्रेत्यार्थांतरमाह ॥ **वरतामिति** ॥ नन्विदंप्रतिदिनमपिसुषुप्तावस्त्यतोनविद्याफलमित्यतश्चसुइत्यस्यतात्पर्यमाह ॥ **मुक्तिगामिति** ॥ आविर्भूतामित्यर्थः । तथाचब्रह्मणोविष्णोर्वरणेनप्राप्त्याचायितं संपादितमाविर्भूतंवरत्वंब्रह्मवर्चसमित्युक्तंभवति । तथोक्तमैतरेयभाष्ये । परब्रह्मणोविष्णोर्वरणादेवसम्यक्चायितंस्वरूपमिति । तपतिचेतिसंबंधः ॥ खं० १८ ॥ **ततश्चायंखंडार्थः** ॥ मननान्मनोनामासाक्षान्मनःसंस्थोनारायणोब्रह्मेत्युपासीतेत्यध्यात्मं देहमधिकृत्यवर्तमानब्रह्मविषयकमुपासनंनिरूपितं । अथाधिदैवतंदेवतामधिकृत्यवर्तमानब्रह्मविषयमुपासनमुच्यतइत्यर्थः । आसमंतात्प्रकाशनादाकाशनामा । तन्नामकदेवसंस्थोनारायणोब्रह्मेत्युपासीत । पूर्वोपासनापेक्षयेयमुपासनातिशयितेत्याशयेनाह ॥ **आकाशइति** ॥ योसौमनःसंस्थोनारायणःसएवआकाशस्थोमनआकाशनामकः।अतआकाशेमनआकाशनामकोभयरूपसद्भावादाकाशोब्रह्मेत्यनेनाध्यात्ममधिदैवतंचेत्युभयंरूपमादिष्टमुपदिष्टंभवति ॥ १ ॥

भा० । दुष्टांस्तपत्यथ । एवंविद्वांस्तमीशेशंयशोज्ञानसुखात्मतां । कीर्तिंचब्रह्मसंप्राप्त्यावरतांमुक्तिगामपि । प्राप्यभातितपत्यद्धास्वाज्ञानादिकमेवचेतिच ॥ खं० १८ ॥
उप० । मनोब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशोब्रह्मेत्युभयमादिष्टंभवत्यध्यात्मंचाधिदेवतंच ॥ १ ॥

तत्अध्यात्म मेतत्अधिदैवं यद्ब्रह्म तच्चतुष्पात् चत्वारःपादायस्येतिचतुष्पात्।वासुदेवादिरूपचतुष्टयोपेतमित्यर्थः। अध्यात्मंतावत्पादचतुष्टयमाह ॥ **वाक्पादइत्यादिना** ॥वचनाद्वाङ्नामावाक्संस्थोमनोगतनारायणस्यपादोवासुदेवनामांशः प्राणःप्रकृष्टनेतृत्वात्प्राणनामाप्राणसंस्थस्तस्यैवपादोंशःसंकर्षणाख्यः चष्टइतिचक्षुर्नामातत्संस्थःपादोंशःप्रद्युम्नाख्यः शृणोतीतिश्रोत्रनामातत्संस्थःपादोंशोऽनिरुद्धाख्यः इत्याध्यात्मंमनःसंस्थभगवदंशाश्चत्वरोनिरूपिताः। अथाधिदैवतं आकाशादिगतभगवदंशानिरूप्यंतइत्यर्थः । अग्निरंगनेतृत्वादग्निनामातत्संस्थोवासुदेवःपादएकोंशः । आयुर्ज्ञानस्वरूपत्वाद्वायुनामातत्संस्थःसंकर्षणोपरःपादः । आदानादादित्यनामातत्संस्थःप्रद्युम्नोन्यःपादः । धर्मज्ञानातिदेशनाद्दिङ्नामानिरुद्धश्चतुर्थःपादः । अत्रापिपूर्वपादचतुष्टयज्ञानापेक्षयैतत्पादचतुष्टयज्ञानमतिशयितं । अग्न्यादौवागादिसंस्थानामपिक्रमेणसद्भावादित्याशयेनाह॥ **इतीति** ॥ **अग्निःपादइत्या**दिनाध्यात्मंवागादिसंस्थंपादचतुष्टयं अधिदैवतमग्न्यादिसंस्थंचपादचतुष्टयमित्युभयमादिष्टमुपदिष्टंभवति ॥ २॥ तदेवविशदयति ॥ **वागेवेति** ॥ वाङ्नामायोयंब्रह्मणःचतुर्थःपादोवासुदेवः सएवाग्निसंस्थोऽग्निनातन्नामकेनज्योतिषाज्योतिर्मयेनवासुदेवेनसह भातितपतिचदुष्टान् । एवंवेत्तुःफलमाह ॥ **भातीत्यादिना**॥ योधिकारीएवमुक्तरीत्यावेदोपास्तेसःकीर्त्यायशसाज्ञानसुखात्मकेनब्रह्मवर्चसेनब्रह्मणोविष्णोर्वरणेनसंप्राप्तिरूपेणचायितंआविर्भूतंवरत्वंमुक्तिगंयत्तेनचभातितपतिचाज्ञानादिकं ॥ ३ ॥

---

उप० । तदेतच्चतुष्पाद्ब्रह्म वाक्पादःप्राणःपादश्चक्षुःपादःश्रोत्रंपादइत्यध्यात्ममथाधिदैवतमग्निःपादोवायुःपादआदित्यःपादोदिशःपादइत्युभयमेवादिष्टंभवत्यध्यात्मंचाधिदैवतंच ॥ २ ॥ वागेवब्रह्मणश्चतुर्थःपादःसोग्निनाज्योतिषाभातिचतपतिचभातिचतपतिचकीर्त्यायशसाब्रह्मवर्चसेनयएवंवेद ॥ ३ ॥

एवंयःप्राणचक्षुःश्रोत्रसंस्थस्तन्नामासंकर्षणादिःसएववाय्वादिस्थःसन्वाय्वादिनामकेनसंकर्षणाद्याख्येनज्योतिषासहभातीत्यादि योज्यं । शिष्टंसमानं ॥ ४-६ ॥ अष्टादशःखंडः ॥ १८ ॥ यत्प्राप्त्यापुरुषस्यज्ञानद्वारामोक्षोभवतितेषांवेदानांप्राप्तिसंपादि कामादित्यनिष्ठांकांचनभगवदुपास्तिमाह ॥ आदित्यइत्यादिना ॥ असदेवेदमग्रआसीदितिवाक्यंप्रलयेशून्यावस्थानप्रतीतिं व्याहतिंचपरिहर्तुंप्रमाणेनैवव्याचष्टे ॥ अगम्यत्वादिति ॥ सदित्यनुवादेनविदांविदुषांगम्यमितिव्याख्यानं । सदेर्गत्यर्थत्वात् । तत्समभवदित्येतदप्रतीतेरपेक्षितंपूरयन्व्याचष्टे ॥ तत्प्रकृत्येति ॥ तद्वासुदेवाख्यंब्रह्मप्रकृत्यामाययासमभवत्संभोगमकरोत् । तदांडंनिरवर्ततेत्येतद्व्याचष्टे ॥ ततइति ॥ ततःसंभोगानंतरंतत्वसृष्ट्यादिद्वाराअंडमजायतेत्यर्थः । अथयत्तदजायतसोसावादि त्यइतिवाक्यंप्रसिद्धादित्यपरमितिप्रतीतिनिरासायव्याचष्टे ॥ तस्मिन्निति ॥ तस्मिन्नंडे । ननुभगवतआदित्यनामकत्वेमंड लांतर्गतसूर्येकथंतच्छब्दप्रयोगइत्यतउक्तं । मंडलेविद्यमानस्यसूर्यस्यनियंतैवेति । तथाचतदधीनत्वादितिन्यायेनतत्रतच्छब्दप्रयोग

---

उप० । प्राणएवब्रह्मणश्चतुर्थःपादःसवायुनाज्योतिषाभातिचतपतिचभातिचतपतिचकीर्त्यायशसाब्रह्मवर्चसेनयएवंवेद ॥ ४ ॥ चक्षुरेवब्रह्मणश्चतुर्थःपादःसआदित्येनज्योतिषा भातिचतपतिचभातिचतपतिचकीर्त्यायशसाब्रह्मवर्चसेनयएवंवेद ॥ ५ ॥ श्रोत्रमेवब्रह्मणश्चतुर्थःपादःसदिग्भिर्ज्योतिषाभातिचतपतिचभातिचतपतिचकीर्त्यायशसाब्रह्मवर्चसेनय एवंवेद ॥ ६ ॥ **अष्टादशःखंडः** ॥ १८ ॥

भा० । अगम्यत्वादसन्नामब्रह्मनारायणाभिधं । प्रलयेवासुदेवाख्यंगम्यंसदभवद्विदां । तत्प्रकृत्यासमभवत्ततआंडमजायत । तस्मिन्नादित्यनामासावभवत्सूर्यमंडले । नियंतैवचसूर्यस्य

इत्युक्तंभवति ।चोहेतौ । भगवानेवेत्येवशब्दसंबंधः । पुरुषोत्तमइत्युत्तरवाक्यतात्पर्यकथनं । तथाचयतःपुरुषोत्तमोब्रह्मादिसर्वदेवो पस्थाप्यत्वेनोत्तरवाक्येकथितोतोभगवानेवादित्यनामा नप्रसिद्धइतियोजना । असदेवेदमग्रआसीदित्यारभ्यसोसावादित्यइत्यं तंवाक्यंआदित्योब्रह्मेतिप्रथमवाक्यार्थेहेतुप्रतिपादकमित्याशयेनहेतुहेतुमद्भावंदर्शयन्नादित्योब्रह्मेत्यादिसाध्यांशंव्याचष्टे॥ तस्मा दिति ॥ एवमुत्पन्नांडगर्भरूपत्वात् । यदेनंसाधवोघोषाआगच्छेयुरित्यादिफलवाक्यतात्पर्यमाह ॥ **सर्वेति** ॥ उलूलवइत्येतद प्रतीतेरनूद्यव्याचष्टे ॥ उलूलवइति ॥ एवंपदार्थमुक्त्वोलूलवोघोषाइतिवाक्यार्थमाह ॥ **अतिमहांतइति** ॥ घोषावेदाइत्य र्थः । तेषामतिमहत्त्वमानंत्यंव्याप्तत्वंवा । अनंतावैवेदाः यावद्ब्रह्मविष्ठितंतावतीवागितिश्रुतेः । उपचनिम्रेडेरन्नित्येतदनूद्यापे क्षितंपूरयन्व्याचष्टे ॥ उपचेति ॥ एवंस्ववचनेनोक्तार्थदार्ढ्यायतंजायमानमित्यादिवाक्यव्याख्यानरूपंप्रमाणमुदाहरति ॥ **सूर्येति** ॥ वेदैरित्यादिनाघोषाइत्यादिप्रथमातृतीयार्थेव्याख्यातेतिज्ञातव्यं । सर्वाणिभूतानीत्यस्यार्थोब्रह्माद्याइति । उदतिष्ठ न्नित्यस्यार्थउपस्थिताइति । उलूलवोऽनूत्तिष्ठंतीत्यस्यार्थःउपतिष्ठंतीत्यादि । तस्मादित्यस्यार्थोंतइति । तथाचयस्माद्ब्रह्माद्याउप स्थिताअतोद्यतनाअप्युपतिष्ठंतीतियोजनाप्रतिप्रत्त्यायनमित्यनयोरर्थोनित्यमंजसेति । सयएतदेवमितिफलवाक्यमैहिकमात्रपरमि

भा० । भगवान्पुरुषोत्तमः । तस्मादादित्यनामानमादित्यस्थंजनार्दनं । ब्रह्मोपासीतपरमंसर्ववेदज्ञतातततइतिब्रह्मतत्वे । उलूलवउरूरवः । अतिमहांतोगायत्र्यादिघोषाः उपचनिम्रेडेरन्मुक्तेतस्मिन्नेववसेयुः । सूर्यबिंबस्थितेविष्णौजायमानेपरात्मनि । गायत्रीपूर्वकैर्वेदैर्ब्रह्माद्यास्समुपस्थिताः । उपतिष्ठंत्यतोनित्यंगायत्र्यादिभिरंजसा ।



तिप्रतीतिवारणायव्याचष्टे ॥ **तद्विद्वानिति** ॥ मुक्तोभवेत् । वेदानामावासोपिभवेदित्यर्थः । तथाचश्रुत्युक्तमुपलक्षणमितिद्र ष्टव्यं ॥ खं० १८ ॥ततश्चायंखंडार्थः॥ आदित्यआदित्यस्थःआदानादादित्यनामापरंब्रह्मेति । आदिश्यतेउपदिश्यतइत्यादेशः। आदित्यांर्गतमादित्यनामानंजनार्दनंपरंब्रह्मेत्युपासीतेतियावत् । नन्वादित्यांतर्गतस्यैवकुतउपास्तिःकर्तव्येतिजिज्ञासायांतस्यांडांत र्गतजराय्वादिरूपपर्वताद्यपेक्षयागर्भरूपत्वेनातिशयितत्वादितिवक्तुंतावदंडोत्पत्तिंनिरूपयितुमाह ॥ **तस्येत्यादिना** ॥ तस्यादि त्यांतर्गतस्यभगवतःउपास्यत्वोपपत्त्यर्थंव्याख्यानं । सृष्टेरितिशेषः। सृष्टिनिरूपणंक्रियतइतियावत् । कारणस्यपूर्वभावंदर्शयितुमा ह ॥**असदेवेति**॥ इदमस्यजगतोग्रेपूर्वंप्रलयेअसत्सद्यतेगम्यतइतिसत्।नसत्असत्अगम्यंब्रह्मेवासीदित्यर्थः । तत्अगम्यंब्रह्म स त् विद्वद्गम्यंवासुदेवाख्यमासीत् । तस्माद्वासुदेवाख्यंरूपांतरमासीदित्यर्थः। एवंप्रकृतिरपिमायासीदितिवक्तव्यं ।तत्वासुदेवाख्यं रूपंसमभवत्माययासंभोगमकरोत् । तत्तस्मात्पुन्नामकब्रह्मादिमहत्तत्वादिचांडमंडपर्यंतंनिरवर्तताऽजायत । अंडमपिजातं । तत् अंडंसंवत्सरस्यकालस्यमात्रांपरिमाणंप्रमाणांतरेयावदुक्तंतावत्पर्यंतमित्यर्थः।अशयतअनिर्भिन्नस्वरूपमेवस्थितंबभूव ।तत्ततः प्रमाणसिद्धसंवत्सरकालपरिणामादूर्ध्वंनिरभिद्यताधोलोकाश्रयकपालद्वयवत्त्वविवक्षयानिर्भिण्णमिव । नतुनिर्भिण्णमेव । प्रमाणां

भा० । तद्विद्वान्मुक्तआवासोवेदानांसर्वदाभवेदितिच ॥ खं० १९ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेछांदोग्योपनिषद्भाष्येतृतीयोध्यायः ॥ ३ ॥

उप० । आदित्योब्रह्मेत्यादेशस्तस्योपव्याख्यानमसदेवेदमग्रआसीत्तत्सदासीत्तत्समभवत्तदांडंनिरवर्ततततत्संवत्सरस्यमात्रामशयतततन्निरभिद्यततेआंडकपालेरजतंचसुवर्णं चाभवतां ॥ १ ॥

तरविरोधात् । अंतर्लोकादिकल्पनाक्षमावकाशविशेषवज्जातमितिभावः । तेलोकाश्रयत्वेनविवक्षितेआंडकपालेअंडसंबंधिनीऊर्ध्वा
धोभागकपालेरजतंचसुवर्णंचाभवतामधोभागगंरजतमयमूर्ध्वभागगंचसुवर्णमयमित्यभवतामित्यर्थः ॥१॥ तद्यद्रजतंरजतमयमांड
कपालमधोभागगंसेयंपृथिवी पृथिवीलोकस्तत्रवर्ततइत्यर्थः । अत्रपृथिवीशब्देनातलादयोगृह्यंते । लोकत्रयविवक्षायांतेषामपि
भूत्वेनविवक्षितत्वादितिध्येयं । यत्सुवर्णंसुवर्णमयमांडकपालमूर्ध्वभागगंसाद्यौर्द्युलोकस्तत्संबद्धइत्यर्थः । अत्रापिद्युशब्देनमहरा
दीनांग्रहणं । अस्यांडस्यप्रसिद्धांडसाम्यमधिकारिणावश्यंज्ञातव्यमित्यभिप्रेत्यतत्साम्यमाह ॥ **यज्जरायुवित्यादिना** ॥ यत्
जरायुर्गर्भपरिवेष्टनंतेतत्स्थानीयाःपर्वताः । यदुल्बंकललं सःतत्स्थानीयः समेघोमेघैःसहितोनीहारः । याधमनयःशिरास्ताःतत्स्था
नीयाःनद्यः । यद्वास्तेयंतस्यवस्तौभवमुदकंसःतत्स्थानीयःसमुद्रः ॥२॥ अथयत्ततत्रांडेजायतगर्भरूपंसःतत्स्थानीयोसावादित्यना
मातत्संस्थोजनार्दनः । अत्रांतरिक्षलोकोप्युभयकपालगलोकमध्यस्थस्तत्रत्यादित्यादिनिरूपणेननिरूपितप्रायइत्यवधेयं । एवंचै
वमुत्पन्नांडगर्भरूपत्वादादित्यांतर्गतस्यभगवतउक्तमुपास्यत्वंयुक्तमित्युक्तंभवति । नन्वत्रादित्यशब्देनप्रसिद्धआदित्यएवकिंनस्या
त् । नस्यात् । अस्यगायत्र्यादिसर्ववेदवेद्यत्वात् । ब्रह्मादिदेवतोपास्यत्वाच्च । नहीदंप्रसिद्धादित्येसंभवतीत्याशयेनाह ॥ **तंजा
यमानमिति** ॥ तंजायमानंप्रकटीभवंतं सर्वाणिभूतानिब्रह्मादीनि उलूलवोतिमहांतोनंताव्याप्ताश्च घोषाःगायत्र्यादयोवेदाः । ॥१२८॥

उप० । तद्यद्रजतंसेयंपृथिवीयत्सुवर्णंसाद्यौर्यज्जरायुतेपर्वताःयदुल्बंसमेघोनीहारोयाधमनयस्तानद्योयद्वास्तेयमुदकꣳससमुद्रः ॥ २ ॥ अथयत्तदजायतसोसावादित्यस्तं
जायमानंघोषाउलूलवोनूदतिष्ठन्त्सर्वाणिभूतानिसर्वेचकामास्तस्मात्तस्योदयंप्रतिप्रत्त्यायनंप्रतिघोषाउलूलवोनूत्तिष्ठंतिसर्वाणिचभूतानिसर्वेचकामाः ॥ ३ ॥

प्रथमातृतीयार्थे । गायत्र्यादिभिर्वेदैः सर्वेचकामाःसर्वैर्मंगलद्रव्यैरितियावत् । अनूदतिष्ठन्नुपासामकुर्वन्यस्मात्तस्मादद्यतनानि सर्वाणिभूतानिसर्वेकामाःसर्वैर्मंगलद्रव्यैरुलूलवोघोषाःअतिमहद्भिःगायत्र्यादिभिर्वेदैस्तस्योदयंप्रति । अयनमस्तमयंचप्रतिप्रत्य नूत्तिष्ठंतिनित्यमंजसोपस्थानंकुर्वंति ॥ ३ ॥ एवंवेत्तुःफलमाह ॥ सयइत्यादिना ॥ सयःप्रसिद्धोधिकारी एतत् आदित्यांतर्गतं एवमुक्तरीत्या विद्वान्आदित्यंतत्संस्थंतन्नामकंब्रह्मेत्युपास्ते एनमधिकारिणं साधवोपौरुषेयाःघोषाःवेदाः आगच्छेयुरितियत् तदभ्याशःसमीपएव शीघ्रमेवसर्ववेदप्राप्तिर्भवतीत्यर्थः । प्राप्ताश्चवेदाःनविस्मृताभवंतीत्याह ॥ उपनिम्रेडेरंश्चेति ॥ सर्वदाउपवसेयुश्चेत्यर्थः । इदमुपलक्षणं । मुक्तोभवतीत्यपिद्रष्टव्यं । द्विरुक्तिरुक्तावधारणार्थेत्युक्तं ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्य श्रीमच्छंदोगोपनिषद्भाष्यस्यटीकायांवेदव्यासतीर्थपूज्यपादशिष्यवेदेशभिक्षुविरचितायां पदार्थकौमुद्यांतृतीयोध्यायः ॥ ३ ॥

---

उप० । सयएतदेवंविद्वानादित्यंब्रह्मेत्युपास्तेभ्याशोहयदेनंसाधवोघोषाआचगच्छेयुरुपचनिम्रेडेरन्निम्रेडेरन् ॥ ४ ॥ एकोनविंशःखंडः ॥ १९ ॥ इतिश्रीमच्छांदोग्योपनिषदितृतीयोध्यायः ॥ ३ ॥

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ अपरंब्रह्मवायुंचपरंब्रह्मसुखाधिकं । वासुदेवादिरूपं चवामनंचानिशंभजे ॥ १ ॥ पूर्वंमधुगायत्र्यादिविद्याःपरब्रह्मविषयानिरूपिताः । अत्रपुनःपरापरब्रह्मविद्यामेववक्तुमयमध्यायः प्रवर्तते । तत्रादौपरापरब्रह्मविषयांसंवर्गविद्यांवक्तुंआख्यायिकामाह ॥ जानश्रुतिरित्यादिनाखंडद्वयेन ॥ अत्रभद्रंसारा साराभिज्ञंअक्षंइंद्रियंयस्यासौभद्राक्षइतिकश्चित् । तदसत् । श्रुतहानाश्रुतकल्पनाप्रसंगात् । भल्लाक्षेत्यस्यैवायमर्थइत्यंगीकारे निंदाप्रकरणविरोधात् । भल्लाक्षेतिमंदद्दष्टित्वंसूचयन्नाहेतित्वद्भाष्यविरोधाच्चेतिभावेनतदनूद्यव्याचष्टे ॥ **भल्लाक्षेति** ॥ जान श्रुतेर्ज्योतिरतिक्रम्यगमनेतवप्राप्तंदाहंनजानासीतिभावेनमंदाक्षइतिसंबोधितइतिभावः । तथाचोक्तंगीतामाहात्म्ये । प्रकाशमा नंपुरतःतेजःपुंजंनपश्यथ जानश्रुतेर्महीभर्तुःपुण्यकीर्तेरितिस्फुटमिति । यथाकृतायेत्यादिक्रमेवंव्याचक्षते । द्यूतेप्रवृत्तानांयेदीर्घ दंतादिमयाअक्षास्तेषुचतसृषुदिक्षुचत्वारोंऽकाभवंति । एकांकोद्व्यंकस्त्र्यंकश्चतुरंकइति । तेचैकाधिकत्वसामान्यात्कलिद्वापरादि नामानः । तथाचद्यूतेकृतायचतुरंकायविजितायाधरेयास्त्रिद्व्येकांकास्त्रेतादिनामानःसंयंत्यंतर्भवतीतितदसत् । कृतशब्दस्यप्रसि द्धकृतयुगार्थत्वग्रहणेबाधकाभावेनद्यूताभिनिवेशेनैवंश्रुतिव्याख्यानायोगात् । परित्यज्यान्यानिनिदर्शनानिद्यूतद्दष्टांतग्रहणायो गाच्च । नचाक्षेषुशौंडराजानोऽतोक्षगतचतुरंकनिदर्शनेनैवजानश्रुतिबोधनायहंसोहंसंबोधितवानितिवाच्यं । जानश्रुतेःपरमधार्मि कत्वेनाक्षासक्तत्वाभावात् । हंसाश्चदेवावाऋषयोवाजानश्रुतिकृतान्नदानेनतुष्टाःसमागताःइतित्वयापिव्याख्यातत्वेनतेषामज्ञाना ॥१२९॥

भा० । भल्लाक्षमंदाक्ष

संभवाच्चेतिभावेनस्वयंतद्वाक्यंव्याचष्टे ॥ **यथेति** ॥ कृतेकृतयुगधर्मेप्राप्तफलेसति अनेनचतुर्थीसप्तम्यर्थेत्युक्तंभवति । अधरे यास्त्रेतादयइतिपदार्थमभिप्रेत्योक्तंत्रेतादिजयफलमिति ।तस्यैवजितकृतधर्मस्यैव।प्रधानजयेऽप्रधानजयस्यसिद्धत्वादितिभावः । एवमेनंसर्वंतदभिसमेतीतिदार्ष्टांतिकवाक्यंप्रजानांकिमपिसाधुकर्मनास्तीतिप्रतीतिंनिवारयन्व्याचष्टे ॥ **एवमिति** ॥ स्वाम्यधि करणन्यायादितिभावः । अंगारेहसयुग्वानमिवरैक्कमात्थेतीत्यत्रानन्वयशंकांवारयितुमंगारइत्येतद्व्याकुर्वन्नपेक्षितंपूरयति ॥ अरे इति ॥ अंगेत्यनुवादेनेष्टेतिव्याख्यानं । सयुग्वेत्यध्याहारः । तथाचकुतोसौज्ञातव्यइत्याकांक्षायांयतःसयुग्वानमिवरैक्कमात्थेति हंसेनोक्तमितिनतस्यासंगतिरितिभावः । अहंह्यरा३इतिप्लुतिरनादरइतिव्याख्यानमसत् । अनहंकारेणमुनिनावृथाविनयोपागत तदनादरकरणायोगात् । इतिभावेनतदभिप्रायमाह ॥ **अहंहीति** ॥ पामानंकषमाणमितिप्रकृतत्वादितिभावः ॥ **ततश्चायंखं** **डार्थः** ॥ जनश्रुतस्यपुत्रोजानश्रुतिः हेत्यैतिह्ये । पुत्रायणगोत्रापत्यंपौत्रायणः । श्रद्धयादेयंयस्यासौश्रद्धादेयो बहुप्रभूतंदातुं शीलमस्येतिबहुदायी बहुपाक्योअहन्यहनिअन्नार्थिभ्योबहुपक्तव्यवान् प्रतिष्ठानपुरेराजाऽऽस । अस्तिगोदावरीतीरेप्रतिष्ठानं पुरंमहत् । तत्रजानश्रुतिर्नाम्नामेदिनीवल्लभोऽभवत् । इतिवचनात् । सजानश्रुतिःसर्वतःसर्वासुदिक्षुग्रामेषुनगरेषुचाऽवसंत्येष्वि

भा० । यथाकृतेजितेत्रेतादिजयफलंचतस्यैवभवतिएवमन्येषांपुण्यफलंप्राधान्येनतस्यैवभवति । अरेअंगइष्ट सयुग्वारैक्कोज्ञातव्यः । अहंह्यरा ३ इतिप्लुतिःपामक षणभावेन ॥ खं० १ ॥

उप० । जानश्रुतिर्हपौत्रायणःश्रद्धादेयोबहुदायीबहुपाक्यआस । सहसर्वतआवसथान्मापयांचक्रेसर्वतएवमेऽत्स्यंतीति ॥ १ ॥

त्यावसथास्तान्मापयांचक्रेकारयामास । जनाःसर्वतएत्यमेममान्नंतेष्वावसथेषुवसंतोत्स्यंतिभोक्ष्यंतीतिबुद्ध्या ॥ १ ॥ तत्रवंसतित स्मिन्राज्ञिअत्युच्चसौधभवनमधिरुह्यस्थितेसत्यथहंसाःदेवहंसाःनिशायांअंतरिक्षमार्गेणातिपेतुःविनिर्गताः । ततोंतरिक्षमार्गेणयूथा नांपक्षसंहिताः। मृणालचंचवोदेविदेवहंसाविनिर्गताइनिवचनात् । अत्राह । त्वरयागच्छतांतेषामन्योन्यंमर्मभाषिणां । भल्लाक्षप्र मुखाःद्वित्राःपुरस्तान्निर्ययुर्जवादितिवक्तव्यं । तत्तदाहंसोहंसमभ्युवाद । पाश्चात्यहंसाःऊचुस्तान्पुरतोगच्छतोजवादित्यर्थः । होहो यीतिसंबोध्येभल्लाक्षभल्लाक्षमंदाक्षमंदाक्ष। कुतोमंदाक्षत्वमित्यतआह ॥ जानश्रुतेरिति॥जानश्रुतेःपौत्रायणस्यज्योतिःप्रकाशमा नंतेजःपुंजंदीपाध्वररूपंदिवाससममाततं । तदपित्वंनपश्यसीतिभावः। यथोक्तं । यस्यदीपाध्वरेधूमैःश्यामलाःकल्पशाखिनइतित ज्ज्योतिस्त्वामतिक्रम्यगच्छंतंमाप्रसांक्षीःमाप्रसांक्षीत् । संबद्धंमाभूत् । माप्रधांक्षीःमाप्रधांक्षीत् । मादहत् । तज्ज्योतिरतिक्रम्यग मनेत्वांसंबध्यदहेदितिभावः।इत्यभ्युवादेतिसंबंधः ॥ २ ॥ तंहंसंप्रतिपरोग्रगामीहंसःउच्चैःप्रत्युवाच । यथोक्तं । हंसाहसित्वासावज्ञ मूचुर्वचनमुच्चकैरिति। अरेहंसैतद्वचनंकमेनमुद्दिश्यात्थ।संतंनिर्दुष्टंसयुग्वानंसशकटंरैक्वमिवेति।अननुरूपमस्मिन्नुक्तमेवंवक्तुंरैक्वएव योग्यइतिभावः । एवमुक्तइतरआह॥यइति॥ नुइदानींयस्त्वयोक्तःसयुग्वारैक्वःसकथंकिंमाहात्म्यवानिति ॥ ३ ॥ पृष्टोपरआह ॥

---

उप० अथहह ँसानिशायामतिपेतुस्तद्धैव ँ ह ँ सोह ँ समभ्युवादहोहोयिभल्लाक्षभल्लाक्षजानश्रुतेःपौत्रायणस्यसमंदिवाज्योतिराततंतन्मासांक्षीस्तत्त्वामाप्रधाक्षीरिति ॥२ ॥ तमुहपरःप्रत्युवाच । कम्वरएनमेतत्संतंसयुग्वानमिवरैक्वमात्थति । योनुकथ ँ सयुग्वारैक्वइति ॥ ३ ॥

यथेति ॥ यथाकृतायविजितायकृतयुगेविजितेसत्यधरेयास्त्रेतादयःसंयंति ।त्रेतादिजयफलंचतस्यैवभवतिएवमेनंरैक्वंयत्किंचप्रजाः साधुकुर्वंति।सर्वंतदभिसमेतिप्राधान्येन ।सर्वविघ्ननिवारकेमहामुनौतस्मिन्राष्ट्रेवसतिसतिसर्वाभिःप्रजाभिःनिर्विघ्नेनसाधुकर्मकर णेनप्राधान्यात्तस्यैवतत्फलंभवति।स्वाम्यधिकरणन्यायादितिभावः।प्राधान्यमेवाह॥ यस्तद्वेदेति॥यःकोप्यधिकारीयज्ज्ञातव्यं वेदतत्सर्वंसरैक्वोवेदेत्यर्थः।उपसंहरति॥सइति॥सरैक्वोमयैतदेतेनप्रकारेणोक्तइति ॥ ४ ॥ एवंपुरोहंसेनोक्तेसतितदुतत्सर्वंजानश्रु तिःपौत्रायणःउपशुश्रावह।ततःसश्रुतहंसकृतानादरःसंजिहानएवशयनीयादुत्तिष्ठन्नेवक्षत्तारंसारथिमुवाच। यथोक्तं । ततःसार थिमाहूयभूपालोविस्मयाश्रयः । संदिदेशमहात्मासरैक्वआनीयतामिति । अरेअंगेष्ट । सयुग्वारैक्वोज्ञातव्यइतिशेषः । कुतोसौ ज्ञातव्यः । यतःसयुग्वानमिवरैक्वमात्थेतिहंसेनोक्तं । समग्रहंसवाक्योपलक्षणमेतत् ॥ ५ ॥ यस्त्वयोक्तःसयुग्वारैक्वःसक थमितिक्षत्रापृष्टःपौत्रायणोहंसोक्तंतल्लक्षणमाह ॥ यथेति ॥ ६ ॥ सहक्षत्तान्विष्यतत्रैवेतस्ततोविचार्यनाविदमितिप्रत्येयाय । तंहोवाचपौत्रायणः । अरेयत्रप्रदेशेब्राह्मणस्यब्राह्मणानामन्वेषणाशास्त्रविचारणाप्रवर्ततेतत्तत्रैनमृच्छाऽवगच्छेति ॥ ७ ॥ एव मुक्तःसक्षत्तापुनस्ततोनिर्गत्यवाराणस्यादिसमस्ततीर्थाटनंकृत्वाकुत्रापितमनुपलंभमानःकाश्मीरनगरमासाद्यतत्रराजद्वारिशकट

---

उप० । यथाकृतायविजितायाधरेयाःसंयंत्येवमेनꣳसर्वंतदभिसमेतियत्किंचप्रजाःसाधुकुर्वंतियस्तद्वेदयत्सवेदसमयैतदुक्तइति ॥ ४ ॥ तदुहजानश्रुतिःपौत्रायणउपशुश्रा वसहसंजिहानएवक्षत्तारमुवाचांगारेहसयुग्वानमिवरैक्वमात्थेतियोनुकथꣳसयुग्वारैक्वइति ॥ ५ ॥ यथाकृतायविजितायाधरेयाःसंयंत्येवमेनꣳसर्वंतदभिसमेतियत्किंचप्रजाःसाधुकु र्वंतियस्तद्वेदयत्सवेदसमयैतदुक्तइति ॥ ६ ॥ सहक्षत्ताऽन्विष्यनाविदमितिप्रत्येयायतꣳहोवाचयत्रारेब्राह्मणस्यान्वेषणातदेनमृच्छेति ॥ ७ ॥ सोधस्ताच्छकटस्यपामानं

स्याधस्तात्पामानंकषमाणंकंडूयमानंरैक्रमवलोक्यराज्ञानिरूपितैश्चिह्नैरयमेवरैक्वइतिनिश्चित्योपसमीपेगत्वाप्रणम्योपविवेश । तथाचोक्तंगीतामाहात्म्ये । तत्रोपविश्यतंरैक्वंप्रत्यभ्युवादक्षत्ता । हेभगवंस्त्वमेवकिंसयुग्वारैक्वइति । एवमुक्तोरैक्वोअहंह्यरा३इ तिप्रतिजज्ञे । प्लुतिःपामकषणभावेन । किमर्थमत्रविश्रांतःकिंचकर्तुंचिकीर्षसीत्युक्तोवयंपूर्णमनोरथाः । परंकेनापिविदुनापरिचर्यावि धायिनाभवितव्यमित्युक्तवानितिग्राह्यं । सहक्षत्तारैक्वमन्विष्याविदमितिराजानंप्रत्येयाय । यथावृत्तंचन्यवेदयत् ॥ ८ ॥ प्रथ मःखंडः ॥ १ ॥ अहहारेत्वाशूद्रेतिरैक्वोक्तेःपौत्रायणःशूद्रइत्यसत् । तथासतिवैदिकसंवर्गविद्याध्ययनायोगात् । नचाधिकारा भावेपिपौत्रायणोवेदविद्यांविचारयामासेतिकिंनस्यादितिवाच्यं । अनधिकारिणंप्रतिमुनेरुपदेशासंभवात् । नहिगवाद्याशयात स्यापरोक्षज्ञानिनःअन्याय्याप्रवृत्तिःसंभवति । कथंतर्हिशूद्रेतिसंबोधनमित्यतआह ॥ शुचेति ॥ दीर्घस्वरार्थत्वेनाद्रवणादित्युक्तं । शुग्द्रएवशूद्रोरुद्रइतिवत् । शुचाद्रवणादेवशूद्रेतिसंबोधितोनतुवर्णावरत्वाभिप्रायेणेत्यर्थः । शुगस्यहंसकृतानादरश्रवणादुत्पन्ने तिभावः । तथाचसूत्रं । शुगस्यतदनादरश्रवणात्तदाद्रवणादिति । ननुशूद्रशब्दःकुतोयौगिकोंगीक्रियतेरूढार्थःकिंनस्यात् । यो गरूढ्योरूढेरेवप्राबल्यात् । शूद्रस्यापिवेदविद्याधिकारस्येष्टत्वादित्यतआह ॥ राजेति ॥ अयमश्वतरीरथइतिरथित्वलिंगात् ।

उप० । कषमाणमुपोपविवेशत ँहाभ्युवादत्वंनुभगवःसयुग्वारैक्वइत्यह ँह्यरा ३ इतिप्रतिजज्ञेसहक्षत्तान्विष्याविदमितिप्रत्येयाय ॥८॥ प्रथमःखंडः ॥ १ ॥

भा० । शुचाद्रवणाच्छूद्रः । राजापौत्रायणः



क्षत्तृसंबंधाच्च । बाधकवशाद्रूढित्यागइतिभावः । राजैवपौत्रायणोनशूद्रःकिंतुशोकेनाऽद्रवणादेवशूद्रइत्युक्तइत्यत्रस्मृतिमाह ॥ राजेति ॥ शोकेनाऽद्रवणपरिज्ञानंचमुनेःसर्वज्ञत्वादुपपद्यते । विपक्षेबाधकंसूचयति ॥ प्राणेति ॥ परंधर्ममित्यनेनसंवर्ग विद्यावेत्तुःश्रुत्युक्तंसार्वज्ञरूपंफलमुपलक्षणमित्युक्तंभवति । श्रद्धादेयत्वादिनाधर्मित्वसिद्धेःपरमित्युक्तं । शूद्रशब्दस्यस्वार्थेतात्प र्यमभ्युपेत्यायंयौगिकोव्याख्यातइतिध्येयं । ऋद्धोक्तित्वेनस्वार्थेतात्पर्याभावेतुरूढत्वेपिनदोषः । यथोक्तं । ततोविलोक्यतत्सर्वं रैक्वोराज्ञेचुकोपह । रेशूद्रमामकंवृत्तंनजानासिदुरीश्वरेति ॥ ६ ॥ ततश्चायंखंडार्थः ॥ तस्मात्क्षत्ररैक्ववार्तायाएवमुक्तत्वादेव ह । जानश्रुतिःपौत्रायणोगवांषट्शतानिनिष्कंमुक्ताहारं । अश्वतरीभ्यांयुक्तंरथंतदागुरुदक्षिणार्थत्वेनादायप्रतिचक्रमेरैक्वंप्रतिगत वान् । गतःसपौत्रायणःतंरैक्वंप्रत्यभ्युवाद ॥ १ ॥ हेरैक्वेमानिगवांषट्शतानिअयंनिष्कोयमश्वतरीरथःतवदक्षिणात्वेनवर्तते । हे भगवोभगवंस्त्वंमेममैतांदेवतामनुशाधित्वंयांदेवतांउपास्सइति ॥ २ ॥ तंराजानंप्रतिपरोलोकविलक्षणोमुनिःप्रत्युवाच । अहेति संबोधनं । हेशूद्र हारःइत्वारथश्चगोभिःसहतवैवास्त्विति । हारेत्वेतिसेदुराजेत्यादिवत्विसर्गलोपेनभवति । हारेत्वानावितिवा ।

भा० । शोकाच्छूद्रेतिमुनिनोदितः । प्राणविद्यामवाप्यास्मात्परंधर्ममवाप्तवानितिपाद्मे ॥ खं० २ ॥

उप० । तदुहजानश्रुतिःपौत्रायणःषट्शतानिगवांनिष्कमश्वतरीरथंतदादायप्रतिचक्रमेत ँहाभ्युवाद ॥ १ ॥ रैक्वेमानिषट्शतानिगवामयंनिष्कोऽयमश्वतरीरथोनुमए तांभगवोदेवतांशाधियांदेवतामुपास्सइति ॥ २ ॥ तमुहपरःप्रत्युवाचाहहारेत्वाशूद्रतवैवसहगोभिरस्त्विततदुहपुनरेवजानश्रुतिःपौत्रायणःसहस्रंगवांनिष्कमश्वतरीरथंदुहितरंरथं तदादायप्रतिचक्रमे ॥ ३ ॥

तथात्वेपृथगन्वयः । हारेणयुक्तइत्वाहारेत्वेतिवा । तत्तस्मात्रैक्केणैवमुक्तत्वादेवह ।·जानश्रुतिःपौत्रायणोल्पंधनमाहृतमितिमुनेः
कोपइत्यभिप्रेत्यतदापुनरेवगवांसहस्रंनिष्कमश्वतरीरथमृषेर्भार्यार्थमात्मनोदुहितरंचादायतत्तत्रप्रतिचक्रमे ॥ ३ ॥ सगत्वारैक्कं
प्रत्यभ्युवाद । रैक्केदंगवांसहस्रंअयंनिष्कोऽयमश्वतरीरथःइयंतवजायायस्मिंस्त्वमास्सेअयंग्रामश्चतवदक्षिणात्वेनवर्तते । हेभगवो
मामांतांदेवतामन्वेवशाधिसम्यगेवशिक्षय ॥ ४ ॥ एवमुक्तोरैक्कस्तस्याःजायार्थमानीतायाराज्ञोदुहितुर्मुखमुपोद्गृह्णन्शनैःपश्यन्न
तिक्रुद्धःसन्नुवाच । हेशूद्रत्वमिमागुरुदक्षिणाःअजहारअपहर । विरक्तस्यममतेनप्रयोजनाभावात् । मदभिप्रेतश्चपरिचर्याविधा
यीवद्गुरेव । सचनानीतः । त्वंतुशुश्रूषयाविनाननेगवादिनैवमुखेनमामाऽलापयिष्यथाआलापयिष्यसीति । इत्युक्तेशापभीतेनरा
ज्ञाप्रसादितोरैक्कस्तस्मैहोवाच। श्रुतीराज्ञादत्तरैक्कावासग्रामसंज्ञामाह ॥तइति॥ तेहैतेप्रसिद्धाःग्रामाः।महावृषेषुदेशेषुकाश्मीरापर
पर्यायेषुरैक्कपर्णानाम । यत्रयेषुग्रामेषुरैक्कअस्मैराजार्थंतदुपदेशार्थमेवोवास ॥ ५ ॥ द्वितीयःखंडः ॥ किमुवाचेत्यतआह ॥ वा
युरिति ॥ वायुर्बाह्यःसंवर्गस्तृणादेःसंवर्जनात् । संग्रहणाद्वेत्यसत् । यांदेवतामुपास्येतांमेशाधीतिदेवताप्रश्नोत्तरत्वात् । श्रुतावे
वाग्न्यादिदेवतासंहारकत्वस्यसंवर्गशब्दप्रवृत्तिनिमित्तत्वेनोक्तत्वाच्चेतिभावेनप्रमाणेनैववायुर्वावसंवर्गइत्येतद्व्याचष्टे ॥ संवृक्तइ

---

उप०। तश्हाभ्युवादरैक्केदश्सहस्रंगवामयंनिष्कोयमश्वतरीरथइयंजायाऽयंग्रामोयस्मिन्नास्सेऽन्वेवमाभगवःशाधीति ॥ ४ ॥ तस्याहमुखमुपोद्गृह्णन्नुवाचाजहारेमाःशूद्रानेनै
वमुखेनालापयिष्यथा३इतितेहैतेरैक्कपर्णानाममहावृषेषुयत्रास्माउवासतस्मैसहोवाच ॥ ५ ॥ द्वितीयःखंडः ॥ २ ॥

भा०। संवृक्तेसर्वदेवान्यद्वायुःसंवर्गईरितः ।

ति ॥ संहरते । महांतमस्येत्यस्यार्थमाह ॥ महिमेति ॥ देवताइत्यनन्नशब्दार्थः।मर्त्यमन्नमितिवचनेनान्नशब्दस्यमर्त्यवाचकत्वात् । तेवाएतेपंचान्येपंचान्येदशसंतस्तत्कृतमितिवाक्यंपंचकद्वयस्यपरस्परभिन्नत्वप्रतीतिंवारयन्व्याचष्टे ॥ अध्यात्मेति ॥ दशभूताः पूर्णाःकृतमित्युच्यंतइत्यर्थः । दशशब्दस्यपूर्णार्थत्वेश्रुतिमाह ॥ दशेतीति ॥ सर्वंपूर्णमिहोच्यतइतिस्मृतिश्चग्राह्या । अध्यात्माधिदैवतभेदेनावस्थितानांपंचदेवतानांपूर्णत्वेपिकृतत्वोक्तिःकथमित्यतोगौण्येतिभावेनाह ॥ कृतस्येति ॥ कृतयुगस्यपूर्णधर्मात्मकत्वादित्यर्थः । तस्मात्सर्वासुदिक्ष्वन्नमेवेतिवाक्यमप्रतीत्यन्यथाप्रतीतिनिरासायव्याचष्टे ॥ तस्मादिति ॥ यस्मादध्यात्माधिदैवभेदेनद्विरूपस्यवायोस्तेषुप्रवेशस्तस्माद्वायुनासहदशसंख्यापूरणाद्दशदिक्ष्वपिस्थितादशसंख्याकादेवताअन्नमेवेत्यर्थः । वायोरन्नमितिप्रतीतिनिरासायवायुनासहेत्युक्तं । एवंतर्हिसैषाविराडन्नादीत्युत्तरवाक्यविरोधः । तत्रह्युपक्रांतवायुदेवतान्नादित्वेनोच्यतइत्यतआह ॥ अन्नादीति ॥ नात्रोपक्रांतोवायुरन्नादित्वेनोच्यते । पूर्ववाक्येतस्यान्नत्वेनोक्तत्वात् । अन्यथादशत्वानुपपत्तेः । नहिसएवान्नमन्नादीच । तस्मादन्नादिदेवताविष्णुरेव। उपक्रमादप्युपपत्तेर्बलीयस्त्वादितिभावः।विराड्विष्णुरित्यनेनविराट्शब्दात् । ब्रह्माद्यन्नादीत्यपिनिरस्तं । तस्यापिवाय्वत्तृत्वासंभवात् । ननुविष्णोरन्नादित्वमंगीकृत्यवायोरन्नत्वांगीकारेतदद्यत्वप्राप्त्या अनद्यमानोयदनन्नमत्तीत्यनद्यमानत्वोक्तिविरोधइत्यतआह ॥ अनद्यमानइति ॥ विष्णवन्यैः । यदनन्नमत्तीतिवायोःसर्वदेवतासं

भा० । महिमास्यमहानेषयदनद्योत्तिदेवताइतिप्रभंजने । दशेतिवैसर्वमितिश्रुतेः । कृतस्यचपूर्णात्मकत्वादध्यात्माधिदैवतभेदेनपंचदेवतादशभूताःकृतं । तस्माद्वायुनासहदशसंख्यापूरणात्सर्वदिक्षुस्थितादेवतावायुनासहान्नमेव । अन्नादीदेवताविराड्विष्णुरेव । अनद्यमानइत्यन्यैरनद्यमानः ।

हारकत्वोक्तेःकथंतस्यविष्णवन्नत्वमित्यतःश्रुत्यर्थनिश्चायकंप्रमाणमाह ॥ **वायुस्त्विवति**॥३॥ ततश्चायंखंडार्थः ॥ वायुर्वावमुख्य वायुरेव संवर्गः । कथं यदावैमहाप्रलयेऽग्निरुद्वायतिउपशाम्यतितदावायुमेवाप्येति । यदासूर्योस्तमेतितदावायुमेवाप्येति । यदा चंद्रोस्तमेतितदावायुमेवाप्येति ॥ १ ॥ यदाऽऽपःतदभिमानीइंद्रःयथोक्तंपुरस्तात् । उच्छुष्यंतिवायुमेवापियंति । कुतः यतोवायु रेवैतान्संवृंक्तेसंहरतीतिहिप्रसिद्धमित्यर्थः । इत्यधिदैवतं संवर्गस्वरूपंनिरूपितं ॥ २॥ अथाध्यात्मं संवर्गस्वरूपंनिरूप्यते । प्राणो मुख्यप्राणः । सःमुख्यप्राणोयदाजीवंप्रस्वापयतितदावाक्प्राणमप्येतीत्यर्थः । सइतिबुद्धिस्थजीवपरामर्शोवा । अत्रवागादिश ब्देनतदभिमानिनःप्रागुक्तादेवताउच्यंते ॥३॥ उपसंहरति ॥ **ताविति** ॥ एवंतावेतौद्वावेवसंवर्गौ देवेषुवायुरेव प्राणेषुइंद्रियेषुमुख्य प्राणएवेति ॥ ४ ॥ तत्राख्यायिकामारभते ॥**अथेति**॥हेत्यैतिह्ये । शौनकंशुनकस्यापत्यं कापेयंकपिगोत्रोद्भवंचाऽभिप्रतारिणंना मतः । कक्षसेनस्यापत्यंकाक्षिसेनिंचेत्येतौपरिविष्यमाणौक्वचिदन्नंपरिवेषयंतौ कश्चिद्ब्रह्मचारी विभिक्षेऽन्नंयाचितवान् । तौउभौ तस्मैब्रह्मचारिणेन्नंनददतुरुरेव । हेत्याश्चर्ये ॥ ५ ॥ तदासब्रह्मचार्युवाचह । हेकापेय हेअभिप्रतारिन् योभुवनस्यगोपाःगोप्ता

भा० । वायुस्तुसर्वदेवात्तावायोरत्ताजनार्दनः । नतस्यकश्चिदत्तास्तिसविराडधिराजनादितिच ॥ **खं०३** ॥

उप० । वायुर्वावसंवर्गोयदावाअग्निरुद्वायतिवायुमेवाप्येतियदासूर्योस्तमेतिवायुमेवाप्येतियदाचंद्रोस्तमेतिवायुमेवाप्येति ॥ १ ॥ यदाऽऽपउच्छुष्यंतिवायुमेवापियंतिवायु र्ह्येवैतान्सर्वान्संवृंक्तइत्यधिदैवतं ॥ २ ॥ अथाध्यात्मंप्राणोवावसंवर्गःसयदास्वपितिप्राणमेववागप्येतिप्राणᳪचक्षुःप्राणᳪश्रोत्रंप्राणंमनःप्राणोह्येवैतान्सर्वान्संवृंक्तइति ॥ ३ ॥ तौवाएतौद्वौसंवर्गौवायुरेवदेवेषुप्राणःप्राणेषु ॥ ४ ॥ अथहशौनकंचकापेयमभिप्रतारिणंचकाक्षसेनिंपरिविष्यमाणौब्रह्मचारीबिभिक्षेतस्माउहनददतुः ॥ ५ ॥ सहोवाचम हात्मनश्चतुरोदेवएकःकःसोजगारभुवनस्यगोपास्तंकापेयनाभिपश्यंतिमर्त्याअभिप्रतारिन्बहुधावसंतंयस्मैवाएतदन्नंतस्मावाएतन्नंदत्तमिति ॥ ६ ॥



एकोदेवश्चतुरोमहात्मनोधिदैवमग्न्यादीनध्यात्मंवागादीन्जगारजग्रास गृनिगरणे । यंचतंप्रसिद्धंमर्त्येषुबहुधावसंतंमर्त्याःनाभिप श्यंति । सकः किंनामाकिंमहिमाचतदहंजानामि । त्वंजानासिचेत्तद्वदस्वेत्यर्थः । तस्मात् यस्मैदेवायैतदन्नंप्रसिद्धं तस्माएतद न्नंनदत्तमिति ॥ ६ ॥ एवंब्रह्मचारिणोक्तेतदुतदेवशौनकःकापेयस्तत्पृष्टंदैवतंप्रतिमन्वानोविचारयन्प्रत्येयायव्यजानात् । उवा चच ॥ **आत्मेति** ॥ हेब्रह्मचारिन्यस्त्वयापृष्टोदेवः देवानामग्न्यादीनामात्मास्वामी प्रजानांजनिताजनयितापिता हिरण्यदंष्ट्रो बभसोभक्षणशीलः । सोनसूरिर्नामतः । अनश्चासौसूरिश्चेत्यनसूरिः । तन्माहात्म्यमाह ॥ **महांतमिति** ॥ अस्यअनस्यमुख्य प्राणस्यमहिमानंमहांतमाहुर्विद्वांसः । कुतः यद्यस्मादसौस्वयंविष्णवन्यैरनद्यमानोऽन्नममर्त्यसर्वदेवजातमत्तीत्यनेनैवप्रकारेणवय मिदंदैवतमुपास्महे । अस्मैवायुदेवताभिज्ञायब्रह्मचारिणेभिक्षांदत्तेत्यन्यान्प्रत्याहकापेयः ॥ ७ ॥ एवमुक्ताःकेचित्परिवेषकास्त स्मैतदेवभिक्षांददुर्ह । एवमाख्यायिकयावायोःसर्वसंहर्तृत्वमुक्तं । तर्हिसएवसर्वसंहर्ताकिं नेतिभावेनाहरैक्कः ॥ **तेवाइति** ॥ ते वाएतेअध्यात्माधिदैवभेदेनोक्ताःअग्न्याद्याःवागादयश्चवायुनामुख्यप्राणेनचसहपंचान्येपंचान्येदशसंतःपूर्णाःसंतोयतःततृतस्मा त्कृतमित्युच्यंते । कृतयुगस्यापिपूर्णधर्मात्मकत्वात् । किंततइत्यतआह ॥ **तस्मादिति** ॥ तस्मात्उक्तरीत्यावायुनासहदशसं

उप० । तदुहशौनकःकापेयःप्रतिमन्वानःप्रत्येयायात्मादेवानांजनिताप्रजानाᳪहिरण्यदᳪष्ट्रोबभसोनसूरिर्महांतमस्यमहिमानमाहुरनद्यमानोयदनन्नमत्तीतिवैवयंब्रह्मचारि न्निदमुपास्महेदत्तास्मैभिक्षामिति ॥ ७ ॥ तस्माउहददुस्तेवाएतेपंचान्येपंचान्येदशसंतस्तत्कृतंतस्मात्सर्वासुदिक्ष्वन्नमेवदशकृतᳪसैषाविराडन्नादीतयेदᳪसर्वंदृष्टᳪसर्वमस्येदंदृष्टं भवत्यन्नादोभवतियएवंवेद ॥ ८ ॥ **तृतीयःखंडः** ॥ ३ ॥

ख्यापूरणात् । सर्वासुदिक्षुदशस्वपिदिक्षुस्थिताःदशपूर्णाःअतएवकृतमित्युक्ताःअग्न्याद्यावागादयश्चवायुनामुख्यप्राणेनचसहान्न मेव । तएतेकस्यान्नंयोवायोरप्यत्तेत्यतआह ॥ सैषेति॥ सैषावाय्वाद्यन्नादिदेवताविराडधिराजनात्विराण्णामाविष्णुरेव । तस्या स्तदज्ञानेकथमेतदत्तृत्वंस्यादित्यतआह ॥ तयेति ॥ तयाविराडाख्यदेवतयेदंसर्वंवाय्वादिकंदृष्टं । सासर्वज्ञेत्यर्थः । एवंविष्णूपा सकस्यतदनुरूपंफलमाह ॥ सर्वमिति ॥ योधिकारीएवंसर्वज्ञत्वेनान्नादित्वेनचविराडाख्यंविष्णुंवेदोपास्ते। अस्यानेनोपासकेनेदं स्वयोग्यंसर्वंदृष्टंभवति । सोन्नादश्चभवति ॥ ८॥ तृतीयःखंडः ॥ ३ ॥ एवंपरापरब्रह्मविषयासंवर्गविद्यानिरूपिता । इदानीं परब्रह्मविषयामेववासुदेवादिचतुर्मूर्तिविद्यांआख्यायिकापुरःसरमाह ॥ सत्यकामइत्यादिखंडषट्केन ॥ ननुगोत्रानिर्णये ब्राह्मण्यानिर्णयात्कथंगौतमःसत्यकामोपनयनेप्रवृत्तःशूद्रसंस्कारस्यनिषिद्धत्वादितिचेन्न । नाहमेतद्वेदभोयद्गोत्रोहमस्मीतिवचने नसत्यकामस्यार्जवंज्ञात्वानैतदब्राह्मणोविवक्तुमर्हतीतिशूद्रत्वाभावनिर्धारणएवतदुपनयनेप्रवृत्तत्वात् । तथाचसूत्रं । तदभावनिर्धा रणेचप्रवृत्तेरिति । आर्जवज्ञानेपिशूद्रत्वाभावनिर्धारणंकथमित्यतआह ॥आर्जवमिति ॥ ब्राह्मणेब्रह्माणनयोग्येत्रैवर्णिके साक्षा न्मुख्यतः आर्जवं लक्षणमितिशेषः ऋषभाग्निहंसमद्गूनांकथंसत्यकामोपदेष्टृत्वं । तेषांपश्वादित्वादित्यतआह ॥ वायुरिति॥ वरु णश्चेत्येते । हंसआदित्योमद्गुःप्राणइत्यप्रामाणिकंव्याख्यानमित्यनेनोक्तंभवति । ऋषभाद्युपदिष्टाःब्रह्मणःपादाः प्रकाशवदनंतव

भा० । आर्जवंब्राह्मणेसाक्षाच्छूद्रोऽनार्जवलक्षणः । गौतमस्त्विवतिविज्ञायसत्यकाममुपानयदितिसामसंहितायां । वायुर्वृषभरूपस्सन्नग्निर्हंसश्चतुर्मुखः । मद्गुरूपश्चवरुणः सत्यकामायहोचिरे ।

ज्योतिष्मदायतनवन्नामानःकइत्यतआह ॥ प्रकाशेति ॥ द्वंद्वांतेश्रुतोमतुप्सर्वत्रान्वेति । मूर्तीरूचिरइतिसंबंधः । कथंतर्हिप्रा चीदिक्कलेत्यादिनाप्रत्येकंप्राच्यादीनांकलात्वोक्तिरित्यतआह ॥ प्रत्येकमिति ॥ प्रत्येकंचतुरात्मनोहरेस्तदाख्यकाःप्राचीदिगा दिशब्दाभिधेयाःवासुदेवादिकाःमूर्तीरूचिरइत्यन्वयः । तदाख्यत्वेनिमित्तद्वयं । दिगादिष्वित्यादि । ननुयदिऋषभाद्यादेव ताएवकथंतर्हितदुपदिष्टेनसत्यकामेनगौतमोभगवांस्त्वेवमेकामेब्रूयादितिप्रार्थ्यते । पूर्वस्मादुत्तमोलब्धःस्वयमेवगुरुर्यदि । गृह्णीयादविचारेणेत्युक्तेरित्यतआह ॥ नेति ॥ यदृच्छयोपदेष्टारएवते नत्वनेनाचार्यतयास्वीकृताः । अतएवसमग्रानुग्रहपुरः सरंवयमेतस्याचार्याइतिबुद्ध्यातैर्नोक्तमित्यर्थः । पूर्वानुज्ञातुमृग्यतइत्युक्तेः । सत्यकामस्तानाचार्यत्वेनस्वीकृत्यैवपश्चाद्गौतमादनु ज्ञामवापेतिकिंनस्यादित्यतःशिक्षामुत्तरमाह ॥ उत्तमेति ॥ उत्तमाचार्यतःश्रुत्वापीत्याद्येवप्रकृतोपयोगि । समगुर्वंतरस्वीकार विषयंतदितिभावः । तर्हिवाय्वादिभ्यःश्रुतवतापिसत्यकामेनगौतमानुज्ञाप्रार्थनात्गौतमोवाय्वादिसमइतिकिंनस्यादित्यतआह ॥ ऋषिभ्यइति ॥ गौतमोपिकश्चित्ऋषिरितिभावः । अत्रहनकिंचनवीयायेत्यनुज्ञाप्रदानवचनमप्रतीतेरनूद्यव्याचष्टे ॥ अत्रे

भा० । प्रकाशानंततेजोवत्स्थानवत्संज्ञिकाहरेः । वासुदेवादिकामूर्तीःप्रत्येकंचतुरात्मनः । दिगादिषुस्थितास्तेषामधिपाश्चतदाख्यकाः । नाचार्यबुद्ध्यातैरुक्तमतोऽ नुज्ञांगुरोरगात् । उत्तमाचार्यसंप्राप्त्यैनावराचार्यतःक्वचित् । इच्छेदनुज्ञांश्रुत्वापिनानुज्ञांप्रार्थयेत्ततः । ऋषिभ्यस्तूत्तमादेवादेवेभ्योवायुरुत्तमः । वायोश्चभगवान्विष्णुर्न तस्मादुत्तमोगुरुरित्याचार्यसंहितायां । अत्रहनकिंचनवीयायदेवेभ्यःश्रुत्वानचतेकाचिद्धानिरभवदित्यर्थः ॥ खं० ४-९ ॥

ति॥श्रुत्वास्थितस्य ॥ खं०४-९ ॥ ततश्चायंखण्डषट्कार्थः॥सत्यकामोनामतोजाबालोजबालापुत्रोजबालाख्यांस्वमातरमामं
त्रयांचक्रेआकारितवान्उवाचच । हेभवति अहंब्रह्मचर्यंवेदाध्ययनमुद्दिश्यविदेशंगत्वावत्स्याम्याचार्यकुले।किंततः ममाधुनापिनो
पनयनं।तेचगोत्रानिर्णयेनोपनयनंकुर्युरतोहंकिंगोत्रोस्मीति । नुवितर्के ॥ १ ॥ एवंपृष्टासाहैनंस्वपुत्रमुवाच। हेतात त्वंयद्गोत्रो
सिएतन्नाहंवेद।कस्मान्नवेत्थेत्यतआह॥बह्विति॥यतोहंबहुयथेष्टंचरंतीपरिचारिणीदासी।यौवनेत्वामलभे। अतःसाहमेतन्नवेदयद्गो
त्रस्त्वमसीति । जबालातुनामाहमस्मि । सत्यकामोनामत्वमसि। सत्वंसत्यकामोजाबालोस्मीत्येवाचार्यायब्रवीथाइति ॥२॥सस‌त्य
कामोहारिद्रुमतंहरिद्रुमतोऽपत्यं गौतमंगोत्रतः एत्योवाच । भगवतिपूजार्हेत्वयिब्रह्मचर्यमुद्दिश्यवत्स्यामीतिभावेनभगवंतमुपेया
मिति ॥ ३ ॥ तंहोवाचगौतमः । हेसोम्यत्वंकिंगोत्रोसि । नुवितर्के। नाधुनापितवोपनयनसंस्कारः । तदभावेचनाध्ययनं । गोत्रा
निर्णयेचब्राह्मण्यानिर्णयान्नोपनयनसंस्कारइतिभावः। एवमुक्तःससत्यकामउवाच । अहंयद्गोत्रोस्मिनाहमेतद्वेद पितातुनास्त्येव।
अपृच्छंमातरं । सामामांप्रत्यब्रवीत् । मात्रोक्तमेवाह ॥ नेति ॥ उक्तार्थमेतत् ॥ ४ ॥ एवंसत्यवचनेनसत्यकामस्यार्जवंज्ञात्वागौ

उप० । सत्यकामोहजाबालोजबालांमातरमामंत्रयांचक्रेब्रह्मचर्यंभवतिविवत्स्यामिकिंगोत्रोन्वहमस्मीति ॥१॥ साहैनमुवाचनाहमेतद्वेदतातयद्गोत्रस्त्वमसिबह्वहंचरंतीपरि
चारिणीयौवनेत्वामलभेसाहमेतन्नवेदयद्गोत्रस्त्वमसिजबालातुनामाहमस्मिसत्यकामोनामत्वमसिससत्यकामोजाबालोब्रवीथाइति ॥ २ ॥ सहहारिद्रुमतंगौतममेत्योवाचब्रह्मचर्यंभ
गवतिवत्स्याम्युपेयांभगवंतमिति ॥३॥ तꣳहोवाचकिंगोत्रोनुसोम्यासीतिसहोवाचनाहमेतद्वेदभोयद्गोत्रोहमस्म्यपृच्छंमातरꣳसामाप्रत्यब्रवीद्बह्वहंचरंतीपरिचारिणीयौवनेत्वामलभे
साहमेतन्नवेदयद्गोत्रस्त्वमसिजबालातुनामाहमस्मिसत्यकामोनामत्वमसीतिसोहंसत्यकामोजाबालोस्मिभोइति ॥ ४ ॥

॥१३५॥

तमस्तंहोवाच। एतदार्जवसंयुक्तंवचनमब्राह्मणस्त्रैवर्णिकेतरः वि सर्वथा वक्तुंनार्हति । आर्जवस्यब्राह्मणलक्षणत्वात् । त्वंतुसत्याद्ब्रा
ह्मणधर्मभूतात् नागाःनापेतवानसि अतस्त्वंब्राह्मणएव । अतोनुपनीतंत्वामुपनेष्ये । तदर्थंसमिधमाहरेतियोजना । तमुपनीयकृशा
नामबलानांकेषांचिद्ब्राह्मणानांचतुःशतंगानिराकृत्यगोष्ठान्निष्काल्योवाच । षष्ठीद्वितीयार्थेवा । कृशाअबलाःचतुश्शतंस्वकीयागा
इत्यर्थः। हेसोम्येमाअनुसंव्रजेतितागाअरण्यंप्रत्यभिप्रस्थापयन्नुवाचगौतमः। असहस्रेणासंपूर्णसहस्रेणगोयूथेनसहनावर्तयनप्रत्याग
च्छ। किंतुसंपूर्णसहस्रेणसहप्रत्यागच्छेति । सएवमुक्तस्तागास्तृणोदकबहुलंद्वंद्वरहितमरण्यंप्रवेश्यताश्चतुश्शतसंख्याकागायदाया
वतावर्षगणेनसहस्रंसंपेदुःतावंतंवर्षगणंतत्रैवप्रोवास ॥५॥चतुर्थःखंडः॥४॥ अथगोसहस्रसंपत्त्यनंतरमेनंश्रद्धातपोभ्यांसिद्धंसत्य
कामंऋषभःश्रेष्ठोवायुरेववृषभरूपःसंस्तस्मैतुष्टःस्वयमेवागत्याभ्युवाद।सत्यकामा ३ इति । व्यासंगभर्त्सनार्थाप्लुतिः। भगवइतिहप्र
तिशुश्राव। प्रत्युत्तरमदात्सत्यकामः। हेसोम्यवयंसहस्रंप्राप्ताःस्मः। पूर्णातवप्रतिज्ञा । अतोनोस्मान्आचार्यकुलंप्रापय ।॥१॥अहंब्रह्म
णःपरब्रह्मणःपादमंशंवासुदेवाख्यंतेतवब्रवाणीत्येवमुक्तेनसत्यकामेनब्रवीत्वित्युक्तःतस्मैहोवाच । प्राचीदिक् तदंतर्गतस्तन्नामकोवा

उप० । तꣳहोवाचनैतदब्राह्मणोविवक्तुमर्हतिसमिधꣳसोम्याहरोपत्वानेष्येनसत्यादगाइतितमुपनीयकृशानामबलानांचतुश्शतंगानिराकृत्योवाचेमाःसोम्यानुसंव्रजेतिताअ
भिप्रस्थापयन्नुवाचनासहस्रेणावर्तयेतिसहवर्षगणंप्रोवासतायदासहस्रꣳसंपेदुः ॥ ५ ॥ चतुर्थःखंडः ॥ ४ ॥ अथहैनमृषभोऽभ्युवादसत्यकामा३इतिभगवइतिहप्रतिशुश्रावप्राप्ताः
सोम्यसहस्रꣳस्मःप्रापयनआचार्यकुलं ॥१॥ ब्रह्मणश्चतेपादंब्रवाणीतिब्रवीतुमेभगवानितितस्मैसहोवाचप्राचीदिक्कलाप्रतीचीदिक्कलादक्षिणादिक्कलोदीचीदिक्कलैषवैसोम्यचतुष्कलःपादो
ब्रह्मणःप्रकाशवान्नाम ॥ २ ॥

सुदेवःकलाब्रह्मपादस्य प्रतीचीस्थःसंकर्षणः दक्षिणास्थःप्रद्युम्नः उदीचीस्थोऽनिरुद्धइतिज्ञेयं।मुक्तमनुवदन्नुपदिष्टमूर्तेरहस्यंनामा
ह ॥ एषइति ॥ हेसोम्येषचतुष्कलः । एवंपुनर्वासुदेवादिचतुष्कलोपेतोब्रह्मणःपादोवासुदेवाख्यःप्रकाशवान्नामवै ॥ २ ॥ एव
मुपासकस्यफलमाह ॥ सयइति ॥ योधिकारी एतंचतुष्कलंब्रह्मणःपाद मेवंप्रकाशवान्नामेति विद्वान्प्रकाशवानित्युपास्ते । सोऽ
स्मिन्‌लोकेप्रकाशवान्भवति । नकेवलमैहिकमेव । यएतंचतुष्कलंब्रह्मणःपादमेवंप्रकाशवानित्युपास्ते । सप्रकाशवतोहवैकुंठादी
न्‌लोकान्‌जयतिप्राप्नोति॥३॥ पंचमःखंडः॥५॥ सऋषभःस्वयमेकंब्रह्मणःपादमुपदिश्य तेतवाग्निर्देवतारूपो ब्रह्मणःएकंपादंवक्ते
त्युक्त्वाजगाम । ससत्यकामोहश्वोभूतेपरेद्युःनित्यकर्मकृत्वागाअभिप्रस्थापयांचकाराचार्यकुलंप्रति । ताःशनैःचरंत्यःआचार्यकु
लाभिमुखाःप्रस्थिताः । यत्रयस्मिन्देशेसायंबभूवुःप्राप्तास्तत्रगाउपरुध्य अग्निमुपसमाधायसमिधमग्नावाधायाग्नेःपश्चात्स्वयंप्रा
ङ्मुखःसन्अग्निमुपोपविवेशऋषभवचोध्यायन् ॥ १ ॥ तमग्निःप्रत्यक्षःसन्नभ्युवादसत्यकामा३इति । तमसौसत्यकामोभगवइति
प्रतिश्रावितवान् ॥ २ ॥ हेसोम्यतेतवब्रह्मणःपादंसंकर्षणाख्यंपुनःचतुष्कलोपेतंब्रवाणीति । ब्रवीत्वित्युक्तस्तस्मैहोवाच । पृथि

---

उप०। सयएतमेवंविद्वा१श्चतुष्कलंपादंब्रह्मणःप्रकाशवानित्युपास्तेप्रकाशवानस्मिँल्लोकेभवतिप्रकाशवतोहलोकाञ्जयतियएतमेवंविद्वा१श्चतुष्कलंपादंब्रह्मणःप्रकाशवानित्युपास्ते॥३॥
पंचमःखंडः ॥ ५ ॥ अग्निष्टेपादंवक्तेतिसहश्वोभूतेगाअभिप्रस्थापयांचकारतायत्राभिसायंबभूवुस्तत्राग्निमुपसमाधायगाउपरुध्यसमिधमाधायपश्चादग्नेःप्राङुपोपविवेश ॥ १ ॥
तमग्निरभ्युवादसत्यकामा३इतिभगवइतिहप्रतिशुश्राव ॥ २ ॥ ब्रह्मणःसोम्यतेपादंब्रवाणीतिब्रवीतुमेभगवानितितस्मैसहोवाचपृथिवीकलांतरिक्षंकलाद्यौःकलासमुद्रःकलैषवैसो
म्यचतुष्कलःपादोब्रह्मणोऽनंतवान्नाम ॥ ३ ॥

व्यंतरिक्षद्युसमुद्रस्थास्तदाख्यावासुदेवाद्याःभगवतःसंकर्षणस्यकलाइत्यर्थः । तस्यरहस्यंनामाह ॥ एषइति ॥ अंतवान्नभवती त्यनंतवानित्यर्थः । शेषंपूर्ववत् ॥ ३ ॥ ४ ॥ षष्ठःखंडः ॥ ६ ॥ सोग्निर्हंसोहंसरूपश्चतुर्मुखस्तेब्रह्मणःएकंपादंवक्तेत्युक्त्वाजगाम । सहेत्यादिपूर्ववत् ॥ १ ॥ २ ॥ ब्रह्मणःपादंप्रद्युम्नाख्यंअग्निसूर्यचंद्रविद्युत्सुस्थितास्तन्नामानोवासुदेवाद्याःप्रद्युम्नस्यकलाइत्यर्थः ॥ ३ ॥ ४ ॥ सप्तमःखंडः ॥ ७ ॥ सहंसोमद्गुर्जलवायसरूपोवरुणस्तेपादंवक्तेत्युक्त्वाजगाम ॥ १ ॥ २ ॥ ब्रह्मणःपादमनिरुद्धाख्यंप्राणचक्षुःश्रोत्रमनःस्थास्तन्नामानश्चत्वारोवासुदेवाद्याःकलाःअनिरुद्धस्य । अन्यत्पूर्ववत् ॥ ३ ॥ ४ ॥ अष्टमःखं

---

उप०। सयएतमेवंविद्वा॑ꣳश्चतुष्कलंपादंब्रह्मणोऽनंतवानित्युपास्तेऽनंतवानस्मिँल्लोकेभवत्यनंतवतोहलोकाञ्जयतियएतमेवंविद्वा॑ꣳश्चतुष्कलंपादंब्रह्मणोऽनंतवानित्युपास्ते ॥ ४ ॥ षष्ठःखंडः॥६॥ ह॑ꣳसस्तेपादंवक्तेतिसहश्वोभूतेगाअभिप्रस्थापयांचकारतायत्राभिसायंबभूवुस्तत्राग्निमुपसमाधायगाउपरुध्यसमिधमाधायपश्चादग्नेःप्राङुपोपविवेश ॥ १ ॥ त॑ꣳह॑ꣳसउपनिपत्याभ्युवादसत्यकामा३इतिभगवइतिहप्रतिशुश्राव ॥ २ ॥ ब्रह्मणःसोम्यतेपादंब्रवाणीतिब्रवीतुमेभगवानितितस्मैहोवाचाग्निःकलासूर्यःकलाचंद्रःकलाविद्युत्कलैषवैसोम्यचतुष्कलःपादोब्रह्मणोज्योतिष्मान्नाम ॥ ३ ॥ सयएतमेवंविद्वा॑ꣳश्चतुष्कलंपादंब्रह्मणोज्योतिष्मानित्युपास्तेज्योतिष्मानस्मि॑ꣳल्लोकेभवतिज्योतिष्मतोहलोकाञ्जयतियएतमेवंविद्वा॑ꣳश्चतुष्कलंपादंब्रह्मणोज्योतिष्मानित्युपास्ते ॥ ४ ॥ सप्तमःखंडः ॥ ७ ॥ मद्गुष्टेपादंवक्तेतिसहश्वोभूतेगाअभिप्रस्थापयांचकारतायत्राभिसायंबभूवुस्तत्राग्निमुपसमाधायगाउपरुध्यसमिधमाधायपश्चादग्नेःप्राङुपोपविवेश ॥ १ ॥ तंमद्गुरुपनिपत्याभ्युवादसत्यकामा३इतिभगवइतिहप्रतिशुश्राव ॥ २ ॥ ब्रह्मणःसोम्यतेपादंब्रवाणीतिब्रवीतुमेभगवानितितस्मैसहोवाचप्राणःकलाचक्षुःकलाश्रोत्रंकलामनःकलैषवैसोम्यचतुष्कलःपादोब्रह्मणआयतनवान्नाम ॥ ३ ॥ सयएतमेवंविद्वा॑ꣳश्चतुष्कलंपादंब्रह्मणआयतनवानित्युपास्तआयतनवानस्मिँल्लोकेभवत्यायतनवतोहलोकाञ्जयतियएतमेवंविद्वा॑ꣳश्चतुष्कलंपादंब्रह्मणआयतनवानित्युपास्ते ॥ ४ ॥ अष्टमःखंडः ॥ ८ ॥

डः ॥ ८ ॥ सएवंविद्वान्सन्प्रापहाचार्यकुलं । तंप्राप्तंसत्यकाममाचार्योभ्युवाद । सत्यकामा३इति । भगवइतिप्रतिश्राविंतवान्स त्यकामः ॥ १ ॥ हेसोम्यत्वंब्रह्मविदिववैस्पष्टंभासि । नुवितर्के । कोनुत्वानुशशास । देवोवामनुष्योवेत्युक्तइतरेमनुष्येभ्योन्येदे वामामनुशशासुरितिहप्रतिजज्ञे । कोन्योभगवच्छिष्यंमांमनुष्यःसन्ननुशासितुमुत्सहेतेत्यभिप्रायः ॥ २ ॥ यद्यपिदेवेभ्यःश्रुतंत थापिभगवानेवमेममकामेशुभार्थंब्रूयात्ब्रवीतु । कुतः हियस्मादाचार्यादेवविदिताविद्यासाधिष्ठंसाधुतमत्वंप्रापयतिप्राप्नोतीतिभ गवद्दृशेभ्योभगवत्समेभ्यःश्रुतं । मयात्वाचार्यतयाभगवानेवस्वीकृतोनतेदेवाः । किंतुकृपयास्वयमेवागत्योपदिदिशुः । एवमुक्तेत स्मैसत्यकामायैतदेववक्ष्यमाणमेवोवाच । अत्रदेवेभ्यःश्रवणेनकिंचनवीयायनापगतंनकाचिद्धानिरभूदित्यर्थः॥ ३ ॥ **नवमःखंडः** ॥ ९ ॥ अत्रपुनराख्यायिकापुरःसरंपरापरब्रह्मविद्यामुत्क्रांतमार्गंचनिरूपयति ॥ उपकोसलइत्यादिनाखंडषट्केन ॥ तत्रप्राणो ब्रह्मेत्यादौप्राणाद्यनुवादेनब्रह्मत्वंविधीयतइतिप्रतीतिनिरासायतदनूद्यव्याचष्टे ॥ **प्राणइति** ॥ अत्रप्राणोब्रह्मकंब्रह्मेत्यादिकंनैक विषयंप्राणस्यविज्ञेयत्वोक्तेः । कखयोरविज्ञेयत्ववचनात् । प्राणंचहास्मैतदाकाशंचोचुरित्युपसंहारविरोधाच्चेतिभावेनभिन्नविषय तांप्रमाणेनैवदर्शयति ॥ **अपरमिति** ॥ ब्रह्मशब्दस्याप्यमुख्यार्थत्वमुपपद्यतेविरोधइतिभावः । परब्रह्मप्राप्तेरपरब्रह्माधीनत्वादादौत

उप० । प्रापहाचार्यकुलंतमाचार्योभ्युवादसत्यकामा३इतिभगवइतिहप्रतिशुश्राव ॥ १ ॥ ब्रह्मविदिववैसोम्यभासिकोनुत्वानुशशासेत्यन्येमनुष्येभ्यइतिहप्रतिजज्ञे । भगवांस्त्वेवमेकामेब्रूयात् ॥ २ ॥ श्रुतꣳह्येवमेभगवद्दृशेभ्यआचार्याद्ध्येवविद्याविदितासाधिष्ठंप्रापयतीतितस्मैहैतदेवोवाचात्रहनकिंचनवीयायेतिवीयायेति ॥३॥ **नवमःखंडः** ॥९॥

भाष्यं । प्राणोब्रह्मबलरूपंब्रह्मकमानंदरूपंखंज्ञानरूपं । अपरंब्रह्मसप्राणःसाक्षाद्योबलदेवता । ज्ञानानंदात्मकंपूर्णंपरंब्रह्मस्वयंहरिः ।



न्निरूपणं । नन्वपरब्रह्मणोपिज्ञानानंदात्मकत्वात्कथंकंचखंचपरब्रह्म । अपरब्रह्मणोबलरूपत्वेपरब्रह्मणस्तदभावप्रसंगश्चेत्यतःकखश ब्दौव्याचष्टे ॥ **नैजेति** ॥ अपराधीनेत्यर्थः । पूर्णइत्यस्याप्ययमेवार्थः । अतिशयोद्योतकत्वान्नबलांशेपुनरुक्तता । प्राचीनव्याख्यानं त्वसाधारणपदार्थमादायेत्यवधेयं । वाक्यार्थमाह ॥ **तदात्मकइति** ॥ विष्णुःकमित्युक्तइति खमितिशब्दितइतिचवर्तते । ननुप्राणं चहास्मैतदाकाशंचोचुरितिकखयोराकाशत्वोक्तेःकथंविष्णुत्वमुच्यतइत्यतआह ॥ **आकाशइति** ॥ प्रसिद्धाकाशेकत्वानुपपत्तेरिति भावः । नचकंखाभिन्नंखंचाकाशमितिनानुपपत्तिः । उक्तार्थाविवक्षायांकखयोरभेदस्यैवानुपपत्तेः । खंब्रह्मेतिब्रह्मशब्दानुपपत्तेश्च । प्राणंचेतिवाक्यंकिंचित्पूरयन्व्याचष्टे ॥ **एवमिति** ॥ विजानाम्यहंयत्प्राणोब्रह्मेत्युक्तौनिमित्तमाह ॥ **प्राणशब्दस्येति** ॥ अतोविजानाम्यहंयत्प्राणोब्रह्मेत्याह । ननुयथाप्राणशब्दस्यवायुरर्थःप्रसिद्धस्तथाकखशब्दयोरपिसुखज्ञानार्थत्वंप्रसिद्धमेव । ततश्चकंचखंचनविजानामीतिकथमुक्तमित्यतआह ॥ **कखयोरिति** ॥ नकखशब्दयोरर्थापरिज्ञानेनकंचखंचनविजानामी त्याह । किंतुभिन्नार्थत्वशंकयैवेत्यत्रोत्तरवाक्यमवष्टंभकमाह ॥ **अतएवेति** ॥ अन्यथाकखशब्दार्थस्यैवनिरूपणीयत्वेनत योरैक्योक्तिरसंगतास्यादितिभावः । ऊचुरग्नयः ॥ ५ ॥ **ततश्चायंखंडार्थः** ॥ उपकोसलोनामतः । कमलायनस्यापत्यं

भा० । नैजानंदबलोद्रेकःकमित्युक्तोमनीषिभिः । बलज्ञानसमाहारःपूर्णःखमितिशब्दितः । तदात्मकःपरोविष्णुराकाशइतिकीर्तितः । एवंप्राणस्तथाकाशोब्रह्मणीद्वेप्रकीर्तितेइतिच । प्राणशब्दस्यवायुरर्थःप्रसिद्धः । कखयोर्भिन्नार्थत्वशंकयाकंचखंचनविजानामीत्याह । अतएवैक्याभिप्रायेणयद्वावकंतदेवखंयदेवखंतदेवकमित्यूचुः ॥ खं० १० ॥

उप० । उपकोसलोहवैकामलायनःसत्यकामेजाबालेब्रह्मचर्यमुवासतस्यहद्वादशवर्षाण्यग्नीन्परिचचारसहस्माअन्यानंतेवासिनःसमावर्तयꣳस्तꣳहस्मैवनसमावर्तयति ॥ १ ॥

कामलायनः । सत्यकामेजाबालेपूर्वोक्ते । ब्रह्मचर्यमुद्दिश्योवास । सतत्रगुरुकुलेतस्याचार्यस्याग्नीन्द्वादशवर्षाणिपरिचचार । सहस्माचार्योन्यानंतेवासिनश्छात्रान्स्वाध्यायंग्राहयित्वासम्यगावर्तयंस्तमुपकोसलमेकमेवनसमावर्तयतिस्महेत्याश्चर्यामहतांचित्त वृत्तिरित्याह ॥ १ ॥ तमाचार्यमाचार्यजायोवाच । ब्रह्मचारीतप्तश्चीर्णंतपाजातः । कथंकुशलंयथातथाग्नीन्परिचचारीत्पर्यचरत् । त्वमिमंनोपदिष्टवानेव । त्वातवाग्नयोप्यनेनसेविताःसंतोमापरिप्रावोचन् । इतःपरंवाप्रब्रूह्यस्माइति । एवंजायोक्तोपिसत्यकाम स्तस्माउपकोसलायाप्रोच्यैवप्रवासांचक्रेप्रोषितवान् ॥ २ ॥ सहोपकोसलोव्याधिनामानसेनदुःखेनानशितुमनशनंकर्तुंदध्रेमनः । तमनशनमनस्कमाचार्यजायोवाच । हेब्रह्मचारिन्नशानभुंक्ष्वकिन्नुकस्मात्कारणान्नाश्नासीति । एवमुक्तःसहोपकोसलोहोवाच । अ स्मिन्पुरुषेनानात्ययाःनानागतयःकामाःबहवोऽतःकामिताऽप्राप्तिनिमित्तव्याधिभिःप्रतिपूर्णोस्मि । अतोनाशिष्यामीत्युक्त्वाब्रह्म चारिणितूष्णींभूते ॥३॥ अथहाग्नयःकारुण्याविष्टाःसंतस्त्रयोपिसमूदिरेपरस्परमूचुः । तप्तोब्रह्मचारीयतःकुशलंयथाभवतितथा नोस्मान्परिचचारीत् । हंतेदानीमस्मैब्रह्मचारिणेवयंसर्वेप्रब्रवामपरापरब्रह्मविद्यामित्येवंप्रतिज्ञायतस्मैहोचुः ॥४॥ प्राणोब्रह्मबल रूपंब्रह्मेत्यपरब्रह्मोपदेशः । कमपराधीनबलानंदरूपंब्रह्म । खंतादृग्बलज्ञानरूपंब्रह्मेतिपरब्रह्मोपदेशः । एवमुक्तःसउपकोसलउवा

---

उप० । तंजायोवाचतप्तोब्रह्मचारीकुशलमग्नीन्परिचचारीन्मात्वाग्नयःपरिप्रावोचन्प्रब्रूह्यस्माइतितस्मैहाप्रोच्यैवप्रवासांचक्रे ॥२॥ सहव्याधिनाऽनशितुंदध्रेतमाचार्यजायोवाचब्रह्मचारिन्नशानकिंनुनाश्नासिसहोवाचबहवइमेऽस्मिन्पुरुषेकामानानात्ययाव्याधिभिःप्रतिपूर्णोस्मिनाशिष्यामीति ॥ ३ ॥ अथहाग्नयःसमूदिरेतप्तोब्रह्मचारीकुशलंनःपरिचचारीद्धंतास्मैप्रब्रवामेतितस्मैहोचुः ॥ ४ ॥ प्राणोब्रह्मकंब्रह्मखंब्रह्मेतिसहोवाचविजानाम्यहंयत्प्राणोब्रह्मकंचतुखंचनविजानामीतितेहोचुर्यद्वावकंतदेवखंयदेवखंतदेवकमितिप्राणंचहास्मै तदाकाशंचोचुः ॥ ५ ॥ **दशमःखंडः** ॥ १० ॥

चह । यदुक्तंभवद्भिःप्राणोब्रह्मेतितदहंविजानामि । प्राणशब्दस्यवायुरर्थइतिप्रसिद्धत्वात् । कखयोर्भिन्नार्थत्वशंकयाकंचखंचतु विशेषाकारेणनविजानामीति ॥ अतएवैक्याभिप्रायेणतेहोचुः । यद्वावकंतदेवखंयदेवखंतदेवकमिति । श्रुतिःस्वयमाह ॥ प्राणंचेति । तेग्नयस्तदासंभूयोपदेशकालेस्माउपकोसलायप्राणंमुख्यप्राणाख्यंअपरंब्रह्मचाकाशंचपूर्तेराकाशनामकंविष्णवाख्यंप रंब्रह्मचोचुः । कंचखमित्युक्तंखंचाकाशमित्यनूद्यतइतिनदोषइति ॥ ५ ॥ दशमःखंडः ॥ १० ॥ एवमग्निभिःसंभूयोक्तांपरा परब्रह्मविद्यांनिरूप्येदानींपृथक्पृथगुक्तांपरब्रह्मविद्यामेवनिरूपयति ॥ अथेत्यादिनाखंडत्रयेण ॥ तत्रपृथिव्यग्निरन्नमादित्यइ तिममैताश्चतस्रस्तनवस्तत्रयएषआदित्येपुरुषोदृश्यतेसोहमस्मिगार्हपत्योग्निःयश्चगार्हपत्योग्निःसएवाहमादित्येपुरुषोस्मि । एवमा पोदिशश्चंद्रमानक्षत्राणीत्यादिकंव्याख्येयमितिव्याख्यानमसत् । ब्रह्मेत्यस्यानुवृत्तिसंभवेममैतास्तनवइत्यश्रुतकल्पनायोगात् । अन्यथोपनिषदोऽब्रह्मविद्यात्वापातात् । नचपृथिव्यादीनांजडानांवागार्हपत्यादितनुत्वेकिंचिन्मानं । अस्तिचतेषांब्रह्मत्वेसम्यङ् मानमित्याशंयेनागमेनैवतद्व्याचष्टे ॥ पृथुत्वादिति ॥ विस्तीर्णत्वात् । विष्णुरितिसर्वत्रानुवर्तते । चापिशब्दावितरेतरसमुच्चये । अंगंशरीरमप्रधानंजगद्वा । आदिरूपतःकारणरूपत्वादादौविद्यमानस्वरूपत्वाद्वेत्यर्थः । आदिशब्दाद्भवार्थेत्यप् । आपश्चआ पालनादेव । दिशश्चदेशनादेव । नतुतत्तदभेदेनेत्येवार्थः । नविद्यतेस्वस्मादन्योराजेत्यनन्यराजोयतस्ततः। चंद्रमाश्च । पूर्तिहेतु

भाष्य० । पृथुत्वात्पृथिवीविष्णुरग्निश्चाप्यंगनेतृतः । अन्नमत्तृत्वतोनित्यमादित्यश्चादिरूपतः । आपआपालनाच्चैवदेशनाद्दिशएवच । अनन्यराजोनक्षत्रमानंदत्वाच्चचंद्रमाः । प्राणोसौबलरूपत्वादाकाशःपूर्तिहेतुतः । द्यौःप्रकाशस्वरूपत्वाद्वेदनाद्विद्युदेवच ।

तोव्याप्तिहेतुतः। वेदनादेव। यएषआदित्ये यएषचंद्रमसि यएषविद्युतीतिवाक्यत्रयंगार्हपत्यादेरादित्यादेश्चैक्यमत्रोच्यतइतिव्या
ख्याननिरासायव्याचष्टे ॥ यइति ॥ सएवेतिशेषः। किमेवमंतर्याम्यैक्यपरत्वग्रहेण । गार्हपत्यादेर्जीवस्यादित्यादिजीवैक्यमे
वोच्यतइतिकिंनस्यादित्यतआह ॥ जीवैक्येति ॥ जीवैक्यपक्षेगार्हपत्यादिजीवानांआदित्यादिजीवानांचैक्यपक्षे । यद्युक्तरीत्या
जीवैक्यमत्रविवक्षितंस्यात्तर्हियएषआदित्यःपुरुषइत्यादिप्रथमानिर्देशःस्यात्। नत्वादित्यइत्यादिसप्तमीनिर्देशः । तेनादित्यादि
स्थपुरुषैक्यलाभेपिनादित्याद्यैक्यंलभ्यते । आदित्यादिशब्दानांचतत्तन्मंडलपरत्वांगीकारेवृथामुख्यार्थत्यागइतिभावः। यद्वाआ
दित्येपुरुषइत्याद्युक्तब्रह्मणोजीवैक्यपक्षे। यच्चोक्तंपृथिव्यग्निरन्नमादित्यआपोदिशोनक्षत्राणिचंद्रमाइत्यादावुक्ताएवादित्यचंद्रविद्यु
तोयएषआदित्यइत्यादिनोत्तरवाक्येकथ्यंतइति तदसदितिभावेनाह॥ पृथिवीति॥ सप्तम्यर्थएकःप्रथमार्थश्चैकइतिद्वौप्रतीयेते। त
स्मान्नपूर्ववाक्योक्तएवात्रोक्तइतिभावः। यद्वातर्हिपृथिव्यग्निरन्नमादित्यइत्यादिकंपरमित्ययुक्तं।तत्रादित्यचंद्रमोविद्युच्छब्दानांश्रव
णात्।तेषांचोत्तरवाक्येजीवपरत्वात्।नचैकस्मिन्नेवप्रकरणेज्ञापकंविनैकेनैवशब्देनभिन्नार्थग्रहणंयुक्तमित्यतआह॥पृथिवीति॥ यत
एवंभिन्नविभक्तिनिर्दिष्टत्वंज्ञापकमस्ति अतोत्रप्रकरणेपूर्वोत्तरादित्यादिशब्देननैकंवस्तूच्यतइत्यर्थः। किंचविशिष्टजीवैक्यंत्वत्पक्षे
पिनास्ति।लक्षणयाचैतन्यैक्यांगीकारस्त्वगतिकागतिरितिभावेनोपसंहरति ॥ अतइति ॥ एवंबाधकसद्भावात्सोहमस्मीतिवाक्येन

भाष्यं०। यःसूर्यसोमविद्युत्सुतत्तन्नामाहरिःपरः । अहेयत्वादहंनामागार्हपत्यादिसंस्थितइतितत्वसंहितायां । जीवैक्यपक्षेआदित्येपुरुषंचंद्रमसिविद्युतीतिभेदव्यपदेशो
नयुज्यते । पृथिव्यग्निरन्नमादित्यआदित्येपुरुषइत्यादिनाआदित्यादिशब्दवाच्यौसप्तम्यर्थःप्रथमार्थश्चद्वौप्रतीयेते । अतोनैक्यमुच्यते ।



न जीवैक्यमुच्यतइत्यर्थः। किंचचैतन्यैक्यमपिसो हमस्मीतिपूर्ववाक्येनैवबोधितमितिसएवाहमस्मीतिव्यर्थं।नहियद्येनाभिन्नंतत्तेन
भिन्न मितिसंभवतीतिभावेनस्वपक्षेतंदोषमुद्धरति ॥ सएवेति ॥ सत्यपिधर्मविदुरयोरैक्येस्त्येवविशेषः परस्परगताशेषाननुसंधा
नरूपः । तत्रसोहमस्मीतिगार्हपत्याद्यंतर्यामिणःसूर्याद्यंतर्याम्यैक्योक्तौधर्मविदुरादिसाधारण्यशंकायांतन्निरासायसएवाहमस्मीति
सावधारणोक्त्योक्तसर्वविशेषविनिर्मुक्तमेवैक्यंबोध्यतइत्यर्थः।तर्हिसएवाहमस्मीतिसावधारणैक्योक्त्यैवसर्वविशेषविनिर्मुक्ताभेदसि
द्धेः सोहमस्मीतिपूर्वंव्यर्थमित्यतआह ॥ पूर्वमिति ॥ अंतर्याम्यभेदेंतर्यामिण्यहमादिशब्दप्रवृत्तिंस्मारयति ॥ अहमिति ॥
प्रसिद्धिविरोधइत्यतआह ॥ तत्संबंधादिति ॥ समाकर्षाधिकरणन्यायेनेतिभावः । तस्माद्वेदगताअहमस्म्यादिकाःशब्दाः
हरावंतर्यामिरूपएववर्तंते । मुख्यासंभवएवामुख्यस्यग्राह्यत्वादितिभावः । एतेनप्राणोब्रह्मकमितिविद्यांपृथिव्यग्निरन्नमादित्यइ
त्यादिविद्यांचोक्त्वोत्तरखंडेऽग्निभिरुपकोसलैषासोम्यतेऽस्मद्विद्याचात्मविद्याचेत्युक्तत्वेनाद्याब्रह्मविद्याद्वितीयाग्निविद्यैवेतियुक्त
मित्यपिनिरस्तं । अस्मद्विद्येत्यस्यांतर्यामिविद्येत्यर्थोपपत्तेः । एवंतर्ह्यात्मविद्येतिपृथगुक्तिविरोधः । अंतर्यामिणोप्यात्मत्वादित्यत
आह ॥ अस्मच्छब्दोदितइति ॥ जनार्दनइतिद्विविधं । उपकोसलइतितादर्थ्येसप्तमी । किंचपृथिव्यग्निरित्यादिविद्यामु
क्त्वाऽपहतेपापकृत्यामित्यादिनातज्ज्ञानान्मोक्षःश्रूयते । नह्यग्निज्ञानान्मोक्षउपपद्यते । नन्वपहतपापकृत्यत्वादीनांमुख्यानांसं

भा०। सएवाहमस्मीत्यंतर्यामिणोःसर्वविशेषाभावज्ञापनार्थं । पूर्वंसोहमस्मीत्यभेदेतात्पर्याधिक्यज्ञापनाय । अहमस्म्यादिकाःशब्दाअंतर्यामिणिमुख्यतः। तत्संबंधा
ज्जीवगाश्चतस्माद्वेदगताहरौ । अस्मच्छब्दोदितोंतःस्थआत्माव्याप्तोजनार्दनः । अग्नयोद्विविधंविष्णुमवोचन्नुपकोसलइतिसामसंहितायां ।

सारिण्यसंभवेपिनास्यापरपुरुषाःक्षीयंतइत्युक्तं भृत्यवत्त्वंसंभवत्येवेत्यतस्तदपिमुक्तज्ञापकतयैवानूद्यव्याचष्टे ॥ नास्येति ॥ द्वौ नञाविति न्यायसाम्येनभृत्यवानेवेत्युक्तं । नतुकदाचिदभृत्यःसंसारिणस्तुकदाचिदभृत्यत्वदर्शनान्ननियमइतिभावः । स्वर्गादिलोकित्वंसंसारिणोपीत्यतस्तदपिमुक्तज्ञापकतयाव्याचष्टे ॥ लोकीति ॥ मुख्यासंभवएवामुख्याश्रयणमितिभावः ॥ १ ॥ कोनु माऽनुशिष्याद्भोइतीहावेवनिह्नुतइतिवाक्यस्यकोनुमानुशिष्यात्त्वयिप्रोषितइत्यपनिह्नुतइवेतिव्याख्यानमसत् । गुरुंप्रतिसोल्लुंठवचनायोगादितिभावेनवाक्यभेदमंगीकृत्येहावेवेतिपाठमनुसृत्यइहावेइत्यत्रविग्रहंदर्शयति ॥ इहचेति ॥ इहापेतिशाखांतरपाठस्याप्ययमेवार्थः । पदार्थमाह ॥ इहेति ॥ वाक्यार्थमाह ॥ मानुषेति ॥ पूर्वंबहुवचनप्रयोगेपिअत्रद्विवचनप्रयोगोजात्यभिप्रायेणनिह्नुतइतिद्विवचनश्रवणात् । भगवंतमित्यध्याहारः । वशब्दार्थःएवेति । तथाचकोनुमानुशिष्यादित्यस्यकोवामानुष्योवाऽसुरोवामामनुशिष्यात् । नकोपीत्यर्थइतिभावः । तर्हिकोनुत्वानुशशासेत्यस्यकिमुत्तरंजातमित्यतःपरिशेषसिद्धमर्थमाह ॥ अतइति ॥ केतेदेवाइत्याकांक्षायांइमेनूनमित्यादिकंप्राप्तमितिभावेनेदृशाअन्यादृशाइतिपदार्थावाह ॥ ईदृशाइतीति ॥ ईदृशाइत्यस्यपरिदृश्यमानभूताग्निवत्वर्णतोज्वालावर्णाइत्यर्थइतिशेषः । अन्यादृशाःभूताग्निविलक्षणाइतिपदार्थमभिप्रेत्यवैलक्षण्यमेवोक्तंकरेति । एतेनेमेऽग्नयोमयापरिचरिताउक्तवंतोनूनं । यतस्त्वांदृष्ट्वावेपमानाइवेदृशादृश्यंते । पूर्वमन्यादृशाःसंतइति

भा० । नास्यापरपुरुषाःक्षीयंतेभृत्यवानेवभवति । लोकीभगवल्लोकीभवति । इहचअवचइहावे । इहेतिमनुष्यलोकस्थाउच्यंते अवेतिपातालस्थाः । मानुषासुरौभगवंतंनिह्नुतएवनवक्तुंसमर्थौ । अतोदेवाएवमामनुशासुरित्यर्थः । ईदृशाइतिवर्णतोज्वालावर्णाइति । अन्यादृशाश्चकरशिरश्चरणादिमंतः ।

व्याख्यानमसदित्युक्तंभवति । उपकोसलेनस्वगुरुंप्रतिनिश्चितार्थस्यैववक्तव्यत्वेनानुभवचौर्यायोगात् । अग्नीनांसत्यकामादुत्तम त्वेनतच्छिष्यमुपदिश्यापिवेपमानत्वासंभवाच्च । तथाचोक्तं । ऋषिभ्यस्तूत्तमादेवाइति । पृथिव्यग्निरन्नमादित्यइत्यादीनिनामा निविष्णोरेवेत्यत्रयुक्तिमाह ॥ चंद्रादीति ॥ विष्णोरेवात्रोक्ताग्निपृथिव्यादिसर्वनामानि । अत्रचंद्रादित्यविद्युच्छब्दानांदेवता वाचकानांश्रवणात् । विष्णोश्चंद्रादिसर्वदेवतानामवत्त्वात् । योदेवानामितिश्रुतेरित्यर्थः । यद्यपिनामानिसर्वाणीतिश्रुतेरेवोदा हरणंयुक्तं । तथापियुक्तिकथनार्थमेवमुक्तं । आदित्यशब्दस्यादिमत्त्वेपिमध्यवाक्यस्थश्चंद्रशब्दग्रहणंपूर्वोत्तरसंग्रहाभिप्रायेण । पृथिव्यादिनाम्नांदेवतावाचकत्वविवादाभिप्रायेणेदं । यद्वा पृथिव्यादिसर्वनामानिविष्णोरेवेत्यत्रश्रुतिमेवाह ॥ चंद्रादीति ॥ तथाचविष्णोरेवपृथिव्यादिसर्वनामानीतिप्रतिज्ञा तत्रहेतुःश्रुतेश्चंद्रादिसर्वनामवत्त्वात् । सर्वनामवत्त्वावगमादितियोजना ॥खं० ११–१४॥नन्वंतरउपपत्तेरित्युक्तन्यायेनाक्षिस्थस्यविष्णुत्वादेतस्मिन्नकिंचनशिष्यतीत्युक्तमसंगत्वंतस्यैव । ततश्चतद्यद्यप्यस्मिन्स र्पिर्वेतिवाक्येचक्षुषोऽसंगत्ववचनमसंगतमित्यतआह ॥ असंगेति ॥ अनेनयस्मादेवंपुरुषोक्षणिविद्यतेतत्तस्मादास्मिंश्चक्षुषियदिस र्पिर्वोदकंवाकश्चित्सिंचतितर्हिवर्त्मनीप्रत्येवगच्छतिनचक्षुःस्पृशतीतिवाक्यंव्याख्यातं । उक्तमर्थंप्रमाणेनद्रढयति ॥ यत्स्थानत्वा दिति ॥ अनेनवामनएवचक्षुस्थइत्युक्तंभवति । इमंमानवमावर्तंनावर्ततइत्यस्यइमंमानवंमनुसंबधिनमावर्तंसंसारंनावर्ततइत्य

भा० । चंद्रादिसर्वनामवत्त्वात् । योदेवानांनामधाएकएवेतिश्रुतेर्विष्णोरेवसर्वनामानि असंगभगवत्स्थानत्वाच्चक्षुषोसंगत्वमुच्यते । यत्स्थानत्वादिदंचक्षुरसंगसर्ववस्तुषु । तस्मैनमोभगवतेवामनायपरात्मनइतिमहाकौर्मे ।

र्थइत्यसत् । मनुसंबंधिसंसाराप्राप्तावप्यन्यसंसारप्रसक्तेरितिभावेनानूद्यव्याचष्टे ॥ इममिति ॥ यत्रसंसारे । अत्रआवर्तश ब्दोयदिभावेघञंतः।तदागमकत्वाद्व्यधिकरणोबहुव्रीहिः । यद्यधिकरणेघञंतःतदाषष्ठीतत्पुरुषः।उभयत्रापिसमासेछांदसोमुमागम इत्यवधेयं । चक्षुस्थभगवज्ज्ञानिनःसर्वथासंसारप्राप्त्यभावेप्रमाणंचाह ॥ चक्षुस्थमिति ॥ ततश्चायंखंडपंचकार्थः ॥ अथसंभूयोपदेशानंतरमेनमुपकोसलंगार्हपत्योऽनुशशास । किमिति । पृथिव्यग्निरन्नमादित्यइति । कंब्रह्मेत्यतोनुवृत्तस्यब्रह्मेत्य स्यसर्वत्रान्वयः । पृथुत्वादिनापृथिव्यादिनामकंब्रह्मेत्यर्थः । एवंव्याप्तात्मविद्यामुक्त्वास्वांतर्यामिविद्यामाह ॥ यइति॥ आदि त्येयएषपुरुषःपूर्णषड्गुणोभगवान्दृश्यतेदिव्यदृष्ट्यासोहमहेयत्वादहंनामागार्हपत्यस्थोस्मि।आदित्यस्थस्यमदंतर्यामिणश्चनविदुर धर्मादिवदभेदः । किंतुनकोपिविशेषइतिभावेनाह ॥ सएवेति ॥ १ ॥ उपासकस्यफलमाह ॥ सइति ॥ योधिकारीएतं व्याप्तमंतर्यामिणंचविष्णुंविद्वानुपास्ते । सपापकृत्यामपहतेलोकीभगवल्लोकीभवति। अतएवसर्वमायुरेति । ज्योक्सर्वज्ञःसन्जीव ति । अस्योपासकस्यापरपुरुषाःभृत्याःनक्षीयंते । भृत्यवानेवभवति । भृत्याशासनमेवाह ॥ उपेति ॥ यःएतमेवंविद्वानुपास्ते ।

भा० । इमंमानवमावर्तंनावर्तंते । मानवायत्रावर्ततेसमानवावर्तःतंमानवावर्तंप्रतिनावर्तंते । चक्षुःस्थंवामनंवेदसपुनर्नैवजायते । मुक्तोदुस्तरसंसाराद्वामनंप्राप्नुते ऽचिरादितिच ॥ १५ ॥

उप० । अथहैनंगार्हपत्योनुशशासपृथिव्यग्निरन्नमादित्यइतियएषआदित्येपुरुषोदृश्यतेसोहमस्मिसएवाहमस्मीति ॥ १ ॥ सयएतमेवंविद्वानुपास्तेऽपहतेपापकृत्यांलोकी भवतिसर्वमायुरेतिज्योग्जीवतिनास्यापरपुरुषाःक्षीयंतउपवयंतंभुंजामोस्मिंश्चलोकेऽमुष्मिंश्चयएतमेवंविद्वानुपास्ते ॥ २ ॥ एकादशःखंडः ॥ ११ ॥



तंवयंसर्वेअस्मिंश्चामुष्मिंश्चलोकेउपभुंजामःउपजीवामइति । एवमुत्तरखण्डद्वयमपिव्याख्येयं ॥ ६ ॥ एकादश–द्वादश–त्र योदशखंडाः ॥ ११ ॥ १२ ॥ १३ ॥ एवंसंभूयप्रत्येकंचोपदिश्यतेहोचुः हेसोम्योपकोसलतेतुभ्यमेषास्मद्विद्यांतर्यामिविद्यात्म विद्यासर्वगतात्मविद्याचोपदिष्टा । एषातुज्ञेयैव । नतुत्वयोपास्या । अतआचार्यएवतेतवगतिंगम्यतइतिगतिरुपास्यंमार्गेगम्यंच वक्तेति । आजगामहास्याचार्यः । तमाचार्योभ्युवाद । उपकोसला ३ इति । भगवइतिहप्रतिशुश्रावोपकोसलः । हेसोम्य तेमुखंब्रह्मविदोमुखमिवसुप्रसन्नंभातिकोनुत्वानुशशासनुवितर्के। देवोवान्योवेत्युक्तमाह ॥ भोमामांकोनुमनुष्योऽसुरोवानुशिष्या त् । नकोपि । कुतःइहचावचेहावे । इहेतिमनुष्यलोकस्थउच्यते । अवेतिपातालस्थः । मानुषासुरौभगवंतंनिह्नुतएवनवक्तुंसम र्थौ । अतोदेवाएवमामनुशासुरित्यर्थः । केतेदेवाइत्यतआह ॥ इमइति ॥ ईदृशाःवर्णतःपरिदृश्यमानाग्निवत्ज्वालावर्णाःअ न्यादृशाःकरशिरश्चरणादिमंतः इमेध्यक्षाःनूनंनिश्चयेनमामनुशशासुः । वेदपुरुषःस्पष्टंतदुपदेष्टृनाह ॥ इतीति ॥ इत्यनेनप्र

उप० । अथहैनमन्वाहार्यपचनोऽनुशशासापोदिशोनक्षत्राणिचंद्रमाइतियएषचंद्रमसिपुरुषोदृश्यतेसोहमस्मिसएवाहमस्मीति ॥ १ ॥ सयएतमेवंविद्वानुपास्तेऽपहतेपाप कृत्यांलोकीभवतिसर्वमायुरेतिज्योग्जीवतिनास्यापरपुरुषाःक्षीयंतउपवयंतंभुंजामोस्मिंश्चलोकेऽमुष्मिंश्चयएतमेवंविद्वानुपास्ते ॥ २ ॥ खंडः ॥ १२ ॥ अथहैनमाहवनीयोऽनुश शासप्राणआकाशोद्यौर्विद्युदितियएषविद्युतिपुरुषोदृश्यतेसोहमस्मिसएवाहमस्मीति ॥ १ ॥ सयएतमेवंविद्वानुपास्तेऽपहतेपापकृत्यांलोकीभवतिसर्वमायुरेतिज्योग्जीवतिनास्याप रपुरुषाःक्षीयंतउपवयंतंभुंजामोस्मिंश्चलोकेऽमुष्मिंश्चयएतमेवंविद्वानुपास्ते ॥ २ ॥ खंडः ॥ १३ ॥ तेहोचुरुपकोसलैषासोम्यतेस्मद्विद्याचात्मविद्याचाचार्यस्तुतेगतिंवक्तेत्याजगाम हाचार्यस्तमाचार्योभ्युवादोपकोसला इति ॥ १ ॥ भगवइतिहप्रतिशुश्रावब्रह्मविदइवसोम्यतेमुखंभातिकोनुत्वानुशशासेतिकोनुमानुशिष्याद्भोइतीहापवेवनि ३ ह्नुतइमेनूनमीदृशाअ न्यादृशाइतीहाग्नीनभ्यूदेकिंनुसोम्यकिलतेऽवोचन्निति ॥ २ ॥

कारेणेहाचार्यसमीपेअग्नीन्स्वात्मोपदेष्टॄनभ्यूदउपकोसलः । एवमुक्तआचार्योहेसोम्यतेग्नयःकिलकिन्ववोचन्नित्युवाच ॥ २ ॥ इदमितिहप्रतिजज्ञउपकोसलः । अग्निभिरुक्तमनूदितवानित्यर्थः । एवमुक्तःसत्यकामोहेसोम्यतेग्नयोलोकान्सर्वाधारान्प्राणस र्वगतांतर्यामिरूपानेवावश्यंवेद्यान्किलावोचन् । तेतुत्वयाज्ञेयाएव । नोपास्याः । नवागम्याः । अहंतुतेतवतद्वक्ष्यामियदुपास्यं येनपथायत्गम्यंच । वक्ष्यमाणंस्तौति ॥ यथेति ॥ एवंविदिवक्ष्यमाणापरोक्षज्ञानिनि । ब्रवीतुभगवानित्युक्तस्तस्मैहोवाच ॥ ३ ॥ चतुर्दशः खंडः ॥ १४ ॥ यएषोक्षण्यंतःपुरुषोदृश्यतेदिव्यदृष्टचैषआत्मावामनाख्यइतिहोवाच । एतदमृतंस्वतोनित्यमुक्तंअ भयंस्वतोभयशून्यमेतद्ब्रह्मगुणपूर्णमेतस्मिन्भगवतिनकिमपिश्लिष्यति । असंगोसावित्यर्थः । यत्स्थानत्वाच्चक्षुषोप्यसंगत्वंकिंत स्येतिभावेनचक्षुषोऽसंगत्वमाह ॥ तद्यदीति ॥ यद्यस्मादेवमसंगःपुरुषोक्षणिविद्यतेतत्तस्मादस्मिंश्चक्षुषियदिसर्पिर्वोदकंवाकश्चि त्सिंचतितर्हिवर्त्मनीप्रत्येवगच्छति । नचक्षुःस्पृशतीत्यर्थः ॥ १ ॥ एवंभगवतःस्थानशक्तिमभिधायस्वरूपशक्तिंचाह ॥ एत मिति ॥ एतंचाक्षुषंवामनाख्यंभगवंतंसंयद्वामइत्याचक्षतेविद्वांसः । कुतः हियस्मादेतंसर्वाणिवामानिसौंदर्याण्यभिसंयंति । प्र विशंतितथोपासकस्यानुरूपंफलमाह ॥ सर्वाणीति ॥ एषएवचाक्षुषःपुरुषोमुख्यतोवामनिरित्युच्यते । कुतःयस्मादेषसर्वाणि

---

उप० । इदमितिहप्रतिजज्ञेलोकान्वावकिलसोम्यतेऽवोचन्नहंतुतेतद्वक्ष्यामियथापुष्करपलाशआपोनश्लिष्यंतएवमेवंविदिपापंकर्मनश्लिष्यतइतिब्रवीतुमेभगवानितितस्मैहो वाच ॥ ३ ॥ **चतुर्दशः खंडः** ॥ १४ ॥ यएषोंतरक्षणिपुरुषोदृश्यतएषआत्मेतिहोवाचैतदमृतमभयमेतद्ब्रह्मेतस्मिन्नकिंचनश्लिष्यतितद्यद्यप्यस्मिन्सर्पिर्वोदकंसिंचतिवर्त्मनी एवगच्छति ॥ १ ॥ एत꣱संयद्वामइत्याचक्षतेएतꣲ हिसर्वाणिवामान्यभिसंयंतिसर्वाण्येनंवामान्यभिसंयंतियएवंवेद ॥ २ ॥

वामानिरमादिगतसौंदर्याणिनयतिप्रापयति । पूर्ववत्फलमाह ॥ सर्वाणीति ॥ सर्वाणिस्वावरगतानि ॥ २ ॥ एषएवचाक्षुषः पुरुषोभामनिरित्युच्यते । कुतः हियस्मादेषसर्वेषुभातिदीप्यते । सर्वेष्वितिफलं ॥ ३ ॥ ४ ॥ एवमुपकोसलोपास्यंभगवद्रूपंनिरूप्यतद्विद्याफलत्वेनसमार्गब्रह्मप्राप्तिंचाक्षुषपुरुषवेत्तुर्महिमानंप्रकाशयन्निरूपयति ॥ अथेत्यादिना ॥ अथेत्यर्थांतरे । यदुचयद्यपिअस्मिन्ज्ञानिनिमृतेशव्यंशवसंबंधिकर्मकुर्वंत्येवतदीयाःयदुचनैवकुर्वंति । तथापितेज्ञानिनःसर्वथास्वज्ञानप्रसन्नभगवत्सामर्थ्यात् । हृदयाग्रप्रज्वलनप्रकाशितद्वारेणब्रह्मनाड्यादेहादुत्क्रांताअर्चिषमर्चिर्नामकमूर्ध्वलोकंसंभवंत्येवप्राप्नुवंत्येव । अत्राग्निर्ज्योतिरितिद्वैधैवार्चिषःइत्युक्तमनुसंधेयं । तत्रकंचनकालंस्थित्वातेनपूजिताःअर्चिषोर्चिर्लोकादातिवाहिकाख्यवायुलोकंप्राप्यततोऽहरभिमानिदेवतालोकंप्राप्नुवंति । अह्नःआपूर्यमाणपक्षंपूर्वपक्षाभिमानिदेवतालोकंआपूर्यमाणपक्षाद्गच्छन्यान्षण्मासानुदङ्ङेत्यादित्यस्तान्मासानुत्तरायणाभिमानिदेवतालोकंमासेभ्यस्तेभ्यःसंवत्सराभिमानिलोकंसंवत्सरात्तटिद्वरुणप्रजापतिप्राप्तिद्वाराऽऽदित्यमादित्याच्चंद्रमसंचंद्रमसोवैश्वानरेंद्रध्रुवद्वाराविद्युतंविद्युन्नाम्नींभारतींप्राप्नुवंति । ततस्तस्याःपुरुषोभर्तामानवोमननान्मनुर्भगवांस्तस्यायंप्रियभृत्योमुख्यवायुस्तंगच्छंति॥५॥सःवायुरेनान्स्वप्राप्तान्प्रतीकालंबनान्कार्यंब्रह्म अप्रतीकालंबनान्परंब्रह्मगमयति ।

---

उप० । एषउएववामनिरेषहिसर्वाणिवामानिनयतिसर्वाणिवामानिनयतियएवंवेद ॥ ३ ॥ एषउएवभामनिरेषहिसर्वेषुलोकेषुभातिसर्वेषुलोकेषुभातियएवंवेद ॥ ४ ॥ अथयदुचैवास्मिञ्छव्यंकुर्वंतियदुचनार्चिषमेवाभिसंभवंत्यार्चिषोहरह्नआपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षड्डुदङ्ङेतिमासांस्तान्मासेभ्यःसंवत्सरꣳसंवत्सरादादित्यमादित्याच्चंद्रमसं चंद्रमसोविद्युतंतत्पुरुषोमानवः ॥ ५ ॥ सएनान्ब्रह्मगमयत्येषदेवपथोब्रह्मपथएतेनखलुप्रतिपद्यमानाइमंमानवमावर्तंनावर्तंतेनावर्तंते ॥ ६ ॥ खं० ॥ १५ ॥

ज्ञानिनोदेवयानब्रह्मयानाख्यमार्गांतरोक्तेःकथमेतदित्यतआह ॥ **एषइति** ॥ देवपथोब्रह्मपथइत्येषएवोच्यते । मार्गांतरंवाव्या
वर्तयति ॥ एषइति ॥ देवैरधिष्ठितःपंथादेवपथः ब्रह्मप्राप्तिहेतुःपंथाःब्रह्मपथः । एषएवनत्वन्योस्ति । एवंब्रह्मप्राप्तस्यपुनःसंसारप्रा
प्तिरस्तिकिं नेत्याह ॥ **एतेनेति** ॥ एतेनखलुमार्गेणपरमपरंवाब्रह्मप्रतिपद्यमानाःइमंमानवमावर्तंमानवायत्रावर्ततेसमानवावर्तःसं
सारः तंमानवावर्तंनावर्ततइत्यर्थः॥ **पंचदशःखंडः** ॥१५॥ वायुर्वावसंवर्गःप्राणोब्रह्मेत्यपरब्रह्मविद्योक्ता।तद्विषयंविद्यांतरमाह॥ए
षहेत्यादिना ॥ क्रियाकलापरूपत्वाद्यज्ञस्यैषहवैयज्ञोयोयंपवतइतिकथमुक्तमित्यतआह ॥**यज्ञेति** ॥ यज्ञाख्यत्वेनिमित्तंयज्ञाभिमा
नीयज्ञेप्रतिष्ठितइति। यदेषयन्निदंसर्वंपुनातितस्मादेषएवयज्ञइतियज्ञशब्दनिर्वचनरूपंवाक्यंव्याचष्टे ॥ **यन्नयमिति** ॥ अस्तुयइत्य
स्ययन्गच्छन्नित्यर्थः। यातेर्गत्यर्थत्वप्रसिद्धेः। ज्ञइत्यस्यपावनाख्यशुद्धभावःकथमर्थइत्यतोधातुंपठति॥ **ज्ञेति** ॥ धातोरितिशेषः। धा
तोर्ज्ञशब्दःपावनार्थोवगम्यतेयतइत्यर्थः । तस्यमनश्चवाक्चवर्तनीइत्येतत्वाङ्मनसयोर्मार्गत्वमुच्यतइत्यन्यथाप्रतीतिनिरासाय
व्याचष्टे ॥ **तत्पादाविति** ॥ सयथैकपादित्युभयपादितिचदृष्टांतबलादितिभावः। कःपादःकुत्रस्थितइत्यतस्तद्दर्शयन्नेवतयोरन्यत
रांमनसासंस्करोतिब्रह्मेत्येतद्व्याचष्टे ॥ **दक्षिणइति** ॥ वाचाहोताध्वर्युरुद्गातान्यतरामित्येतद्व्याचष्टे ॥**होत्राद्याइति** ॥ तर्हिंसयत्रो
पाकृतइत्यारभ्यहीयतेन्यतरेत्यंतवाक्येनवायुपादलोपःकथमुच्यतइत्यतआह ॥ **तस्मादिति** ॥ मौनेनपूजकत्वादित्यर्थः। यदंतरा

भा० । यज्ञाभिमानीयज्ञाख्योवायुर्यज्ञेप्रतिष्ठितः । ज्ञशुद्धभावइत्यस्माद्यन्नयंपावयेद्यतः । अतोवायुर्यज्ञनामातत्पादौवाङ्मनःस्थितौ । दक्षिणोस्यमनःसंस्थोब्रह्मार्त्विक्तस्य पूजकः । होत्राद्यावाचिसंस्थस्यवामपादस्यपूजकाः । तस्मात्प्रातरनूवाकपरिधान्योर्यदंतरा । ब्रह्माचेदुत्सृजेद्वाचंयज्ञपाल्लोपकृद्भवेत् ।



तन्मध्ये। ननुवायुपादमुपक्रम्ययज्ञपादस्यलोपकत्वकथनमसंगतमित्यतआह ॥ **वागिति** ॥ प्रतिमापादलोपेदेवतापादलोपोपचारइ
तिभावः । अथयत्रोपाकृतइत्यादेस्तात्पर्यमाह॥**ध्यायन्निति**॥ ध्यायन्नेवहरिंचेत्यनेनास्याविद्यायाःशास्त्रदृष्ट्याभगवत्परत्वमुक्तंभव
ति ॥ खं० ॥ १६ ॥ योयंपवतेमुख्यवायुरेषयज्ञोयज्ञनामकोयज्ञाभिमानीयज्ञेस्थितः । हवाइतिश्रुत्यादिप्रसिद्धिंदर्शयति । वायौ
यज्ञशब्दंनिर्वक्तुंवायुस्वभावंनिरूपयति ॥ **एषइति** ॥ एषवायुर्यन्गच्छन्निदंयोग्यंसर्वंपुनातिशुद्धंकरोति । किंततइत्यतआह ॥
**यदिति** ॥ यद्यस्मात्एषःयन्निदंसर्वंपुनातितस्मादेषएवयज्ञोयज्ञाख्योमुख्यतःयज्ञमूर्तेर्वायोःपादावस्थितिस्थानमाह ॥ **तस्येति** ॥
तस्यवायोःवर्तनीवर्ततेगच्छत्याभ्यामितिवर्तनीपादौमनश्चवाक्चऋत्विजांमनोवाक्संस्थौ । तत्रदक्षिणोमनस्थोवामोवाक्संस्थ
इतिज्ञेयं ॥ १ ॥ तयोःपूजकानाह ॥ **तयोरिति** ॥ तयोःपादयोर्मध्येऽन्यतरांवर्तनिंदक्षिणंपादंब्रह्माब्रह्माख्यऋत्विक्मनसाम
नोव्यापारेणमौनेनैवसंस्करोतिपूजयति । संस्कारइतिपाठेपूजकइत्यर्थः । होताध्वर्युरुद्गाताचेतित्रयोन्यतरांवर्तनिंवामपादंवाचामं
त्रोच्चारणेनैवसंस्कुर्वंति । ब्रह्मणःकदामौनंतद्भंगेचकिमित्यतआह ॥ **सइति** ॥ एवंमौनेनवायुपूजकत्वात्सब्रह्मायत्रयदाप्रात
रनुवाकेशस्त्रेउपाकृतेउपक्रांतेपरिधानीयायाःकर्मसमापिकायाऋचोजपादितियावत् । पुरापूर्वंव्यपवदतिवाचमुत्सृजेत् ॥ २ ॥

भा० । वाङ्मनःपादयज्ञाख्यप्रतिमोवायुरीरितः । ध्यायन्वायुंहरिंचैवततोब्रह्मामुनिर्भवेत् ॥ खं० ॥ १६ ॥

उप० । एषहवैयज्ञोयोयंपवतएषयन्निदंसर्वंपुनातियदेषयन्निदंसर्वंपुनातितस्मादेषएवयज्ञस्तस्यमनश्चवाक्चवर्तनी ॥ १ ॥ तयोरन्यतरांमनसासंस्करोतिब्रह्मावाचाहोताध्वर्युरुद्गातान्यतरांसयत्रोपाकृतेप्रातरनुवाकेपुरापरिधानीयायाब्रह्माव्यपवदति ॥ २ ॥

होत्राद्यास्तुअन्यतरामेववर्तनिंवाचासंस्कुर्वंति । तदान्यतरावर्तनिः दक्षिणःपादो हीयते । यज्ञपादस्यलुप्तत्वात् । यज्ञपादहा न्याभवमनर्थंसदृष्टांतमाह ॥ सइति ॥ सःवक्ष्यमाणोदृष्टांतोयथाएकपात्पुरुषोव्रजन्रिष्यतियथावैकेनचक्रेणवर्तमानोरथोरिष्य ति । एवमस्ययजमानस्ययज्ञोरिष्यतिनश्यति । यज्ञंरिष्यंतमनुयजमानोपिरिष्यति । यज्ञनाशेपियजमानस्याध्यक्षत्वात्कथमेत दित्यतआह ॥ सइति ॥ ३ ॥ यस्मादेवंब्रह्मणोमौनपरित्यागेऽनर्थोथतस्माद्यत्रयदाप्रातरनुवाकेउपाकृतेपरिधानीयायाःपूर्वं ब्रह्मनव्यपवदति । तदोभेएववर्तनीसंस्कुर्वंतिऋत्विजः । एवंचनहीयतेन्यतरा ॥ ४ ॥ किंततइत्यतःसदृष्टांतंततोभवंपुरुषार्थ माह ॥ सयथेति ॥ व्याख्यातप्रायं ॥ ५ ॥ षोडशःखंडः ॥ १६ ॥ अत्रप्रमादात्ब्रह्मादिऋत्विजांमौनादिनियमभंगेप्राय श्चित्तंव्याहृतिहोमरूपंव्याहृतिमहिमाझिधानपुरःसरमाह ॥ प्रजापतिरित्यादिना ॥ अप्रतिपत्तिविप्रतिपत्तिनिरासायाग्निंपृथि व्यावायुमंतरिक्षादादित्यंदिवइतिवाक्यंप्रमाणेनैवव्याचष्टे ॥ अग्निरिति ॥ सूर्यश्चेत्येतेत्रयः । प्रधानवायुग्रहणेवायोर्यजूंषीत्यु क्तमनुपपन्नमितिभावः । अग्नेर्ऋचइत्यादिवाक्यंव्याचष्टे ॥ अग्नेरिति ॥ भूरित्यृग्भ्यइत्यादिव्याचष्टे ॥ वराहेति ॥ तेषांरसा

---

उप० । अन्यतरामेववर्तनिꣳसंस्कुर्वंतिहीयतेन्यतरासयथैकपाद्व्रजन्रथोवैकेनचक्रेणवर्तमानोरिष्यत्येवमस्ययज्ञोरिष्यतियज्ञꣳरिष्यंतंयजमानोनुरिष्यतिसइष्ट्वापापीयान्भवति ॥ ३ ॥ अथयत्रोपाकृतेप्रातरनुवाकेनपुरापरिधानीयायाब्रह्माव्यपवदत्युभेएववर्तनीसꣳस्कुर्वंतिनहीयतेन्यतरा ॥ ४ ॥ सयथोभयपाद्व्रजन्रथोवोभाभ्यांचक्राभ्यांवर्तमानःप्रति तिष्ठत्येवमस्ययज्ञःप्रतितिष्ठतियज्ञंप्रतितिष्ठंतंयजमानोनुप्रतितिष्ठतिसइष्ट्वाश्रेयान्भवति ॥ ५ ॥ खं० ॥ १६ ॥

भा० । अग्निर्नासिक्यवायुश्चसूर्योलोकरसास्त्रयः । अग्नेरसस्तुऋग्वेदमानीब्रह्माप्रकीर्तितः । नासिक्यवायोस्तुरसोयजुर्वेदात्मकोहरः । सामवेदाभिमानीतुवायुःसूर्यरसः स्मृतः । वराहसिंहकपिलास्तेषांभूरादिनामकाः ।

इत्यनुवर्तते । तद्यदुक्तइत्यादिपर्वशेषतात्पर्यमाह ॥ व्याहृतिभिरिति ॥ ततोव्याहृतीनांभगवन्नामत्वात् । उदक्प्रवणोय ज्ञइत्यत्रयज्ञस्योदीचीदिक्प्रवणत्वमुच्यतइतिप्रतीतिनिरासायतदनूद्यव्याचष्टे॥ उदगिति ॥ प्रावण्यस्यचेतनधर्मत्वेनयज्ञस्यतद पिकथमित्यतआह ॥ ऊर्ध्वेति ॥ यतोयतआवर्ततेतत्तद्गच्छतीत्येतद्व्याहतिपरिहारायवृत्तौगमनेचनिमित्तंदर्शयन्व्याचष्टे ॥ यज्ञ स्येति ॥ स्थानात्यज्ञकरणेनप्राप्तुंप्रसक्तादितिशेषः । ब्रह्मैवैकर्त्विंक्कुरूनश्वाभिरक्षतीत्येतत्कुरूनित्यस्यदेशविशेषपरत्वप्रतीतिंनि वारयन्संगतत्वेनव्याचष्टे ॥ तदिति ॥ तत्तस्मादेवंविदोब्रह्मणएवावृत्तस्थानप्रापणसमर्थत्वादित्यर्थः । एकएवब्रह्माख्यर्त्विक् कर्तुरेकत्वाद्बहुवचनंकथमित्यतउक्तंयजमानादीनिति । वाक्यशेषेतथाश्रवणादितिभावः । योद्धुमारूढाअश्वावडवायथाभिरक्ष तीत्यसत् । बह्वश्रुतकल्पनापत्तेः । एवंसतिरक्षतीत्यनंतरमेवास्यवक्तव्यत्वाच्च । अतोब्रह्मणएवेदंविशेषणमितिभा वेनतदनूद्यव्याचष्टे ॥ अश्वेति ॥ बाधकवशाद्रूढित्यागइतिभावः । आशुज्ञानीझडितियज्ञभंगानुसंधानवानित्यर्थः । तदेवोपपादयन्नश्वेत्यस्यज्ञानित्वार्थत्वेधातुंपठति ॥ वेति ॥ वातेर्गतिगंधनार्थत्वेपिज्ञानीतिकथंव्याख्यानमित्यतआह ॥ गतिश ब्दश्चेति ॥ तथाप्याशुवातिगच्छतिअवगच्छतीत्याशुवेतिस्यान्नत्वश्वेति । दीर्घोकारयोर्लोपविधायकाभावादित्यतआह॥ दीर्घेति॥

---

भा० । व्याहृतीभिस्ततोजुह्वन्ब्रह्मैवंविद्भिरिष्टितः । सर्वान्सऋत्विजोरक्षेद्ब्रह्मैवंवित्ततोभवेदितिच । उदक्प्रवणऊर्ध्वप्रवणःऊर्ध्वलोकानुसारी । यज्ञस्यदुरिष्टायायतोयतःस्था नादावर्ततेतत्तत्स्थानमेवंविदाब्रह्मणागच्छति । तद्ब्रह्मैवैकर्त्विक्कुरून्कर्तॄन्यजमानादीनभिरक्षति । अश्वाआशुज्ञानी । वागतिगंधनयोरितिधातोः । गतिशब्दश्चावगतौभवति । दीर्घ बिंदुविसर्गादीनांलोपोवेतिसूत्रादाशुवैवाश्वा ॥ खं० ॥१७॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमच्छांदोग्योपनिषद्भाष्येचतुर्थोध्यायः ॥४॥

आदिपदेनस्वरादिग्रहणं ॥ खं० ॥ १७ ॥ प्रजापतिर्भगवान्लोकान्पृथिव्यंतरिक्षद्युसंज्ञकांस्तदभिमानिदेवानभ्यतपत्आलो चितवान् । इमएवरसाःकिंततोन्यइतिसंशयमाहार्यविचारितवानित्यर्थः । इमएवरसाइतिप्राप्तेतेषांलोकानांतप्यमानानामालो च्यमानानांसकाशात् । रसान्वरान्प्राबृहत् । उद्ववर्ह । निष्कृष्यज्ञातवानितियावत् । कस्माल्लोकात्कंरसत्वेननिश्चितवानित्यत आह ॥ अग्निमिति ॥ पृथिव्याःधरादेव्याःअग्निंरसंप्राबृहदित्यादिसंबंधः । वायुंनासिक्यं ॥ १ ॥ ततःसप्रजापतिरेतास्तिस्रो देवताःपूर्ववदभ्यतपत् । तत्राप्येताएवरसाइतिप्राप्तेतासांतप्यमानानांसकाशात्रसान्प्राबृहत् । तदेवाह ॥ अग्नेरिति ॥ अग्ने र्ऋचोऋग्वेदाभिमानिनंब्रह्माणं । वायोर्नासिक्यात् । यजूंषियजुर्वेदात्मकंहरं । आदित्यात्सामानिसामवेदाभिमानिनंवायुंरसंप्राबृह दितिसंबंधः॥२॥ततःसप्रजापतिरेतांत्रयीविद्यांवेदाभिमानिदेवताःपूर्ववदभ्यतपत्।तस्याइत्यादिपूर्ववत्।ऋग्भ्यस्तदभिमानिब्रह्मणो भूरितिनामकंवराहं यजुर्भ्यस्तदात्मकाद्धरात्भुवइतिनामकंनृसिंहं सामभ्यस्तदात्मकाद्वायोःस्वरितिनामकंकपिलंरसंप्राबृहत् । नित्यज्ञानस्याप्येवमभितपनंक्रीडयेतिप्रागेवोक्तं ॥३॥ यदर्थमेतदुक्तंतदाह ॥ तदिति॥ तत्तस्मात्।यत्यदिऋक्तोऋङ्निमित्तंरिष्ये द्यज्ञःक्षतंप्राप्नुयात् । तदाब्रह्माभूरितिनामकंवराहमुद्दिश्यभूःस्वाहेतिमंत्रेणगार्हपत्येजुहुयात् । सातत्रप्रायश्चित्तिः। तत्तदाऋचांतद

उप० । प्रजापतिर्लोकानभ्यतपत्तेषांतप्यमानानाꣳरसान्प्रावृहदग्निंपृथिव्यावायुमंतरिक्षादादित्यंदिवः ॥ १ ॥ सएतास्तिस्रोदेवताअभ्यतपत्तासांतप्यमानानाꣳरसान्प्रावृह दग्नेर्ऋचोवायोर्यजूꣳषिसामान्यादित्यात् ॥ २ ॥ सएतांत्रयींविद्यामभ्यतपत्तस्यास्तप्यमानायारसान्प्रावृहद्भूरित्यृग्भ्योभुवइतियजुर्भ्यःस्वरितिसामभ्यः ॥ ३ ॥ तद्यद्यृक्तोरिष्ये द्भूःस्वाहेतिगार्हपत्येजुहुयादृचामेवतद्रसेनर्चांवीर्येणर्चांयज्ञस्यविरिष्टिꣳसंदधाति ॥ ४ ॥



भिमानिचतुर्मुखस्यसकाशात्रसेन । कोर्थः । ऋचांसकाशात्वीर्येणबलवतावराहेणतत्प्रसादेनयज्ञस्यर्चांविरिष्टिंऋङ्निमित्तंक्षतं संदधातिब्रह्मा । एवमुत्तरवाक्ययोरपियोजना॥४॥अथेत्यर्थांतरं। यजुषांवीर्येणनृसिंहप्रसादेनसाम्नांवीर्येणकपिलप्रसादेन॥५॥६॥ यज्ञस्यविरिष्टिसंधानमेवसदृष्टांतमाह॥ तद्यथेति॥तत्निदर्शनंयथा। लवणेनक्षारेणटंकणादिना। सुवर्णमशक्यसंधानंसंदध्यात्स्वर्ण कारः । यथाचाशक्यसंधानंरजतंसुवर्णेनसंदध्यात् । यथाचाशक्यसंधानंत्रपुरजतेन । यथात्रपुणातादृशंसीसं । सीसेनतादृशं लोहं । लोहेनदारु दारुचर्मणा चर्मबंधनेन संदध्यात् ॥ ७ ॥ एवमेषांलोकानांपृथिव्यादीनामासांदेवतानामग्न्यादीनामस्याः त्रयीविद्यायाःब्रह्मादीनामितियावत् । सकाशाद्वीर्येणश्रेष्ठेनभूरादिनामकेनभगवतातत्प्रसादेनयज्ञस्यविरिष्टिंसंदधातिब्रह्मा । ब्रह्म णःसामर्थ्यमाह ॥ भेषजेति ॥ यत्रयज्ञेएवंविद्ब्रह्माभवत्येषयज्ञोभेषजेनचिकित्सकेनकृतोहवै ॥ ८ ॥ यत्रयज्ञेएवंविद्ब्रह्माभव त्येषयज्ञःउदक्प्रवणःऊर्ध्वलोकानुसारीहवै । एवंविदोब्रह्मणउक्तसामर्थ्यसत्त्वेगाथांप्रमाणयति ॥ एवंविदमिति ॥ एवंविदं ब्रह्माणमन्वनुसृत्यैषावक्ष्यमाणागाथाप्रवर्तते । तामेवपठति ॥ यतइति ॥ यज्ञस्यदुरिष्टयायतोयतःस्थानात् । यज्ञकरणेनप्रा

उप०।अथयदियजुष्टोरिष्येद्भुवःस्वाहेतिदक्षिणाग्नौजुहुयाद्यजुषामेवतद्रसेनयजुषांवीर्येणयजुषांयज्ञस्यविरिष्टिꣳसंदधाति ॥ ५ ॥ अथयदिसामतोरिष्येत्स्वःस्वाहेत्याहवनी येजुहुयात्साम्नामेवतद्रसेनसाम्नांवीर्येणसाम्नांयज्ञस्यविरिष्टिꣳसंदधाति ॥ ६ ॥ तद्यथालवणेनसुवर्णꣳसंदध्यात्सुवर्णेनरजतꣳरजतेनत्रपुत्रपुणासीसꣳसीसेनलोहंलोहेनदारुदारुचर्मणा ॥ ७ ॥ एवमेषांलोकानामासांदेवतानामस्यास्त्रय्याविद्यायावीर्येणयज्ञस्यविरिष्टिꣳसंदधातिभेषजकृतोहवाएषयज्ञोयत्रैवंविद्ब्रह्माभवति ॥ ८ ॥ एषहवाउदक्प्रवणोयज्ञोयत्रैवंवि द्ब्रह्माभवत्येवंविदꣳहवाएषाब्रह्माणमनुगाथायतोयतआवर्ततेतत्तद्गच्छति ॥ ९ ॥

मुंप्रसक्तादावर्ततें । तत्तत्स्थानमेवंविदाब्रह्मणागच्छतिमानवोभगवद्भक्तोयजमानः । तत्तस्मादश्वाआशुज्ञानीब्रह्मैकएवर्त्विक्कुरून्
कर्तृन्यजमानादीनभिरक्षति । तांगाथांवेदपुरुषोविवृणोति ॥ एवंविदिति ॥ उपसंहरति ॥ तस्मादिति ॥ १७ ॥ इतिश्री
मदानंदतीर्थभगवत्पादाचार्यविरचितस्यच्छंदोगोपनिषद्भाष्यस्यटीकायांश्रीमद्वेदव्यासतीर्थपूज्यपादशिष्यवेदे
शभिक्षुविरचितायांपदार्थकौमुद्यांचतुर्थोध्यायः ॥ ४ ॥

---

उप० । मानवोब्रह्मैवैकर्त्विक्कुरूनश्वाभिरक्षत्येवंविद्धवैब्रह्मायज्ञंयजमान९सर्वा९श्चर्त्विजोभिरक्षतितस्मादेवंविदमेवब्रह्माणंकुर्वीतनानेवंविदंनानेवंविदं ॥ १० ॥ सप्तदशः खंडः ॥ १७ ॥ इतिश्रीमच्छांदोग्योपनिषदिचतुर्थोध्यायः ॥ ४ ॥

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ देवोत्तमायप्राणायपंचरूपायविष्णवे । वैश्वानरायदेवायनमोभगवतेसदा ॥ एवंपरापरब्रह्मविद्याःपूर्वाध्यायेनिरूपिताः । अत्रपुनस्तद्विषयमेवविद्यांतरंनिरूपयिष्यन्मुमुक्षोरपरब्रह्मवायुप्रसादस्यसर्वथापेक्षितत्वादादौतद्विषयांविद्यामाह ॥ **योहवाइत्यादिखण्डद्वयेन** ॥ योहवैइत्यादिवाक्येप्राणस्यतद्वेत्तुश्चोक्तंज्येष्ठत्वादिकंकिमपेक्ष्येतिनज्ञायतइत्यतस्तत्प्रमाणेनैवव्याचष्टे ॥ **यइति** ॥ श्रेष्ठंगुणतःज्येष्ठंवयसानिर्धारणेषष्ठ्यौ । योग्यतयास्वसमानानांज्ञानोत्तरशुभाननुष्ठानादिनाहसितानंदानांवेत्तुर्मनुष्यत्वविवक्षायांइदं । देवत्वविवक्षायामिंद्रकामादिवत्किंचित्साम्यंबोध्यं । अनेनश्रुतौस्वानामितिवक्ष्यमाणमत्रसंबध्यतइत्युक्तंभवति । योहवैवसिष्ठंवेदेतिवाक्यंवेत्तुर्वसिष्ठत्वप्रतीतिनिरासायव्याचष्टे ॥ **समीपइति** ॥ वसिष्ठइत्यस्यार्थोवसतांश्रेष्ठइति । दूरेवसतांश्रैष्ठ्यंनशोभावहमितिसमीपइत्युक्तं । योहवैप्रतिष्ठांवेदेतिवाक्यमेकस्यैवयुगपद्विरुद्धंलोकद्वयावस्थानंकथमुच्यतेइत्यतोव्याचष्टे ॥ **एकेति** ॥ इदंविपरीतंफलंइत्याशंकानिरासायविशेषवाचीतुशब्दः । तमेवव्यनक्ति ॥ **इच्छतइति** ॥ यथेच्छायामपीष्टस्थानेऽस्माकंस्थितिर्नभवतिनतथातस्येत्यर्थः । योहवैसंपदंवेदेतिवाक्यंव्याचष्टे ॥ **संपद्वेत्तुरिति** ॥ योहवाआयतनंवेदेतिवाक्योक्तंस्वकीयाश्रयत्वंफलमुपलक्षणमितिभावेनाह ॥ **गृहंचेति** ॥ गृहमिष्टंप्रासादादि चशब्दाच्छ्रुत्युक्तसमुच्चयः । प्रागुक्तोज्येष्ठःश्रेष्ठोवायुश्चेदवांतरःकथंज्ञानान्मोक्षइत्यतआह ॥ **ज्येष्ठः**

---

भा० । यःश्रेष्ठंज्येष्ठमखिलदेवानांवायुमंजसा । वेदसस्वसमानानांज्येष्ठश्रेष्ठोविमुक्तिगः । समीपेवसतांश्रेष्ठोवसिष्ठस्यैववेदनात् । एकस्थानेस्थितिस्तुस्यात्प्रतिष्ठाज्ञस्यचेच्छतः । संपद्वेत्तुःसंपदःस्युर्गृहंचायतनंविदः । ज्येष्ठःश्रेष्ठो

श्रेष्ठइति ॥ महान्वायुरेवेतिसंबंधः । यदहंवसिष्ठास्मित्वंतद्वसिष्ठोसीत्यारभ्यायतनमसीत्यंतवाक्यतात्पर्यमाह ॥ वसिष्ठश्चे
ति ॥ चशब्दःप्रतिष्ठासमुच्चयार्थः । वायुरेवमुख्यतइतिशेषः । तर्हिवाग्वाववसिष्ठःचक्षुर्वावप्रतिष्ठाइत्यादिविरोधइत्यतस्तदभि
प्रायमाह ॥ तस्येति ॥ तस्यप्रसादादित्यस्यपरामर्शार्थएवंशब्दः । ततःउपचारतः । एतेनवागादिशब्दाजडेंद्रियपराइतिव्याख्यान
मपास्तं । तेषांकलहानुपपत्तेः । अतोहवैनामप्रत्यक्षमित्येतत् । प्रत्यक्षंप्रत्यक्षविषयःइत्यन्यथाप्रतीतिनिरासायसप्रमाणकंव्याच
ष्टे ॥ सर्वेति ॥ किंराजादिवद्बहिष्ठरूपेण नेत्याह ॥ इंद्रियस्थइति ॥ पृथक्सर्वेंद्रियस्थः । तर्हिपृथक्स्थितःतद्व्यापारकरणे
ऽसमर्थःकिं नेत्याह ॥ पृथक्केति ॥ तर्हिकस्मादिंद्रियस्थइत्यतउक्तं ॥ स्वयमेवेति ॥ स्वेच्छानुसारेणैवेंद्रियस्थइतिसंबंधः ।
तुशब्दोभगवदिच्छानुसारिताविशेषज्ञापनार्थः । ननुवायुःकिमन्याधिष्ठितेंद्रियस्थःउततदनधिष्ठितेंद्रियस्थोवा । नाद्यः । प्राणवै
यर्थ्यात् । नद्वितीयः । देवतांतरवैयर्थ्यापातादित्यतःप्रथमपक्षमभ्युपेत्यप्राणस्येतरव्यापारव्यतिरेकेपिकर्तृत्वमाह ॥ षण्मासा
दिति ॥ सत्स्वपीतरदेवेषुकेवलंप्राणतस्तद्व्यापारनिरपेक्षप्राणतइत्यर्थः । षण्मासात्पूर्वंबालानांप्राणादेवसर्वेंद्रियबोधस्ततःपरम
न्यादिभिरपीतिभावः । तदपिकुतइत्यतआह ॥ अतइति ॥ अतःषण्मासात्पूर्वंरुद्रादेर्मनःप्रभृत्यनियामकत्वादेवखलुत
दानीमनुभूतस्यपश्चादसंस्मृतिः । अन्यथापूर्वानुभूतपदार्थस्मरणापातइत्यर्थः । अतएवयथाबालाअमनसइत्याद्युक्तं । अन्यथान

भा० । वसिष्ठश्चसंपदायतनंतथा । वायुरेवमहांस्तस्यप्रसादादग्निरेवतु । उपचारतोवसिष्ठःस्यात्प्रतिष्ठैवंरविस्ततः । संपदिंद्रस्तथैवोक्तोरुद्रआयतनंतथेतिप्रभावे । सर्वेंद्रि
याणांव्यापारान्प्राणएवकरोत्ययं । इंद्रियस्थःपृथक्चासौशक्तोपिस्वयमेवतु । षण्मासात्पूर्वबालानांकेवलंप्राणतोभवेत् । व्यापार्यमनसासर्वमतःपश्चादसंस्मृतिः ।



ह्यमनाःपुमांस्तिष्ठतीतिश्रुतिविरोधोन्येंद्रियव्यापारायोगःसंसारानुपपत्तिश्च । अत्रविप्रतिपन्नंप्रतिस्थलांतरेप्राणस्येतरनिरपेक्षक
र्तृत्वंसमर्थयते ॥ तुरीयायामिति ॥ मोक्षावस्थायामित्यर्थः । इंद्रियाणामेवाभावेनतदन्यव्यापाराभावादितिभावः । मोक्षाव
स्थायांप्राणादेवस्वरूपेंद्रियनियामकाद्बोधश्चेत्संसारेनुभूतस्यतदानींस्मृतिर्नस्यात् । पूर्वंमनआदिप्रवर्तकानांतदास्वाभिमन्यमा
नाभावेनाप्रवर्तकत्वादित्यतआह ॥ तथापीति ॥ तत्रतुरीयावस्थायामितरदेवव्यापाराभावेपिप्राणस्यवश्यतयासंसारस्मृतिर्घ
टतइत्यर्थः । प्राणस्यभगवदेकवशत्वात् । कथमन्यवशतेत्यतआह ॥ प्राणस्येति ॥ नतुबलादित्यर्थः । ननुप्राणस्यवश्यत्वेपीत
रेंद्रियदेवानामवश्यत्वेतदनुभावितपदार्थानांकथंस्मृत्युपपत्तिरित्यतआह ॥ प्राणइति ॥ अन्यथामुक्तेरेवानुपपत्तिरितिभावः ।
अक्षेष्विति ॥ शास्त्रैकवेद्यस्यप्रत्यक्षाविषयत्वादितिभावः । प्रादिसमासोयंनाव्ययीभावः । अन्यथाप्रत्यक्षस्येतिषष्ठीनश्रूये
त । नहवाएवंविदिकिंचनानन्नंभवतीत्यनेनोक्तंप्राणवेत्तुःसर्वात्तृत्वंमुख्यतःयस्यकस्यचिदितिप्रतीतिनिरासायप्रमाणेनैवतद्व्याचष्टे॥
प्राणेति ॥ ननुयदिदंप्राणायान्नंवासश्चदेवैर्दीयतेतत्प्राणस्यपूर्वंविद्यमानंनवा । नाद्यः । तदीयस्यैवतस्मैप्रार्पणायोगात् । नद्वितीयः ।
प्राणस्यदेवपरतंत्रत्वापातादित्यतःसदृष्टांतमाद्यपक्षदोषमेवपरिहरति ॥ सिद्धमेवेति ॥ यथास्वातंत्र्यतःकारणात्विष्णोःसदासिद्धमे
वान्नवस्त्राद्यंस्वार्थंस्वप्रयोजनसिध्यर्थंविष्णौसमर्पयेल्लोकस्तथासुराःपुराप्राणस्यसिद्धमेवान्नंवस्त्रंचप्राणेसमर्पयन्निंतियोजना । लंभुको

भा० । तुरीयायामवस्थायांप्राणादेवविबोधनं । तथापिसंस्मृतिस्तत्रप्राणवश्यतयाभवेत् । प्राणस्यवश्यतानामभक्त्यास्यात्तत्प्रसादतः । प्राणेवश्येमनोवश्यमिंद्रियाणिचसर्वशइति
च । अक्षेषुप्रतिप्रतिस्थितत्वादनःप्रत्यक्षं । प्राणविज्ञानयोग्यस्तुरुद्रोमुख्यतयास्मृतः । तस्मात्ससर्वभोक्तास्यात्तदन्येषांस्वयोग्यतइतिच । सिद्धमेवान्नवस्त्राद्यंविष्णोःस्वातंत्र्यतस्सदा ।

ह्वासोभवतीत्यादिनाभोजनपूर्वोत्तरापोशनमात्रस्यैहिकवस्त्रप्राप्तिमात्रंफलमुच्यतइतिप्रतीतिनिरासायतत्तात्पर्यंस्मृत्यैवाह॥प्राणस्येति॥यद्यप्येतच्छुष्कायस्थाणवेब्रूयादित्यादिवाक्यंयस्यकस्यापिस्थाणोःप्राणविद्याश्रवणेपलाशादिभावप्रतीतिंतन्मात्रफलत्वप्रतीतिंचनिवारयन्प्रमाणेनैवव्याचष्टे॥योग्यस्येति॥योग्यस्यैवतच्छ्रुतेःतस्याःविद्यायाःश्रवणात् । किमुयोग्यस्यजंगमस्येतिकैमुत्यार्थोपिशब्दः।तर्हितमेवंविद्वानितिश्रुतिविरोधइत्यतआह॥विष्णोरिति॥पूर्वेणसंबंधः।ज्येष्ठायश्रेष्ठायस्वाहेत्यादिनाहोममुक्त्वासमाज्यैष्ठ्यंश्रैष्ठ्यमित्यादिप्रार्थनात्होमस्यज्यैष्ठ्यश्रैष्ठ्यप्राप्तिःफलमुच्यते।तत्तुसर्वेभ्यइत्यैहिकमेवेतिचप्रतीतिंनिवारयन्प्रमाणेनैवव्याचष्टे॥ज्येष्ठेति॥मंत्रैरितिशेषः।प्राणायेतिवागाद्युपलक्षणं।महज्जिगमिषेदित्युपक्रमवाक्योक्तंमहत्वमपिदृष्टादृष्टरूपमेवेतिबोध्यं।ननुप्राणदेवताकंयागमुपक्रम्यकथंसावित्रमंत्रविनियोगकथनमित्यतःप्राणमादित्यंचैकीकृत्येदंप्रवृत्तं। ततश्चपूर्वोत्तरार्धयोःसमानाधिकरणैवयोजनेत्यन्ये । तदसदितिभावेनऋचंव्याचष्टे ॥ सवितुरिति ॥ भोजनमित्यनूद्यरक्षांसर्वभोगांश्चेतिव्याख्यानं । भुजपालनाभ्यवहारयोरितिधातोः । अभ्यवहारवाचिनाचभोजनशब्देनसर्वभोगोपलक्षणमितिभावः । तद्धेतुत्वेनद्वितीयार्धंव्याचष्टे ॥ भगस्येति ॥ ऐश्वर्यस्यसमग्रस्येतिवचनेनभगशब्दस्यषड्गुणार्थत्वेपरिच्छिन्नत्वशंकापरिहारायसर्वगुणस्वरूपस्येत्युक्तं । विशेष

भा० । स्वार्थंसमर्पयेद्विष्णौयथाप्राणेसुराःपुरेतिकर्मानुपूर्व्या । प्राणस्यवस्त्रबुद्ध्यातुभोजनोभयतःपिबन् । स्वर्गेमुक्तौतथादिव्यवस्त्रलाभीभवत्यलमितिप्रभंजने । योग्यस्यप्राणविद्यायांस्थाणोरपिहितच्छ्रुतेः । पलाशायंभवेदत्रपरतोमुक्तिरेवच । विष्णोर्ज्ञानमनुप्राप्यभवेन्नास्त्यत्रसंशयइतिप्राणसंहितायां । ज्येष्ठश्रेष्ठादिकैर्हुत्वाप्राणायात्रपरत्रच । ज्येष्ठःश्रेष्ठःसमानेभ्योभवेन्नात्रविचारणेतिच । सवितुर्जगत्प्रसवितुर्विष्णोःसकाशाद्वयंभोजनंरक्षांसर्वभोगांश्चवृणीमहे। भगस्यसमग्रैश्वर्यादिसर्वगुणस्वरूपस्यविष्णोः । पुरुषंतुरंवायुंश्रेष्ठंसर्वधातॄणामुत्तमंचधीमहि ।

णसमुच्चयार्थश्चशब्दः। धीमहीतियत्तस्मादितियोज्यं। परोक्तएवार्थःकिंनस्यादित्यतोऋगर्थंप्रमाणेनद्रढयति ॥ नारायणीयमिति ॥ ७ ॥ ततश्चायंखंडद्वयार्थः ॥ प्राणज्ञानमवश्यंसंपाद्यमितिभावेनतज्ज्ञानिनःफलमाह ॥ योहवाइति ॥ परस्परविशेषणसमुच्चयेचशब्दौ। योधिकार्यखिलदेवेभ्योवयसाज्येष्ठंगुणतःश्रेष्ठंचवेदसःमुक्तःसन्स्वसमानानांमध्येज्येष्ठःश्रेष्ठश्चभवति ॥ हवाइतिश्रुत्यादिप्रसिद्धिमाह। ज्येष्ठःश्रेष्ठश्चकइत्यतआह ॥ प्राणइति ॥ मुख्यप्राणः ॥ १ ॥ योहवैवसिष्ठंवेदसःमुक्तःसन्स्वानांस्वकीयानांमध्येवसिष्ठोवसतामुत्तमोभवति। कोसौवसिष्ठइत्यतआह ॥ वागिति ॥ वागग्निः ॥ २ ॥ योहवैप्रतिष्ठांवेदसोस्मिन्नमुष्मिंश्चलोकेप्रतितिष्ठतिइच्छायां। काप्रतिष्ठा। चक्षुरेव तदभिमानीसूर्यः ॥ ३ ॥ योहवैसंपदंवेदास्मैदेवाःमानुषाश्चकामाःकाम्याःसंपद्यंते। इहामुत्रसंपदःस्युरितिभावः। श्रोत्रंतदभिमानीइंद्रः ॥ ४ ॥ योहवाआयतनंवेद सःस्वानामायतनमाश्रयोभवति। उपलक्षणमेतत्। आयतनवांश्चभवतीत्यपिग्राह्यं। मनोरुद्रः ॥ ५ ॥ प्राणस्यज्येष्ठत्वंश्रेष्ठत्वंचोक्तं। तत्कुतइत्यतोमीमांसयासमर्थितत्वादितिभावेनाख्यायिकामारभते ॥अथेति॥ प्राणाःपूर्वोक्ताःवायुपुरस्सराःदेवाःअहंश्रेयसिव्यूदिरेविवादंकृतवंतः।

---

भा०। नारायणीयंतंवायुंचिंतयित्वोत्तमोत्तमं। जगत्प्रसवितुर्विष्णोःसकाशाद्भोगमाप्नुमइतिच ॥ खं० ॥ २॥

उप०। योहवैज्येष्ठंचश्रेष्ठंचवेदज्येष्ठश्चहवैश्रेष्ठश्चभवतिप्राणोवावज्येष्ठश्चश्रेष्ठश्च ॥ १ ॥ योहवैवसिष्ठंवेदवसिष्ठोहस्वानांभवतिवाग्वाववसिष्ठः ॥२॥ योहवैप्रतिष्ठांवेदप्रतिहतिष्ठत्यस्मिंश्चलोकेमुष्मिंश्चचक्षुर्वावप्रतिष्ठा ॥ ३ ॥ योहवैसंपदंवेदसꣳहास्मैकामाःपद्यंतेदैवाश्चमानुषाश्चश्रोत्रंवावसंपत् ॥ ४ ॥ योहवाआयतनंवेदायतनꣳहंस्वानांभवतिमनोहवाआयतनं ॥ ५ ॥ अथहप्राणाअहꣳश्रेयसिव्यूदिरेऽहꣳश्रेयानस्म्यहꣳश्रेयानस्मीति ॥ ६ ॥

अहंश्रेयसीत्युक्तमेवविशदमाह ॥ अहमिति ॥ ६ ॥ तेविवदमानाःप्राणाः प्रजापतिंनारायणंस्वपितर मेत्योचुः । तथाचोक्तंबृहद्भाष्ये । विवदंतोखिलदेवायुर्नारायणंप्रभुं । अहंश्रेयानहंश्रेयानितिवायुपुरःसराइति । किमूचुः । हेभगवन् नोस्माकंमध्ये कःश्रेष्ठइति । तान्प्राणान्होवाचप्रजापतिः । वोयुष्माकंमध्ये यस्मिन्नुत्क्रांते इदंशरीरं विरिंचशरीरं पापिष्ठतरमिवशवरूपं दृश्येत सवःश्रेष्ठइति ॥ ७ ॥ एवमुक्तेतत्परीक्षणायतेषांमध्येसापूर्वोक्तावागग्निरुच्चक्राम । तदुत्क्रमणेपिशरीरंनपपातेतिग्राह्यं । सोत्क्रांता वाक्संवत्सरपर्यंतंप्रोष्यप्रवासंकृत्वाशरीरस्थानितरान्प्राणान्पर्येत्योवाच।मद्दतेजीवितुंकथमशकतेति । तेशरीरस्थाःप्राणाःहोचुः । यथाऽकलाःमूकाःअवदंतोपिप्राणादिनाप्राणनादिकुर्वाणाःजीवंति एवमजीविष्मेति । एवमुक्तावाक्नाहंश्रेष्ठेतिनिश्चित्यतस्मिंश्छरीरेप्रविवेशह ॥ ८ ॥ एवंचक्षुर्होच्चक्रामेत्यादिकमपिव्याख्येयं ॥ ९ ॥ १० ॥ यथाबालाःषण्मासात्पूर्वंबालाःअमनसःप्राणेतरमनोभिमानिरुद्रादिव्यापृतमनःशून्याः ॥ ११ ॥ अथैवंसर्वेषामश्रैष्ठ्यावधारणानंतरंप्राणोमुख्यप्राणः उच्चक्रमिषन्नुत्क्रांतुमिच्छन्

उप० । तेहप्राणाःप्रजापतिंपितरमेत्योचुर्भगवन्कोनःश्रेष्ठइतितान्होवाचयस्मिन्वउत्क्रांतइदंशरीरंपापिष्ठतरमिवदृश्येतसवःश्रेष्ठइति ॥ ७ ॥ साहवागुच्चक्रामसासंवत्सरंप्रोष्यपर्येत्योवाचकथमशकततेंमज्जीवितुमितियथाऽकलाअवदंतःप्राणंतःप्राणेनपश्यंतश्चक्षुषाश्रृण्वंतःश्रोत्रेणध्यायंतोमनसैवमितिप्रविवेशहवाक् ॥ ८ ॥ चक्षुर्होच्चक्रामतत्संवत्सरंप्रोष्यपर्येत्योवाचकथमशकततेंमज्जीवितुमितियथांधाअपश्यंतःप्राणंतःप्राणेनवदंतोवाचाश्रृण्वंतःश्रोत्रेणध्यायंतोमनसैवमितिप्रविवेशहचक्षुः ॥ ९ ॥ श्रोत्रंहोच्चक्रामतत्संवत्सरंप्रोष्यपर्येत्योवाचकथमशकततेंमज्जीवितुमितियथाबधिराअश्रृण्वंतःप्राणंतःप्राणेनवदंतोवाचापश्यंतश्चक्षुषाध्यायंतोमनसैवमितिप्रविवेशहश्रोत्रं ॥ १० ॥ मनोहोच्चक्रामतत्संवत्सरंप्रोष्यपर्येत्योवाचकथमशकततेंमज्जीवितुमितियथाबालाअमनसःप्राणंतःप्राणेनवदंतोवाचापश्यंतश्चक्षुषाश्रृण्वंतःश्रोत्रेणैवमितिप्रविवेशहमनः ॥ ११ ॥ अथहप्राणउच्चिक्रमिषन्त्सयथासुहयःपड्वीशशंकून्संखिदेदेवमितरान्प्राणान्समखिदत्तंहाभिसमेत्योचुर्भगवन्नेधित्वंनःश्रेष्ठोसिमोत्क्रमीरिति ॥ १२ ॥



सदृष्टांतोयथालोकेसुहयःशोभनाश्वः पड्वीशशंकून्पदुभूतस्यहयस्येशाःनियामकाःबंधकाइतियावत् पड्वीशाश्चतेशंकवश्चेतितथोक्तास्तान्पादबंधनकीलानितियावत्। परीक्षणायारूढेनकशयाहतःसंखिंदेत्। समुत्पाटयेदेवमितरान्प्राणान्समखिदत्। समुत्पाटितवान्। तेप्राणाःसंचालिताःसंतःस्वस्वस्थानेस्थातुमशक्ताः तंमुख्यप्राणं अभिसमेत्योचुः। हेभगवन्नेधिआस्व(अभिवृद्धोभव)त्वंनोऽस्माकंमध्येश्रेष्ठोसि। अस्माद्देहान्मोत्क्रमीरिति॥१२॥ तर्हितस्यमेयूयंबलिंपूजांकुरुतेत्युक्तास्तथेत्यूचुरितिग्राह्यं। तत्प्रकारंवक्तुमारभते॥ अथेति ॥ एनंमुख्यप्राणंप्रतिवागुवाच । अहंवसिष्ठास्मिवसतामुत्तमास्मीतियत्त्वंतद्वसिष्ठोसि । त्वमेवमयिस्थित्वामदीयवसिष्ठत्वनियामकइत्यर्थः । एवमुत्तरत्रापि ॥ १३ ॥ १४ ॥ वागादीनांवसिष्ठत्वादिकंप्राणाधीनमित्यत्रनियामकमाह ॥ नवाइति ॥ यस्माद्वागादीनिकरणानिवाचइतिनैवाचक्षतेविद्वांसः। एवंचक्षूंषीतिनैवाचक्षते। श्रोत्राणीतिनैवाचक्षते । मनांसीतिनैवाचक्षते । किंतर्हिप्राणाइत्येवाचक्षते । तस्मात्प्राणाएवैतानिसर्वाणिभवंति । सर्वेंद्रियदेवेषुस्थित्वातत्तन्नियामकोभवतीत्यर्थः ॥१५॥ प्रथमःखंडः॥१॥ समुख्यप्राणःउवाचानालंश्रेष्ठोसीत्युक्तिमात्रेण(किंनाम)किंमेन्नंभविष्यतीति। एवमुक्ताःदेवाःआश्वभ्यःआशकुनिभ्यःश्वपक्षिपर्यंतप्राणिभिर्यत्किंचिदिदंयोग्यमन्नमद्यतेतत्तेन्नमित्यूचुः । देवैर्दत्तमन्नंपूर्वमतदीयंकिं नेत्याह ॥

उप० । अथहैनंवागुवाचयदहंवसिष्ठास्मित्वंतद्वसिष्ठोसीत्यथहैनंचक्षुरुवाचयदहंप्रतिष्ठास्मित्वंतत्प्रतिष्ठोसीति ॥ १३ ॥ अथहैनंश्रोत्रमुवाचयदहंसंपदस्मित्वंतत्संपदसीत्यथहैनंमनउवाचयदहमायतनमस्मित्वंतदायतनमसीति ॥ १४ ॥ नवैवाचोनचक्षूंषिनश्रोत्राणिनमनांसीत्याचक्षतेप्राणाइत्येवाचक्षतेप्राणोह्येवैतानिसर्वाणिभवति ॥ १५ ॥ ॥ खं० १ ॥ सहोवाचकिंमेन्नंभविष्यतीतियत्किंचिदिदमाश्वभ्यआशकुनिभ्यइतिहोचुस्तद्वाएतदनस्यान्नमनोहवैनामप्रत्यक्षंनहवाएवंविदिकिंचनानन्नंभवतीति ॥ १ ॥

तद्वाइति ॥ तदेतदनस्यमुख्यप्राणस्यैवान्नं कुतइत्यतआह ॥ अनइति ॥ अनोमुख्यप्राणएवप्रत्यक्षं अक्षेषुप्रतिप्रतिस्थिततत्वात् । एवंप्राणवेत्तुःफलमाह ॥ नेति ॥ एवमुक्तरीत्याप्राणस्यसर्वभोक्तृत्वविदिकिंचनानन्नंनभविष्यति । सर्वमेवास्यान्नंभवति । रुद्रस्यैवेदंमुख्यं । अन्येषांयथायोग्यं ॥ १ ॥ एवंसिद्धान्नःसहोवाच । किंमेवासोभविष्यतीति । सर्वप्राणिभिःपीयमानाआपइति होचुः । अत्रनियामकमाहश्रुतिः ॥ तस्मादिति ॥ अपांप्राणवस्त्रत्वादेवहि । एतदन्नमशिष्यंतोभोक्ष्यमाणाःभुक्तवंतश्चविद्वांसः श्रोत्रियाःब्राह्मणाःभोजनात्पुरस्ताच्चोपरिष्टाच्चाद्भिःपरिदधतिपरिधानंकुर्वंति । प्राणस्यवस्त्रबुद्ध्याभोजनोभयतःपिबतःफलमाह ॥ लंभुकइति ॥ वासोदिव्यवाससोलंभुकोलब्धाभवति । तथाऽनग्नोहभवति । इहामुत्रदिव्यवस्त्रैरंतर्बहिःप्रावरणवान्भवति ॥२॥ इयंप्राणविद्यापरंपरागताचेत्याह ॥ तदिति ॥ तदेतत्प्राणविज्ञानंसत्यकामोजाबालोगोश्रुतयेनाम्नावैयाघ्रपद्यायव्याघ्रपदःपुत्रायोक्त्वाफलंचोवाच । एतत्प्राणविज्ञानंशुष्कायापिस्थाणवेयदिब्रूयात् । तदाऽसःस्थाणुर्योग्यश्चेदस्मिंच्छुष्केपिस्थाणौशाखाःजायेरन्नेव । पलाशानिप्ररोहेयुरिति ॥ ३ ॥ इदानींयोधिकारीस्वस्यदृष्टादृष्टंमहत्त्वमिच्छेत्तस्यकर्तव्यंप्रकृतप्राणादिदेवताकमेवहोमंवक्तुंप्रारभते ॥ अथेति ॥ योधिकारीयदिमहत्दृष्टादृष्टंमहत्त्वंजिगमिषेत् । प्राप्तुमिच्छेत्तर्हिसोमावास्यायांदीक्षित्वापक्षपर्यंतंपयो

उप० । सहोवाचकिंमेवासोभविष्यतीत्यापइतिहोचुस्तस्माद्वाएतदशिष्यंतःपुरस्ताच्चोपरिष्टाच्चाद्भिःपरिदधतिलंभुकोहवासोभवत्यनग्नोहभवति ॥ २ ॥ तद्धैतत्सत्यकामोजाबालोगोश्रुतयेवैयाघ्रपद्यायोक्त्वोवाचयद्यप्येतच्छुष्कायस्थाणवेब्रूयाज्जायेरन्नेवास्मिंश्छाखाःप्ररोहेयुःपलाशानीति ॥ ३ ॥ अथयदिमहज्जिगमिषेदमावास्यायांदीक्षित्वापौर्णमास्यांरात्रौ सर्वौषधस्यमंथंदधिमधुनोरुपमथ्यज्येष्ठायश्रेष्ठायस्वाहेत्यग्नावाज्यस्यहुत्वामंथेसंपातमवनयेत् ॥ ४ ॥

व्रताद्यनुष्ठायपुनःपौर्णमास्यांरात्रौसर्वौषधस्यसर्वौषधीनांव्रीहियवादीनांदशधान्यानांमंथंपिष्टं । दधिमधुनोर्दधिमधुभ्यामुपमथ्य संमिश्र्यज्येष्ठायश्रेष्ठायस्वाहेतिमंत्रेणाग्नावाज्यस्याज्यंतत्संस्कृतंमंथंहुत्वास्रुवलग्नमाज्यंमंथेहोम्येपिष्टे । संपातंपातनंयथातथावनयेत् । एवमन्यत् ॥४॥५॥होमावशिष्टंमंथविनियोगमाह ॥ अथेति ॥ अथहोमानंतरंहोमावशिष्टंमंथंप्रतिसृप्याग्नावीषदुपसृप्यांजलावाधायजपतिजपेत् । यज्ञदेवतांप्राणमितिशेषः । त्वममोनामासि । कुतःसर्वमिदंजगत्तेतवामामानंपरिमितंनभवेदित्यर्थः । तेत्वयासहितंवर्ततइतिवा । सःमुख्यप्राणोज्येष्ठोवयसाश्रेष्ठोगुणतःराजारंजकोऽधिपतिराधिक्येनपालकोयस्मात्तस्मात्सःमामांज्यैष्ठ्यंश्रैष्ठ्यंराज्यमाधिपत्यंगमयतिगमयतुप्रापयतु । अहमेवेदंसर्वमसानि । इदंसर्वंयोग्यंमदधीनंकरिष्यामीत्यर्थः । इतिजपतीतिसंबंधः ॥६॥ अथैवंप्राणजपानंतरंहोमावशिष्टंमंथंग्रासचतुष्टयंकृत्वैतयावक्ष्यमाणयाऋचापच्छःपादशःआचामतिआचामेन्मंथं । तदेवविशदमाह ॥ तत्सवितुरिति ॥ तत्सवितुरितिपादेनप्रथमंग्रासमाचामेत् । वयमितिपादेनद्वितीयंग्रासमाचामेत् । श्रेष्ठमितिपादेनतृतीयं । तुरमितिपादेनसर्वंनिःशेषंपिबतिपिबेत् ॥७॥ कंसंकांस्यंचमसंवौदुंबरमयंमंथपात्रंनिर्णिज्यप्रक्षाल्याग्नेःपश्चाच्चर्मणिवास्थंडिलेवाकेवलायांवाभूमौवाचंयमोयतवागप्रसाहःस्त्रीरहितःसंविशतिसंविशेत् । सःयजमानोयदिस्वप्नेषुस्त्रियंपश्येत्तदासमृद्धंममेदंकर्मेतिविद्यात् ॥८॥अत्रैवश्लो

उप० । वसिष्ठायस्वाहेत्यग्नावाज्यस्यहुत्वामंथेसंपातमवनयेत्प्रतिष्ठायैस्वाहेत्यग्नावाज्यस्यहुत्वामंथेसंपातमवनयेत्संपदेस्वाहेत्यग्नावाज्यस्यहुत्वामंथेसंपातमवनयेदायतनायस्वाहेत्यग्नावाज्यस्यहुत्वामंथेसंपातमवनयेत् ॥ ५ ॥ अथप्रतिसृप्यांजलौमंथमाधायजपत्यमोनामास्यमाहितेसर्वमिदꣳसहिज्येष्ठःश्रेष्ठोराजाधिपतिःसमाज्यैष्ठ्यंश्रैष्ठ्यꣳराज्यमाधिपत्यंगमयत्वहमेवेदꣳसर्वमसानीति ॥ ६ ॥ अथखल्वेतयर्चापच्छआचामतितत्सवितुर्वृणीमहइत्याचामतिवयंदेवस्यभोजनमित्याचामतिश्रेष्ठꣳसर्वधातमसित्याचामतितुरंभगस्यधीमहीतिसर्वंपिबति ॥ ७ ॥ निर्णिज्यकꣳसंचमसंवापश्चादग्नेःसंविशतिचर्मणिवास्थंडिलेवावाचंयमोप्रसाहःसयदिस्त्रियंपश्येत्समृद्धंकर्मेतिविद्यात् ॥ ८ ॥

कमाह॥तदिति॥तत्तत्रोक्तार्थेएषःवक्ष्यमाणःश्लोकोभवतितंपठति॥यदेति॥ काम्येषुकर्मसुक्रियमाणेषुयदास्वप्नेषुस्त्रियंपश्यतितत्र तर्हितस्मिन्स्वप्नाख्येनिदर्शनेजातेसमृद्धिंजानीयादित्यर्थः। द्विरुक्तिःप्रामाणिकत्वज्ञापनार्था॥द्वितीयःखंडः॥२॥ एवमपरब्रह्मप्रा णविषयाविद्यानिरूपिता । इदानींवैराग्यजननायपरब्रह्मविषयांपंचाग्निविद्यांधूमार्चिरादिमार्गंचाख्यायिकापुरःसरंनिरूपयति। श्वे तकेतुरित्यादिनाखंडाष्टकेन । असौवावलोकोगौतमाग्निरित्यादिना स्वर्गादेरग्नित्वकल्पनोच्यतइत्यसत्। तथासत्यब्रह्मविद्यात्वप्र संगात्। तथाकल्पनायाःमिथ्याज्ञानत्वेनानर्थहेतुत्वाच्च। तद्यइत्थंविदुरित्यादिनापंचाग्निविद्यावेत्तॄणामर्चिरादिमार्गापुनरावृत्तिफल कथनविरोधाच्चेतिभावेनतांविद्यांभगवत्परतयैवप्रमाणेनैवव्याचष्टे॥नारायणादयइत्यादिना॥ द्युपर्जन्यधारापुंस्त्रीरूपाःपंचाग्न यःक्रमान्नारायणादयएवस्मृताइत्यर्थः । तर्हिनारायणादिषुअग्निशब्दःकथं । तस्यान्यत्ररूढत्वादितिचेत् स्वर्गादावपिकथं होमा धिकरणत्वगुणयोगेनेतिचेत् । गौण्यपेक्षयायोगस्यप्रबलत्वादितिभावेनाग्निशब्दस्यनारायणादिषुयोगंदर्शयति ॥ अदनादि ति ॥ पूर्वेणान्वयः । अदनादत्तृत्वात् । अत्तेःकर्तरिनिप्रत्ययोदस्यगः। स्वतोनगच्छति नप्रवर्तते । यद्विश्वंतस्यप्रवर्तकत्वादि त्यर्थः । अगशब्दोपपदान्नयतेःकर्तरिडिप्रत्ययः । उपपदाकारलोपश्च । नितरांनगच्छतिनचलतीतिचाग्निरित्यर्थः । नञुपपदाङ्ग मेःकर्तरिडेनीत्युपसर्गः । अकारलोपश्चेतिभावः । अनेनअसौवावलोकोगौतमाग्निःपर्जन्योवावगौतमाग्निरित्यादिवाक्यपंचकं

उप० । तदेषश्लोकः। यदाकर्मसुकाम्येषुस्त्रियꣳस्वप्नेषुपश्यति । समृद्धिंतत्रजानीयात्तस्मिन्स्वप्ननिदर्शनेतस्मिन्स्वप्ननिदर्शनइति ॥ ९ ॥ द्वितीयःखंडः ॥ २ ॥
भा० । नारायणादयःपंचक्रमात्पंचाग्नयःस्मृताः । अदनादगनेतृत्वान्नितरामचलत्वतः ।



व्याख्यातं । इदानींप्रत्यग्निसमिद्धूमार्चिरंगारविष्फुलिंगाइतिपंचोक्ताः । तदपिपूर्ववत्प्रसिद्धार्थइतिप्रतीतिनिरासायाह ॥ समे धनादित्यादिना ॥ समेधनात्सम्यग्वर्धनात्सर्वोत्तमत्वादितियावत् । धूत्कारात् । शत्रूणांकंपनात् । धूञ्कंपनइतिधातुः। अरमलंचितत्वात्पूजितत्वात् । अंगरतेः । जीवदेहेरतेःअंगमंगीसमादायेतिप्रयोगात् । स्वांगरतेर्वा । विविधंज्ञानिनांस्फुरणात्। नारायणाद्यात्माविष्णुःप्रत्येकंपुनःपंचरूपवान् । समेधनात्समिदित्युच्यतइत्यादिरूपायोजना । तर्ह्यादित्यएवसमिदित्यादिसा मानाधिकरण्यंकथमित्यतःप्रथमाग्नौश्रुतानादित्यरश्म्यहश्चंद्रनक्षत्रशब्दान्निर्वक्ति ॥ आदित्यइति ॥ आदानादायुरादेः । रति सुखरूपत्वतः । रतिरलंबुद्धिः । तमसाऽज्ञानेनाऽहननीयत्वात्नित्यास्पृष्टाऽज्ञानत्वादित्यर्थः । चदनाच्चंद्रः । अस्यक्षत्रमन्यन्ना स्तीतिनक्षत्रमित्यर्थः । बहुरूपत्वाद्बहुवचनमितिभावः।इदानींद्वितीयाग्नौश्रुतान्वाय्वभ्रविद्युदशनिह्रादुनिशब्दान्निर्वक्ति ॥ वायु रित्यादिना ॥ ज्ञानादायुष्ट्वाच्चवायुः । अपांभरणादित्यर्थः । अशनात्सर्वस्यभक्षणात् । निर्ह्रादान्नितरांहर्षणात् । तृतीयाग्नौ श्रुतान्संवत्सराकाशरात्रिदिगवांतरदिक्शब्दान्निर्वक्ति ॥ संवत्सरइत्यादिना ॥ चशब्दःसम्यगित्यस्यरमणादित्यस्यचसमु च्चयार्थः । सम्यग्वासनाद्रमणाच्चेत्यर्थः । सम्यक्वत्सान्रमयतीत्यर्थांतरसमुच्चयोवा । आइत्यस्यार्थःप्रेति । रंरमणंत्रातिददाति

भा० । समेधनात्समिद्विष्णुर्धूत्काराद्धूमउच्यते । अरंचितत्वादर्चिश्चसोंगारोंगरतेरपि । विविधंस्फुरणाच्चैवविष्फुलिंगइतीरितः । पुनर्नारायणाद्यात्माप्रत्येकंपंचरूपवान् । आदित्यस्सतथाऽऽदानाद्रश्मीरतिशरूपतः । तमसाहननीयत्वादहश्चंद्रःपरस्सुखं । अनन्यराजोनक्षत्रंवायुर्ज्ञानायुरूपतः । अभ्रमब्भरणाद्विष्णुर्विद्युद्विद्योतनादपि । अशनादश निश्चैवनिर्ह्रादाह्रादुनिस्तथा । संवत्सरोवासनाच्चसआकाशःप्रकाशनात् । रात्रिश्चरतिदानात्सदिशतीतिदिशःस्मृतः ।

इतिरात्रिः। दिशतिपरतत्वमादिशति। अवांतरमपरतत्वं। चतुर्थाग्नौश्रुतान्वाक्प्राणजिह्वाचक्षुःश्रोत्रशब्दान्निर्वक्ति॥ वचनादिति॥ अननात्प्रणयनात्। होमतोहोमाधिकरणत्वात्। होमकर्तृत्वाद्वा। हुदानादनयोरितिधातुः। पंचमाग्नौश्रुतोपस्थादिशब्दपंचकंव्याचष्टे॥ उपस्थितेरित्यादिना॥ सर्वजीवानांहृद्गत्वेनसमीपस्थितेरित्यर्थः। यदुपमंत्रयतंइत्यस्यार्थः। उपमंत्रकृदेवेति। युनक्तिसंयोजयति। यदंतःकरोतीत्यस्यार्थः। सर्वांतःकृदिति॥ नारायणादयःपंचक्रमात्पंचाग्नयःस्मृताइत्युक्तं। पंचाग्निषुश्रुतानसौलोकपर्जन्यपृथिवीपुरुषयोषाशब्दान्निर्वक्ति॥ असाविति॥ प्राणस्थत्वात्प्रकाशवत्त्वाच्चेतिवैपरीत्येनयोज्यं। असुर्मुख्यप्राणस्तस्यसप्तमीअसाविति। तस्यार्थःप्राणइति। सप्तम्याअनन्वयशंकापरिहारायप्राणस्थत्वादित्युक्तं। जोष्यःसेव्यः। जुषीप्रीतिसेवनयोरितिधातोः। धूमोभूत्वाऽभ्रंभवतीत्यादिसामानाधिकरण्यश्रुतेःकर्मिणोधूमादिदेवतैक्यंतत्पदप्राप्तिर्वाकथ्यतइत्याशंकांप्रमाणेनैववारयति॥ अभ्रेति॥ अभ्रादिसंस्थितिः। अभ्रादिषुप्रविश्यतद्गतौगतिःतत्स्थितौस्थितिरित्यादिरूपतत्स्वाभाव्यापत्तिरेव नत्वैक्यंतत्पदप्राप्तिर्वेत्यर्थः। तथाचोक्तं। तत्स्वाभाव्यापत्तिरुपपत्तेरिति। कुतएवंमुख्येबाधकाभावात्। अन्यस्यान्यभावायोगेनैक्यायोगेपितत्पदप्राप्त्युपपत्तेरित्यतआह॥ अभ्रेति॥ रूपशब्दोधर्मव

---

भा०। अवांतरंदिशेयस्मादवांतरदिगुच्यते। वचनाद्वाक्तथाप्राणस्त्वनानाच्चक्षुरुच्यते। दर्शनाच्छ्रवणाच्छ्रोत्रंजिह्वावैहोमतःस्मृतः। उपस्थितेरुपस्थःसउपमंत्रकृदेवसः। योनिर्युनक्तियस्मात्ससर्वांतःकृच्चनंदनः। असौलोकःप्रकाशत्वात्प्राणस्थत्वाचकेशवः। पर्जन्योजनकोयस्मात्पृथिवीप्रथितत्वतः। पुरुषःपुरुयस्मात्सयोषाजोष्योयतोऽखिलैरितिसामसंहितायां। अभ्रधूमादिभावस्तुजीवस्याभ्रादिसंस्थितिः। अभ्रादिमानिरूपंतुज्ञानिप्राप्यंयतोभवेदितिच।

चनः । तथाचाभ्रादिमानित्वंतत्पदप्राप्तिरितियावत् । तद्योग्यैरेवज्ञानप्राप्यंकर्मिणस्तुनज्ञानमितिभावः । पर्जन्योजनकोयस्मादित्युक्तं । तत्रजनकत्वंकथंपर्जन्यशब्दार्थइत्यतस्तंस्वयंनिर्वक्ति ॥ **परमिति** ॥ परमुत्तमं । चतुर्मुखाख्यंवस्तुअस्यसकाशाज्जन्यमितिपर्जन्यः । तथाचजनकःपरस्येतिलब्धार्थोक्तिः । अन्येषांशब्दानांप्रमाणएवस्पष्टार्थत्वाद्वाजसनेयकपंचाग्निविद्याभाष्येकृतव्युत्पादनाच्चनव्युत्पादनंकृतं । तस्यादित्यएवसमिदित्यादौ श्रुताआदित्यादिपंचविंशतिशब्दा असौलोकादिपंचशब्दाश्चयोगेनैवभगवत्परतयाव्याख्याताः । तत्ररूढार्थपरित्यागेनयोगार्थांगीकारःकुतइत्यतोरूढार्थोपिभगवानेवेत्याह ॥ **पंचेति** ॥ स्वर्गादौस्थितः । चशब्दोऽवधारणे । हरिरेवतन्नामाआदित्यादिनामा॥ खं० ॥ ३–१० ॥ ततश्चायंखंडाष्टकार्थः ॥ श्वेतकेतुर्नामतोऽरुणस्यापत्यमारुणिस्तस्यापत्यमारुणेयोहपित्रानुशिष्टःस्वपांडित्यख्यापनायपंचालानांपंचालदेशाधिपतीनां समितिंपरिषदं प्रत्याजगाम । तंश्वेतकेतुंप्रवाहणोजैबलिस्तस्याहंकारशांत्यर्थंउवाचह । हेकुमारतवपितात्वात्वांअन्वशिषत् । अन्वशिक्षयत्किमितिशेषः । हेभगवःअनुहिअन्वशिषद्धीतिश्वेतकेतुः ॥ १ ॥ एवमुक्तेप्रवाहणःपृच्छति ॥ **वेत्थेति** ॥ प्रजाःइतोलोकाल्लोकांतरंप्रयंत्यो।यदधिकृत्ययंमार्गमधिकृत्यब्रह्मलोकंचंद्रलोकंवाप्रतिप्रयांतितंमार्गंवेत्थकिमिति । एवंपृष्टःश्वेतकेतुर्नवेद्मिभगवइतिहोवाच ॥

---

भा० । परमस्यजन्यमितिपर्जन्यः । पंचपंचस्वरूपेणसूर्यादौसंस्थितोहरिः । स्वर्गादौचापितन्नामातद्योगान्नामिनःपरइतिच ॥ खं० ॥ ३–१० ॥

उप० । श्वेतकेतुर्हारुणेयःपंचालाना१ँसमितिमेयायत१ँहप्रवाहणोजैबिलिरुवाचकुमारानुत्वाशिषत्पितेत्यनुहिभगवइति ॥ १ ॥ वेत्थयदितोधिप्रजाःप्रयंतीतिनभगवइति

द्वितीयंपृच्छति ॥ वेत्थेति ॥ पुनरावृत्तिमच्चंद्रलोकंगताःप्रजाःयथायेनमार्गेणेमंलोकंपुनरावर्ततइतिवेत्थकिमिति । किंगतेनै वमार्गेणपुनरागमनमन्यथावेतिभावः । नभगवइतिश्वेतकेतुः । तृतीयंपृच्छति ॥ वेत्थपथोरिति ॥ पथोरित्यस्यविवरणंदेवया नस्यपितृयाणस्यचेति । व्यावर्तनाःइतरेतरव्यावृत्तीर्वेत्थकिं । यत्साधनसाध्यत्वेनदेवयानपितृयाणयोरितरेतरव्यावृत्तिस्तत्साध नंवेत्थकिमित्याशयः । अन्यथाप्रथमप्रश्नेनगतार्थत्वप्रसंगात् । वाजसनेयकविरोधाच्च । नभगवइतिहोवाचश्वेतकेतुः ॥ २ ॥ चतुर्थंपृच्छति ॥ वेत्थयथेति ॥ पुनःपुनःप्रयद्भिरप्यसौलोकःपरलोकोयथायेनहेतुनानसंपूर्यतेतंवेत्थकिमिति । नभगवइतिश्वे तकेतुः । पंचमंपृच्छति ॥ वेत्थयथेति ॥ यथायेनक्रमेणप्रकारेणचपंचम्यामाहुतौहुतायामापःपुरुषवचसोभवंति । अद्भिःसंपरि ष्वक्तोजीवोलब्धदेहःपुरुषनामवान्भवति । किंतंक्रमंप्रकारंचवेत्थेति । नैवभगवइतिहोवाच । अवधारणेनातःपरंप्रश्नंव्यावर्तय ति ॥ ३ ॥ अथतर्हिंएवमज्ञःसन्किंनुकस्मान्नुअनुशिष्टोस्मीत्यवोचथाः । योहीमानिमयापृष्टान्यर्थजातानिनविद्यात् । कथंसवि द्वाननुशिष्टोस्मीतिब्रुवीतेतिप्रवाहणः । एवंसःश्वेतकेतुरायस्तःप्रवाहणेनायासितःनिरुत्तरितःअप्रतिष्ठितइतियावत् । स्वपितुरर्धं स्थानमेयायगत्वातंपितरमुवाच । अननुशिष्यसम्यग्विद्योपदेशमकृत्वैवकिलमामांप्रतिभगवानब्रवीदनुत्वाशिषं । त्वामन्वाशिष

उप० । वेत्थयथापुनरावर्तंता३यितिनभगवइति वेत्थपथोर्देवयानस्यपितृयानस्यचव्यावर्तना३यितिनभगवइति ॥ २ ॥ वेत्थयथासौलोकोनसंपूर्यता३यितिनभगवइतिवे त्थयथापंचम्यामाहुतावापःपुरुषवचसोभवंतीतिनैवभगवइति ॥ ३ ॥ अथनुकिमनुशिष्टोवोचथायोहीमानिनविद्यात्कथꣳसोनुशिष्टोब्रुवीतेति सहायस्तःपितुरर्धमेयायतꣳहो वाचाननुशिष्यवावकिलमाभगवानब्रवीदनुत्वाशिषमिति ॥ ४॥



मिति ॥ ४ ॥ यतःपंचसंख्याकान्प्रश्नान्प्रष्टव्यार्थान्राजन्यबंधुःक्षत्रियाभासःमामांअप्राक्षीत् । राजश्रेष्ठस्यापिकोपादिय मुक्तिः । तेषांप्रश्नानांमध्येएकंचनैकमपिप्रश्नंविवक्तुंअर्थविशेषेणनिर्णेतुंनाशकमिति । कतमेतेप्रश्नाइत्युक्तःप्रश्नवाक्यान्युदाजहारे तिग्राह्यं । एवमुक्तःसपितापुत्रक्रोधमुपशमयन्नुवाच । हेतातत्वंयथैतान्प्रश्नान्मामांप्रत्यवदस्तथाहमेषांप्रश्नानांमध्ये एकमपि यथा यथाव न्नवेदनजानामि । कुतःयद्यहमिमान्प्रश्नानवेदिष्यंतर्हिकथंतेप्रियायनावक्ष्यमिति । यदहंकिंचवेदसर्वमहंतुभ्यमवोचं । यदिराजपृष्टविद्येच्छातर्हिराजानंप्रत्येहि । तत्रगत्वाब्रह्मचर्यंवत्स्यावइतिपित्रोक्तोभवानेवगच्छत्वित्याहेतिग्राह्यं । वाजसनेयके तथाश्रवणात् ॥५॥ सएवंपुत्रोक्तोगोत्रतोगौतमोराज्ञोर्धस्थानमेयाय । तस्मैप्राप्तायगौतमायार्हांपूजांचकारराजा । सःगौतमःकृता तिथ्यउषित्वापरेद्युःप्रातःकालेराजनिसभागेसभांगतेसतिउदेयायह । सभागःसभाग्यइतिवा । तमागतंगौतमंप्रत्युवाचराजा । हे भगवन्पूजार्हगौतममानुषस्यवित्तस्यवरंहिरण्यादिविषयंवरंवृणीथाइति । एवमुक्तःसगौतमोहोवाच । हेराजन्मानुषंवित्तंतवैवास्तु । त्वंकुमारस्यमत्पुत्रस्यांतेसमीपेयामेववाचंप्रश्नरूपामभाषथास्तामेवमेब्रूहीति ॥ ६ ॥ सःराजास्वपृष्टस्यगोप्यत्वात्कृच्छ्रीबभूव । सकृच्छ्रीभूतोऽप्रत्याख्येयंब्राह्मणंमन्वानस्तंगौतमंचिरंवसेत्याज्ञापयांचकारह । चिरवासाज्ञापनेनिमित्तंवदन्राजातंहोवाच । हेगौतममांप्रतियथावदस्तामेवमेब्रूहीति । तथैवाहंकरिष्येत्वयिचिरोषितइत्यर्थः । नासंवत्सरवासिनइतिश्रुतेरितिभावः । वक्ष्यमा

उप० । पंचमाराजन्यबंधुःप्रश्नानप्राक्षीत्तेषांनैकंचनाशकंविवक्तुमितिसहोवाचयथामात्वंतातैतानवदोयथाहमेषांनैकंचनवेदयद्यहममानवेदिष्यंकथंतेनावक्ष्यमिति ॥५॥ सहगौ तमोराज्ञोर्धमेयायतस्मैहप्राप्तायार्हांचकारसहप्रातःसभागउदेयायतꣳहोवाचमानुषस्यभगवन्गौतमवित्तस्यवरंवृणीथाइतिसहोवाचतवैवराजन्मानुषंवित्तंयामेवकुमारस्यांतेवाचम भाषथास्तामेवब्रूहीति ॥ ६ ॥ सहकृच्छ्रीबभूवतꣳहचिरंवसेत्याज्ञापयांचकारतꣳहोवाचयथामात्वंगौतमावदो

णांविद्यांस्तौति॥यथेति॥इयंवक्ष्यमाणाविद्याप्राकृतदेवविवृणे ति॥त्वत्तुपुरेति॥त्वत्तएवपुराब्राह्मणान्यथायथावन्नगच्छतिन
गतवती ।क्षत्रस्यैवासाधारणविद्येयमितिभावः।कुतइत्यतस्तत्रक्षत्रगामिविद्याफलमेवहेतुमाह॥तस्मादिति॥तस्मात्विद्यायाः
क्षत्रमात्रनिष्ठत्वादेवखलुएतद्विद्यानुष्ठानेनसर्वेषुलोकेषुक्षत्रस्यैवप्रशासनंप्रशास्तृत्वमभूदित्युक्त्वातस्मैहोवाचविद्यांराजा॥ तृती
यःखंडः॥ ३॥इतरप्रश्नोत्तराणांपंचमप्रश्नोत्तरसापेक्षत्वादादौतस्योत्तरंवक्तुंवैराग्यार्थंजीवस्यागतिंनिरूपयन्पंचाग्निविद्यामाह॥
असावित्यादिना ॥हेगौतमासौमुख्यप्राणेस्थितोलोकःप्रकाशरूपोद्युलोकस्थोनारायणएवाग्निरदनादिकर्तृत्वात् ।अयंद्युलो
कस्थोनारायणःपुनर्नारायणाद्यात्मकत्वेनपंचरूपःतस्यद्युलोकस्थनारायणाख्याग्नेरादानादादित्यनामादित्यस्थोनारायणएव ।स
मेधनात्समिदित्युक्तः ।समित्स्थानीयःरश्मयोरतिशरूपतोरश्मिनामातदंतर्गतोवासुदेवोधूत्काराद्धूमइत्युक्तोधूमस्थानीयः अह
ननीयत्वादहर्नामातत्स्थःसंकर्षणोऽरंचितत्वादर्चिरित्युक्तोऽर्चिःस्थानीयः।सुखरूपत्वाच्चंद्रनामातत्स्थःप्रद्युम्नोंगरतेरंगाराइत्युक्तों
गारस्थानीयअनन्यराजत्वान्नक्षत्रनामकोऽनिरुद्धोविष्फुलिंगोविविधंस्फुरणात्तथोक्तस्तत्स्थानीयः॥१॥ तस्मिन्द्युस्थेनारायणा
ख्येएतस्मिन्नुक्तसमिदादिविशिष्टेऽग्नौदेवाःद्युलोकाधिपतयःश्रद्धांश्रद्धयेष्टवंतंउत्क्रांतंयजमानंजुह्वति ।अत्रश्रद्धाशब्दोजहल्लक्षण

उप०।यथेनंप्राक्त्वत्तुपुराविद्याब्राह्मणान्गच्छातितस्मादुसर्वेषुलोकेषुक्षत्रस्यैवप्रशासनमभूदितितस्मैहोवाच॥ ७॥ तृतीयःखंडः॥ ३॥ असौवावलोकोगौतमाग्निस्तस्या
दित्यएवसमिद्रश्मयोधूमोहरर्चिश्चंद्रमाअंगारानक्षत्राणिविष्फुलिंगाः॥ १॥ तस्मिन्नेतास्मिन्नग्नौदेवाःश्रद्धांजुह्वतितस्याआहुतेःसोमोराजासंभवति ॥ २॥ खं० ॥ ४॥

याश्रद्धयाद्भिश्चविशिष्टंजीवमाह ॥ तेनयजमानोत्क्रांतिकालएवापः श्रद्धावत्सहागताइतिसिद्ध्यति । अन्यथाअपामप्राप्तत्वे ।
इतितुपंचम्यामाहुतावापइत्यनुवादानुपपत्तेः । तथाचसूत्रं । प्रथमेश्रवणादितिचेन्नताएवाह्युपपत्तेरिति । एवंद्युलोकेदेवैर्निक्षि
प्तोयजमानःस्वपुण्यावसानेमर्त्यलोकोन्मुखस्तस्याआहुतेःसकाशात्सोमोराजासंभवति । सोमलोकांतर्गतोभवति ॥ २ ॥ चतु
र्थःखंडः ॥ ४ ॥ पर्जन्यस्तन्नामातत्स्थोवासुदेवोग्निःसोपिपूर्ववत्पंचरूपः । तस्यवाय्वभ्रविद्युदशनिह्रादुनिनामकास्तदंतर्गताःना
रायणादयः समिदादिस्थानीयाइत्यर्थः । तस्मिन्नेतस्मिन्नग्नौदेवाःसोमंराजानंतदंतर्गतंयजमानंजुह्वति । तस्याआहुतेर्वर्षोवृष्ट्यं
तर्गतोभवति ॥ २ ॥ पंचमःखंडः ॥ ५ ॥ पृथिवीतन्नामातत्स्थःसंकर्षणोग्निःतस्याःअग्निस्थानीयायाःपृथिव्याःसंवत्सरा
काशरात्रिदिगवांतरदिङ्नामानःतत्स्थाःनारायणादयःसमिदादिस्थानीयाइत्यर्थः ॥ १ ॥ तस्मिन्नेतस्मिन्नग्नौदेवाःवर्षंवर्षांतर्ग
तंजीवंजुह्वति । तस्याआहुतेरन्नमन्नांतर्गतःसंभवति ॥ २ ॥ षष्ठःखंडः ॥ ६ ॥ पुरुषस्तन्नामातत्स्थःप्रद्युम्नोग्निःतस्यवाक्प्रा
णजिह्वाचक्षुःश्रोत्रस्थाःतन्नामानोनारायणादयःसमिदादिस्थानीयाइत्यर्थः ॥ १ ॥ तस्मिन्नेतस्मिन्नग्नौदेवाअन्नमन्नांतर्गतंजीवं
जुह्वति । तस्याआहुतेरेतस्तदंतर्गतःसंभवति ॥ २ ॥ सप्तमःखंडः ॥ ७ ॥ योषातत्स्थस्तन्नामानिरुद्धोग्निःतस्याःअग्निरूपा

---

उप० । पर्जन्योवावगौतमाग्निस्तस्यवायुरेवसमिदभ्रंधूमोविद्युदर्चिरशनिरंगाराह्रादुनयोविष्फुलिंगाः ॥ १ ॥ तस्मिन्नेतस्मिन्नग्नौदेवास्सोमꣳराजानंजुह्वतितस्याआहुतेर्वर्षः
संभवति ॥ २ ॥ खं० ५ ॥ पृथिवीवावगौतमाग्निस्तस्याःसंवत्सरएवसमिदाकाशोधूमोरात्रिरर्चिर्दिशोंगाराअवांतरादिशोविष्फुलिंगाः ॥ १ ॥ तस्मिन्नेतस्मिन्नग्नौदेवावर्षंजुह्व
तितस्याआहुतेरन्नꣳसंभवति ॥ २ ॥ खं० ६ ॥ पुरुषोवावगौतमाग्निस्तस्यवागेवसमित्प्राणोधूमोजिह्वार्चिश्चक्षुरंगाराःश्रोत्रंविष्फुलिंगाः ॥ १ ॥ तस्मिन्नेतस्मिन्नग्नौदेवाअन्नंजुह्व
तितस्याआहुतेरेतःसंभवति ॥ २ ॥ खं० ७ ॥ योषावावगौतमाग्निस्तस्याउपस्थएवसमिद्यदुपमंत्रयतेसधूमोयोनिरर्चिर्यदंतःकरोतितेंगाराअभिनंदाविष्फुलिंगाः ॥ १ ॥

यायोषितउपस्थादिनामानस्तदंतर्गताश्चनारायणादयःसमिदादयः ॥१॥ तस्मिन्नेतस्मिन्नग्नौदेवाःरेतःतदंतर्गतंजीवंजुह्वति । तस्या आहुतेःगर्भोगर्भस्थःसंभवति ॥२॥ अष्टमःखंडः ॥८॥ किंततइत्यतःपंचमप्रश्नस्योत्तरंजातमित्याह ॥ इतिंत्विति ॥ इत्येव पंचम्यामाहुतौहुतायामापोजीवेनमरणकालेसहागताःभूतानीतियावत् । पुरुषवचसोभवंति । तैर्लब्धदेहोजीवःपुरुषनामवान्भ वतीत्यर्थः । एवंवैराग्यार्थमागमनंनिरूप्यगर्भवासादिदुःखंचनिरूपयति ॥ सइति ॥ सउल्बेनजरायुणाऽवृतोगर्भस्थोजीवो दशवामासान्यावत्स्थातव्यंतावद्वाअंतर्मातुःकुक्षौशयित्वाथजायते ॥ १ ॥ सजातोजीवोयावदायुषंजीवति । अथयदाम्रियते तदातंप्रेतंदिष्टंसाद्दष्टमितोलोकादग्नयएवहरंति । प्रकृतहोतारोदेवाः । अग्निंविशिनष्टि ॥ यतइति ॥ यतएवद्युपर्जन्यवृष्ट्या ख्याग्नेःसकाशाद्भूलोकमितःप्राप्तस्तत्रचयतःपुरुषयोषाग्नेःसंभूतस्तस्माएवाग्नयेहरंतीत्यर्थः ॥ २ ॥ नवमःखंडः ॥ ९ ॥ इदानीं प्रथमतृतीयप्रश्नयोरुत्तरमाह ॥ तदिति ॥ तत्तस्मात्काम्यकर्मणोगमनागमनहेतुत्वात्तत्रविरक्तायेइत्थंपंचाग्निविद्योक्तरीत्याभग वंतंविदुः । येचेमेरण्येमनोहरप्रदेशेश्रद्धातपइत्युपासते । श्रद्धातपःप्रभृतिनिवृत्तकर्मानुतिष्ठंति । येज्ञानप्रधानाःयेचकर्मप्रधाना इतियावत् । तेर्चिषमभिसंभवंति । प्राप्नुवंतीत्यादिदेवयानःपंथाइत्यंतंव्याख्यातंचतुर्थे ॥ १ ॥ २ ॥ एवंदेवयानंससाधनंनिरूप्य

उप० । तस्मिन्नेतस्मिन्नग्नौदेवारेतोजुह्वतितस्याआहुतेर्गर्भःसंभवति ॥ २ ॥ खं० ८ ॥ इतितुपंचम्यामाहुतावापःपुरुषवचसोभवंतीतिसउल्बावृतोगर्भोदशवामासानं तःशयित्वायावद्वाथजायते ॥ १ ॥ सजातोयावदायुषंजीवतितंप्रेतंदिष्टमितोग्नयएवहरंतियतएवेतोयतःसंभूतोभवति ॥ २ ॥ खं० ९ ॥ तद्यइत्थंविदुर्येचेमेऽरण्येश्रद्धातपइ त्युपासतेतेर्चिषमभिसंभवंत्यर्चिषोहरह्नआपूर्यमाणपक्षमापूर्यमणपक्षाद्यान्षडुदङ्डेतिमासांऽस्तान् ॥ १ ॥ मासेभ्यःसंवत्सरꣳसंवत्सरादादित्यमादित्याच्चंद्रमसंचंद्रमसोविद्युतं तत्पुरुषोमानवः सएनान्ब्रह्मगमयत्येषदेवयानःपंथाइति ॥ २ ॥

पितृयाणंससाधनंनिरूपयति ॥ अथेति ॥ यइमेकाम्यकर्मिणोग्रामेइष्टापूर्ते । यजनखातेदत्तंदानं इतिशब्दःप्रभृत्यर्थः । पितृश्रा द्धादिकमुपासते । आतिष्ठंतितेधूमंधूमदेवतालोकमभिसंभवंति । प्राप्नुवंति । धूमाद्रात्रिंरात्र्यभिमानिदेवतां । रात्रेरपरपक्षंकृ ष्णपक्षाभिमानिदेवतामपरपक्षात्यान्षण्मासान्दक्षिणादक्षिणतःएत्यादित्यस्तान्मासान्दक्षिणायनदेवतालोकंप्राप्नुवंति । ततः संवत्सरगमनंनिषेधति ॥ नैतइति ॥ ३ ॥ तर्हिततःक्वगच्छंतीत्यतआह ॥ मासेभ्यइति ॥ मासेभ्योदक्षिणायनसंज्ञिकेभ्यः पितृलोकंपितृलोकादाकाशंविनायकलोकमाकाशाच्चंद्रमसंप्राप्नुवंति । काम्यकर्मिगम्यंचंद्रमसमेवविशिनष्टि ॥ एषइति ॥ एषः चंद्रःसोमोराजासोमलताभिमानीत्यर्थः । तदेवदेवानामन्नंअतस्तंचंद्रंदेवाभक्षयंति । लताभिमानित्वेनेयमुक्तिः । अन्नविवक्षया तदितिनपुंसकप्रयोगः ॥ ४ ॥ वेत्थयथासौलोकोनसंपूर्यतइतिप्रश्नस्योत्तरमाह ॥ तस्मिन्निति ॥ तस्मिंश्चंद्रलोकेकर्मिणोयाव त्संपातमुषित्वाऽथकर्मक्षयेएतमेवाध्वानंपुनरावर्तंते । इदानींवेत्थयथापुनरावर्ततइत्यस्योत्तरंवदन्नेतमेवेत्युक्तंविवृणोति ॥यथेति॥ यथायेनमार्गेणस्वयमितंचंद्रलोकंप्रतिप्राप्तंतेनैवाध्वनापुनरावर्ततइत्यर्थः । गतेनैवमार्गेणागमनेऽनतिक्लेशेननस्वर्गेतिवैराग्यंस्या दित्यतोमार्गांतरंनिरूपयति ॥ आकाशमित्यादिना ॥ चंद्रलोकादागच्छन्आकाशमाप्नोति । आकाशाद्वायुमाप्नोतिवायुस्थो

उप० । अथयइमेग्रामइष्टापूर्तेदत्तमित्युपासतेतेधूममभिसंभवंतिधूमाद्रात्रिꣳरात्रेरपरपक्षमपरपक्षाद्यान्षड्दक्षिणैतिमासाꣳस्तान्नैतेसंवसरमभिप्राप्नुवंति ॥ ३ ॥ मासे भ्यःपितृलोकंपितृलोकादाकाशमाकाशाच्चंद्रमसमेषसोमोराजातद्देवानामन्नंतंदेवाभक्षयंति ॥ ४ ॥ तस्मिन्यावत्संपातमुषित्वाथैतमेवाध्वानंपुनरावर्ततेयथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वाधूमोभवतिधूमोभूत्वाभ्रंभवति ॥ ५ ॥

भूत्वाधूमस्थोभवतीत्याद्यर्थः ॥ ५ ॥ प्रवर्षतिवर्षांतर्गतोभवति । तेकर्मिणःइहलोकेकेचिद्व्रीहियवाःकेचिदोषधिवनस्पतयःकेचि
त्तिलमाषाःइतिशब्दोन्योपलक्षणार्थः । जायंते । अन्याधिष्ठितेव्रीह्यादिशरीरेप्रविशंति । नतुतदभिमानिनः तथाचोक्तमन्याधिष्ठि
तेपूर्ववदभिलापादिति । अतोव्रीह्यादिभावानंतरंखलुदुर्निष्प्रपतनंनितरांदुष्टपतनंभवतिवै तदेवविशदमाह ॥ यइति ॥ योयः
पुरुषोह्यन्नमत्तियश्चरेतःसिंचतितद्भूयएवभवति । तमेवानुप्रविशति ॥ ६ ॥ तत्ततस्तत्रकर्मिषुयेरमणीयचरणाःसाधुयज्ञादिमंत
स्तेइहभूमौरमणीयांयोनिमापद्येरन् । आपद्येरन्निितियत्तच्चाभ्याशःकालसामीप्येनेवेत्यर्थः । स्वर्गाल्लोकादवाक्प्राप्तोवत्सरात्पूर्व
मेवतु । मातुःशरीरमाप्नोतिइतिवचनात् । रमणीयांयोनिमित्युक्तंविशदमाह ॥ ब्राह्मणयोनिमित्यादिना ॥ अथेत्यादिकंस
मानं । कपूयचरणाः असाधुयज्ञादिमंतः ॥ ७ ॥ नन्वस्तुयेविद्यामार्गाःकर्ममार्गावातेषामुक्तरीत्याब्रह्मचंद्रप्राप्तिर्येषांतदुभयमपि
नास्ति । तेषांकागतिरित्यतआह ॥ अथेति ॥ एतयोरुक्तयोःपथोर्विद्याकर्ममार्गयोर्मध्येयान्येकतरेणापियथानगच्छंति । तानीमा
निक्षुद्रमिश्राणिअल्पानिसुखदुःखमिश्राणिअसकृदावर्तीनिसदागत्यादिमंतिजायस्वम्रियस्वपुनःपुनर्जायंतेम्रियंतेच । इत्येतत्स्व
र्गापवर्गयोरन्यत्तृतीयंस्थानमित्यर्थः । ततश्चयथासौलोकोनसंपूर्यतेइतिप्रश्नोत्तरंजातमित्याह ॥ तेनेति ॥ केषांचित्तत्रगमनाभा

उप० । अभ्रंभूत्वामेघोभवतिमेघोभूत्वाप्रवर्षतितइहव्रीहियवाओषधिवनस्पतयस्तिलामाषाइतिजायंतेततोवैखलुदुर्निष्प्रपतनंयोयोह्यन्नमत्तियोरेतःसिंचतितद्भूयएवभवति॥६॥
तद्यइहरमणीयचरणाअभ्याशोहयत्तेरमणीयांयोनिमापद्येरन्ब्राह्मणयोनिंवाक्षत्रिययोनिंवावैश्ययोनिंवाथयइहकपूयचरणाअभ्याशोहयत्तेकपूयांयोनिमापद्येरंश्वयोनिंवासूकरयोनिंवाचं
डालयोनिंवा ॥ ७ ॥ अथैतयोःपथोर्नकतरेणचतानीमानिक्षुद्रमिश्राण्यसकृदावर्तीनिभूतानिभवंतिजायस्वम्रियस्वेत्येतत्तृतीयꣳस्थानंतेनासौलोकोनसंपूर्यतेतस्माज्जुगुप्सेत ॥ ८ ॥

वाङ्गतानामपिपुनरावृत्तेरसौलोकोनसंपूर्यतइत्यर्थः । यदर्थगत्यादिनिरूपणंतदाह ॥ **तस्मादिति** ॥ यस्मादेवंज्ञानमार्गादन्यत्र गतागतादिक्लेशस्तस्मात्तत्रजुगुप्सेत । विरक्तोभवेदित्यर्थः ॥ ८ ॥ पंचाग्निविद्यावेत्तुःपातकिसंसर्गदोषाभावंफलंवक्तुंतत्संसर्गस्य दोषत्वेश्लोकंप्रमाणयति ॥ **तदिति** ॥ तत्तत्राभिप्रेतेपातकिसंसर्गस्यतत्सदृशदोषित्वेएषःवक्ष्यमाणःश्लोकोभवति । तमेवपठति ॥ **स्तेनइति** ॥ इत्येतेचत्वारःपतंति । पंचमश्चतैःसहचरन्पतति ॥ ९ ॥ किंततइत्यतआह ॥ **अथेति** ॥ यएतानेवंपंचाग्नीन्वेदसतैश्चतुर्भिःपातकिभिःसहाचरन्नपिपाप्मनानलिप्यते । नकेवलमेतावत् । यएवंवेदसशुद्धःपूतःअंतर्बहिश्चशुद्धःस्वयं शुद्धःपावयत्यन्यानितिपूतइतिवा । निवृत्तपुण्यसाध्योलोकःप्राप्योयस्यासौपुण्यलोकोभवति । तथाचोक्तं । द्विपर्जन्यधरापुंस्त्रीसंस्थितंपंचरूपिणंनारायणं । वासुदेवंतथासंकर्षणंप्रभुं । प्रद्युम्नंचानिरुद्धंचक्रमाद्ध्यायंस्तुसर्वदा । पंचाग्निविन्नामभवेत्सयातिपरमंपदं । नास्यसंसर्गदोषोस्तिकदाचनभविष्यतीति ॥ १० ॥ दशमःखंडः ॥ १० ॥ एवंपरब्रह्मविषयापंचाग्निविद्योक्ता । इदानींतद्विषयमेववैश्वानरविद्यामाख्यायिकयाह ॥ **प्राचीनशालइत्यादिखण्डचतुर्दशकेन** । महाशालो विस्तीर्णगृहवान् । महाश्रोत्रियःछंदःपाठमात्रवानितिप्रतीतिनिरासायप्रमाणेनैवतद्व्याचष्टे ॥ **प्रत्यब्देति** ॥ वैश्वानरशब्द

---

उप० । तदेषश्लोकः । स्तेनोहिरण्यस्यसुरांपिबंश्चगुरोस्तल्पमावसन्ब्रह्महाच । एतेपतंतिचत्वारःपंचमश्चाचरंस्तुतैरिति ॥ ९ ॥ अथहयएतानेवंपंचाग्नीन्वेदनसहतैरप्याचरन्पाप्मनालिप्यतेशुद्धःपूतःपुण्यलोकोभवतियएवंवेदयएवंवेद ॥ १० ॥ खं० ॥ १० ॥

भाष्यं । प्रत्यब्दयज्ञकृत्सम्यङ्महाशालःप्रकीर्तितः । वेदवेदार्थवित्सम्यङ्महाश्रोत्रियउच्यते ।

श्रवणादग्निरत्रोच्यतइत्यन्यथाप्रतीतिनिरासायप्रमाणेनैवतांविद्यांविष्णुपरतयाव्याचष्टे ॥ क्रीडात्मकत्वादित्यादिना ॥ वैश्वानरस्यद्युत्वादिनाकल्पनोच्यतइतिप्रतीतिनिरासायतावदौपमन्यवेतिखंडतात्पर्यमाह ॥ क्रीडेति ॥ दिवुक्रीडेत्यादिधातोः । स्वर्गाधारमितिद्याख्यत्वेनिमित्तांतरं । सत्ययज्ञमितिखंडतात्पर्यमाह ॥ सर्वेति ॥ विष्णोश्चक्षुःसर्वरूपातिदर्शनाद्विश्वरूपाख्यमादित्याख्यंचेत्यन्वयः । आदित्याख्यत्वेनिमित्तांतरमाह ॥ सूर्यस्यापीति ॥ इंद्रद्युम्नंभाल्लवेयमितिखंडतात्पर्यमाह ॥ वाय्वादीति ॥ हरेःप्राणोयतोवाय्वादिप्राणशक्यंयन्नभवतितत्कर्तातेनपृथग्वर्त्मावायुश्चेतिसंबंधः । वायुनामकत्वेनिमित्तांतरंवायोरपीति । जनंशार्कराक्ष्यमितिखंडतात्पर्यमाह ॥ बहुत्वादिति ॥ बुडिलमाश्वतराश्विमितिखंडतात्पर्यमाह ॥ व्यासत्वादिति ॥ रमापतेर्वस्तिःकटिप्रदेशः । मध्यदेहवस्त्योराकाशाख्नामकत्वेनिमित्तांतरमाह ॥ आकाशेति ॥ आकाशवारिणोः । उद्दालकमारुणिमितिखंडतात्पर्यमाह ॥ प्रथनादिति ॥ पृथिवीनामेत्यादौद्विवचनंग्राह्यं । एकवचनप्रयोगस्तुश्रुत्यनुसारात् । पृथिवीनामकत्वेनिमित्तांतरंपृथिवीति । एवेत्यभेदव्यावृत्तिः । ननुविष्णोःपादस्यतद्विष्णोःपरमंपदंदिवीवचक्षुराततमित्याततत्वश्रवणात्कथंपृथिव्याश्रयत्वेनपृथिवीमात्रस्थत्वोक्तिरित्यतआह ॥ उत्तमानामिति ॥ हियस्मात्पादशब्देनोत्तमा

भाष्यं । क्रीडात्मकत्वाद्द्याख्यंचसुतेजाश्चातितेजसा । स्वर्गाधारंशिरोविष्णोःसर्वरूपातिदर्शनात् । चक्षुस्तुविश्वरूपाख्यमादानादायुषामपि । आदित्याख्यंचसूर्यस्याप्याश्रयं सर्वदास्मृतं । वाय्वादिप्राणशक्यंनयत्तत्कर्ताहरेर्यतः । प्राणस्तेनपृथग्वर्त्मावायुर्ज्ञानायुरूपतः । वायोरप्याश्रयोनित्यबहुत्वाद्बहुलःस्मृतः । आकाशनामाचादीप्तेर्मध्यदेहोरमापतेः । व्यासत्वादापइत्युक्तोरयीरतिकरत्वतः । वस्तिराकाशवार्योश्चतावाधारौप्रकीर्तितौ । प्रथनात्पृथिवीनामाप्रतिष्ठाचप्रतिष्ठितेः । पादौभगवतोविष्णोःपृथिव्याश्रयएवच । उत्तमानां हिपादेनसर्वरूपंहिकथ्यते ।



नांसर्वरूपंकथ्यते । नपादमात्रमस्माद्विष्णोःपदमितिवैदिकीप्रथितिःस्मृता । तथाचश्रुतेःस्वरूपव्यासत्वपरत्वात्पादस्यपृथिवीस्थत्वेनतद्विरोधइतिभावः । यद्वा ननुस्थूलभुग्वैश्वानरःप्रथमःपादइतिश्रुत्यंतरेपादशब्दस्यसमग्रवैश्वानररूपेप्रयुक्तत्वादत्रपृथिव्येवपादौइतिएकावयवेप्रयोगःकथमित्यतआह॥ उत्तमानांहीति ॥ तत्कुतइत्यतस्तत्पर्यायशब्दप्रयोगादित्याह ॥ विष्णोःपदमिति ॥ तथाचश्रुत्यंतरस्थपादशब्दस्यसर्वरूपवाचित्वादत्रत्यस्यप्रसिद्धचरणवाचित्वान्नतद्विरोधइतिभावः । तद्यद्भक्तमितिखंडेप्राणाहुतितृप्यतयोक्तानांप्राणचक्षुरादित्यानांभेदेथयोस्यप्राङ्सुषिःसप्राणस्तच्चक्षुःसआदित्यइतिदेवसुषिविद्योक्तविरोधइत्यतआह ॥ प्राणइति ॥ अतएवोत्तरत्रद्यौश्चादित्यश्चेतिआदित्यस्यैवानुवादइतिभावः । व्यानाहुतितृप्यतयोक्तानांव्यानश्रोत्रचंद्रमसांभेदेऽथयोस्यदक्षिणःसुषिःसव्यानःतच्छ्रोत्रंसचंद्रमाइतिप्रागुक्तविरोधश्चंद्रमसएवानुवादायोगश्चेत्यतआह ॥ व्यानइति ॥ अपानाहुतितृप्यतयोक्तानामपानवागग्नीनांभेदेऽथयोस्यप्रत्यङ्सुषिःसोऽपानःसावाक्सोग्निरित्युक्तविरोधोग्नेरेवानुवादायोगश्चेत्यतआह ॥ वागिति ॥ समानाहुतितृप्यतयोक्तानांसमानमनःपर्जन्यानांभेदेऽथयोस्योदङ्सुषिःससमानस्तन्मनःसपर्जन्यइतिप्रागुक्तविरोधोनुवादानुपपत्तिश्चेत्यतआह ॥समानइति॥ मनएवेत्येवशब्दश्चशब्दार्थः । इंद्रइत्यनेनसंबध्यते । इंद्रइतिपर्जन्यशब्दव्याख्यानं । पर्जन्योमघवांश्चैवपुरुहूतःपुरंदरइत्यभिधानात् । अतिनीचस्यद्वारपत्वोक्त्याविशेषादतिशयालाभाच्चेति

भाष्यं । विष्णोःपदमितिह्यस्मात्प्रथितिर्वैदिकीस्मृता । प्राणश्चक्षुस्तथादित्यइत्येकादेवतास्मृता । पूर्वद्वारपतिर्विष्णोर्व्यानःश्रोत्रंचचंद्रमाः । दक्षिणद्वारपस्त्वेकोवागपानोग्निरेवच । पश्चिमद्वारपोप्येकःसमानोमनएवच । इंद्रइत्येकएवोक्तउत्तरद्वाररक्षकः ।

भावः । उदानाहुतितृप्यतयोक्तयोरुदानवाय्वोर्भेदशंकायांतावदाह ॥ उदानइति ॥ आकाशस्यापिभेदशंकामपाकरोति ॥ सए वेति ॥ अन्यथाऽयोस्योर्ध्वःसुषिःसउदानःसवायुःसआकाशइत्युक्तविरोधोनुवादायोगश्चेतिभावः । ननुवायोरेवाकाशनामत्वेवायु श्चाकाशश्चेतिपृथगुक्तिरनुपपन्नेत्यतआह ॥ लक्ष्म्याविष्टइति ॥ रूपांतरस्यापि लक्ष्म्याविष्टत्वात्विशेषतइत्युक्तं । एवंचकेवलोवायु र्वायुशब्देनोच्यतइतिनपृथगुक्तिरनुपपन्नेतिभावः। वायुश्चाकाशश्चेतिवाक्यविचारप्रसंगात् । द्यौश्चादित्यश्चदिशश्चचंद्रमाश्चपृथि वीचाग्निश्चविद्युच्चपर्जन्यश्चेत्युक्तानांद्युदिक्पृथिवीविद्युच्छब्दानामभिधेयमाह ॥ पृथिवीति ॥ तुशब्दोवधारणे। वायुपत्न्येव । नन्वेवमादित्येतृप्यतिद्यौस्तृप्यतीत्यादिनाऽदित्यादितृप्तौकथंद्य्वादीनांतृप्त्युक्तिः। अन्यतृप्तावन्यतृप्तेःकारणविशेषमंतरेणासंभवा दित्यतआह ॥ तत्तदिति ॥ तेपृथिव्यादिनामकाश्च। तत्रपृथिवीनामिकाश्रीःपश्चिमद्वारपावायुपत्नीतुपूर्वदक्षिणोत्तरद्वारपेतिवि वेकः । नन्वादित्यादीनांपृथिव्यादीनांद्वारपत्वंनात्रश्रुतावुक्तमित्यतआह ॥ अधितिष्ठंतीति ॥ तस्मादधितिष्ठंतीत्युक्तिरिति शेषः । अनामयमामयोपलक्षितदोषशून्यमितिनारायणशब्दव्याख्यानं । ननुश्रुतौयत्किंचेतिश्रवणात्कथंनारायणमित्युक्त मित्य तोयत्किंचशब्दावपिभगवत्परतयाव्याचष्टे ॥ यदिति ॥ चशब्दोविशेषणसमुच्चायकइतिभावः । तत्तृप्यतीतिवाक्यपंचकंव्या चष्टे ॥ एतेष्विति ॥ कथमन्यतृप्तावन्यतृप्तिरित्यतआह ॥ एषामिति ॥ तस्यानुतृप्तिंतृप्यतिप्रजयापशुभिरित्यादिवाक्यपंच

भा० । उदानोवायुरित्येकऊर्ध्वद्वाराधिपश्चसः । सएवाकाशनामाचलक्ष्म्याविष्टोविशेषतः । पृथिवीनामिकाश्रीस्तुद्यौर्दिशोविष्णुरेवच । वायुपत्नीसमुद्दिष्टातत्तद्वारा धिपाश्चते । अधितिष्ठंतितेसर्वेनारायणमनामयं । यद्विष्णुर्ज्ञानरूपत्वात्किमानंदस्वरूपतः । एतेषुतृप्तेषुहरिस्तृप्यत्येषांप्रियोह्यसौ ।

केनोपासकस्यैहिकमेवफलमुच्यते । नकेवलमेतावत् । मौक्तंचास्ति । प्रतिपद्यतेस्वर्गंलोकंयएतानेवंपंचब्रह्मपुरुषान्वेदेत्युक्तेरिति भावेनतत्रविशेषमाह ॥ **सूर्येति** ॥ अनेननराःपूर्वद्वारपोपासकाइत्यादिविशेषोज्ञायते । हृदयस्थपूर्वद्वारपोपासनेनश्वेतद्वीपादिलोकेपूर्वद्वारेणकेशवंप्राप्नुवंतीत्यादिज्ञेयं । किंसूर्यादिप्रसादेनैवहरिंयांति नेत्याह ॥ **वैश्वानरेति** ॥ नरादिसुरांतानांसम्यग्ज्ञानंकिमेकप्रकारं नेत्याह ॥ **वैश्वानरज्ञानेति** ॥ अत्रज्ञानमुपासनं । साक्षान्मुख्यतः तत्कुतइत्यतआह ॥ **तस्मादिति** ॥ तस्मादेवफलंश्रुत्युक्तं । एवंवैश्वानरविद्यायामेव । वैश्वानरविद्याया भगवत्परतयाव्याख्यातत्वाद्विष्णुरेववैश्वानरोनदेवताभूतंचेत्युक्तं । प्रकरणसमाख्याभ्यांचायंनिश्चयोभवतीत्याह ॥ **कोनइति** ॥ कोनआत्माकिंब्रह्मेतिविचारपूर्वकंवैश्वानरविद्यायाआरभ्याधीतत्वेनविष्णुप्रकरणत्वाच्चवैश्वानरोविष्णुरितिसिद्धं । अनात्तत्वादनात्मानइतिवचनेनविष्णोरन्येषामात्मत्वाद्यसंभवादित्यर्थः। मांडूकेस्थूलभुग्वैश्वानरइतिविष्णौवैश्वानरशब्दप्रयोगात् । अत्रापिवैश्वानरोविष्णुरितिसिद्धं । नचतत्रापिविष्णुःकुतइतिवाच्यं । सोयमात्मेत्युपक्रमेन्यत्रासंभव्यात्मशब्दश्रवणेनास्यविष्णुप्रकरणत्वादितिभावः । आत्मानंवैश्वानरमित्युक्तोवैश्वानरोविष्णुरेव । अग्नाविष्णोःसाधारणस्यापिवैश्वानरशब्दस्यविष्णावेवप्रसिद्धात्मशब्देनविशेषणादितिसूत्रार्थः।आदिपदेनशीर्ष्णोद्यौःसमवर्तत। च

---

भा० । सूर्यप्रसादात्तुनराःपूर्वद्वारेणकेशवं । प्राप्नुवंत्यथसोमस्यप्रसादात्पितरस्तथा । द्वारेणदक्षिणेनैवगंधर्वाःपश्चिमेनतु । अग्निप्रसादाद्दषयउत्तरेणेंद्रसंश्रयात् । शिवाद्यावायुमाश्रित्ययांत्यूर्ध्वेणहरिंसुराः । वैश्वानराख्यविष्णोस्तुसम्यग्ज्ञानेनसर्वशः । वैश्वानरज्ञानयोग्याःसाक्षादेवसुराःस्मृताः । तस्मात्तेषांफलंसर्वमन्येषांतुस्वयोग्यतइतिवैश्वानरविद्यायां । कोनआत्माकिंब्रह्मसोयमात्माचतुष्पात् । स्थूलभुग्वैश्वानरःप्रथमःपादः । ॐ वैश्वानरःसाधारणशब्दविशेषात् । ॐ। अहंवैश्वानरोभूत्वाप्राणिनांदेहमाश्रितइत्यादेश्चवैश्वानरोविष्णुरितिसिद्धं ।

क्षोःसूर्योअजायत । प्राणाद्वायुरजायत । पद्भ्यांभूमिरित्यादिपुरुषसूक्तसमाख्याग्रहणं । अत्रापिमूर्धैवसुतेजाइत्यादिश्रवणात् । तथाचोक्तं । पुरुषविधमपिचैनमधीयतइति । वायुश्चाकाशश्चाधितिष्ठतइत्युक्ताकाशोवायुरेवेत्युक्तं । तच्छ्रौतार्थापत्त्यासमर्थयते ॥ सवायुरिति ॥ देवसुषिविद्यायांसउदानःसवायुःसआकाशइत्यभेदवचनादाकाशस्तावत्वायुरेव । अत्रवायुश्चाकाशश्चेतिभेदवचनादाकाशाख्यंवायोरूपमन्याधिष्ठितंवायुस्तुकेवलंवायोःस्वरूपमितिविज्ञायतइत्यर्थः । लक्ष्म्याविष्टत्वेनवायुराकाशइत्युक्तं । तत्रलक्ष्मीवाय्वोराकाशनामकत्वेऽभिधानमाह ॥ आकाशेति ॥ ननुभगवदंगानांपरस्परंभेदाभावादन्योन्यनामवत्त्वाच्चकथंमूर्धैवसुतेजाश्चक्षुर्विश्वरूपइत्यादिभेदेनव्यपदेशइत्यतःउपासकदृष्ट्यनुसारेणेतिस्मृत्याह ॥ सुतेजइति ॥ ततश्चेयंखण्डचतुर्दशकस्याक्षरयोजना ॥ प्राचीनशालोनामतः उपमन्योरपत्यमौपमन्यवइत्येकः । सत्ययज्ञोनामतः पुलुषस्यापत्यंपौलुषिरित्यपरः । इंद्रद्युम्नोनामतः भल्लवेरपत्यंभाल्लवेयइत्यन्यः । जनोनामतः शर्कराक्षस्यापत्यंशार्कराक्ष्यइत्येकः । बुडिलोनामतः अश्वतराश्वस्यापत्यमाश्वतराश्विरित्यपरः । तेहैतेपंचमहाशालाःसम्यक्प्रत्यब्दयज्ञकृतोमहाश्रोत्रियाःसम्यग्वेदत्रेदार्थविदःसमेत्यमिलित्वामीमांसांविचारंचक्रुः । नोस्माकमुपास्यःआत्मावैश्वानराख्यःकिंलक्षणकः । ब्रह्मचतदा

भा० । सवायुस्सआकाशःवायुश्चाकाशश्चाधितिष्ठतइतिवचनाद्वायोरूपमन्याधिष्ठितमाकाशाख्यंवायोःस्वरूपमितिविज्ञायते । आकाशनामाविघ्नेशोवायुश्चाकाशकःस्मृतः । आकाशइतिलक्ष्मीश्वतथाकाशोहरिःस्वयमितिशब्दनिर्णये । सुतेजोविश्वरूपादिभेदेनांगानिमापतेः । अभिन्नान्यपिकथ्यंतेलोकदृष्टिविभेदतइतिच॥ **इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमच्छांदोग्यभाष्येपंचमोध्यायः ॥ ५ ॥**

उप०। प्राचीनशालऔपमन्यवःसत्ययज्ञःपौलुषिरिंद्रद्युम्नोभाल्लवेयोजनःशार्कराक्ष्योबुडिलआश्वतराश्विस्तेहैतेमहाशालामहाश्रोत्रियाःसमेत्यमीमांसांचक्रुःकोनआत्माकिंब्रह्मेति॥१ ॥



ख्यंकिमिति ॥ १ ॥ एवमात्मसुपरस्परंविचारेणापिविशेषनिर्णयमलभमानास्तेविशेषनिर्णयार्थमुद्दालकंसंपादयांचक्रुः । संपादनप्रकारमेवाह ॥ उद्दालकइति ॥ हेभगवंतःउद्दालकोनामतःअरुणस्यापत्यमारुणिः । संप्रतीदानीमस्मदभिमतमात्मानंवैश्वानरमध्येत्यधिकंजानाति । तंहाभ्यागच्छामेत्युक्त्वातमुद्दालकंप्रत्याजग्मुः ॥ २ ॥ तदासःउद्दालकःतदागमनप्रयोजनंबुद्ध्वासंपादयांचकारैतेषामन्यमुपदेष्टारं।स्वयमेवकुतोनोक्तमित्यतआह॥ प्रक्ष्यंतीति॥ इमेमहाशालत्वादिगुणाःमांप्रक्ष्यंतितेभ्योवक्तुंसर्वमेवतत्पृष्टंनप्रतिपत्स्येहंताहमन्यमेषामनुशासकमनुशासानीतिविचिंत्य॥३॥तान्होवाच॥ हेभगवंतोश्वपतिर्नामतःकैकेयःकेकयदेशाधिपतिःसंप्रतीममात्मानंवैश्वानरमध्येति । तंहाभ्यागच्छामेति । एवमुक्तास्तेतमश्वपतिंप्रत्याजग्मुर्ह ॥ ४ ॥ तेभ्योहप्राप्तेभ्योब्राह्मणेभ्यःपृथक्पृथक् । अर्हाणिअर्हणानि । कारयांचकार । सराजापरेद्युःप्रातःसंजिहानःशयनीयादुत्तिष्ठन्नुवाच । युष्मदागमनेकिंकारणं । नतावत्स्तेनादिभयं । तेषांमद्राष्ट्रेऽभावादित्याह ॥ नेति॥ कदर्योऽदातासतिविभवे यथाकालमाचारहीनोवा । स्वैर्यभावेस्वैरिणीकुतः । धनार्थिनश्चेद्दास्यामीत्याह ॥ यक्ष्यमाणइति ॥हेभगवंतोहंयक्ष्यमाणोस्मिवै । तत्रयावदेकैकस्मात्त्विजेधनंदास्या

उप० । तेहसंपादयांचक्रुरुद्दालकोवैभगवंतोयमारुणिःसंप्रतीममात्मानंवैश्वानरमध्येतितᳵहंताभ्यागच्छामेतितᳵहाभ्याजग्मुः ॥ २ ॥ सहसंपादयांचकारप्रक्ष्यंतिमामिमेमहशालामहाश्रोत्रियास्तेभ्योनसर्वमिवप्रतिपत्स्येहंताहमन्यमभ्यनुशासानीति ॥ ३ ॥ तान्होवाचाश्वपतिर्वैभगवंतोऽयंकैकेयःसंप्रतीममात्मानंवैश्वानरमध्येतितᳵहाभ्यागच्छामेतितᳵहाभ्याजग्मुः ॥ ४॥ तेभ्योहप्राप्तेभ्यःपृथगर्हाणिकारयांचकारसहप्रातःसंजिहानउवाच । नमेस्तेनोजनपदेनकदर्योनमद्यपोनानाहिताग्निर्नाविद्वान्नस्वैरीस्वैरिणीकुतोयक्ष्यमाणोवैभगवंतोहमस्मियावदेकैकस्मात्त्विजेधनंदास्यामितावद्भगवद्भ्योदास्यामिवसंतुभगवंतइति ॥ ५ ॥

छांदोग्य ॥१६०॥ मितावद्भगवद्भ्योदास्यामिवसंतुभगवंतःइत्युवाचेतिसंबंधः॥५॥ एवमुक्तास्तेहोचुः। येनैवेहार्थेनज्ञानादिरूपेणसाधितेनेतिशेषः। वेदेशी० खंडार्थः ५।१२

पुरुषश्चरेत्गच्छेन्मोक्षादिकंतमेववदेत्भवदादिः।यद्वायेनैवेहार्थेनप्रयोजनेनसाधितेनागतःपुरुषश्चरेत्परावृत्त्यस्वग्रामादिकंगच्छे त्तदेववदेदित्यर्थः। तर्हिकिंभवदागमनेप्रयोजनमित्यतआह ॥ आत्मानमिति ॥६॥ तान्होवाचराजाप्रातर्वःप्रतिवक्तास्मीति। तेषट्ब्राह्मणाःसमित्पाणयःपरेद्युःपूर्वाह्णेराजानंप्रतिचक्रमिरे। तान्हाऽनुपनीयशिष्यतयोपगमनमकारयित्वैवैतद्वक्ष्यमाणमुवाच। ब्राह्मणानांक्षत्रियादुत्तमत्वात् ॥७॥ एकादशःखंडः ॥११॥ हेऔपमन्यवत्वमात्मानंवैश्वानरंकंकिन्नामकमुपास्सइति। हेभगवोभगवन्राजन्दिवमेवक्रीडात्मकत्वाद्व्याख्यंस्वर्गाधारमेवात्मानंवैश्वानरउपास्सइतिहोवाच। वक्ष्यमाणविशेषव्यावृत्त्यर्थए वशब्दःतत्रस्वयंविशेषमाह ॥ एषइति ॥ यमात्मानंवैश्वानरंत्वमुपास्सेएषःद्युस्थोवैश्वानरोविश्वनरसंबंधित्वाद्वैश्वानराख्यः। आत्माभगवान्सुतेजाः अतितेजसासुतेजोनामकःयत्तवास्तितत्तदुपासनाफलमेवेत्याह ॥ तस्मादिति॥ द्युस्थवैश्वानरोपासकत्वा त्तवकुलेस्वर्गप्राप्त्यर्थंसोमरूपंद्रव्यंसुतंप्रसुतंआसुतं । सवनत्रयकथनमेतत् । दृश्यतेअतीवकर्मिणस्त्वत्कुलीनाइत्यर्थः।

---

उप०। तेहोचुर्येनहैवार्थेनपुरुषश्चरेत्तꣳहैववदेदात्मानमेवेमंवैश्वानरꣳसंप्रत्यध्येषितमेवनोब्रूहीति ॥ ६ ॥ तान्होवाचप्रातर्वःप्रतिवक्तास्मीतितेहसमित्पाणयःपूर्वाह्णेप्रतिचक्रमिरेतान्हानुपनीयैवैतदुवाच ॥ ७ ॥ खं० ११ ॥ औपमन्यवकंत्वमात्मानमुपास्सइतिदिवमेवभगवोराजन्नितिहोवाचैषवैसुतेजाआत्मावैश्वानरोऽयंत्वमात्मानमुपास्सेतस्मात्तवसुतंप्रसुतमासुतंकुलेदृश्यते ॥ १ ॥

सुतंप्रसुतमासुतंपुत्रपौत्रतत्पुत्राइतिवा ॥ १ ॥ अन्नमत्सिदीप्ताग्निःसन्प्रियंपश्यसि । एवमन्यस्यापिवैश्वानरज्ञानिनःफलमाह ॥ अत्तीति ॥ योधिकारीएतमात्मानंवैश्वानरंविष्णुमुपास्ते । सोप्यन्नमत्तिप्रियंपश्यति । अस्योपासकस्यकुलेब्रह्मवर्चसंभवति । विशेषांतरमाह ॥ मूर्धेति ॥ एषःद्युस्थोद्युनामकःसुतेजोनामकश्चात्मनोवैश्वानरस्यमूर्धैवेतिहोवाच । किमेतज्ज्ञानेनयावन्मयाज्ञातंतावदेवालमित्यतआह॥ मूर्धेति ॥ यद्यदिमांप्रतित्वंनागमिष्यस्तर्हितेमूर्धोपास्यवैश्वानरमूर्धाऽपरिज्ञानापराधेनव्यपतिष्यत् । इतिशब्दः औपमन्यवोपदेशसमाप्त्यर्थः ॥ २ ॥ द्वादशःखंडः ॥ १२ ॥ अथौपमन्यवोपदेशानंतरंसत्ययज्ञंपौलुषिंप्रत्युवाचेत्यादिकंसमानं । प्राचीनयोग्यानादियोग्यतावान् । आदित्यमेवादानादादित्यनामकमादिस्थत्यमेव । सर्वरूपातिदर्शनाद्विश्वरूपाख्यःबहुविश्वरूपमित्युक्तंविशदमाह ॥ १ ॥ प्रवृत्तइति ॥ चक्षुस्तुचक्षुरेव ॥ २ ॥ त्रयोदशःखंडः ॥ १३ ॥ वैयाघ्रपद्यव्याघ्रपाद्गोत्रापत्यवायुंवायुस्थंज्ञानायुरूपतोवायुनामानमेव । पृथग्वर्त्मापृथक्विलक्षणोवर्त्मामार्गोयस्यासौतथोक्तः । वाय्वादिप्राणशक्यं

---

उप० । अत्स्यन्नंपश्यसिप्रियमत्त्यन्नंपश्यतिप्रियंभवत्यस्यब्रह्मवर्चसंकुलेयएतमेवमात्मानंवैश्वानरमुपास्तेमूर्धात्वेषआत्मनइतिहोवाचमूर्धातेव्यपतिष्यद्यन्मांनागमिष्यइति॥२॥ खं० ॥ १२ ॥ अथहोवाचसत्ययज्ञंपौलुषिंप्राचीनयोग्यकंत्वमात्मानमुपास्सइत्यादित्यमेवभगवोराजन्निितिहोवाचैषवैविश्वरूपआत्मावैश्वानरोयंत्वमात्मानमुपास्सेतस्मात्तवबहुविश्वरूपंकुलेदृश्यते ॥ १ ॥ प्रवृत्तोश्वतरीरथोदासीनिष्कोत्स्यन्नंपश्यसिप्रियमत्त्यन्नंपश्यतिप्रियंभवत्यस्यब्रह्मवर्चसंकुले यएतमेवमात्मानंवैश्वानरमुपास्तेचक्षुष्ट्वेतदात्मनइतिहोवाचांधोभविष्योयन्मांनागमिष्यइति ॥ २ ॥ खं० ॥ १३ ॥ अथहोवाचेंद्रद्युम्नंभाल्लवेयंवैयाघ्रपद्यकंत्वमात्मानमुपास्सइतिवायुमेवभगवोराजन्निितिहोवाचैषवैपृथग्वर्त्मात्मावैश्वानरोयंत्वमात्मानमुपास्सेतस्मात्त्वांपृथग्बलयआयंतिपृथग्रथश्रेणयोनुयंति ॥ १ ॥

यन्नतत्कर्तृत्वात् । पृथक्कुबलयोविलक्षणपूजासाधनानिपृथग्रथश्रेणयोविलक्षणरथपंक्तयः ॥१॥ प्राणःप्राणवायुः ॥२॥ चतुर्दशः खंडः ॥ १४ ॥ आकाशमाकाशस्तमादीसेराकाशनामकमेव । बहुत्वाद्बहुलः । प्रजयाचधनेनच । बहुलःप्रभूतोसि ॥ १ ॥ संदोहोमध्यदेहः ॥ २ ॥ पंचदशःखंडः ॥ १५ ॥ आपएवव्याप्तत्वादन्नामकमप्स्थमेव । रयिःरतिकरत्वतः । रयिमान्धनवान् ॥ १ ॥ वस्तिःकटिप्रदेशः ॥ २ ॥ षोडशःखंडः ॥ १६ ॥ पृथिवीमेवप्रथनात्पृथिवीनामकंपृथिव्याधारमेव । प्रतिष्ठाप्रतिस्थितेः ॥ १ ॥ व्यम्लास्येतांभज्येयातां ॥ २ ॥ सप्तदशःखंडः ॥ १७ ॥ एवंप्रत्येकमुपदिश्यतान्ब्राह्मणान्होवाच । एतेवैखलुयूयमिममात्मानंवैश्वानरंपृथगिवविद्वांसोन्नमत्थ । भगवदंगानांभेदाभावादिवशब्दः । इदानींसमग्रात्मोपासकस्यफल

---

उप० । अत्स्यन्नंपश्यसिप्रियमत्त्यन्नंपश्यतिप्रियंभवत्यस्यब्रह्मवर्चसंकुलेयएतमेवमात्मानंवैश्वानरमुपास्तेप्राणस्त्वेषआत्मनइतिहोवाचप्राणस्तउदक्रमिष्यद्यन्मांनागमिष्यइति ॥ २ ॥ खं० ॥ १४ ॥ अथहोवाचजन२शार्कराक्ष्यकंत्वमात्मानमुपास्सइत्याकाशमेवभगवोराजन्नितिहोवाचैषवैबहुलआत्मावैश्वानरोयंत्वमात्मानमुपास्सेतस्मात्त्वंबहुलोसिप्रजयाचधनेनच ॥ १ ॥ अत्स्यन्नंपश्यसिप्रियमत्त्यन्नंपश्यतिप्रियंभवत्यस्यब्रह्मवचसंकुलेयएतमेवमात्मानंवैश्वानरमुपास्तेसंदोहस्त्वेषआत्मानइतिहोवाचसंदोहस्तेव्यशीर्यद्यन्मांनागमिष्यइति ॥ २ ॥ खं० ॥ १५ ॥ अथहोवाचबुडिलमाश्वतराश्विंवैयाघ्रपद्यकंत्वमात्मानमुपास्सइत्यपएवभगवोराजन्नितिहोवाचैषवैरयिरात्मावैश्वानरोयंत्वमात्मानमुपास्सेतस्मात्त्वंरयिमान्पुष्टिमानसि ॥ १ ॥ अत्स्यन्नंपश्यसिप्रियमत्त्यन्नंपश्यतिप्रियंभवत्यस्यब्रह्मवर्चसंकुलेयएतमेवमात्मानंवैश्वानरमुपास्तेवस्तिस्त्वेषआत्मानइतिहोवाचवस्तिस्तेव्यभेत्स्यद्यन्मांनागमिष्यइति ॥ २ ॥ खं० ॥ १६ ॥ अथहोवाचोद्दालकमारुणिंगौतमकंत्वमात्मानमुपास्सइतिपृथिवीमेवभगवोराजन्नितिहोवाचैषवैप्रतिष्ठात्मावैश्वानरोयंत्वमात्मानमुपास्सेतस्मात्त्वंप्रतिष्ठोसिप्रजयाचपशुभिश्च ॥ १ ॥ अत्स्यन्नंपश्यसिप्रियमत्त्यन्नंपश्यतिप्रियंभवत्यस्यब्रह्मवर्चसंकुलेयएतमेवमात्मानंवैश्वानरमुपास्तेपादौत्वेतावात्मनइतिहोवाचपादौतेव्यम्लास्येतांयन्मांनागमिष्यइति ॥ २ ॥ खं० ॥ १७ ॥ तान्होवाचैतेवैखलुयूयंपृथगिवेममात्मानंवैश्वानरंविद्वा२सोऽन्नमत्थ



माह ॥ यस्त्वेति ॥ यस्त्वधिकारीएतमात्मानंवैश्वानरंभगवंतमंतःप्रादेशमात्रंतावन्मात्रपरिमाणकं । तथाचोक्तं । हृद्यपेक्षयातुमनुष्याधिकारत्वादिति । अभिअभितोविविगतंमानंमर्यादायस्यतमभिविमानंसर्वगतं । मानंज्ञानंलयश्चेतिमर्यादाचेतिकथ्यतइतिवचनात् । एवंवक्ष्यमाणरीत्योपास्ते । सःसर्वेषुलोकेषुस्थितेषुसर्वेषुभूतेषुतदंतर्गतेषुसर्वेष्वात्मसुअन्नमत्ति । देवतापेक्षयैतत् ॥ १ ॥ भगवदंगानामुक्तंनामधेयंसर्वथामनसिधार्यमित्याशयेनतदनुवदन्समग्रंवैश्वानरमुपदिशति ॥ तस्येति ॥ प्रकृतवैश्वानरेहोमंवक्तुंतदपेक्षितमाह ॥ उरएवेति ॥ वेद्याद्यभिमानिदेवतास्तस्योरःप्रभृतिषुतिष्ठंतीत्यर्थः ॥ २ ॥ अष्टादशःखंडः ॥१८॥ होमशेषमेववक्ति ॥ तदिति ॥ तत्तदाभोजनवेलायांयद्भक्तमन्नंप्रथममागच्छेदास्यंप्रतितद्धोमीयंहोमद्रव्यंसःभोक्तायामाहुतिंप्रथमांजुहुयात्तांजुहुयात्प्राणायस्वाहेतिअनेनमंत्रेणआहुतितृप्त्यानाह ॥ प्राणइत्यादिना ॥ प्राणश्चक्षुरादित्यइत्येकैवदेवता । द्यौर्वायुपत्नीतृप्यति । दिवितृप्यंत्यांयत्किंचज्ञानरूपमानंदरूपंच ब्रह्मा द्यौश्चादित्यश्चाधितिष्ठतः । हृदयेपूर्वद्वारपत्वेन तद्ब्रह्मतृप्यति । एषांप्रियत्वात् । किंततइत्यतआह ॥ तस्येति ॥ तस्यब्रह्मणःतृप्तिमनुयजमानःप्रजादिभिःतृप्यति

---

उप० । यस्त्वेतमेवंप्रादेशमात्रमभिविमानमात्मानंवैश्वानरमुपास्तेससर्वेषुलोकेषुसर्वेषुभूतेषुसर्वेष्वात्मस्वन्नमत्ति ॥ १ ॥ तस्यहवाएतस्यात्मनोवैश्वानरस्यमूर्धैवसुतेजाश्चक्षुर्विश्वरूपःप्राणःपृथग्वर्त्मात्मासंदोहोबहुलोवस्तिरेवरयिःपृथिव्येवपादावुरएववेदिर्लोमानिबर्हिर्हृदयंगार्हपत्योमनोन्वाहार्यपचनआस्यमाहवनीयः ॥ २ ॥ खं० ॥ १८ ॥ तद्यद्भक्तंप्रथममागच्छेत्तद्धोमीयंसयांप्रथमामाहुतिंजुहुयात्तांजुहुयात्प्राणायस्वाहेतिप्राणस्तृप्यति ॥ १ ॥ प्राणेतृप्यतिचक्षुस्तृप्यतिचक्षुषितृप्यत्यादित्यस्तृप्यत्यादित्येतृप्यतिद्यौस्तृप्यतिदिवितृप्यंत्यांयत्किंचद्यौश्चादित्यश्चाधितिष्ठतस्तत्तृप्यतितस्यानुतृप्तिंतृप्यतिप्रजयापशुभिरन्नाद्येनतेजसाब्रह्मवर्चसेनेति ॥ २ ॥ खं० ॥ १९ ॥

॥ खं० ॥ १९ ॥ एवमुत्तरखंडचतुष्टयंनेयं । दिशस्तन्नाम्नीवायुपत्नी । अधितिष्ठति । दक्षिणद्वारपत्वेन ॥ खं० ॥ २० ॥ पृथिवीश्रीः । अधितिष्ठतःपश्चिमद्वारपत्वेन ॥ खं० ॥ २१ ॥ पर्जन्यःइंद्रः । विद्युत्वायुपत्नी । अधितिष्ठतःउत्तरद्वारपत्वेन ॥ खं० ॥ २२ ॥ आकाशोवायुःअधितिष्ठतःऊर्ध्वद्वारपत्वेन ॥ खं० ॥ २३ ॥ एवंवैश्वानररूपंतद्विषयहोमप्रकारंचनिरूप्यज्ञानपूर्वहोमएवावश्यंभावीतिभावेनतदज्ञानेनहोमेऽनर्थंतज्ज्ञानेनहोमेफलंचाह ॥ सयइति ॥ सःप्रसिद्धोयःकश्चिदिदंवैश्वानरस्वरूपादिकमविद्वान्प्राणाग्निहोत्रंजुहोति । तस्यतदग्निहोत्राख्यंकर्मयथांगारानपोह्यभस्मनिजुहुयान्मूर्खस्तादृक्स्यात् ॥ १ ॥ अथयोधिकारी । एतद्वैश्वानरस्वरूपमेवमुक्तरीत्याविद्वान्प्राणाग्निहोत्रंजुहोति । तस्यसर्वेषुलोकेषुस्थितेषुसर्वेषुभूतेषुतदंतर्गतेषुसर्वेष्वात्मसुहुतं

---

उप० । अथयांद्वितीयांजुहुयात्तांजुहुयाद्व्यानायस्वाहेतिव्यानस्तृप्यति ॥ १ ॥ व्यानेतृप्यतिश्रोत्रंतृप्यतिश्रोत्रेतृप्यतिचंद्रमास्तृप्यतिचद्रमसितृप्यतिदिशस्तृप्यंतिदिक्षुतृप्यंतीषुयत्किंचदिशश्चचंद्रमाश्चाधितिष्ठंतिततत्तृप्यतितस्यानुतृप्तिंतृप्यतिप्रजयापशुभिरन्नाद्येनतेजसाब्रह्मवर्चसेनेति ॥ २ ॥ खं० ॥ २० ॥ अथयांतृतीयांजुहुयात्तांजुहुयादपानायस्वाहेत्यपानस्तृप्यति ॥ १ ॥ अपानेतृप्यतिवाक्तृप्यतिवाचितृप्यंत्यामग्निस्तृप्यत्यग्नौतृप्यतिपृथिवीतृप्यतिपृथिव्यांतृप्यंत्यांयत्किंचपृथिवीचाग्निश्चाधितिष्ठतस्तत्तृप्यतितस्यानुतृप्तिंतृप्यतिप्रजयापशुभिरन्नाद्येनतेजसाब्रह्मवर्चसेनेति ॥ २ ॥ खं० ॥ २१ ॥ अथयांचतुर्थींजुहुयात्तांजुहुयात्समानायस्वाहेतिसमानस्तृप्यति ॥ १ ॥ समानेतृप्यतिमनस्तृप्यतिमनसितृप्यतिपर्जन्यस्तृप्यतिपर्जन्येतृप्यतिविद्युत्तृप्यतिविद्युतितृप्यंत्यांयत्किंचविद्युच्चपर्जन्यश्चाधितिष्ठतस्तत्तृप्यातितस्यानुतृप्तिंतृप्यतिप्रजयापशुभिरन्नाद्येनतेजसाब्रह्मवर्चसेनेति ॥ २ ॥ खं० ॥ २२ ॥ अथयांपंचमींजुहुयात्तांजुहुयादुदानायस्वाहेत्युदानस्तृप्यति ॥ १ ॥ उदानेतृप्यातिवायुस्तृप्यतिवायौतृप्यत्याकाशस्तृप्यत्याकाशेतृप्यतियत्किंचवायुश्चाकाशश्चाधितिष्ठतस्तत्तृप्यातितस्यानुतृप्तिंतृप्यतिप्रजयापशुभिरन्नाद्येनतेजसाब्रह्मवर्चसेनेति ॥ २ ॥ खं० ॥ २३ ॥ सयइदमविद्वानाग्निहोत्रंजुहोतियथांगारानपोह्यभस्मनिजुहुयात्तादृक्ततस्यात् ॥ १ ॥ अथयएतदेवंविद्वानग्निहोत्रंजुहोतितस्यसर्वेषुलोकेषुसर्वेषुभूतेषुसर्वेष्वात्मसुहुतंभवति ॥ २ ॥

भवति ॥ २ ॥ ततःकिमित्यतोनिष्टनिवृत्तिफलमाह ॥ **तदिति** ॥ तन्निदर्शनंयथेषीकातूलंचाग्नौप्रोतंप्रविष्टंप्रदूयेत । परितः संभवेत् । भस्मीभवेत्। एवंहास्यवैश्वानरज्ञानिनःसर्वेपाप्मानःप्रदूयंतेविनश्यंतीत्यर्थः । ज्ञानमपरोक्षंचेत्सर्वेपाप्मानोऽनारब्धाः । परोक्षंचेद्यथायोग्यं । तस्माद्वैश्वानरज्ञानस्यसर्वपापक्षयहेतुत्वादेवहैवंवित् । यद्यपिचंडालायस्मरणायोग्यायापिस्वोच्छिष्टंप्रयच्छेत् । तथापिनतत्तस्यपापहेतुः । किंतुतद्दत्तमुच्छिष्टमस्यचंडालस्यांतर्यामिणिवैश्वानरेआत्मन्येवहुतंस्यात् । वैश्वानरज्ञानपूर्वं कृतमग्निहोत्रंसर्वलोकस्थसर्वभूतांतर्यामितृप्तिकरमित्येतत्श्लोकेनद्रढयति ॥ **तदिति** ॥ सर्वाणिभूतान्यभीष्टापेक्षाणि ॥ इति **श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्यश्रीमच्छंदोगोपनिषद्भाष्यस्यटीकायांश्रीमद्वेदव्यासतीर्थपूज्यपादशिष्येणवेदेशभिक्षुणाविरचितायांपदार्थकौमुद्यांपंचमोध्यायःसमाप्तः ॥ ५ ॥**

---

उप० । तद्यथेषीकातूलमग्नौप्रोतंप्रदूयेतैव ँ हास्यसर्वेपाप्मानःप्रदूयंतेयएतदेवंविद्वानाग्निहोत्रंजुहोति ॥ ३ ॥ तस्मादुहैवंविद्यद्यपिचंडालायोच्छिष्टंप्रयच्छेदात्मनिहैवास्यतद्वैश्वानरेहुत ँस्यादिति ॥ ४ ॥ तदेषश्लोकः ॥ यथेहक्षुधिताबालामातरंपर्युपासते । एवंसर्वाणिभूतान्यग्निहोत्रमुपासतइत्यग्निहोत्रमुपासतइति ॥ ५ ॥ **खं० ॥ २४ ॥ इति श्रीमच्छांदोग्योपनिषदिपंचमोऽध्यायः ॥ ५ ॥**

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ तस्मैनमोभगवतेचिदचित्परमायते ॥ पुरुषोत्तमायदेवायपूर्णानंदैकरूपिणे ॥ १ ॥ पूर्वंजीवजडात्मकात्प्रपंचात्परमार्थतएवात्यंतभिन्नंनिखिलगुणोदारंसर्वोत्तमंभगवंतंजानतांमोक्षतदितरफलकाउपास्तयउक्ताः । तत्रजीवेश्वरभेदविषयेयःसंदिग्धोविपर्यस्तोवा तंप्रतिसभेदोयुक्तिभिःसाध्यतेनेनषष्ठप्रपाठकेन । तत्रतावच्छ्वेतुकेतुंनिमित्तीकृत्यजीवानांभगवताभेदंबोधयन्भेदबोधनस्याभेदप्रसक्तिंविनाऽयोगात्तत्पूर्वकंभेदंसमर्थयते ॥ श्वेतकेतुरित्यादिना ॥ ननुचतुर्विंशतिवर्षःसर्वान्वेदानधीत्यएयायेत्यनुपपन्नं । सर्वान्वेदान्श्वेतकेतुरधीत्यद्वादशाब्दकः । पितुःसमीपमेयायेत्यादौभारतवाक्येऽध्ययनंसमाप्यपुनरागतस्यापिश्वेतकेतोरुत्पत्त्यपेक्षयैवद्वादशाब्दत्वप्रतीतेरित्यतस्तदभिप्रायंप्रमाणेनैवाह ॥ अधीत्यब्देति ॥ अध्ययनंसमाप्यपुनरागतोपिश्वेतकेतुरधीत्यब्दानांद्वादशत्वाद्द्वादशाब्दइतीरितः । नोत्पत्त्यपेक्षयाऽब्दानांद्वादशत्वात् । अतएवद्वादशवर्षउपेत्यचतुर्विंशतिवर्षइत्युक्तं । आह । सर्वंखल्विदंब्रह्मेतिसर्वस्यप्रपंचस्यब्रह्मात्मकत्वोक्तौकथमित्याशंकायांतज्जलानितिशांतउपासीतेति । तज्जत्वात्तल्लत्वात्तदनत्वादितियत्सर्वस्यब्रह्मोपादानत्वंब्रह्मण्यारोपितत्वरूपंप्रागुक्तं यत्पुनरेकस्मिन्विदुषिभुक्तेसर्वंजगत्तृप्यतीतिसर्वभूतस्थात्म्यैक्यमुक्तं तदुभयंप्रपंचयितुमयंषष्ठाध्यायआरभ्यते । तत्रश्वेतकेतुंप्रत्युद्दालकेनब्रह्मविज्ञानेनसर्वविज्ञानोक्तौअन्यज्ञानेनान्यज्ञानस्यक्काप्यदर्शनादित्यभिप्रायेणकथमितिश्वेतकेतुनाक्षिप्तेकार्यस्योपादानानन्यत्वान्नानुपपत्तिरित्याशयवतोद्दालकेनमृत्पिंडादिदृष्टांताःकथिताः । हेसोम्यैकेनमृत्पिंडेनचरुकुंडादिकारणभूतेन

भाष्यं । अधीत्यब्दद्वादशत्वाद्द्वादशाब्दइतीरितः । श्वेतकेतुर्भारतेतुनोत्पत्तिद्वादशत्वतइतिवाक्यनिर्णये ।



विज्ञातेनसर्वमन्यन्मृण्मयंमृद्विकारजातंविज्ञातंस्यात् । कार्यस्यकारणानन्यत्वेइदंकारणमयमस्यविकारइतिकथमित्यतउक्तं ॥ वाचेति ॥ वाचारंभणंवागारंभणंवागालंबनमितियावत् । विकारः । नामधेयंनामैवनामधेयं स्वार्थेधेयप्रत्ययः । नामैवकेवलं । नविकारोनामवस्त्वस्तिपरमार्थतोमृत्तिकेत्येवमृत्तिकैवतुसत्यंवस्त्वस्तीति । तदसत् । सर्वंखल्विदमित्यस्यतस्मादुहैवंविदित्यस्यचान्यथैवप्राग्व्याख्यातत्वात् । ब्रह्मज्ञानेनतदारोपितसर्वज्ञानंचायुक्तं । अधिष्ठानयाथात्म्यज्ञानेनाध्यस्तज्ञानस्यक्काप्यनुपलब्धत्वात् । अतःसादृश्यप्राधान्याभ्यामेवैकविज्ञानेनसर्वविज्ञानमभिप्रेतं । तत्राद्येदृष्टांतंवक्तुंयथासोम्येत्यादिवाक्यत्रयं । द्वितीयेदृष्टांताभिधानायवाचारंभणवाक्यत्रयं । नन्वेवंतर्हिदृष्टांतत्रयोपादानंव्यर्थमितिचेत्त्वत्पक्षेपिसाम्यात् । दृढप्रतीत्यर्थमित्यस्यास्माकमपिसाम्यात् । दार्ष्टांतिकेऽनेकाभेदानुगमार्थमितिचेत्कार्यकारणयोरनन्यत्वस्यैकेनैवज्ञापिततयाऽस्यापिवैयर्थ्यात् अप्रामाणिकत्वात्प्रमाणविरोधाच्चेतिभावेनयथासोम्येत्यादिदृष्टांतवाक्यत्रयेपिविवक्षाविशेषंप्रमाणेनैवाह ॥ यथेति ॥ एकमृत्पिंडेत्यर्थः । सादृश्यादेव मृत्त्वादिसादृश्यमात्रात् । प्रतियोग्याद्याधिक्यंविनेत्यर्थः । तथाचसदृशमात्रज्ञानात्सदृशमात्रज्ञानंभवतीत्यत्रप्रथमदृष्टांतइत्यर्थः । एवंसोम्यसआदेशोभवतीतिदार्ष्टांतिकवाक्यंव्याचष्टे ॥ तथेति ॥ एवमुत्तरत्रापि । सादृश्यादेवेतिसंबंधः । दृष्टांतसमुच्चयार्थश्चशब्दः । विष्णौसत्त्वेनज्ञातेप्रामाणिकत्वसादृश्याज्जगदपितथाविज्ञायतइत्यर्थः । स्वर्णस्यप्राधा

भाष्यं । यथामृत्पिंडविज्ञानात्सादृश्यादेवमृन्मयाः । विज्ञायंतेतथाविष्णोःसादृश्याज्जगदेवच । यथास्वर्णस्यविज्ञानात्सर्वेलोहमयास्तथा । प्राधान्याद्विष्णुविज्ञानाद्विज्ञातंस्याज्जगत्सदा ।

न्यात्लोहमयाःलोहत्वेनविज्ञायंतेइत्यनुवर्तते । तथाचप्रधानभूतसदृशज्ञानादप्रधानसदृशज्ञानंभवतीत्यत्रायंदृष्टांतइत्यर्थः । प्रा
धान्यात्विष्णोरितिशेषः । ज्ञानानंदादिरूपेणविष्णुविज्ञानाच्चेतनत्वसादृश्याज्जीवाअपितथाविज्ञायंते । ननुचेतनत्वहेतुनाईश्व
रदृष्टांतेनज्ञानानंदानुमानंनसंभवति । तथासतितत एवहेतोःपरिच्छिन्नानंदानुमानापत्तेरितिचेत् । मैवं । अबाधितविषयएवानुमानप्र
वृत्तेर्नातिप्रसंगइतिभावः । तृतीयदृष्टांतेविवक्षाविशेषमाह ॥ अत्यल्पेपीति ॥ नखकृंतन्याज्ञातयासर्वमयोमयमयस्त्वेनज्ञायेत ।
अनेननखनिकृंतनशब्दःकृष्णायसपिंडोपलक्षकइत्यसदित्युक्तंभवति । ननुविष्णोर्बहुत्वाज्जगतश्चाल्पत्वान्नायंदृष्टांतःप्रकृतोपयुक्तइ
त्यतोपिशब्दसूचितकैमुत्यमेवविशदयति ॥ किम्विति ॥ ईदृशंज्ञायतइतिवक्तव्यमितिशेषः । वाचारंभणमित्यादिवाक्यत्रयं
तात्पर्यतोव्याचष्टे ॥ अनन्येति ॥ अनन्याधीनस्यविष्णोर्विज्ञानात्अन्याधीनंविज्ञातफलंभवति । श्रौतमृत्तिकादिशब्दाःवै
दिकशब्दमात्रोपलक्षकाइतिभावेनशब्दांतरोपादानं । नचेदंलोहमणिदृष्टांतेनगतार्थं । तत्रप्रधानाप्रधानयोःसादृश्यविवक्षायाः
सत्त्वात्अत्रपुनस्तदभावादिति । सांकेतिकंयथाविज्ञातफलंभवति । ननुतथापिवाचारंभणवाक्यंत्रिवारंकस्मात्पठ्यते । शब्दां
तरंदृष्टांतीकर्तुमितिब्रूमः । तर्हिसंस्कृतशब्ददृष्टांतत्रयमेकत्रैववक्तव्यं । मैवं । तत्तदभिधेयप्रसंगायातस्यतत्तदभिधानस्यतदैववक्त
व्यत्वात् । तथापिप्रतिशब्दंदृष्टांतीकरणेऽपर्यवसानप्रसक्तेरुपलक्षणत्वेत्वेकेनापिकृतत्वाच्छब्दत्रयोपादानमनुपपन्नमितिचेत् न ।

---

भाष्यं । अत्यल्पेपिहिविज्ञातेसदृशेतादृशंबहु । ज्ञायतेनखकृंतन्यायथासर्वमयोमयं । किमुविष्णोर्बहोर्ज्ञानादत्यल्पंजगदीदृशं । अनन्याधीनविज्ञानादन्याधीनंतथैवच । मृदयोलोहनाम्नांहिज्ञानात्सांकेतिकंयथेत्यादिसामसंहितायां ।

उक्तरीत्यामृत्पिंडादिदृष्टांतत्रयोपादानस्यावश्यकत्वेतत्तदभिधेयप्रसंगायाततत्तदभिधानोपादानस्यादोषत्वात् । प्रमाणेतुविवेकार्थंवाक्यत्रयमेकीकृत्यव्याख्यातं । लोहमणिशब्दःस्वर्णपरत्वेनव्याख्यातः । तत्राभिधानमाह ॥ **स्वर्णमिति** ॥ स्वर्णमेवेति संबंधः । इतिशब्दोध्याहारार्थः । स्वर्णलोहमणिशब्दोयोगरूढइतिमंतव्यं । रूढिज्ञापकाभिधानस्यात्रोक्तत्वात् । मणिर्मुखंप्रधानंचेत्युत्तमस्यवचोभवेदित्यन्यत्रोक्त्यायोगप्रतीतेः । एवंयथासोम्येत्यादिकंस्वमतेप्रमाणेनैवव्याख्यायपरव्याख्यानंदूषयति ॥ **विकारत्वेति** ॥ यथासोम्येत्यादिवाक्येमृण्मयादीनांमृदादिविकारत्वविवक्षायामेकपिंडमणिशब्दाः उपलक्षणमेतत् । व्यर्थाः विगतार्थाःविरुद्धार्थाश्चस्युः । तथाहि । मृदाविज्ञातयामृण्मयंविज्ञातंस्यात् । लोहेनविज्ञातेनलोहमयंविज्ञातंस्यात् । कृष्णायसेनविज्ञातेनकृष्णायसंविज्ञातंस्यादित्येतावतापूर्णत्वेनत्रयाणामेकशब्दानांपिंडमणिनखनिकृंतनशब्दानांसर्वशब्दानांचविगतार्थत्वंस्यात् । सर्वमृण्मयादीनामेकमृत्पिंडादिविकारत्वाभावाद्विरुद्धार्थत्वंचस्यात् । किंचकथंब्रह्मणोजगदारोपाधिष्ठानत्वेऽयंदृष्टांतः । नह्येकमपिमृण्मयमेकस्मिन्नपिमृत्पिंडेआरोपितं । कारणव्यतिरेकेणकार्यासत्त्वविवक्षायांमृण्मयस्यमृदात्मनासत्त्ववत्प्रपंचस्यापिब्रह्मात्मनासत्त्वापातादिति । अस्माकंतुसादृश्यविवक्षायामेकसर्वशब्दौतावत्सार्थकावेव । एकमृत्त्वस्यानुयोगिन्यपिसत्वान्नतत्सादृश्यप्रतियोगितावच्छेदकमितिपिंडशब्दोपादानं । प्रतियोगिप्राधान्यात्यल्पत्वज्ञापनार्थमेवमणिनखकृंतनशब्दोपादानं । मणिर्मुखंप्रधानंचेतिवचनेनमणिशब्दस्यप्राधान्यवाचकत्वावगतेः । नखनिकृंतनस्वरूपस्यात्यल्पत्वादिति । एवंयथासोम्ये

भाष्यं । स्वर्णलोहमणिश्चैवपुरटंचाभिधीयतइतिशब्दनिर्णये । विकारत्वविवक्षायामेकपिंडमणिशब्दाव्यर्थाःस्युः ।

त्यादिवाक्यव्याख्यानंदूषयित्वावाचारंभणवाक्यत्रयव्याख्यानमपिदूषयति ॥ **मृत्तिकेतीति** ॥ तदेवविवृणोति ॥ **विकारेति** ॥ वाचारंभणवाक्येविकारमिथ्यात्वविवक्षायांकृतायांवाचारंभणंविकारोमृत्तिकैवसत्यं वाचारंभणंविकारोलोहमणिरेवसत्यं वाचारंभणंविकारःकार्ष्णायसमेवसत्यमित्येवस्यात् । नतुनामधेयशब्दाइतिशब्दाश्च । नामधेयंनामैवकेवलमितित्वयाव्याख्यातत्वेनवाचारंभणमित्यनेनपुनरुक्तत्वात् । मृत्तिकाशब्दस्यशब्दपरार्थकत्वमनंगीकृत्यार्थपदार्थकत्वांगीकृतावितिशब्दस्याप्यनपेक्षणात् । पदार्थविपर्यासएवह्यत्रेतिशब्दः । अर्थांतरासंभवात् । सचशब्दप्रकरणेशब्दपदार्थकत्वंनिवार्यार्थपदार्थकत्वंव्यवस्थापयतियथानवेतिविभाषेति । अर्थप्रकरणेतुशब्दपदार्थकत्वं यथागौरित्ययमाहेति । अर्थशास्त्रंचेदं । ततोविनैवेतिशब्देनप्रकरणादेवमृत्तिकाशब्दस्यार्थपदार्थकत्वेसिद्धेकिमितिशब्देन । अस्माकंतुशब्दपदार्थकत्वव्यवस्थापनार्थकत्वात्सार्थकएवेतिभावः । किंच कथमिदंवाक्यंविकारमिथ्यात्वपरं । मिथ्यात्ववाचिशब्दाभावात् । वाचारंभणशब्दोस्तीतिचेत्सकिंमिथ्यात्वेरूढः किंवायौगिकः । नाद्यः । अभिधानाद्यभावात् । नद्वितीयः । अवयववृत्त्यामिथ्यात्वालाभात् । ननुयथाअन्नमात्रंभुक्तमित्युक्तेव्यंजनाभावोलभ्यते । तथावाचारंभणमात्रमित्युक्तेवस्तुतोनास्तीतिलभ्यतएवेत्यतआह ॥ **नचेति** ॥ स्यादेवंयदिमात्रशब्दःश्रूयते । नचैवं । ततश्चाश्रुतकल्पनमेवदोषइत्यर्थः । नचात्राब्भक्षोवायुभक्षइत्यादिवदवधारणकल्पकंकिंचिदस्तीतिभावः । किंचवाचा

भाष्यं । मृत्तिकेतिलोहमाणिरितिकार्ष्णायसामित्यत्रेतिशब्दानामधेयशब्दाश्चव्यर्थाःस्युः । विकारमिथ्यात्वविवक्षायांमृत्तिकैवसत्यंलोहएवसत्यंकार्ष्णायसमेवसत्यमित्येवस्यात् । नतुनामधेयादिशब्दाः । नचवाचारंभणमात्रमितिमात्रशब्दोस्ति ।



केवलमस्तीत्यारभ्यतइतियोगमभिप्रेत्यवाचारंभणंवागालंबनमितिव्याख्यानमयुक्तं । आरंभणशब्दस्यल्युडंतत्वात् । ल्युटश्चकर्मणिविधानाभावात् । नचकृत्यल्युटोबहुलमितिकर्मणिल्युट् प्रबलनियामकमंतरेणबहुलग्रहणस्यव्याख्यातुमशक्यत्वादितिभावेनाह ॥ **नचेति** ॥ आरभ्यंचेन्नारंभणं । किंतर्हितदित्यतआह ॥ **क्रियेति** ॥ उत्पादनापरपर्यायारंभणक्रियैवारंभणशब्देनोच्यते । ल्युटोभावेविधानस्यप्रसिद्धत्वादित्यर्थः । यद्यपिकरणाधिकरणयोरपिल्युड्विहितः । तथापितस्यप्रकृतानुपयोगादग्रहणं । एवंवाचारंभणवाक्यस्यपरव्याख्यांदूषयित्वास्वयंव्याचष्टे ॥ **अतइति** ॥ परव्याख्यानस्यानुपपन्नत्वादित्यर्थइतिसंबंधः । वाचावागिंद्रियेणनाम्नांसंस्कृतातिरिक्तानांआरंभणमुच्चारणंविकारइत्यनुवादेनविविधाकारइतिव्याख्यानं । ननुविविधाकारोविविधकरणं । नचनाम्नामारंभणंविविधकरणमित्यतउक्तं ॥ **विक्रियमाणइति** ॥ विविधत्वेनक्रियमाणइत्यर्थः । नायंकारशब्दोभावसाधनःकिंतुकर्मसाधनइतिभावः । नामधेयंमृत्तिकेत्येवसत्यमित्येतदन्वयंदर्शकन्व्याचष्टे ॥ **सत्यमिति** ॥ सत्यशब्दःकथंसर्वदाविद्यमानत्वार्थः । तत्रतस्ययोगरूढ्योरभावादितिचेत् । न । एतत्सत्यंब्रह्मपुरमित्युत्तरत्रसत्यशब्दस्यनित्येप्रयोगाद्रूढिसिद्धेः । योगोप्यस्तीत्याह ॥ **सत्त्वेति** ॥ सत्यमित्यत्रसदित्यस्यार्थःसत्त्वेनेति । तइत्यस्यततमिति । ततिःकालिकीविवक्षितेतिभावेनकालतइत्युक्तं । यमित्यस्यार्थोज्ञायतइति । विद्वद्भिरितियोग्यतयालब्धं । अयमपिसच्छब्दार्थोवा । नित्य

भाष्यं । नचारभ्यस्यारंभणमितियुज्यतेशब्दः । क्रियाह्यारंभणं । अतोवाचानाम्नामारंभणंविकारोविविधाकारोविक्रियमाणः । सत्यंनामधेयंसर्वदाविद्यमानंनामधेयं । मृत्तिकेत्यादयइत्यर्थः । सत्त्वेनकालतस्ततंज्ञायतेविद्वद्भिरितिनित्यत्वेनप्रसिद्धमेवसत्यमित्यत्रविवक्षितं ।

त्वेनप्रसिद्धमितिनिर्वचनलभ्यार्थोक्तिः । संस्कृतातिरिक्तनाम्नामारंभणंविविधाकारइत्युक्तं । तत्कुतइत्यतआह ॥ संकेतेनेति ॥ हियस्मात्संस्कृतातिरिक्तानिनामानिपुरुषमतिवै(श्व)रूप्यजन्मनासंकेतेनक्रियमाणान्यतोविकाररूपाणि । विविधत्वेन क्रियमाणानि । ततश्चानित्यानीत्यर्थः । नन्वारंभणंविकारइतिकथंविशेषणविशेष्यभावः । आरंभणशब्दस्यनपुंसकलिंगत्वाद्विकारशब्दस्यचपुल्लिंगत्वादित्यतआह ॥ विकारशब्दस्येति ॥ आरंभणशब्दस्यभावविहितल्युडंतस्यनियतनपुंसकलिंगत्वादितिशेषः । तथाभूतयोरपिविशेषणविशेष्यभावःक्वदृष्टइत्यतउक्तं ॥ वेदाइति ॥ नन्वत्रप्रमाणशब्दोभावसाधनःकरणसाधनोवा । नाद्यः । सामानाधिकरण्यानुपपत्तेः । नद्वितीयः । करणेविहितल्युडंतस्यविशेष्यनिघ्नत्वेनप्रमाणशब्दस्यापिपुल्लिंगनिर्देशापत्तेरिति । मैवं । भावसाधनत्वाभ्युपगमात् । सामानाधिकरण्यंतुभाक्तं । अतएवसुधायांपिपीलिकालिपिश्चापिप्रमाणमिति वाक्यव्याख्यानावसरएवमेवोक्तं । ननुकरणसाधनत्वेपिप्रमाणमितिसामान्येनोद्दिश्यवेदत्वविधानान्नदोषइतिचेत् । तर्ह्यत्राप्यारंभणमित्युद्दिश्यविकारत्वविधानमितिसाम्यादिति । नन्वस्त्वत्रसांकेतिकसंस्कृतनाम्नांविकारत्वसत्यत्वेकथ्येतेइति । तेननेति शब्दवैयर्थ्यादिदोषः । तथापिसांकेतिकंनामसंस्कृतनामविकारइत्येचतात्पर्यंकिंनस्यात् । एवंचास्यदृष्टांतांतरत्वेपिजगतोब्रह्म विकारत्वएवदृष्टांतोभविष्यतीत्यतआह ॥ नचेति ॥ मंणुमातीत्यादिसांकेतिकनाम्नःसंस्कृतापभ्रष्टत्वेपिनसंस्कृतोपादानकत्वं । उभयोरप्याकाशोपादानकत्वात् । तयोःपरस्परंभेदेनैवोपलंभाच्चेतिभावः । यदिवाचारंभणदृष्टांतेनब्रह्मणोजगदुपादानत्वंनवि



भाष्यं । संकेतेनक्रियमाणानिह्यन्यानिनामानि । अतोविकाररूपाणि । विकारशब्दस्यनियतपुल्लिंगत्वादारंभणंविकारइतिवेदाःप्रमाणमितिवद्युज्यते । नचमृत्तिकादिनाम

वक्षितं । तर्हिकिंविवक्षितमित्यतआह ॥ **प्राधान्यमेवेति** ॥ सांकेतिकनामवज्जगतोप्राधान्यंचेत्यपिग्राह्यं । एवशब्दःपरोक्तनिरासकः । अयमर्थः । उक्तंतावद्विकारत्वात्सांकेतिकंनामाऽनित्यंसंस्कृतंतुनित्यमिति । तेनानित्यत्वात्सांकेतिकंनामाप्रधानं । नित्यत्वात्संस्कृतंप्रधानमितिलभ्यते । एवंचतदृष्टांतेनब्रह्मजगतोःप्राधान्याप्राधान्येएवविवक्षिते । ततश्चयथाप्राधान्यात्संस्कृतज्ञानमात्रेणसांकेतिकंज्ञातंभवति । तज्ज्ञानफलस्यविद्वद्व्यवहारगोचरत्वादेरनेनैवसिद्धेः । तथाप्राधान्याद्भगवज्ज्ञानेनैवाप्रधानंदेवताकर्मादिमिश्रंसकलमपिविश्वंज्ञातंभवति । तज्ज्ञानफलस्याप्यत्रैवांतर्भावादिति । ननुयद्यत्रजगतोब्रह्मविकारत्वंनविवक्षितं । तर्ह्युत्तरत्रसदेवसोम्येदमग्रआसीदित्यादिनासृष्टिकथनमसंगतंस्यात् । तद्धिजगतोब्रह्मविकारत्वंप्रपंचयितुंप्रवृत्तमित्यतआह ॥ **सृष्टिश्चेति** ॥ स्यादेवंयद्यत्रजगतोब्रह्मविकारत्वंप्रपंचयितुंसृष्टिरुच्यते । नचैवं किंनामयन्मृत्तिकादिनामवद्भगवतःप्राधान्यंविवक्षितं तत्कथमित्याकांक्षायांजगन्निमित्तकारणत्वादिनाभगवतोजगत्प्राधान्यज्ञापनार्थमेवसृष्टिरत्रोच्यतइत्यर्थः ॥ **खं० १** ॥ ततश्चायंखंडार्थः ॥ श्वेतकेतुर्नामतः आरुणेयोअरुणस्यपौत्रोऽरुणायाःपुत्रइतिवा । आसह । तंप्रतिपितोद्दालकउवाचहकिलकिमिति । हेश्वेतकेतोवसब्रह्मचर्यंवेदाध्ययनार्थंगुरुकुलवासंकुर्वित्यर्थः । कुतः । हेसोम्याऽस्मत्कुलीनोऽननूच्यवेदाननधीत्यब्रह्मबंधुरिवनैवभवतीतिहेतोः । ब्राह्मणान्बंधून्व्यपदिशतिनस्वयंब्राह्मणोसौब्रह्मबंधुः । ब्राह्मण्यांब्राह्मणाज्जातोसंस्कृतोवाब्रह्मबं

---

भाष्यं । विकारःसांकेतिकंनाम । प्राधान्यमेवात्रमृत्तिकादिनामवद्भगवतोविवक्षितं । सृष्टिश्चप्राधान्यार्थमेवात्रोच्यते ॥ **खं०** ॥ १ ॥

उप० । श्वेतकेतुर्हारुणेयआसत ँ्हपितोवाचश्वेतकेतोवसब्रह्मचर्यंनवैसोम्यास्मत्कुलीनोऽननूच्यब्रह्मबंधुरिवभवतीति ॥ १ ॥

धुः ॥ १ ॥ सपित्रोक्तःश्वेतकेतुर्द्वादशवर्षःसन्नुपेत्याचार्यकुलंद्वादशाब्दतःसर्वान्वेदानधीत्यमहामनाः प्रायशोनास्मिमानुषः । देवोवाकेशवांशोवेतिस्वस्मिन्नतिमहत्त्वबुद्धिः । तत्रहेतुरनूचानमानी । सांगवेदाध्ययनवानहमित्यभिमानवान् । अह मेवप्रज्ञाधिकइतिमन्यमानइतियावत् । अतएवस्तब्धोऽविनीतोदर्पपूर्णइतियावत् । चतुर्विंशतिवर्षःसन्नेयायपितुःसकाशं । तं स्वात्माननुरूपंपुत्रंदृष्ट्वापितोवाच । स्वातंत्र्याभिमानिनस्तस्याहंकारशांत्यर्थं । हेसोम्य यत्यदा नुइदानीं इदंमहामनाःइत्थमहं कारवान् अनूचानमानीस्तब्धोसि । तर्हिकस्तेतिशयःप्राप्तउपाध्यायात् । यज्ञादिसमस्तकर्मविषयोदेवताविषयश्चसर्वोपिवेदःसां गोपांगोमयाधीतइतिचेत् किंकर्मादिविषयवेदाभ्यासेनवृथाश्रांतोसि । उतशब्दःकिंशब्दार्थः । तंसर्ववेदप्रसिद्धं आदिश्यतइत्या देशंनारायण मप्राक्ष्यःकिं । प्रायोनारायणंदेवंनैवत्वंपृष्टवानसि । कथंतस्मिन्ज्ञातेएवमहंकारःस्यादितिभावः ॥ २ ॥ तमादेशं विशिनष्टि ॥ येनेति ॥ येनश्रुतेनाश्रुतमपिदेवताकर्मादिकंश्रुतंभवति । येनमतेनामतमपिमतंभवति । येनविज्ञातेनध्यातेनावि ज्ञातमपिविज्ञातंभवति तमितिपूर्वेणसंबंधः । एवंपित्रोक्तेनश्वेतकेतुना हेभगवोभगवन् । सआदेशोभगवज्ज्ञानेनदेवताक र्मादिज्ञानंभवतीत्युपदेशःकथमेवोपपन्नोभवति ॥ ३ ॥ अन्यज्ञानेनान्यज्ञानस्यक्वाप्यदर्शनादित्याक्षिप्तेसादृश्यात्प्राधान्या त्कारणत्वाच्चैकविज्ञानेनसर्वविज्ञानोपपत्तेर्नानुपपत्तिरित्याशयवानुद्दालकःसादृश्यादेकविज्ञानेनसर्वविज्ञानेतावदृष्टांतमाह ॥

उप० । सहद्वादशवर्षउपेत्यचतुर्विंशतिवर्षःसर्वान्वेदानधीत्यमहामनाअनूचानमानीस्तब्धएयायत ँ्हपितोवाचश्वेतकेतोयन्नुसोम्येदंमहामनाअनूचानमानीस्तब्धोस्युततमा देशमप्राक्ष्यः ॥ २ ॥ येनाश्रुतंश्रुतंभवत्यमतंमतमविज्ञातंविज्ञातमितिकथंनुभगवःसआदेशोभवतीति ॥ ३ ॥



यथेति ॥ हेसोम्ययथैकेनमृत्पिंडेनविज्ञातेनमृत्त्वादिना तत्सादृश्यात्सर्वंमृण्मयंविज्ञातंस्यात् । एवंसोम्यसआदेशोभवति । एके नब्रह्मणासत्त्वादिनाज्ञातेनतत्सादृश्याज्जगदपितथाविज्ञातंस्यादित्यर्थः । प्राधान्यादेकविज्ञानेनसर्वविज्ञानेमृत्पिंडाभिधेयप्रसंगा यातंतदभिधानरूपंदृष्टांतमाह ॥ वाचेति ॥ यथासोम्यतेनतद्विज्ञातंस्यादित्यनुवर्तनीयं । वाचावागिंद्रियेणनाम्नांसंस्कृतातिरिक्तानां मंणुमातीत्यादीनामारंभणमुच्चारणं । विकारोविक्रियमाणअतोऽनित्यः । सत्यंसर्वदाविद्यमानंनामधेयंमृत्तिकेत्येवेत्यर्थः । तथाच यथासोम्यनित्यत्वात्प्रधानभूतेनसंस्कृतनाम्नाविज्ञातेनानित्यत्वादप्रधानंसांकेतिकंनामविज्ञातंस्यात् । विज्ञातफलंस्यादितियावत् । एवंसोम्यसआदेशोभवति । प्रधानभूतेनपरमात्मनाज्ञातेनाऽप्रधानभूतंदेवताकर्मादिमिश्रंजगद्विज्ञातंस्यात् । विज्ञातफलंस्यादि तिभावः ॥ ४ ॥ एवंसदृशमात्रज्ञानात्सदृशांतरज्ञानंभवतीत्यत्रदृष्टांतमभिधायप्रधानभूतसदृशज्ञानादप्रधानभूतसदृशज्ञानंभवती त्यत्रदृष्टांतमाह ॥ यथासोम्येति ॥ हेसोम्ययथैकेनलोहमणिनालोहप्रधानेनस्वर्णेनविज्ञातेनस्वर्णत्वेनलोहत्वेनवा । तत्सादृश्या त्सर्वंलोहमयंकटकमुकुटादिकंविज्ञातंस्यात् । एवंसोम्यसआदेशोभवति एवमेकेनब्रह्मणाविज्ञातेनज्ञानानंदादिनातत्सादृश्या ज्जीवरूपमपिविज्ञातंस्यादित्यर्थः । प्राधान्यादेकविज्ञानेनसर्वविज्ञानेलोहमणिलक्षणाभिधेयप्रसंगायातंतदाभिधानरूपंदृष्टांतंचा ह ॥ वाचारंभणमिति ॥ योजनापूर्ववत् ॥ ५ ॥ सादृश्यादेकविज्ञानेनसर्वविज्ञानेदृष्टांतांतरमाह ॥ यथेति ॥ हेसोम्यय

उप० । यथासोम्यैकेनमृत्पिंडेनसर्वंमृन्मयंविज्ञात ँ्स्याद्वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यं ॥ ४ ॥ यथासोम्यैकेनलोहमणिनासर्वंलोहमयंविज्ञात ँ्स्याद्वाचारंभणंवि कारोनामधेयंलोहमणिरित्येवसत्यं ॥ ५ ॥

थाऽत्यल्पेनापिनखनिकृंतनेनविज्ञातेनतत्सादृश्याद्बह्वपिसर्वंकार्ष्णायसंविज्ञातंस्यात् । एवंसोम्यसआदेशोभवति । किमुतदाब हुनाविष्णुनाविज्ञातेनेदृशमत्यल्पंजगद्विज्ञायतइतिवक्तव्यमितिभावः । यद्वाऽयमपिसदृशमात्रज्ञानात्सदृशांतरज्ञानंभवतीत्यत्र दृष्टांतः । अभ्यासस्तात्पर्यार्थंइत्यन्यत्रोक्तं । प्राधान्यादेकविज्ञानेनसर्वविज्ञानेकार्ष्णायसरूपाभिधेयप्रसंगायातंतदभिधानरूपंदृ ष्टांतमाह ॥ **वाचारंभणमिति** ॥ एवंहेसोम्यसआदेशोयेनाश्रुतंश्रुतंभवतीत्युपदेशोभवतीत्यर्थः ॥ ६ ॥ इत्युपदिष्टःपुत्रआ ह ॥ **नवाइति** ॥ भगवंतःपूजार्हास्तेममगुरवोनूनंनिश्चितमेतत्त्वदुक्तंनैवावेदिषुः । कुतः तेयद्येतत्प्रमेयमवेदिष्यन्कथंमेमह्यं प्रियशिष्यायनावक्ष्यन् । इतितस्मात् । भगवानेवमेममयत्वाचारंभणदृष्टांतेनभगवतःप्राधान्यादिकमुक्तं । तत्तुविशेषाकारेण ब्रवीत्वितिपुत्रेणार्थितःपितातथेतिहोवाच ॥ ७ ॥ **प्रथमःखंडः** ॥ १ ॥ प्राधान्यप्रतिपत्त्यर्थमेवसृष्टिमाह ॥ **सदेवेति** ॥ य द्वाभगवांस्त्वेवमेतद्ब्रवीतुयत्कारणत्वादेकविज्ञानेनसर्वविज्ञानंभवतीत्युक्तं । तत्कारणत्वमेवविशेषाकारेणब्रवीत्वितिपुत्रेणप्रार्थि तःपितातथेतिहोवाच । तदेवकारणत्वमाह ॥ **सदेवेति** ॥ अत्रएकमेवाद्वितीयमितिवाक्यंशंकरेणेत्थंव्याख्यातं । स्वकार्यप तितमन्यन्नास्तीत्येकमेवोच्यते । मृद्व्यतिरेकेणमृदोयथान्यत्घटाद्याकारेणपरिणामयितृकुलालादि निमित्तकारणंदृष्टं । तथासद्व्य तिरेकेणसतःसहकारिकारणंद्वितीयंप्राप्तंप्रतिषिध्यते । अद्वितीयमितिनास्यद्वितीयंवस्त्वंतरंविद्यतइति । तदसत् । अद्वितीय



उप० । यथासोम्यैकेननखनिकृंतनेनसर्वंकार्ष्णायसंविज्ञातꣳस्याद्वाचारंभणंविकारोनामधेयंकृष्णायसमित्येवसत्यमेवꣳसोम्यसआदेशोभवतीति ॥ ६ ॥ नवैनूनंभगवंतस्तएत दवेदिषुर्यद्ध्येतदवेदिष्यन्कथंमेनावक्ष्यन्निति भगवाꣳस्त्वेवमेतद्ब्रवीत्विति तथासोम्येतिहोवाच ॥ ७ ॥ खं० ॥ १ ॥

पदेनैवकार्यकारणमध्यपतितद्वितीयमात्रनिषेधसंभवेनैकमेवेत्यस्यवैयर्थ्यात् । अत्रकश्चित् । वृक्षस्यस्वगतोभेदःपत्रपुष्पफलादिभिः । वृक्षांतरात्सजातीयोविजातीयःशिलादितः । तथासद्वस्तुनोभेदत्रयंप्राप्तंनिषिध्यते । ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिःक्रमादिति । तदप्यसदितिभावेनस्वयंतावदनूद्यव्याचष्टे ॥ एकमेवेति ॥ एकमेवेत्यस्यार्थःस्वगतभेदवर्जितमिति । स्वावयवगुणकर्मादिभेदवर्जितमित्यर्थः । अद्वितीयमित्यस्यसमानवर्जितमिति । स्वकृतंव्याख्यानंप्रमाणेनद्रढयति ॥ एकमेवेति ॥ तच्छाश्वतंब्रह्मस्वगतानांभेदानामभावादेकमेवेत्युच्यते । समाभ्यधिकवर्जनादद्वितीयमित्युच्यतइतिसंबंधः । अधिकवर्जनंकैमुत्यलब्धमितिस्फुटमनुपदमेव । एतदेवप्रमाणांतरेणविशदयति ॥ भेदाभेदेति ॥ अभेदप्रतिपत्त्यर्थमेकशब्दइत्यादौयोज्यं । नारायणस्यस्वावयवादिनेतिशेषः । एवशब्दस्यार्थांतरत्वेभेदाभेदनिरासकत्वानुपपत्तेरवधारकइत्युक्तं । नन्वेकमभिन्नमित्येकशब्देनैवभेदनिरासेभेदाभेदस्यापिनिवृत्तिलाभादवधारणंव्यर्थमित्यतआह ॥ भेदाभेदेपीति ॥ अवयविनिघटादौभेदाभेदेविद्यमानेप्येकशब्दःस्थितोयतः । तस्याभेदमात्रबोधकत्वेनभेदनिरासकत्वासंभवात् । अतस्तद्वदत्राप्येकमित्यनेनभेदाभेदप्रसक्तौतन्निवृत्त्यर्थमेकमेवेत्याहेत्यर्थः । नारायणमित्यनेनश्रुतौसच्छब्दोनारायणपरइत्युक्तंभवति । समाधिकनिवृत्त्यर्थमद्वितीयपदमित्युक्तं । अद्वितीयपदेनद्वितीयमात्रनिषेधावगतेरित्यतस्तद्व्युत्पादयति ॥ समइति ॥ तथाचोक्तंमहाभाष्ये । अस्यगोर्द्वितीयेनभा

---

भाष्यं । एकमेवाद्वितीयंस्वगतभेदवर्जितंसमानवर्जितंच । एकमेवाद्वितीयंतत्समाभ्यधिकवर्जनात् । स्वगतानांचभेदानामभावाद्ब्रह्मशाश्वतमितिप्रवृत्तेः । भेदाभेदनिवृत्त्यर्थमेवशब्दोऽवधारकः । समाधिकनिवृत्त्यर्थमद्वितीयपदंतथा । भेदाभेदेप्येकशब्दोयतोवयविनिस्थितः । एकमेवेत्यतःप्राहनारायणमियंश्रुतिः । समेद्वितीयशब्दःस्याददद्वितीयोऽसमत्वतः ।

व्यमित्युक्तेसदृशोगौरेवोपादीयतेनाश्वोनगर्दभइति । द्वितीयपदेनद्वितीयमात्रोक्तावद्वितीयशब्देनैवस्वेतरसर्वनिषेधसंभवेनस जातीयनिषेधकैवशब्दादिवैयर्थ्यं । तदवैयर्थ्यायद्वितीयशब्दस्यविजातीयपरत्वेनसंकोचेचाग्रइत्यनेनाऽविरोधायसमद्वितीयप रत्वेनापिसंकोचःस्यादितिभावः । अस्तुतर्हिसमराहित्यमेवाऽद्वितीयशब्दार्थो नाधिकराहित्यमित्यतःपदार्थस्तुसएव । अयं त्वार्थिकार्थइतिभावेनाह ॥ **साधिकइति** ॥ अतएवप्राक्समानवर्जितमित्येवोक्तं । एवंस्वयंव्याख्यायदुक्तंविजातीयभेद वर्जनमद्वितीयशब्दार्थइतितद्दूषयति ॥ **नचेति** ॥ स्यादेवाद्वितीयपदंविजातीयभेदनिरासार्थकं । यदिविजातीयभेदवर्जनंनाम कुत्रचित्प्रसिद्धंस्यात् । नह्यर्थस्याप्रसिद्धौपदस्यतदर्थकत्वंयुज्यते । व्युत्पत्तेरेवानुपपत्तेः । नचतत्प्रसिद्धं । वृक्षस्यशिलादितो विजातीयाद्भिन्नत्वेपितद्भेदवर्जनस्यकुत्राप्यभावात् । अन्यथावृक्षस्यशिलादित्वप्राप्त्याभेदघटितविजातीयत्वस्यैवानुपपत्तेरिति भावः । ननुशशविषाणादेरप्रसिद्धत्वेपिशशविषाणादिपदस्यतदर्थत्ववद्विजातीयभेदवर्जनस्याप्रसिद्धत्वेप्यद्वितीयपदंतदर्थकंकिं नस्यादितिचेन्न । यतःफलितमस्मन्मनोरथद्रुमेण । विजातीयभेदाभावस्याऽप्रामाणिकत्वेविजातीयभेदस्यप्रामाणिकत्वप्राप्तेः । दूषणांतरमाह ॥ **तत्प्रमाणेति** ॥ तत्तत्राद्वितीयशब्दस्यविजातिभेदराहित्यार्थत्वे । अस्तिशशविषाणादिशब्दस्यशश विषाणाद्यर्थ त्वेप्रमाणं । तेनतदुपस्थितेः । नचात्रतथास्तीतिभावः । श्रुतिविरोधाच्चनत्वंदुक्तोऽद्वितीयशब्दार्थः । किंत्वस्मदुक्तएवेतिभावेनश्रु तिवाक्येपठति ॥ **एकइति** ॥ अद्वितीयपदस्यैवव्याख्यानमिदं । श्रुतिश्चेतिचशब्दान्वयः । किंचविजातीयस्यैवाभावाद्विजाती ॥१६९॥

भाष्यं । साधिकःकुतएवस्यादित्याहपरमाश्रुतिरितिसामसंहितायां । नचविजातीयभेदवर्जनंनामकुत्रचित्प्रसिद्धं । तत्प्रमाणाभावाच्च । एकएवाद्वितीयोभगवांस्तत्सदृशः

यभेदोपिनास्तीत्युच्यते । अथवाविजातीयंकिंचिदंगीकृत्यभेदमात्रंप्रतिक्षिप्यते । नाद्यः । विजातीयाभावेपितद्भेदस्यसंभ वात् । अन्यथापारमार्थिकेऽनिर्वचनीयेचासद्वैलक्षण्यासिध्यापातात् । दूषणांतरमाह ॥ **विजातीयेति** ॥ सतिब्रह्मविजाती येद्वितीयेवस्तुनितस्याश्रुतत्वादि विशेषणंभवेत् । तदभावेतद्विरुद्धार्थमित्यर्थः । द्वितीयंपक्षंदूषयति ॥ **यस्येति** ॥ यदि विजातीयमंगीकृत्यतद्भेदमात्रंनिरस्यतेतर्हिघटादेर्ब्रह्मणश्चभेदाभावाद्यस्यकस्यचिद्घटादेर्ज्ञानमेवब्रह्मज्ञानंभवतीतियेनविज्ञातेना विज्ञातंविज्ञातंस्यादितिविरुद्धार्थंस्यात् । नहिघटज्ञानेनान्यत्सर्वंविज्ञातंभवतीत्यर्थः । दूषणांतरमाह ॥ **अज्ञानमपीति** ॥ वि जातीयभेदस्यैवाभावेज्ञानाज्ञानयोरपिभेदाभावादज्ञानमपिज्ञानमेवस्यात् । ततश्चाविज्ञातंविज्ञातंस्यादित्युक्तिर्नस्यादितिभा वः । यद्वाविजातीयभेदाभावेजगदुपादानब्रह्मणोरपिभेदाभावादज्ञानमपिज्ञानरूपंब्रह्मैवस्यादित्यर्थः । यदुक्तंयस्यकस्यचि ज्ज्ञानमेवब्रह्मज्ञानमितितदयुक्तं । घटादिकंमिथ्याब्रह्मतुसत्यमिततियोर्भेदात् । अतएवाज्ञानमपिब्रह्मैवस्यादित्यप्ययुक्तमि त्यतआह ॥ **नचेति** ॥ कुतोनेत्यतआह ॥ **तस्यैवेति** ॥ यदिघटादेर्ब्रह्मणश्चमिथ्यात्वसत्यत्वाभ्यांभेदोंगीक्रियते । तर्हि तस्यैवमिथ्याभूतस्यब्रह्मभिन्नस्यघटादेरज्ञानस्यवाविजातीयत्वप्राप्तेर्विजातीयभेदराहित्यमद्वितीयशब्दार्थइतिभग्नमित्यर्थः । स्या देवंयदिमिथ्यासत्ययोर्भेदःसत्यःस्यात् । नचैवं । किंनाम । सोपिमिथ्यैव । तथाचसत्यपिमि थ्याभूते विजातीयभेदेतस्या

भाष्यं । परोनास्तीतिचश्रुतिः । एकोभगवांस्तत्सदृशपरोनस्तइतिच । विजातीयाभावेयेनाश्रुतंश्रुतंभवतीत्यादिविशेषणंचव्यर्थं । यस्यकस्यचिज्ज्ञानंतज्ज्ञानमेवभवतीतिभ ज्ञानमपिज्ञानमेवभवति । भेदाभावात् । नचमिथ्यासत्यमितिभेदः । तस्यैवविजातीयत्वप्राप्तेः ।

पिमिथ्यात्वादद्वितीयमितितन्निषेधोयुज्यतइत्यतआह ॥ तद्भेदस्येति ॥ मिथ्यासत्ययोर्भेदस्यमिथ्यात्वेतदभेदस्यसत्यंत्व स्यात् । परस्परविरुद्धयोरन्यतरनिषेधस्यअन्यतरविधिनांतरीयकत्वात् । शुक्तौशुक्तिभेदस्यमिथ्यात्वेतदभे दस्यसत्यत्व दर्शनाच्च । तथाचघटादेर्ब्रह्मत्वमज्ञानस्यापिज्ञानत्वंस्यादितिसाधूक्तमितिभावः । एतेनसजातीयभेदवर्जनमवधारणार्थ इत्येतदपिपरास्तं । नचसजातीयभेदवर्जनंनामकुत्रचित्प्रसिद्धं । वृक्षस्यवृक्षांतराद्भेदेपितद्राहित्यस्यकुत्राप्यभावात् । अन्य थावृक्षस्यवृक्षांतरेणाभेदप्राप्त्यातद्भेदघटितसाजात्यस्यैवानुपपत्तेरित्यादिन्यायसाम्यात् । इदानींसजातीयविजातीयस्वरूपमं गीकृत्यतद्भेदमात्रप्रतिक्षेपेऽतिप्रसंगांतरमाह ॥ मिथ्येति ॥ जीवेशभेदादेरपिसत्यत्वप्रसंगइत्युपलक्षणं । ब्रह्मणोपिमि थ्यात्वप्रसंगइत्यपिद्रष्टव्यं । यदिमिथ्याभूतस्यसजातीयस्यविजातीयस्यसत्यभूतब्रह्मणश्चैक्यमंगीक्रियते । तदासर्वंमिथ्यैववास त्यंवास्यात् । नतुमिथ्यासत्यविवेकः । तथाचैकविधेतस्मिन्निदंसत्यमिदंमिथ्येतिविवेकाभावाद्ब्रह्मणोपिमिथ्यात्वंजीवेशभेदादेर पिसत्यत्वंवास्यादित्यर्थः । अत्रजीवेशेतिसजातीयग्रहणं । भेदादेरितिविजातीयग्रहणं । किंततइतिचेत् । तथासतिब्रह्मैकमेव परमार्थसत्यमन्यन्मिथ्येतिसिद्धांतोपिभग्नःस्यादित्याह ॥ अतइति ॥ ब्रह्मणोपिमिथ्यात्वस्यजीवेशभेदादेःसत्यत्वस्यचांगीका रादित्यर्थः । किंचैकमितिस्वगतभेदनिषेधोऽर्थइत्यनुपपन्नं । एकशब्दस्याभेदमात्रबोधकस्यभिन्नाभिन्नेघटादावपिसत्त्वेनभेदनि

भाष्यं । तद्भेदस्यमिथ्यात्वेतदभेदस्यसत्यत्वप्रसंगाच्च । मिथ्यासत्ययोरैक्येइदंसत्यंइदंमिथ्येतिभेदाभावाज्जीवेशभेदादेरपिसत्यत्वप्रसंगः । अतःपरमार्थब्रह्मान्यन्मिथ्ये त्यपिनयुज्यते ।

षेधकत्वाभावादित्युक्तत्वात् । एवशब्दसहितस्यस्वगतभेदनिषेधकत्वेतुसजातीयभेदनिषेधासिद्धिः । तन्निषेधकपदाभावात् । तस्मात्त्वदुक्तरीत्यैवार्थोवक्तव्यइतिनिर्बंधश्चेत्तर्ह्यत्रवाक्येऽद्वितीयपदेनसदृशाख्यःसजातीयःएकमेवेत्यनेनस्वगतभेदोऽद्वितीयपदेनैवार्थादधिकाख्यंविजातीयंचनिषिध्यतइत्येवार्थोस्त्वितिभावेनोपसंहरति ॥ अतइति ॥ हीनस्यविजातीयस्यसत्त्वादधिकाख्यमित्युक्तं । यद्यपिस्वगतभेदइत्यनंतरंसजातीयइतिवक्तव्यं । तथाप्यत्रपरकृताद्वितीयपदव्याख्याननिरासस्यैवप्रस्तुतत्वाददद्वितीयपदप्रतिपाद्योक्तिरादौ । तदनंतरमेकमेवेत्यस्यप्रतिपाद्योक्तिः । ततोऽद्वितीयपदार्थिकार्थोक्तिरित्यवगंतव्यं । एवंश्रोतुःश्रुत्योद्विग्नत्वनिरासायैकमेवाऽद्वितीयमितिवाक्यंव्याख्यायेदानीं अप्रतिपत्तिविप्रतिपत्तिनिरासायसदेवेत्यादिप्रकरणंप्रमाणेनैव व्याचष्टे ॥ सर्वोत्तमत्वादिति ॥ सच्छब्दउत्तमंब्रूयादित्युक्तेः । सदित्यस्तितामात्रंसूक्ष्मंनिर्विशेषंसर्वगतमेकंनिरंजनंनित्यंनिरवयवंयदवगम्यतेसर्ववेदांतेभ्यइतिव्याख्यानमसत् । मात्रशब्दाश्रवणेनास्तितामात्रमितिव्याख्यानायोगात् । सूक्ष्मत्वादेःसच्छब्दार्थत्वेमानाभावात् । मात्रशब्देनासद्व्यावृत्तिलाभेपिस्थौल्यादिव्यावृत्तेरलाभात् । स्वरूपकथनमात्रपरत्वेतुसूक्ष्मत्वादेरेवविशेषत्वेननिर्विशेषत्वोक्तिव्याघातात् । सूक्ष्मत्वसर्वगतत्वयोर्विरोधाच्च । ऐश्वर्यानंगीकारात् । वेदांतानामन्यथातत्रतत्रव्याख्यातत्वाच्च । अतोनिखिलगुणगणाढ्यमेवब्रह्मसच्छब्दाभिधेयमितिभावेनोक्तं ॥ नारायणइति ॥ एवंतत्तेजोऽसृजतेतिवाक्यस्थतच्छब्दपरामर्श्यप्रदर्शनायसच्छब्दंव्याख्यायतद्वाक्यंव्याचष्टे ॥ सइति ॥ अनेनसच्छब्दस्यनिर्विशेषब्रह्मपरत्वेतदैक्षतत

भाष्यं । अतःसजातीयःस्वगतभेदोऽधिकाख्यंविजातीयंचात्रनिषिध्यते । सर्वोत्तमत्वात्सन्नामाहरिर्नारायणःप्रभुः । सोसृजत्

त्तेजोसृजतेत्यादिपरामर्शानुपपत्तिः । निर्विशेषस्यस्रष्टृत्वाद्ययोगात् । मायाशबलस्यसच्छब्दानुक्तत्वादितिसूचितंभवति । तेजआख्यांश्रियमित्यादिनातेजोबन्नशब्दाःभूतमात्रपराइतिव्याख्यानंनिरस्तं । तत्तेजऐक्षत ताआपऐक्षंतेतीक्षणकर्तृत्वलिंगेन चेतनत्वावगमात् । नचकूलंपिपतिषतीत्यादिवदीक्षणमुपचरितमितिवाच्यं । तदैक्षतेत्यस्याप्युपचरितत्वप्रसंगेनप्रधानस्यैवजगत्कारणत्वप्रसंगात् । अन्यथाप्रायपाठविरोधात् । अभिमान्यधिकरणन्यायेनतेजोबन्नशब्दानांदेवतापरत्वाच्च । अस्तिचात्रापिइमास्तिस्रोदेवताइत्यादिबहुशोदेवताश्रुत्यभ्यासः । तदिदंवक्ष्यति । ईक्षणादिनाचेतनत्वावगतेरिति । किंचभूतसृष्टिविवक्षायामात्मनआकाश इत्यादाविवाऽकाशाद्यारभ्यैवसृष्टिःकुतोनोक्ता । आकाशवायुसर्गानंतरंतत्तेजोसृजतेत्यर्थांगीकारेअश्रुतकल्पनापातात् । सृष्टिक्रमाविवक्षायांतेजोबन्नेष्वपिव्यत्यासोक्त्यापातात् । भूतविवक्षायांपंचीकरणस्यैवविवक्षणीयत्वेनत्रिवृत्करणविवक्षायाअप्ययोगात् । तस्माद्भगवतःप्रथमोत्पन्नत्वेनोच्यमानास्तेजआद्यालक्ष्म्यादयएव । तदिदमुक्तं ॥ **प्रथममिति** ॥ वक्ष्यतिच प्राथम्याच्चतेजआद्यालक्ष्म्यादयइतिसिद्धमिति ॥ तर्ह्यत्रभूतमपिविवक्षितंनवा । विवक्षितमितिब्रूमः । नचप्राथम्यरूपयुक्तिकथनविरोधः । प्रत्यक्षभूतेषुतेजसःप्राथम्याभिप्रायेणतदुपपत्तेः । अन्यथामहत्तत्वादेःसत्त्वेनआत्मनआकाशइत्याकाशस्यापिप्राथम्यानुपपत्तेः । ईक्षणाद्युक्तिश्चसोमोवैराजागंधर्वेष्वासीदितिवदभिमानिविवक्षयाभविष्यति । तथाचोक्तं । अभिमन्यमानसहितास्त्रयएते अभिमानिनः । विष्णोर्जाताःक्रमेणैवपूर्वस्मादुत्तरोत्तरमिति । ननुतेजआख्यांश्रियमितिकथं तेजःशब्दस्यतत्ररूढेरभावादिति

भाष्यं । प्रथमंदेवींतेजआख्यांश्रियंसतीं ।



चेत् न । द्योतमानत्वलक्षणतेजस्त्वस्यसत्त्वेनरूढेरनावश्यकत्वादितिभावेनोक्तं । देवींद्योतमानामिति । सदेवसोम्येदमग्रआसीदित्युक्तत्वेप्यस्याःप्रलयेनाभावःशंकनीयइतिभावेनोक्तं ॥ **सतीमिति** ॥ अनादितोविद्यमानामित्यर्थः । नचैवंब्रह्मणःसकाशात्सर्जनानुपपत्तिः । रूपांतरेणसत्त्याअपिरूपांतरेणसर्जनोपपत्तेः । नचतत्रमानाभावः । तेजःशब्दस्यैवतदवगमकत्वादितिभावेनतंशब्दंतस्यांद्वेधानिर्वक्ति ॥ **ततइति** ॥ ततेव्याप्तेनारायणेस्थितेनरूपेणयतःसासदाऽजैवहिप्रसिद्धा तस्मात्सातेजइत्युच्यतइत्यर्थः । अनेनतेस्थितेनरूपेणनजायतइतितेजइतिव्याख्यातं । ततेव्याप्तेभगवतिनिमित्तेसत्येवरूपविशेषेणजनेर्वातेजइत्युच्यतइत्यर्थः । तदेवविवृणोति ॥ **यदिति** ॥ तेनरूपेणेतिशेषः । तेजोभिमानवान्ब्रह्मेतिव्याख्यानंत्ववांतराभिमानिविवक्षयेत्यवगंतव्यं । तदपोसृजतेत्येतद्व्याचष्टे ॥ **मन्वाख्यइति** ॥ विद्याख्यंमन्वाख्यइति ग्रंथांतराविरोधायोक्तं । तदर्थमेवाह अथप्राणोत्पत्त्यनंतरंब्राह्मणादिचतुर्वर्णाभिमानीब्रह्माचास्याजायतइति । वायुरेवब्रह्माभवितुमहतीतिदर्शयितुंवायोःसृष्टिःप्रथममुक्ता । वायुरेवयतोब्रह्मपदंनियमतोव्रजेत् । सहैवजननेप्यस्मात्पूर्ववायोर्जनिंवदेत् । क्वचित्तुब्रह्मणःपूर्वंप्राधान्यात्तत्पदस्यचेतिब्रह्मतर्कवचनात् । प्राणस्यैवविशेषणमेतदित्यप्याहुः । ताअन्नमसृजंतेत्येतद्व्याचष्टे ॥ **ततश्चेति** ॥ जायतइत्यनुवर्तते । नन्वत्रतेजोबन्नशब्दानांदेवतार्थत्वेतस्माद्यत्रक्वचशोचतिस्वेदतेवापुरुषस्तेजसएवतद्ध्यापोजायंतइत्युक्तिरयुक्ता । नहिदेवतयोःकार्यकारणभावेभूतयोःकार्य

भाष्यं । ततेस्थितेनरूपेणसाऽजैवहियतःसदा । तेजइत्युच्यतेतस्माज्जनेर्वाततएवतु । यदस्याःसृष्टिकृद्रूपंविद्याख्यंजायतेहरेः । मन्वाख्यःप्राणएवास्याअन्नामाजायतेथच । ब्राह्मणादिचतुर्वर्णस्ततश्चान्नाभिधोहरः ।

कारणभावोक्तिःप्रमाणमित्यतोभिमन्यमानसहितानामेवात्रविवक्षितत्वान्नानुपपत्तिरितिभावेनाह ॥ तेजःसंस्थेति ॥ तेजसएव प्रसिद्धात् । घर्मादिरूपात्स्वेदादिरूपाआपोजायंतइत्यर्थः । तस्माद्यत्रक्कचवर्षतितदेवभूयिष्ठमन्नंभवतीत्येतदपिघटयति ॥ अन्न स्थितइति ॥ ननुश्रुत्यंतरेअद्भ्यःपृथिवीपृथिव्याओषधयःओषधीभ्योऽन्नमितिओषधीभ्योऽन्नसृष्टेरुक्तत्वेनकथमत्राद्भ्योन्नसृष्टि रुच्यतइत्यतआह ॥ पृथिवीत्विति ॥ नात्रान्नशब्देनप्रसिद्धान्नमुच्यते । किंतुपृथिव्येव । भूताधिकारत्वात् । यत्कृष्णंतदन्न स्येतिकृष्णरूपश्रवणात् । कार्ष्ण्यप्रचुराचपृथिवी । नान्नस्यतथाविशेषः । पृथिवीवाअन्नमित्यादिशब्दांतरादन्नशब्दस्यपृथिव्यांश क्तिमत्त्वाच्चेतिभावः । तथाचसूत्रं । पृथिव्यधिकाररूपशब्दांतरादिभ्यइति ॥खं० २॥ सेयंदेवतेत्यादिकरवाणीत्यंतंवाक्यंप्रसिद्धजी वरूपेणेतिप्रतीतिंनिवारयन्ससंगतिकंव्याचष्टे॥ सृष्टेष्विति ॥ सेयंदेवतेत्यादिनामरूपेव्याकरोदित्यंतंवाक्यंससंगतिकंव्याचष्टे ॥ इतिमत्त्वेति ॥ तेभ्यइंद्रादिनामिंद्रादीनामितिशेषोक्तिः । तासांत्रिवृतंत्रिवृतमेकैकामकरोदित्येतद्व्याचष्टे ॥ तांश्चेति ॥ ताँल्ल क्ष्म्यादींश्चान्योन्यप्रवेशिनःकृतवानित्यनुवर्तते । यदग्नेरित्याद्युत्तरप्रकरणंसंगमयितुमाह ॥ कृत्वेति ॥ तांश्चान्योन्यप्रवेशिनः इत्यनुवर्तते । एताँल्लक्ष्म्यादीन्पुनर्विदधेपुनःप्रवेशितवान् ॥ खं० ३ ॥ इदानींयदग्नेरोहितंरूपमित्यादिव्याचष्टे ॥ अतइति ॥

---

भाष्यं । तेजःसंस्थाचसादेवीप्राणोप्सुस्थितएवच । ततस्तेजसएवापोजायंतेऽन्नस्थितोहरः । जायतेऽतोद्भ्यएवान्नंपृथिवीत्वन्नरूपिणी ॥ खं० २ ॥ सृष्टेष्वेतेषुभगवानीक्षांचक्रे सकेशवः । जीवाख्येनैवरूपेणयोऽनिरुद्धइतिस्मृतः । तेनरूपेणलक्ष्म्यादीन्प्रविष्टोरूपनामनी । करिष्येत्रिवृतश्चैतानेकैकंकरवाणिच । इतिमत्वाप्रविश्याथतेभ्यइंद्रादिनामपि । नामरूपाणिकृतवांस्तांश्चान्योन्यप्रवेशिनः । कृत्वाग्निसोमसूर्यादिष्वेतांस्त्रीन्विदधेपुनः ॥ खं० ३ ॥ अतोयल्लोहितंरूपंश्रियस्तद्रूपसंभवं ।

लक्ष्म्यादीनामग्न्यादिषुप्रविष्टत्वादित्यर्थः । अग्निसोमसूर्यादिष्वित्येतदनुवर्तते । वायुजंवायुरूपजं शिवोद्भवंशिवरूपोद्भवं । श्रौतसामानाधिकरण्यव्यपदेशस्तुब्राह्मणोस्यमुखमासीदित्यादिवज्जन्यजनकभावाभिप्रायेणेतिभावः । अपागादग्नेरग्नित्वमित्यसंगतंकिमुच्यतइत्यतोमध्येवक्तव्यमाह ॥ तस्मादिति ॥ श्रीवायुशिवरूपजन्यरूपत्वेनतदधीनत्वादग्नेरग्निनामप्रवर्तकंयदत्तृत्वंतल्लक्ष्म्यादिदेवतानामेवमुख्यमित्यर्थः । अतोग्निनामतासामेवमुख्यमितिभावः । इदानीं अपागादग्नेरग्नित्वमित्येतद्व्याचष्टे ॥ नैवेति ॥ ततोग्निनामप्रवर्तकस्याचृत्वस्यतदाविष्टलक्ष्म्यादिष्वेवमुख्यत्वादग्नेरग्निताऽत्तृत्वलक्षणामुख्यानैवेत्यर्थः । ततो लक्ष्म्यादेरित्यवधिनिरूपणंवा । अतोग्निनामनाग्नौमुख्यमितिभावः । अपागादादित्यादादित्यत्वमित्येतदप्येवंव्याख्येयमिति भावेनाह ॥ एवमिति ॥ यथाग्नित्वमेवमादित्यस्यादित्यनामप्रवर्तकमाददानत्वमपिलक्ष्म्यादिदेवतानामेवमुख्यंनादित्यस्येतियोजना । कुतइत्यतआह ॥ आदित्यस्येति ॥ यस्मादादित्यस्यततूरूपंतदुद्भवंलक्ष्म्यादिदेवतारूपोद्भवं तत्तस्मादित्यर्थः । अस्त्वाददानत्वंलक्ष्म्यादीनामेवमुख्यंनादित्यस्य किंततइत्यतआह ॥ अतइति ॥ एषामेवमुख्यतोवर्ततइतिसंबंधः । अपागाच्चंद्राच्चंद्रत्वमित्येतत्तात्पर्यमाह ॥ यदिति ॥ यथाआददानत्वंतथायच्चंद्रस्याह्लादकत्वंचंद्रताचंद्रशब्दप्रवृत्तिनिमित्तंतत्तेषामेवमुख्यंनचंद्रस्य । तद्रूपोद्भूतरूपत्वेनतस्यतदधीनत्वात् । अतश्चंद्रनामैषामेव । नैवचंद्रस्यमुख्यतइत्यर्थः ।

---

भाष्यं । यच्छुक्लंवायुजंविद्यात्कृष्णंचैवशिवोद्भवं । तस्मादग्नेर्यदत्तृत्वमग्निनामप्रवर्तकं । लक्ष्म्यादिदेवतानांतन्नैवाग्नेरग्नितााततः । मुख्यैवमाददानत्वमादित्यस्यतदुद्भवं । अतआदित्यनामैषांनैवादित्यस्यमुख्यतः । यच्चंद्राह्लादकत्वंचतत्तेषांचंद्रतातथा ।

अपागाद्विद्युतोविद्युत्त्वमित्येतत्तात्पर्यमाह ॥ **विद्युदिति** ॥ विद्युतोविद्योतनंविद्योतकत्वमपितेषामेवमुख्यंनविद्युतः उक्तादेव हेतोः । अतोविद्युन्नामैषामेव । नैवविद्युतोमुख्यतइत्यर्थः । एतेनवांचारंभणंविकारोनामधेयंत्रीणिरूपाणीत्येवसत्यमितिवाक्य चतुष्टयमपितात्पर्यतोव्याख्यातं । नन्वेतावताग्न्यादिनामचतुष्टयमुख्यार्थत्वंलक्ष्म्यादीनांप्राप्तं । तावताकोतिशयस्तेषामित्यतआह ॥ **ततइति** ॥ तत्तद्देवताशब्दप्रवृत्तिनिमित्तस्यतेष्वेवमुख्यत्वात्तेसर्वदेवनाममुख्यवाच्याइत्यर्थः । तत्तद्देवताशब्दप्रवृत्तिनि मित्तस्यतत्रैवमुख्यत्वंकुतइत्यतआह ॥ **तथैवेति** ॥ यथाग्न्यादिरूपं तथैवसर्वदेवतारूपंचरोहितादिकंतद्रूपोत्पन्नंतस्मात्तत्तच्छब्द प्रवृत्तिनिमित्तंतेषामेवेत्यर्थः । एवंचश्रुतौयद्विद्युतोरोहितंरूपमित्यादिकमुपलक्षणं । यन्मित्रस्यरोहितंरूपमित्याद्यपिग्राह्यं । अ तएवाग्न्यादिदेवताचतुष्टयोपादानं । ततश्चयदुरोहितमिवाभूदितितेजसस्तद्रूपमितिसामान्यतोविद्वत्संमतिकथनमपिनासंगतमि तिभावः । स्यादेतत् । यद्यग्न्यादिसर्वदेवतारूपंतद्रूपोत्पन्नमित्येतदेवस्यात् । तदेवकुतइत्यतआह ॥ **सर्वरूपाइति** ॥ चोयस्मा दित्यर्थे । यस्मादग्न्यादिसर्वदेवतारूपंतद्रूपप्रतिबिंबितंतस्मादेवतेअग्न्याद्याःसर्वेदेवाः लोहितादिक्रमेणसर्वरूपवंतः । अन्यथा तन्नस्यात् । स्वतोरूपशून्यत्वात्तेषामित्यर्थः । इदानींवाचारंभणंविकारोनामधेयमित्येतत्स्पष्टंव्याचष्टे ॥ **अतइति** ॥ अन्यवा चकत्वेनप्रसिद्धमप्यग्निरित्यादिनामधेयमन्यत्रविकारोऽमुख्यएव । कुतः वाचारंभणहेतुतः । अनेनवाचारंभणमितिहेत्वर्थगर्भ

---

भाष्यं । विद्युद्विद्योतनंतेषांततस्तेसर्वनामिनः । तथैवसर्वरूपंचतद्रूपप्रतिबिंबितं । सर्वरूपाश्चततस्माल्लोहितादिक्रमेणतु । अतोन्यनामधेयंतुवाचारंभणहेतुतः ।



मित्युक्तंभवति । तस्यैवविवरणं ॥ **सांकेत्येनेति** ॥ वाचारंभणशब्दस्यसांकेत्यपर्यायत्वस्यसुधायामुक्तत्वात् । तत्रहेतुरतइति ॥ अग्न्यादिशब्दप्रवृत्तिनिमित्तस्याग्नित्वादेर्लक्ष्म्यादावेवमुख्यत्वेना ग्न्यादिनाम्नांमुख्यतःतन्नामत्वा दत्रसंकेतितत्वमित्यर्थः । त्री णिरूपाणीत्येवसत्यमित्यस्यतात्पर्यमाह ॥ **त्रयाणामेवेति** ॥ नित्यताअग्न्यादिशब्दमुख्यार्थतेत्यर्थः । इदंचस्फुटीकरिष्यत्या चार्यः । वाचारंभणवाक्यस्योक्तार्थेदृष्टांतव्युत्पादनपरतयापितदेववाक्यंव्याचष्टे ॥ **यथेति** ॥ यथालोकेलक्ष्म्यादिकानामेवना मलक्ष्मीरित्यादिकंवाचारंभणहेतोः । कोर्थः । संकेततोन्यगंस्त्रीपुंसादिपिंडगतं तत्तस्मात्संकेततोऽन्यगतत्वात्तन्नामतत्रविकारए व । नमुख्यतोवर्तते । तथान्यनामधेयमितिपूर्वेणसंबंधः । ननुयद्यग्न्यादिनामधेयानामपिलक्ष्म्यादौमुख्यत्वंतर्हित्रीणिरूपाणी त्येवसत्यमितित्रीणिरूपाणीतिनामधेयस्यैवमुख्यत्वोक्तिविरोधइत्यतस्तदभिप्रायमाह ॥ **मुख्यमिति** ॥ त्रीणिरूपाणीत्यस्यबहु शःसत्त्वादित्याद्यमित्युक्तं । त्रीणिरूपाणीतिवेदोदितंनाम । परंमुख्यं देवतांतरेसंकेतंविनातत्रैवमुख्यत्वात् । यथाभगवतिनारा यणादिनाम । अतोग्न्यादिनाम्नामपितत्रैवमुख्यत्वेपितदेवत्रीणिरूपाणीत्यादिनामैवसत्योक्तंसत्यमित्युक्तमित्यर्थः । मिथ्यात्व शंकाभावात्सत्यत्वोक्तिरसंगतेत्यतआह ॥ **मुख्यमिति** ॥ तेभ्यइंद्रादिनामपि । नामरूपाणिकृतवानित्यादिनेंद्रादीनामग्न्या दीनांचसर्वेषांदेवानांनामरूपाणिलक्ष्म्यादिष्वेवमुख्यानीत्युक्तं । एवंसत्रतियाणांसाम्यप्रतीतावाह । इंद्रादीत्यादिनालक्ष्म्याइत्यं

---

भाष्यं । सांकेत्येनविकारःस्यात्त्रयाणामेवनित्यता । यथालक्ष्म्यादिकानांचनामसंकेततोन्यगं । वाचारंभणहेतोस्तद्विकारोनैवमुख्यतः । मुख्यंनामात्रिरूपाणीत्याद्यंवेदोदितं परं । अतस्तदेवसत्योक्तंमुख्यंसत्यमितीर्यते । इंद्रादिनामरूपाणियथैवत्रिषुमुख्यतः ।

तेन । तत्रहेतुःतदधीनत्वतस्तेषामिंद्रादीनामिति । तत्रापिहेतुरेषांलक्ष्म्यादित्रयाणामिति । नामानिसर्वाणियमाविशंति रूपोप न्यासाच्चेत्यादिविरोधपरिहारायाह ॥ तदीयानिहरेरिति ॥ यस्मात्तदीयान्यपिनामरूपाणिहरेरेवमुख्यतःतस्मात्सएवसर्वरू पः । सएवसर्वनामाचोक्तः । तत्रहेतुःसर्वेशइति । तत्रापिहेतुस्तथैवसएकएवसर्वशक्तिश्चेति । ननुसएवसर्वरूपःसर्वनामाचेत्यनु पपन्नं । अन्येषामपिरूपादिमत्त्वादित्यतआह ॥ अन्येषामिति ॥ तस्माद्धरिरूपादेः । ननुदेवोवाकेशवांशोवेतिमन्यमानंस्त ब्धंश्वेतकेतुंप्रतितन्निरासायसदेवसोम्येत्यादिकमुपदिश्यते कथमनेनतन्निरासोजातइत्यतआह ॥ एकएवेति ॥ यतएकएवाद्वि तीयइत्याद्युच्यते । अतःसत्वंनासिकथंचनेतिसंबंधः । सत्ततिज्ञानरूपतःसत्यमित्युच्यते । सत्वंनासिकथंचनेति । तत्सत्यं अत त्वमसिश्वेतकेतोइत्यस्यार्थः । यद्यपीदंवाक्यमुत्तरनवप्रकरणीगतमेव । तथापिसयएषोणिमैतदात्म्यमित्यादिवाक्यमत्रापिग्राह्य मित्यनेनावगम्यते । ततश्चकिमित्यतआह ॥ अतइति ॥ नन्वेवंतर्हिसदेवसोम्येदमग्रआसीदेकमेवाद्वितीयंसएषोणिमैतदात्म्यमि त्यादिकमेवालं । तेजोबन्नसृष्टिस्तेभ्यइंद्रादीनांनामरूपसृष्टिश्चकिमर्थमुच्यते । स्तंभनिरासानुपयोगादित्यतआह ॥ त्वत्तोधिका

---

भाष्यं । तदधीनत्वतस्तेषामेषामुच्चबलत्वतः । शिवनामानिरूपाणितथावायोस्तुमुख्यतः । तदीयानितथालक्ष्म्यास्तदीयानिहरेस्तथा । तस्मात्सएवसर्वेशःसर्वरूपः सएवच । सर्वनामासएवैकःसर्वशक्तिस्तथैवच । अन्येषांयच्चरूपाद्यंतत्तस्मात्प्रतिबिंबितं । एकएवाद्वितीयोसावतःसर्वोत्तमत्वतः । मुख्यत्वादेवसन्नामासत्ततिज्ञानरूपतः । सत्य मित्युच्यतेविष्णुस्सत्वंनासिकथंचन । अतोनूचानमानीत्वंस्तब्धोसिकुतएवतु । त्वत्तोधिकाअपींद्राद्यास्तदुच्चाश्चश्रियादयः । सर्वोच्चोभगवान्विष्णुर्नस्तंभोस्यापिहिक्वचित् ।

तिज्ञापनायबहुवचनं । आदिपदेनादित्यस्यादित्यइतिनाममुख्यतोनास्ति । आदित्यनामानित्रीणिरूपाणीतिनामधेयंचसत्यमित्यादिवाक्यांतरव्याख्यानसंग्रहः । ततश्चस्मृतौत्रयाणामितिश्रौतशेषोक्तिः । अग्न्यादिनामानितेषामेवमुख्यानीत्युक्तेतेषांतच्छब्दमुख्यार्थत्वंलब्धमेवेतिभावः ॥ खं० ॥ ७ ॥ ततश्चेयंखंडषट्कस्याक्षरयोजना ॥ हेसोम्य सदेवसर्वोत्तमत्वात्सन्नामकंनारायणाख्यंब्रह्मैव इदमग्रेअस्याग्रे आसीत् । ननुनारायणावयवगुणकर्मादीनांसत्त्वात्कथंसदेवेत्युक्तमित्यतआह ॥ एकमेवेति ॥ एकमभिन्नंस्वावयवादिना । एकमपिघटादिकमवयवभेदवदुपलब्धमतएवेत्युक्तं । तथापिरमादीनांतदासत्त्वात्कथंसदेवेत्युक्तमित्यतआह ॥ अद्वितीयमिति ॥ समानवार्जितमधिकवर्जितमितिकिमुवक्तव्यमितिभावः । रमादीनांसर्वेषांनीचत्वमभिप्रेत्यसदेवेत्युक्तमितितात्पर्यं । स्वोक्तार्थदार्ढ्यायशून्यवादिपक्षंदूषयितुमनुवदति ॥ तदिति ॥ तत्तत्रजगत्कारणेनिरूपणीये । एकेशून्यवादिनः । आहुर्हप्रसिद्धं । किमाहुः । असदेवेदमग्रआसीत् । अत्रासच्छब्देनशून्यमुच्यते । एकमेवेतिस्वकार्यपतितमन्यन्नास्तीत्येकमेवोच्यते । शून्यातिरेकेणशून्यस्यसहकारिकारणंद्वितीयंप्रतिषिध्यतेअद्वितीयमिति । विप्रतिपत्त्यंतरमाह ॥ तस्मादिति ॥ तस्मादसतःसज्जगदुत्पद्यतइति ॥ १ ॥ एवमनूदितंपक्षंदूषयति ॥ कुतइति ॥ तुशब्दःपूर्वपक्षव्यावृत्त्यर्थः । हेसोम्य एवमसदासीदिति कुतएवस्या न्नकुतोपि व्याहतेः । प्रमाणाभावाच्चेतिहोवाच । विप्रतिपत्त्यंतरंदूषयति ॥ कथमिति ॥

---

उप० । सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयंतद्धैकआहुरसदेवेदमग्रआसीदेकमेवाद्वितीयंतस्मादसतःसज्जायतइति ॥ १ ॥ कुतस्तुखलुसोम्यैवꣳस्यादितिहोवाचकथमसतःसज्जायेतेतिसत्त्वेवसोम्येदमग्रआसीदेकमेवाद्वितीयं ॥ २ ॥

कथमसतःसदुत्पद्येत । अदृष्टत्वादसतःकारणत्वानुपपत्तेरितिभावः । इतिहोवाचेतिसंबंधः । एवंपूर्वपक्षमुन्मथ्यस्वपक्षसिद्धिमुपसंहरति ॥ सत्त्वेवेति ॥ तुशब्दस्तस्मादित्यर्थे । तस्मात्सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयमितिसिद्धमित्यर्थः ॥ २ ॥ तस्यप्रलयवर्तिनःसदाख्यब्रह्मणःसृष्टिकालेप्राप्तेकर्तव्यव्यापारमाह ॥ तदिति ॥ तत्सदाख्यं ब्रह्मैक्षतविचारमकरोत् । किमिति । अहंबहुस्यांजगन्नियामकतयाबहुरूपंस्यां । तदर्थंप्रजायेयसृज्यंप्रजनयेयमिति। तदित्थंविचिंत्यतेजोसृजत । तेजोनामकरमासहितंतदभिमन्यमानंतेजोभूतमसृजतेत्यर्थः । तत्तेजोरमारूपमैक्षत । अहमपिबहुरूपंस्यांतदर्थंजगदुत्पादयामीति । इत्थंविचिंत्यतत्तेजोपोसृजत । अम्नामकप्राणसहितंतदभिमन्यमानमबाख्यंभूतमसृजतेत्यर्थः । अपांतेजःकार्यत्वेप्रमाणमाह ॥ तस्मादिति ॥ यस्मादादावापएवतेजसोजायंते । तस्मादेवाद्यापिपुरुषःयत्रक्कचदेशेकालेवाशोचतिरोदिति । स्वेदतेवास्विद्यतेवातेजसएव । ताश्चताआपश्चेतितदापोजायंतइतिहिप्रसिद्धं । अन्वयव्यतिरेकसिद्धत्वात् ॥ ३ ॥ एवंतेजःसृष्टास्ताआपऐक्षंततदभिमानीमुख्यप्राणोव्यचिंतयत् । बह्व्यइतिपूर्ववत् । इत्थंविचिंत्यताआपोन्नमसृजंत । अन्ननामकरुद्रसहितंतदाभिमन्यमानंपृथिव्याख्यंभूतमसृजंतेत्यर्थः । पृथिव्याअप्कार्यत्वमुपपादयति ॥ तस्मादिति ॥ तस्मादन्नस्याप्कार्यत्वादेव यत्रक्कचदेशेकालेवावर्षति । तत्तत्रैव भूयिष्ठ मन्नंअन्नाद्यं भवति । अन्यथासिद्धिंनिरस्यति ॥ अद्भ्यएवेति ॥ तदन्नाद्यंप्रसिद्धान्नप्रभृतिपार्थिव

उप० । तदैक्षतबहुस्यांप्रजायेयेतितत्तेजोसृजततत्तेजऐक्षतबहुस्यांप्रजायेयेतितदपोसृजततस्माद्यत्रक्कचशोचतिस्वेदतेवापुरुषस्तेजसएवतदध्यापोजायंते ॥ ३ ॥ ताआपऐक्षंतबह्व्यःस्यामप्रजायेमहीतिताअन्नमसृजंततस्माद्यत्रक्कचवर्षतितदेवभूयिष्ठमन्नंभवत्यद्भ्यएवतदध्यन्नाद्यंजायते ॥ ४ ॥ खं० २ ॥



मद्भ्यएवजायतेनान्यस्मादित्यर्थः ॥ ४ ॥ द्वितीयःखंडः ॥ २ ॥ एवमुत्पन्नानांतेजोबन्नानांसर्वभूतकारणत्वरूपमाहात्म्यमाह ॥ तेषामिति ॥ तेषांप्रसिद्धानामेषांवक्ष्यमाणानांभूतानांत्रीण्येवखलुप्रागुक्ततेजोबन्नान्येवबीजानिकारणानि । एषामित्युक्तभूतान्येवाह॥ अंडजमिति॥ अंडजंपक्ष्यादि जीवजंजरायुजंमनुष्यादि भुवमुद्भिद्यजायतइत्युद्भिज्जंवृक्षादि इत्यषोमित्यन्वयः ॥ १ ॥ भूतसहिततेजोबन्नाख्यदेवतात्रयसृष्ट्यनंतरंभगवद्व्यापारमाह॥ सेयमिति॥ सेयंसदाख्यादेवतैक्षत हंतेत्यास्वादने । अहमिमाःपुरासृष्टाः। तिस्रोदेवताःतेजोबन्ननामकलक्ष्मीप्राणरुद्ररूपाः। अनेनजीवेनजीवनामकेनानिरुद्धाख्येनात्मनास्वात्मनांतर्यामिरूपेणानुप्रविश्यनामरूपेव्याकरवाणीत्यैक्षत ॥ २ ॥ विचारांतरमाह ॥ तासामिति ॥ तासांदेवतानांमध्येएकैकांत्रिवृतंत्रिवृतमन्योन्यप्रविष्टांकरवाणीतिचैक्षत । इतिमत्त्वासेयंदेवतेमास्तिस्रोदेवताःअनेनजीवेनात्मनानुप्रविश्यताभ्यःइंद्रादीनांनामरूपेव्याकरोत् व्याकृतवती । तासांदेवतानांमध्येएकैकांत्रिवृतंत्रिवृतमन्योन्यप्रविष्टांचाकरोत् । एवंताःअन्योन्यप्रविष्टाःकृत्वाग्निसोमसूर्यादिषु पुनर्विंदधइतिवक्तव्यं ॥ ३ ॥ नन्वन्योन्यप्रविष्टानांतेजोबन्नाख्यदेवतानांपुनरग्न्यादिषुप्रवेशेएकैकत्रकार्यंत्रयेणभाव्यं । तत्कथमित्यतस्तद्वक्तुंप्रतिजानीते ॥ यथात्विति ॥ हेसोम्य इमास्तिस्रोदेवताः एकैकाप्यग्न्यादौत्रिवृत्त्रिवृद्यथैवभवतियेनप्रकारेणभ

उप० । तेषांखल्वेषांभूतानांत्रीण्येवबीजानिभवंत्यंडजंजीवजमुद्भिज्जमिति ॥ १ ॥ सेयंदेवतैक्षतंहताहमिमास्तिस्रोदेवताअनेनजीवेनात्मनानुप्रविश्यनामरूपेव्याकरवाणीति ॥ २ ॥ तासांत्रिवृतंत्रिवृतमेकैकांरवाणीतिसेयंदेवतेमास्तिस्रोदेवताअनेनजीवेनात्मनानुप्रविश्यनामरूपेव्याकरोत् ॥ ३ ॥ तासांत्रिवृतंत्रिवृतमेकैकामकरोद्यथातुखलुसोम्येमास्तिस्रोदेवतास्त्रिवृत्त्रिवृदेकैकाभवतितन्मेविजानीहीति ॥ ४ ॥ खं० ॥ ३ ॥

वतितन्मेविजानीहीतिहोवाच ॥ ४ ॥ तृतीयःखंडः ॥ ३ ॥ प्रतिज्ञातमाह ॥ यदग्नेरित्यादिना ॥ अग्नेर्यद्रोहितंलोहितंरूपं तत्तेजसोरूपं तेजोनामकश्रीरूपसंभवंविद्यात् । अग्नेर्यच्छुक्लंरूपंतदपांरूपंवायुरूपजन्यंविद्यात् । अग्नेर्यत्कृष्टंरूपंतदन्नस्यरूपंशिव रूपोद्भवंविद्यादित्यर्थः । एवंतेजोबन्नाधीनत्वादग्नेरग्नित्वमग्निनामप्रवृत्तिनिमित्तभूतमत्तृत्वरूपमग्नेरपागात्मुख्यतोनास्ति । किं तुलक्ष्म्यादीनामेवमुख्यतोस्ति । ततश्चाग्नेरग्निरितिनामधेयंवाचारंभणंसांकेतिकं । लक्ष्म्यादीनामेवान्यत्रव्यवहारार्थंसमाकृष्टमि तियावत् । अतोविकारोऽमुख्यमित्यर्थः । यथाप्रसिद्धस्त्रीपुंसपिंडेलक्ष्म्यादिनामवाचारंभणंसांकेतिकंअतोविकारोऽमुख्यंतथैवे त्यपियोज्यं । तर्हिंक्वतन्मुख्यमित्यतआह ॥ त्रीणीति ॥ अग्निरितिनामधेयंत्रयाणामेवसत्यंमुख्यमित्यध्याहारेणादौयोज्यं । तर्हिदेवतांतरेप्रयुज्यमानंत्रयाणांनामधेयंकिमित्यपेक्षायामुक्तं ॥ त्रीणीति ॥ त्रयाणांत्रीणिरूपाणीत्येवनामधेयं सत्यंपरंमुख्य मित्यर्थः । त्रीणिरूपाणीतिनामधेयमित्यनेनतेजोबन्नानीतिनामधेयानिवा । तथाभूतमेववानामधेयंविवक्षितमिति ॥ १ ॥ एव मुत्तरत्रापि । आदित्यत्वमाददानत्वं ॥ २ ॥ चंद्रत्वमाह्लादकत्वं ॥ ३ ॥ विद्युत्त्वंविद्योतकत्वं । उपलक्षणमेतत् । यन्मित्रस्यरो

---

उप० । यदग्नेरोहितंरूपंतेजसस्तद्रूपंयच्छुक्लंतदपांयत्कृष्णंतदन्नस्यापागादग्नेरग्नित्वंवाचारंभणंविकारोनामधेयंत्रीणिरूपाणीत्येवसत्यं ॥ १ ॥ यदादित्यस्यरोहितꣳरूपंतेजसस्तद्रूपंयच्छुक्लंतदपांयत्कृष्णंतदन्नस्यापागादादित्यादादित्यत्वंवाचारंभणंविकारोनामधेयंत्रीणिरूपाणीत्येवसत्यं ॥ २ ॥ यच्चंद्रमसोरोहितꣳरूपंतेजसस्तद्रूपंयच्छुक्लं तदपांयत्कृष्णं तदन्नस्यापागाच्चंद्राच्चंद्रत्वंवाचारंभणंविकारोनामधेयंत्रीणिरूपाणीत्येवसत्यं ॥ ३ ॥ यद्विद्युतोरोहितꣳरूपंतेजसस्तद्रूपंयच्छुक्लंतदपांयत्कृष्णंतदन्नस्यापागाद्विद्युतोविद्युत्त्वंवाचारंभणं विकारोनामधेयंत्रीणिरूपाणीत्येवसत्यं ॥ ४ ॥

इत्यादिना ॥ श्रियादयइत्यादिपदेनवाय्वादिग्रहणं । महानस्मीतिवामनस्तेतवनस्यात् ॥ खं० ४ ॥ नन्वथापीदंप्रकरणं देवतापरतयाव्याख्यातुंनयुक्तं । योमध्यमस्तन्मांसमितिमांसादिशब्दश्रवणात् । तेषांचप्रसिद्धमांसादिवाचित्वादित्यतआह ॥ देवताएवेति ॥ तेजोबन्नाख्याएवदेवतामांसादिशब्दवाच्याइत्यर्थः । एकैकात्रिवृत्त्रिवृद्भवतीत्युक्तत्वात् । तर्हिपुरीषादिशब्दवाच्याइत्येववक्तव्यं । सत्यं तथापितस्यश्रुतितोऽमांगलिकत्वात्त्यागः । नचैवंवाक्यशेषेमनःप्राणवाचामेवान्नमयत्वाद्युक्तिविरोधः । तत्रतेषांमुख्याभिमानोक्तेः । अतएवहिमयट्प्रत्ययः । साधारणाभिमानस्तुरुद्रादीनांपुरीषादावप्यविरुद्धः । देवतानांमांसादिशब्दवाच्यत्वंकुतइत्यतआह ॥ तत्रेति ॥ मांसादौदेवतानांनियामकतयाप्रवेशात् । नियम्यवाचकशब्दानांनियामकेवृत्तेरित्यर्थः । नन्वथाप्यन्नादयोनदेवताइतिनिश्चयोयुज्यते । अन्नस्याश्यमानस्यापांपीयमानानामित्युक्तिविरोधादित्यतआह ॥ अश्यमानाश्चेति ॥ देवताएवोपजीव्यत्वादश्यमानाश्चेत्यर्थः । अन्यथातेजसोश्यमानस्येत्यस्यप्रसिद्धतेजस्यप्यसंभवादितिभावः । नन्वश्यमानांतर्गतानांदेवतानांतदशनेदुःखप्रसंगः । नहिदह्यमानगेहांतर्गतस्यनदाहइतियुक्तमित्यतआह ॥ नचेति ॥ कुतइत्यतआह ॥ ऐश्वर्यादिति ॥ दह्यमानगेहांतस्थस्याप्यग्निस्तंभनशक्तिमतोदाहाभाववत्तासामघटितघटकसामर्थ्याद्दुःखाभावोपपत्तिरित्यर्थः । किमेवमन्नादीनांदेवतात्वग्रहेण प्रसिद्धान्नादिकमेवकिंनस्यादित्यतआह ॥ तिस्रइति ॥ इतिदेवतानांप्रस्तु

---

भाष्यं । अतोनविद्वन्मानीस्यामहानस्मीतिवामनः । नतेस्यान्नैवचस्तंभोज्ञात्वाविष्णोःपरंबलं । नहिविष्णोर्बलंज्ञात्वास्तंभहेतुःकथंचनेत्यादिसामसंहितायां ॥ खं० ४ ॥ देवताएवमांसादिशब्दवाच्याः । तत्रप्रवेशात् । अश्यमानाश्चोपजीव्यत्वात् । नचदुःखंतासां । ऐश्वर्यात् । तिस्रोदेवताःपुरुषंप्राप्यत्रिवृत्त्रिवृदितिप्रस्तुतत्वात् ।

तत्वात्प्रसिद्धार्थत्वेतद्विरोधइत्यर्थः। किंचास्मिन्प्रकरणेन्नादिशब्दैःप्रसिद्धान्नादिमात्रांगीकारेइमास्तिस्रोदेवताअनेनजीवेनात्मनानुप्रविश्येतिवाक्यमप्ययुक्तंस्यादितिभावेनतावज्जीवशब्दस्यपरमात्मवाचित्वेश्रुतिमप्याह ॥ **जीवइति** ॥ श्रुतिश्चेतिसंबंधः। प्रागुदाहृतस्मृतिसमुच्चयार्थश्चशब्दः। किमनिरुद्धस्यजीवाभेदेनजीवाख्या न किंतर्हिजीवस्यजीवत्वप्रदत्वेनेतिभावेनतत्रश्रुतिमाह॥ **प्राणस्येति** ॥ प्राणत्वादिप्रदइत्यर्थः। मूर्तिविवेकीवचनांतरादवगंतव्यः। जीवशब्दप्रवृत्तिनिमित्तप्राणधारकत्वस्यहरावेवसत्त्वादसावेवजीवशब्दवाच्यइतिस्मृत्याह ॥ **प्राणाधारइति** ॥ अनिच्छतोपिमरणदर्शनादितिभावः। तर्हिसंसारिणिजीवशब्दप्रवृत्तिःकथमित्यतआह ॥ **संसारिणइति** ॥ जननात्जीः। जनेर्डीप्रत्ययइतिभावः। वानतोलोकांतरगमनाद्वः। गत्यर्थाद्वातेःकप्रत्ययइतिभावः। अस्तुजीवशब्दस्यपरमात्मनिशक्तिस्तथाप्यत्रतद्विवक्षाकुतः। संसारिविवक्षैवकिंनस्यादित्यतआह ॥ **जीवशब्देनेति** ॥ आदिपदेनताआपऐक्षंतइमास्तिस्रोदेवताइत्यस्यग्रहणं। तेषामेवेमास्तिस्रइत्युक्तानामेव। इदमुक्तंभवति। यदीमास्तिस्रइत्युक्तानितेजोबन्नान्यचेतनानिस्युस्तदातेषांचेतनानधिष्ठितानांकार्याक्षमत्वान्नामरूपव्याकरणार्थंतत्रसंसारिजीवानुप्रवेशोपेक्षितःस्यात्। नचैवंतेषामेवेक्षणलिंगेनदेवताश्रुत्याचचेतनत्वावगमात्। नहिचेतनेचेतनांतरप्रवेशोपेक्षितः। अतोनात्रजीवशब्दःसंसारिवाचीति। एवंतर्हिभगवदनुप्रवेशोपितत्रव्यर्थःस्यादितिचेन्न। चेतनानामपिस्वतःप्रवृत्त्यसामर्थ्येनेश्वरप्रवेश

भाष्यं। जीवइतिभगवतोऽनिरुद्धस्याख्येतिचश्रुतिः। प्राणस्यप्राणश्चक्षुषश्चक्षुर्जीवस्यजीवःप्रधानस्यप्रधानंभगवांश्चतुर्मूर्तिरितिच। प्राणाधारोहरिर्नान्योजीवशब्दस्ततोहरौ। संसारिणोजीवतातुजननाद्वानतस्तथेतिच। जीवशब्देनसंसारिविवक्षायांतत्तेजऐक्षतेत्यादिनातेषामेवचेतनत्वावगतेर्नामरूपव्याकरणेजीवांतरानुप्रवेशोनापेक्षितः।



सार्थक्यादितिभावेनतत्रप्रमाणमाह ॥ **प्रसुप्तेति** ॥ प्रसुप्तलोकतंत्राणामनाविर्भूतलोकसृष्टिशक्तीनांगतिंस्थितिं। शब्दाद्याःनभआद्याश्चमनोयुक्तेंद्रियाणिच। अहंकारोमहांश्चैवत्रयोविंशतिकोगणः। युगपदाविशदितिभागवतेचभगवतएवतेषुस्वतःप्रवृत्त्यसमर्थेषुतत्वेषुप्रवेशोक्तेर्नेश्वरप्रवेशोव्यर्थइत्यर्थः। ननुत्रयोविंशतितत्वान्यप्यचेतनानिकिंनस्युः। तेषांस्वतःप्रवृत्तिशून्यत्वेनभगवत्प्रवेशसार्थक्यसंभवादित्यतउक्तंयावत्बलिमित्यादितत्वानांप्रार्थनानंतरमिति। नह्यचेतनानांप्रार्थनमुपपद्यतइतिभावः। हेअजवयंयत्रस्थित्वा कालेकालांतरे यावद्यथा तेबलिंहराम वयंचयथान्नमदाम अमूढास्तइमेलोकाउभयेषांतवास्माकंचयथाबलिंहरंतोन्नमदंतितादृशं स्वविहारतंत्रं लोकसिसृक्षयात्वयासृष्टाअपिवयंनकर्तुंशक्नुमइतिपूर्वेणसंबंधः। हेदेवयदनुग्रहेणयदनुप्रवेशेनैववयंक्रियार्थेशक्ताःस्वतोस्माकंप्रवृत्तिसामर्थ्याभावात्। सत्वंनोदिव्यदृष्टिंपरिदेहीत्यर्थः। अनेनजीवेनेत्युक्तजीवशब्दस्यभगवत्परत्वेयुक्त्यंतरंचाह ॥ **यतश्चेति** ॥ इत्युत्तरवाक्येयतःप्रयुज्यतेअतश्चायंजीवशब्दोभगवत्परइत्यर्थः। ननुतत्रापिजीवशब्दःपरमात्मपरइतिकुतः। संसारिपरएवकिंनस्यात्। पेपीयमानइत्युक्तवृक्षशरीरेसंसारिजीवप्रवेशस्यापेक्षितत्वादित्यतआह ॥ **नहीति** ॥ पेपीयमानोमोदमानइतिनतावद्वृक्षशरीरंनिर्दिश्यते। अचेतनस्यमोदमानत्वाद्यनुपपत्तेः। मोदमानशब्दोक्तयोः

भाष्यं। प्रसुप्तलोकतंत्राणांनिशाम्यगतीमीश्वरः। त्रयोविंशतितत्वानांगणंयुगपदाविशदितिच। यावद्बलिंतेऽजहरामकालेयथावयंचान्नमदामयत्र। यथोभयेषांतइमेहलोकाबलिंहरंतोन्नमदंत्यमूढाः। त्वंनःसचक्षुःपरिदेहिशक्तादेवक्रियार्थेयदनुग्रहेणेतितत्वानांप्रार्थनानंतरंभगवतएवतेषुप्रवेशोक्तेर्भागवते। यतश्चसएवजीवेनात्मनानुप्रभूतःपेपीयमानोमोदमानस्तिष्ठतीतिभगवत्येवजीवशब्दःप्रयुज्यते। नह्यचेतनस्यमोदमानत्वमस्ति।

सुखविषयानुभवयोश्चेतनधर्मत्वप्रसिद्धेः । अंतःकरणपरिणतत्वेपिचेतनस्वामिकत्वात् । अतःपेपीयमानोमोदमानस्तुसंसार्येव । तथाचजीवेनानुप्रभूतइत्युच्यमानःपुनःसंसारिप्रवेशोव्यर्थःस्यात् । अतोत्रजीवशब्दस्यसंसारिपरत्वानुपपत्तेः । परिशेषात्परमात्मपरत्वंनिश्चीयतइतिभावः । नन्वथाप्यनेनजीवेनेतिसएषजीवेनेतिजीवशब्दोनभगवत्परः । तस्यांतःप्रवेशेबहिर्व्यापाराभावापत्तेरित्याशंकांपरिहरन्नुपसंहरति ॥ अतइति ॥ ततश्चसेयंदेवतासएषइतिपरामृष्टस्यसन्नामकस्यबहिष्ठरूपस्यसत्त्वान्नानुपपत्तिरितिभावः । जीवनामकस्यांतस्थत्वेसन्नामकस्यबहिष्ठत्वेचस्मृतिमाह ॥ भोक्तुरिति ॥ ननुवाचारंभणंविकारोनामधेयमित्यस्य अतोन्यनामधेयंतुवाचारंभणहेतुतः । सांकेत्येनविकारःस्यादितिव्याख्यानमयुक्तं । अन्येत्यश्रुतकल्पनापत्तेरित्यतोविकारोनामधेयमित्येतावद्योजयति ॥ अग्नेरिति ॥ नामधेयमित्यस्यार्थोनामेति । धेयप्रत्ययस्वार्थिकत्वस्यपरस्यापिसंमतेः । विकारइत्यस्यार्थोमुख्यतोनास्तीति । अपागादग्नेरित्यतोग्नेरित्यनुवर्तते । अतोनाश्रुतकल्पना । अग्निरितीतियोग्यतयालब्धमितिभावः । तथापित्रीणिरूपाणीत्येवसत्यमित्यस्यत्रयाणामेवनित्यतेतितात्पर्यवर्णनमयुक्तं । श्रुतौत्रीणिरूपाणीतिनामधेयस्यैवलक्ष्म्यादौमुख्यत्वस्योक्तत्वेनाग्निशब्दमुख्यत्वस्यानुक्तत्वादित्यतःकिंचिदध्याहारेणतद्वाक्यंयोजयति ॥ अग्निनामानीति ॥ अग्निनामानित्रीणिरूपाणीतिनामधेयंचसत्यं । त्रयाणामेवमुख्यमित्यादियोज्यमित्यर्थः । नाग्निरितिनामैवमुख्यंकिंतुसर्वमपी

---

भाष्यं । अतोंतर्यामिरूपएवजीवशब्दः । भोक्तुस्तुसुखदुःखानामंतस्थोजीवनामकः । बहिःस्थितस्तुसन्नामाभगवान्पुरुषोत्तमइतितत्वविवेके । अग्नेरग्निरितिनाममुख्यतोनास्ति । अग्निनामानित्रीणिरूपाणीतिनामधेयंसत्यमित्यादि ॥ खं० ॥ ७ ॥

हितंरूपमित्याद्यपिग्राह्यं ॥ ४ ॥ येनाश्रुतंश्रुतंभवतीत्यारभ्ययदग्नेरोहितंरूपमित्यंतमुक्तंविद्वत्संमत्याद्रढयति ॥ एतद्धस्मेति ॥ पूर्वेमहाशालाःसम्यक्प्रत्यब्दयज्ञकृतः । महाश्रोत्रियाःसम्यक्वेदवेदार्थविदः । एतत्ब्रह्मज्ञानेनसर्वेविज्ञातंभवतीत्युक्तंप्रमेयं विद्वांसःएतद्वक्ष्यमाणमाहुः । हस्मेतिवृत्तांतद्योतकं । किमाहुः । नोस्माकमद्यास्मद्गुरूपदेशप्राप्त्यनंतरंकश्चनब्रह्मातिरिक्तंकिमपिअश्रुतममतमविज्ञातंनोदाहरिष्यति । अस्माभिर्ब्रह्मश्रवणमननविज्ञानैःसर्वश्रवणमननविज्ञानफलस्यलब्धत्वात् । इत्याहुरितिसंबंधः । एभ्यःसदेवेत्युक्तप्रकारेणविदितभगवत्प्राधान्येभ्यःपूर्वेभ्योविद्वद्भ्योन्येविद्वांसःविदांचक्रुर्विदितवंतः ॥ ५ ॥ किमिति । यदेवाग्न्यादावितिपरिदृश्यमानप्रकारेणकिंचित्रोहितमभूत् । तत्तेजसोरूपंश्रियोरूपसंभवमित्यनेनप्रकारेणदतस्मदुक्तमेवविदांचक्रुः । एवमुत्तरत्रापि ॥ ६ ॥ यदपिरूपमितिदृश्यमानप्रकारेणाविज्ञातमिव । किंचिद्रोहितत्वादिनाविशेषतोगृह्यमाणमभूत् । तदप्येतासामेवतेजोबन्ननामकानांदेवतानांसमासःसंकोचः । तदपिसमासेनतेजोबन्ननामकदेवतात्रयरूपजन्यमित्यर्थः । एवंअधिदैवतंतेजोबन्ननामकानांदेवतानांत्रिवृत्करणप्रकारमभिधायाऽध्यात्ममपितंवक्तुंप्रतिजानीते ॥ यथेति ॥ हेसोम्येमास्तिस्रोदेवताःपुरुषंशरीरंप्राप्ययथानुखलुयेनैवप्रकारेणैकैकात्रिवृत्त्रिवृद्भवतितन्मेविजानीहीतिहोवाच ॥ ७ ॥ चतुर्थःखंडः ॥ ४ ॥

---

उप० । एतद्धस्मवैतद्विद्वांसआहुःपूर्वेमहाशालामहाश्रोत्रियाननोद्यकश्चनाश्रुतममतमविज्ञातमुदाहरिष्यतीतिह्येभ्योविदांचक्रुः ॥ ५ ॥ यदुरोहितमिवाभूदितितेजसस्तद्रूपमितितद्विदांचक्रुर्यदुशुक्लमिवाभूदित्यपांरूपमितितद्विदांचक्रुर्यदुकृष्णमिवाभूदित्यन्नस्यरूपमितितद्विदांचक्रुः ॥ ६ ॥ यद्वविज्ञातमिवाभूदित्येतासामेवदेवतानांसमासइतितद्विदांचक्रुर्यथानुखलुसोम्येमास्तिस्रोदेवताःपुरुषंप्राप्यत्रिवृत्त्रिवृदेकैकाभवतितन्मेविजानीहीति ॥ ७ ॥ खं० ॥ ४ ॥

प्रतिज्ञातमाह ॥ **अन्नमित्यादिना** ॥ अन्नंप्रसिद्धान्नगतंशिवादिरूपंपुरुषेणाशितंउपजीवितं । त्रेधाविधीयते । कथं । तस्यान्नगतस्यशिवादेःयःस्थविष्ठोधातुःस्थूलतमधात्वंतर्गतंरूपंतत्पुरीषंपुरीषनामकंभवति । तत्रप्रवेशात् । योमध्यमोधातुर्यन्मध्यमधात्वंतर्गतंरूपंतन्मांसंमांसनामकंभवति । तत्रप्रवेशात् । योणिष्ठःसूक्ष्मतमोधातुर्यत्सूक्ष्मतमधात्वंतर्गतंरूपंतन्मनोमनोनामकं । तत्रप्रवेशात् ॥ १ ॥ एवमुत्तरत्रापियोज्यं ॥ २ ॥ ३ ॥ नैतासांदेवतानांपुरीषमांसादौसाम्येनाभिमानःकिंतुप्राधान्येनमनःप्राणादावेवेत्याह ॥ **अन्नमयंहीति** ॥ हेसोम्यमनोन्नमयंप्राधान्येनान्ननामकरुद्राद्यभिमन्यमानंहीतिप्रमाणप्रसिद्धिमाह । प्राणआपोमयःप्राधान्येनाम्नामकवाय्वाद्यभिमन्यमानः । वाक्तेजोमयीप्राधान्येनतेजोनामकरमाद्यभिमन्यमाना । इतिपित्रोपदिष्टेनश्वेतकेतुनान्नमयंहीत्येतदेवतत्वंभूयएवस्पष्टंदृष्टांतेनमामांभगवान्विज्ञापयत्वितिप्रार्थितःपितातथासोम्येतिहोवाच ॥ ४ ॥ **पंचमःखंडः** ॥ ५ ॥ यथाखलुदध्नोमथ्यमानस्ययोणिमाभावभवित्रोरभेदेनसूक्ष्मभागोनवनीतरूपःसऊर्ध्वःसन्सर्वापेक्षयाश्रेष्ठस्सन्समुदीषतिसम्यगुदयसंभावनाविषयोभवति । तत्सर्पिर्भवति ॥ १ ॥ एवमेवखलुसोम्यान्नस्यान्नस्थस्यशिवादेरश्यमानस्योपजीव्य

उप० । अन्नमशितंत्रेधाविधीयतेतस्ययःस्थविष्ठोधातुस्तत्पुरीषंभवतियोमध्यमस्तन्मा ꣳसंयोऽणिष्ठस्तन्मनः ॥ १ ॥ आपःपीतास्त्रेधाविधीयंतेतासांयःस्थविष्ठोधातुस्तन्मूत्रंभवतियोमध्यमस्तल्लोहितंयोणिष्ठःसप्राणः ॥ २ ॥ तेजोशितंत्रेधाविधीयतेतस्ययःस्थविष्ठोधातुस्तदस्थिभवतियोमध्यमःसमज्जायोऽणिष्ठःसावाक् ॥ ३ ॥ अन्नमयंहिसोम्यमनआपोमयःप्राणस्तेजोमयीवागितिभूयएवमाभगवान्विज्ञापयत्वितितथासोम्येतिहोवाच ॥ ४ ॥ **खं०** ॥ ५ ॥ दध्नःसोम्यमथ्यमानस्ययोऽणिमासऊर्ध्वःसमुदीषतितत्सर्पिर्भवति ॥ १ ॥ एवमेवखलुसोम्यान्नस्याश्यमानस्ययोऽणिमासऊर्ध्वःसमुदीषतितन्मनोभवति ॥ २ ॥

मानस्ययोणिमासूक्ष्मभागस्तदंतर्गतंरूपंसऊर्ध्वःसमुदीषति । तन्मनोभवति । मनःप्रविष्टंभवति ॥ २ ॥ एवमन्यत् ॥ ३ ॥ ४ ॥ उपसंहरति ॥ **अन्नमयंहीति** ॥ तस्मादित्युपस्कर्तव्यं । इत्युपदिष्टेनश्वेतकेतुनान्नमयंहिसोम्यमनइत्यादिकंममैवानुभवारूढंकुर्वित्याशयेनभूयएवेतिप्रार्थितःपितातथासोम्येतिहोवाच ॥ ५ ॥ **षष्ठःखंडः** ॥ ६ ॥ हेसोम्यपुरुषोजीवःषोडशकलःषोडशकलादेवताःयस्यासौतथोक्तः । कलादेवताश्चान्यत्रोक्ताः । तन्मध्येमनश्चैकाकला । तत्रमनसोन्नमयत्वंप्रत्यक्षीकर्तुमिच्छसिचेत्तर्हिपंचदशसंख्याकान्यहानिमाशीरशनंमाकार्षीः। काममिच्छातोपःपिब । कुतः।यस्मादपोनपिबतःप्राणोविच्छेत्स्यते । विच्छेदमापत्स्यते। तदपिकुतः । यस्मादापोमयःप्राणइत्युवाच ॥ १ ॥ सहैवंश्रुत्वामनसोन्नमयत्वमनुभवारूढंकर्तुमिच्छन्पंचदशाहानिनाशअशनंनकृतवान्अपःपीतवांश्च । अथषोडशेहनिएनंपितरमुपससादउपगम्योवाच । किंब्रवीमिभोइति । इतरआह । ऋचःसोम्ययजूंषिसामान्यधीष्वेति । एवंपित्रोक्तःसहोवाच । भोभगवन्मामामृगादीनिनैवप्रतिभांतिमेमनसिनैवदृश्यंते । कुतोवदामीत्यर्थः ॥ २ ॥ तंपितोवाच । श्रृणुतत्रकारणं । यथासोम्यमहतोग्नेरभ्याहितस्यक्रमादेकैकांगारेणापचितस्यैकोंगारःखद्योतमा

उप० । अपाꣳसोम्यपीयमानानांयोऽणिमासऊर्ध्वःसमुदीषतिसप्राणोभवति ॥ ३ ॥ तेजसःसोम्याश्यमानस्ययोऽणिमासऊर्ध्वःसमुदीषतिसावाग्भवति ॥ ४ ॥ अन्नमयꣳहिसोम्यमनआपोमयःप्राणस्तेजोमयीवागितिभूयएवमाभगवान्विज्ञापयत्वितितथासोम्येतिहोवाच ॥ ५ ॥ **खंड०** ॥ ६ ॥ षोडशकलःसोम्यपुरुषःपंचदशाहानिमाशीःकाममपःपिबापोमयःप्राणोनपिबतोविच्छेत्स्यतइति ॥ १ ॥ सहपंचदशाहानिनाशाथहैनमुपससादकिंब्रवीमिभोइत्यृचःसोम्ययजूꣳषिसामानीतिसहोवाचनवैमाप्रतिभांतिभोइति ॥ २ ॥ तꣳहोवाचयथासोम्यमहतोभ्याहितस्यैकोंगारःखद्योतमात्रःपरिशिष्टःस्यात्तेननततोपिनबहुदहेदेवꣳसोम्यतेषोडशानांकलानामेकाकलातिशिष्टास्यात्तयैतर्हिवेदान्नानुभवस्यशानाथमेविज्ञास्यसीति ॥ ३ ॥

त्रःपरिशिष्टःस्यात् । तेनतावदेवखद्योतपरिमितमेववस्तुदहेत् । ततःतत्परिमाणादीषदपिबहुनदहेत्तृणादिसहकारिविरहात् । एवंसोम्यतेतवषोडशानांकलानांमध्येएकाकलाप्राणरूपातिशिष्टास्यात् । इतराःशांताःततस्तयाखद्योतमात्रांगारतुल्यकलयैतर्हीदानींचलस्येवकेवलंनतुमनसावेदाननुभवसि । अन्नाख्यसहकारिविरहात् । ततःकुतोवदसि । एवमन्नव्यतिरेकेमनोव्यापारव्यतिरेकमुक्त्वातदन्वयेतदन्वयमाह ॥अशानेति॥ भुंक्ष्वतावत् ।अथभोजनानंतरंमेममसकाशाद्यच्छ्रुतंतत्सर्वंविजिज्ञास्यसीत्युवाच॥३॥ एवमुक्तःसपुत्रोहाशभुक्तवान्ह। अथैनंपितरमुपससादह । तमुपागतंपुत्रंयत्किंचपप्रच्छपितातत्सर्वंऋगादिप्रतिपेदेहमनसावाचाचोवाचपुत्रः ॥४॥ तंहोवाचपुनःपिता। यथासोम्यमहतोऽभ्याहितस्याग्नेरेकमंगारंखद्योतमात्रंपरिशिष्टं। तंतृणैरुपसमाधायप्रज्वलयेत्। तेनततोपिबहुदहेत् । सहकारिलाभात् ॥ ५ ॥ एवंसोम्यतेतवषोडशानांकलानांमध्येएकाकलातिशिष्टाभूत् । सान्नेनोपसमाहिताप्राज्वालीत्तयाऽन्नोपचितयाकलयैतर्हीदानींवेदाननुभवसिमनसा वाचाचवदसि । एवंव्यावृत्यनुवृत्तिभ्यामन्नमयत्वंमनसःसिद्धमित्युपसंहरति ॥ अन्नमयंहिसोम्यमनइति ॥ तस्मादितिग्राह्यं । यथेतन्मनसोन्नमयत्वमन्वयव्यतिरेकेणसिद्धं । तथाप्राणवाचोरप्यपस्तेजोमयत्वंप्रतिपत्तव्यमित्याशयेनाह ॥ आपोमयइति ॥ अत्रसएषोणिमैतदात्म्यमिदंसर्वंतत्सत्यंसआत्मा

---

उप०। सहाशाथहैनमुपससादत ँ्हयत्किंचपप्रच्छसर्वं ँ्हप्रतिपेदे ॥ ४ ॥ त ँ्होवाचयथासोम्यमहतोभ्याहितस्यैकमंगारंखद्योतमात्रंपरिशिष्टंतंतृणैरुपसमाधायप्रज्वलयेत्तेनततोपिबहुदहेत् ॥ ५ ॥ एव ँ्सोम्यतेषोडशानांकलानामेकाकलातिशिष्टाभूत्सान्नेनोपसमाहिताप्राज्वालीत्तयैतर्हिवेदाननुभवस्यन्नमय ँ्हिसोम्यमनआपोमयःप्राणस्तेजोमयीवागितितद्धास्यविजज्ञाविति विजज्ञाविति ॥ ६ ॥

तत्वमसिश्वेतकेतोइतिवाक्यंग्राह्यं । स्तंभनिरासोपयोगात् । व्याख्यानंतुभविष्यति । इतिपित्रोपदिष्टोयंश्वेतकेतुर्हविगलिताभेदमोहोयदुपदिष्टंभगवत्प्राधान्यादिकंतद्धाअबाधितंविजज्ञौबुबोधेतिश्रुतिवाक्यं । अस्येतिकर्तरिषष्ठी । इतिशब्दःसमाप्त्यर्थः । सर्वस्यापिविद्यार्थस्यप्रामाणिकत्वावधारणार्थंद्विर्वचनं । अत्रतदेषश्लोकः । पंचेंद्रियस्यपुरुषस्ययदेवस्यादनावृतं । तदस्यप्रज्ञास्रवतिदृतेःपादादिवोदकं । दृतेःपादादिवोदकमितिक्वाचित्कःपाठः । तस्यायमर्थः । तत्तत्रमनसोन्नमयत्वेअयंश्लोकोभवति । तमुदाहरति ॥ **पंचेंद्रियस्येति** ॥ चक्षुरादिपंचेंद्रियवतोपिपुरुषस्यमनोयदेवयदैवानावृतंअन्नेनेतिशेषः । तथाचान्नावृतंनस्यात् । तत्तदास्यप्रज्ञास्रवति । किमिव । दृतेःपादादुदकमिवेति ॥ ७ ॥ **सप्तमःखंडः** ॥ ७ ॥ पूर्वंजीवेश्वरयोरत्यंतभेदबोधनायासहायस्यैवभगवतस्तेजोबन्नादिसमस्तजगन्निमित्तकारणत्वादिरूपंजीवेष्वसंभाव्यमानंमहन्माहात्म्यमुपवर्णितं ॥ तत्त्वागममात्रवेद्यं । नपुनरनुभवसिद्धमित्यतोजागरेजीवस्यस्वातंत्र्याभिमानात्स्वापेचतदभावात्तत्रजीवस्यभगवदाश्रयत्वमनुभवारूढंकर्तुंउपक्रमते ॥ **उद्दालकोहेत्यादिना** ॥ यद्यत्रस्वप्नांतउच्चावचमीयमानइत्यादाविवस्वप्नांतशब्देनस्वप्नाख्योंतःस्थानंस्वप्नांतइतिस्वप्नावस्थागृह्येततदासतासोम्यतदासंपन्नोभवतीत्युत्तरवाक्यमयुक्तंस्यात् । स्वप्नावस्थायांपरात्मप्रवेशाभावादित्यतःस्वप्नांतशब्दंव्याचष्टे ॥ **स्वप्नस्येति** ॥ अंतोवसानं । कः स्वप्नस्यांतइत्यतउक्तं ॥ **सुषुप्तिरिति** ॥ स्वप्नानंतरंसुषुप्तिस्तदनंतरंजागरणमितिअवस्था

---

उप० । पंचेंद्रियस्यपुरुषस्ययदेवस्यादनावृतं ॥ तदस्यप्रज्ञास्रवतिदृतेःपादादिवोदकं ॥ ७ ॥ खं० ॥ ७ ॥

भा० । स्वप्नस्यांतःसुषुप्तिः ।

क्रममभिप्रेत्यैवमुक्तं । सुषुप्त्यनंतरंस्वप्नस्तदनंतरंजागरणमित्यपिक्रमोस्ति । उक्तंच । सुप्तेरुत्थानेप्राज्ञाद्विभक्तोभवतिविश्वः । स्वप्ना दुत्थानेतैजसादिति । अनेनस्वप्नांतंसुषुप्तमित्येतदपव्याख्यानमितिसूचयति । अशनापिपासेसोम्यविजानीहीतिवदत्रापिस्वप्नांत शब्देनसुषुप्त्यवस्थायाएवग्राह्यत्वेनतद्ग्रहणस्यानुचितत्वात् । स्वमपीतोभवतीत्यत्रजीवःस्वंस्वात्मभूतंब्रह्मापीतोभवतीतिब्रह्मणि स्वात्मवाचिस्वशब्दप्रयोगादैक्यप्रतीतिंवारयितुंस्वशब्दार्थमाह ॥ **स्वातंत्र्यादिति** ॥ एवंपदार्थमुक्त्वावाक्यार्थमाह ॥ **तमिति** ॥ एतेनापीतिशब्देनैक्यमुच्यतइत्यपास्तं । स्वमपीतइत्यत्रपूर्ववाक्यात्पुरुषशब्दोनुवर्तते । सचसंसारिपरएव । मुक्तस्योपक्रमोपसंहारवाक्योक्तसुप्तिजागरावस्थानुपपत्तेरितिभावेनोक्तं ॥ **संसारीति** ॥ एतन्मनइत्युपसंहाराविरोधायमनोनामेत्युक्तं तंप्राणनामानमित्यपिग्राह्यं । ननुजीवःसुप्तौस्वमाप्नोतीतिकुतइत्यतःसुप्तेस्वपितिशब्दप्रयोगादित्याह ॥ **स्वपितीति** ॥ यतःस्वमपीतोभवत्यतःस्वपितीत्याचक्षतेविद्वांसइत्यर्थः । अनेनतस्मादेनंस्वपितीत्याचक्षतइत्युक्तार्थं । ननुमनोनामासंसारीप्राणनामाभगवानित्ययुक्तं । तत्रतस्यरूढेरभावादित्यतोयोगंदर्शयति ॥ **मननादिति** ॥ प्राणनात्प्राणनामाभगवानित्यपिग्राह्यं । अनेनमनःप्राणशब्दाभ्यांतत्प्रविष्टौजीवपरमात्मानौलक्ष्येतेइत्यपास्तं । योगस्यलक्षणातोमुख्यत्वात् । तत्रैतच्छुंगमुत्पतितमित्यादौउक्तस्यशुंगशब्दस्यार्थाप्रतीतेराह ॥ **शुंगमिति** ॥ तर्हिंकथमंकुरस्योत्तरत्राभिप्रेतानुमानेदृष्टांतत्वं । तत्रसाध्यानिश्चयादित्यतआह ॥ **तन्मूलमिति** ॥ अंकुरंसमूलंकार्यत्वात् । घटवदितिअनुमानात्परिशेषसहितात्तन्निश्चयइतिभावः । श्रौतदार्ष्टांतिकवा

भा० । स्वातंत्र्यात्सइतिप्रोक्तोविष्णुःसर्वेश्वरेश्वरः । तंप्राप्नोतिमनोनामासंसारीस्वपितीत्यतइतिच । मननान्मनोनामासंसारी । शुंगमित्यंकुरंप्रोक्तंतन्मूलंभगवान्हरिः ।



क्यसमुदायतात्पर्यमाह ॥ **जगतोमूलमपीति** ॥ जगतोपीत्यन्वयः । अपिशब्देनदृष्टांतसमुच्चयः । अत्रजगच्छब्देनशरीरान्नापेजसांग्रहणं । तेषामेवश्रुत्युक्तत्वात् । शरीरादिमूलत्वंचान्नादिद्वारेतिद्रष्टव्यं । शरीरादिकंसमूलंकार्यत्वादंकुरवदितिसामान्यसिद्धिपरिशेषाभ्यामेतन्निश्चयइतिभावः । अंकुरंजगच्चप्रतिभगवतोमूलत्वमुपादानत्वमितिकश्चित् । तद्दूषयति ॥ **जगतइति** ॥ अंकुरस्यजगतश्चमूलमप्येषनिमित्तंकर्तैव । नतुविकारवानित्यर्थः । एतेनैतदपिपरिहृतं । यदिशरीरादेःसमूलत्वंसोपादानत्वंसकारणकत्वंवातर्हिंअंकुरेसाध्यस्यसिद्धत्वेनप्राचीनसाध्यवैकल्योद्धारोनुपपन्नइति । नन्वंकुराद्युपादानेबीजादावेवमूलशब्दप्रयोगोदृष्टः । नतुनिमित्तकारणे । इत्यतोदृष्टांताभ्यांतदेवोपपादयति ॥**बीजेति**॥ पितापितृजीवःपुत्रतन्वाः । अविकारतोमूलमितिसंबंधः । तर्हिंकिंतत्रविकारतोमूलमित्यतआह ॥ **तद्देहइति** ॥ बीजजीवदेहोबीजं । पितृदेहोरेतोरूपस्तद्धातुरित्यर्थः । अनेनसन्मूलाइत्यस्यसत्परंब्रह्ममूलंउपादानंघटस्यमृदिव । भुजंगस्यरज्जुरिववा । यासांस्थावरजंगमात्मकानांताःसन्मूलाइतिपरकीयंव्याख्यानमपहस्तितंभवति । मूलशब्दोहिनोपादानेनियतः । किंतुकारणमात्रवाची । तत्रागमांतरानुसारेणबीजजीवोमूलमित्यादिवन्निमित्तकारणपरएवावगम्यते । किंचघटस्यमृदिवेत्यप्यसंगतं । त्वन्मतेशुद्धब्रह्मणउपादानत्वाभावात् । नचमायावच्छिन्नस्यब्रह्मणोजगदुपादानत्वेआद्योदृष्टांतः । शुद्धब्रह्मणस्तदुपादानत्वेद्वितीयइतिवाच्यं । मायायाएवजगदुपादानत्वोपपत्तौब्रह्मणोपितदुपादानत्वेमानाभावात् । श्रुतिस्तुनास्तीत्युक्तमन्यत्र । भुजंगस्यरज्जुरिवेत्यप्यसत् । भुजंगस्यरज्ज्वध्यासाधिष्ठानत्वव्यवहारेपितदुपादान

भा० । जगतोमूलमप्येषनिमित्तंनविकारवान् । बीजजीवोयथामूलमंकुरस्याविकारतः । यथापितापुत्रतन्वास्तद्देहोहिविकारवान् । एवंहरिर्मूलमपिनविकारःकथंचनेतिच ।

त्वव्यवहाराभावात् । ननुतस्यक्कमूलंस्यादन्यत्रान्नादित्यादौशरीरस्यान्नंतस्यचापस्तासांचतेजोमूलमित्युच्यते । तत्रमूलत्वमुपादानत्वमेवस्फुटं । एवंचतेजसासोम्यशुंगेनसन्मूलमन्विच्छसन्मूलाइत्यत्रापिसतोजगदुपादानत्वमेवोच्यतइत्यावश्यकं । अन्यथाप्रायपाठविरोधादितिचेन्न । अन्नादीनांदेवतात्वेनशरीरादिकंप्रत्युपादानत्वाभावात् । तदेवकुतइतिचेत् । यथातुखलुसोम्येमास्तिस्रोदेवताइतिदेवताशब्दप्रयोगात् । हेत्वंतरमाह ॥ प्राथम्यादिति ॥ चशब्दःप्रागुक्तदेवताश्रुतिसमुच्चयार्थः । यद्वातत्तेजोसृजतेत्यादिवाक्यव्याख्यानरूपप्रागुदाहृतागमसमुच्चयार्थः । तत्रोक्तानामेवात्रकथनात् । प्राथम्यात्क्रमात्प्रथमोत्पन्नत्वादित्यर्थः । लक्ष्मीस्तु सिसृक्षुत्वविशेषंतत्साक्षाद्भगवदिच्छया । प्राप्तैवसृष्टेत्युदिता । इदमुक्तंभवति । आदिसृष्टौहितेजआदिकंभगवताक्रमात्प्रथमोत्पन्नत्वेनोच्यते । यद्यदादौभगवताप्रथममुत्पन्नंतत्रतदुत्तममितिव्याप्तिःप्रमिता । ततस्तेजोबन्नानिक्रमात्सर्वोत्तमानिभवेयुः । नचभगवदतिरिक्तेलक्ष्म्यादिकंविनाऽन्यत्सर्वोत्तममस्तीतिलक्ष्म्यादिकमेवतेजआदिकमिति । तेजआद्यालक्ष्म्यादयएवप्रथमोत्पन्नाइत्यत्रस्मृतिमप्याह ॥ तेजइति ॥ सर्वेभ्यःपुरासृष्टाइतिशेषः । प्राणबंधनंहिसोम्यमनइत्यत्रमनोनामासंसारीप्राणनामाभगवान्कथ्यतइत्युक्तं । तत्कुतः । नचमननान्मनउद्दिष्टइति प्राणःप्रणयनादेषइतिचस्मृतेरितिवाच्यं । तावतातत्रतस्यशक्तत्वेप्यत्रततपरत्वज्ञापकाभावादित्यतआह ॥ यत्रेति ॥ नह्यन्यत्प्रतिज्ञायदृष्टांतमुक्त्वादार्ष्टांतिकेन्यदुच्यतइतिसंभवत्यति

भा० । प्राथम्याच्चतेजआद्यालक्ष्म्यादयइतिसिद्धं । तेजोभिमानिनीलक्ष्मीःप्राणस्त्वबभिमानवान् । अन्नाभिमानीरुद्रश्चतिस्रस्तादेवताःपुरेतिचब्रह्मांडे । यत्रैतत्पुरुषःस्वपितिनामसतासोम्यतदासंपन्नोभवतीतिसंसारिणोब्रह्मप्राप्तिमुक्त्वासयथाशकुनिःसूत्रेणप्रबद्धइवितस्योपपादनान्मनोनामापुरुषः । प्राणनामाभगवान् ।

प्रसंगादितिभावः । एवमुपक्रमानुगुण्यंदर्शयित्वातत्रैवोपसंहारानुगुण्यमप्याह ॥ सन्मूलाइति ॥ उपसंहारवाक्येप्रजाशब्दो
क्तजीवानांसच्छब्दोक्तभगवदाश्रयत्वोक्तेरत्रापिमनःप्राणशब्दाभ्यांजीवेश्वरावेवग्राह्यावित्यर्थः । यद्यपिमनोनामापुरुषःप्राणनामा
भगवानितिपरस्यापिसंमतं । तथापिशिष्यव्युत्पादनार्थएतदुक्तं । ननूपसंहारवाक्यस्थसच्छब्दानुरोधेनप्राणशब्दस्यभगवत्परत्वे
पिप्रजाशब्दानुरोधेनमनःशब्दोनजीवपरोंगीकर्तुमुचितः । प्रजाशब्देनस्थावरजंगमात्मकानामचेतनानामेवग्रहणात् । सन्मूला
इतिसन्नामकेब्रह्मण्यारोपितत्वंहिप्रजानामुच्यते । नहिचेतनस्यारोपितत्वंसंभवतीतिचेत्न । किंप्रजाशब्दोक्तानांब्रह्मण्यारोपित
त्वोक्त्यन्यथानुपपत्त्यैवव्याख्यायतेउतप्रजाशब्दस्यैवाचेतनेषुप्रसिद्ध्यनुरोधात् । नाद्यः । सन्मूलाइत्यस्यान्यथैवव्याख्यातत्वा
त् । नद्वितीयइत्याह ॥ प्रजाशब्दश्चेति ॥ तत्रैवप्रयोगंचाह ॥ प्रजानामिति ॥ नचाचेतनस्यसुखदुःखे । ननुयथाखलुसो
म्येत्यादिपुरस्तादित्यंतवाक्यंकिमर्थं । प्राचीनोक्त्यैवज्ञातुंशक्यत्वादित्यतःप्रमाणोदाहरणपुरःसरंतदभिप्रायमाह ॥ शरीरेति ॥
चशब्दस्तुशब्दार्थः । भगवत्समुच्चयार्थोवा । चशब्देनभूतग्रहणेधातुकृत्त्वेनेत्यनन्वितं । भूतानांशरीरधातुकर्तृत्वायोगात् ।
श्रुतौदेवताशब्दप्रयोगायोगश्च । इत्युक्तमितिज्ञायतइतिशेषः । तेनवचनादित्यस्यान्वयोपपत्तिः । अस्यसोम्यपुरुषस्यप्रयतोवा
ङ्मनसीत्यत्रवागादिशब्दाःजडवागादिपराइत्यसत् । परस्यांदेवतायामितिसतःपरदेवतात्वोक्त्यावागादीनांदेवतामात्रत्वावगमा

---

भा० । सन्मूलाःसोम्येमाःसर्वाःप्रजाःसदायतनाःसत्प्रतिष्ठाइत्युपसंहारात् । प्रजाशब्दश्चचेतनेष्वेवप्रसिद्धः । प्रजानांसुखदुःखेनराजाप्नोतिशुभाशुभमित्यादेश्च । शरीरधातु
कृत्त्वेनलक्ष्म्याद्याश्चमुमुक्षुणा । ध्येयास्तदीशितृत्वेनभगवान्पुरुषोत्तमइतिवचनादनुसंधानकर्तव्यताज्ञापनार्थंतदुक्तंपुरस्तादित्युक्तं ।

त् । देवानांचमुक्तौमरणेचमार्गप्रतिपादकमिदं । वाङ्मनसिदर्शनाच्छब्दाच्च । तन्मनःप्राणउत्तरात् । सोध्यक्षेतदुपगमादिभ्यइ
तिसूत्रकारेणवागाद्यभिमानिदेवतानांमुक्तिकालेन्योन्यदेहलयस्यैतच्छ्रुत्यवष्टंभेननिर्णीतत्वात् । पुरुषंसोम्योपतापिनमित्युत्तरखं
डानुसारेणास्यमरणपरत्वावगतेश्चेतिभावेनमुक्तिमरणोभयपरत्वेनप्रमाणेनैवतद्याचष्टे ॥ **मुक्ताविति** ॥ मृतावित्यपिग्राह्यं । रु
द्रंयातिरुद्रेदेहलयंप्राप्नोति । रुद्रेणग्रस्तव्यापाराभवतीतिचार्थः । मनःप्राणइत्यस्यार्थोवायुंयातिशिवश्चेति । अपिशब्दस्योत्तरत्रा
न्वयः । अत्रमुक्तिपक्षेउमारुद्रवायुशब्दैर्वारुणीसुपर्णीशेषसुपर्णहिरण्यगर्भाःकथ्यंते । प्राणस्तेजसीत्यस्यार्थोवायुरिति । वायुरपी
तिसंबंधः । तेजःपरस्यांदेवतायामित्यस्यार्थमाह ॥ **वायुमिति** ॥ ननुप्राणस्तेजसीतिचतुर्मुखस्यरमायांदेहलयोनवक्तुंयुक्तः ।
तथासतिचतुर्मुखस्यपुनःसंसारप्राप्तिप्रसंगात् । तथाचोक्तंसूत्रकृता । तदपीतेःसंसारव्यपदेशादिति । कथंचैवंसतिसूत्रकृतासो
ध्यक्षइतिप्राणस्यपरमात्मन्येवसाक्षाल्लयउक्तइत्यतःप्राणस्तेजसीत्यस्यतात्पर्यमाह ॥ **द्वारमात्रेति** ॥ चतुर्मुखस्यतेजसिलयोनाम
तत्प्राप्तिमात्रं । नतत्रदेहलयः । तस्यसाक्षात्परमात्मनिलययोग्यत्वादितिभावः । प्राणत्वेत्वस्त्येवतेजसिलयइतिविशेषद्योतनार्थ
स्तुशब्दः । एवंतर्हिउमादिव्यतिरिक्तानांदेहलयाभावेनमोक्षाभावः । मरणकालेम्रियमाणानांभगवत्प्राप्त्यभावेप्राज्ञेनात्मनान्वारू
ढइत्यादिविरोधश्चेत्यतआह ॥ **मृतिकालेचेति** ॥ पुरुषाःम्रियमाणाःमुच्यमानाश्च । सयएषोणिमेत्यादिकंपरेणैवंव्याख्यातं । स

भा० । मुक्तावुमातुवागाख्यारुद्रंयातिमनोभिधं । वायुंयातिशिवश्चापिवायुस्तेजोभिधांश्रियं । वायुमादायसादेवीयातिविष्णुंपरात्परं । द्वारमात्रातुसादेवीवायुप्राप्योजनार्दनः ।
मृतिकालेचमुक्तौचपुरुषावाचमाप्नुयुरितिसत्तत्वे ।



यःसदाख्यःएषउक्तअणिमाअणुभावोजगतोमूलं । ऐतदात्म्यमेतत्सदात्मायस्यसर्वस्यतदेतदात्मातस्यभावःऐतदात्म्यं । एतेन
सदाख्येनात्मनाआत्मवत्सर्वमिदंजगन्नान्योस्त्यस्यात्मासंसारीतियावत् । येनचात्मनात्मवत्सर्वंतदेवसदाख्यंकारणंसत्यंपरमार्थस
त् । अतःसदात्माजगतःप्रत्यक्स्वरूपंसत्तत्त्वंयाथात्म्यं । आत्मशब्दस्यनिरुपपदस्यप्रत्यगात्मनिरूढत्वात् । अतस्तत्सत् त्वमसि
भवसीति। तदिदमसत् । सयएषइत्यस्यानुवादपरत्वेतच्छब्दवैयर्थ्यात् । अणोरेवजगन्मूलत्वेनाणुभावस्यजगन्मूलत्वाभावाच्च ।
यथाश्रुतेनैवोपपत्तौजगतोमूलमित्यध्याहारायोगाच्चेतिभावेनसयइत्यादिकंप्रमाणेनैवयथावद्याचष्टे ॥ **योसाविति** ॥ नामानि
सर्वाणियमाविशंतीतिश्रुतेःसयइत्यादिकंभगवन्नामैवेतिभावेनतन्निर्वचनमिदं । यमयतीतिव्युत्पत्त्यानियमनादसौविष्णुर्यइतिस्मृ
तःसर्वस्येष्टइतिह्येषइतिग्राह्यं । सूक्ष्मतोगम्यः । सूक्ष्मज्ञानविषयः । अणीयसासूक्ष्मेणज्ञानेनमीयतइत्यणिमा । ऐतदात्म्यमित्य
स्यैतेनसदाख्येनेतितात्पर्यवर्णनमयुक्तं । संनिहितरूपत्वादेषःआदानादिकर्तृत्वादात्मैषचासावात्माचैतदात्मा। सएवचैतदात्म्यम
परोक्षत्वादिदंपूर्णत्वात्सर्वमितिपदसमन्वयेनास्याप्यन्यार्थत्वोपपत्तेःवाक्यान्वयपक्षमंगीकृत्याह ॥ **ऐतदात्म्यमिति** ॥ ऐत
दात्म्यमित्यनुवादेनतद्वशमितिव्याख्यानं। अयमाशयः एतत्सदात्मायस्येत्येवास्तुव्याख्यानंआत्मशब्दस्तुस्वामिवाची। भावप्रत्य
यस्तुपरस्यापिव्यर्थः । तेनैतत्स्वामिकंतद्वशमित्यर्थःसिध्यति । अथवाएषचासावात्माचैतदात्मा । विचित्राहितद्धितगतिरितिव
चनादेतदात्मनइदमित्यर्थेतद्धितोयमित्युक्तंभवति । वैयर्थ्यादर्थांतरग्रहणस्यज्यायस्त्वात् । एवंचनेदंवाक्यंत्वदुक्तरीत्याजीवे

भा० । योसौनियमनाद्विष्णुःसारत्वात्सइतिस्मृतः । अणिमासूक्ष्मतोगम्यऐतदात्म्यंचतद्वशं ।

श्वराभेदपरमिति। तदेवसत्यमित्यप्यसत्। अश्रुतैवकारकल्पनाप्रसंगात्। सर्वस्यापिपरमार्थसत्त्वस्यव्यवस्थापितत्वाच्चेतिभावेनतत्स
त्यमित्येतद्व्याचष्टे ॥ परेति ॥ ततत्वात्तदित्यपिग्राह्यं। किंचसआत्मातत्वंयाथात्म्यमितिव्याख्यानेतत्सत्यमित्यनेनपुरुक्तिः। तत्वमि
त्येतदनावर्त्यसोणिमैवात्माजीवइत्यैक्यार्थत्वांगीकारेत्वैतदात्म्यमित्युक्तत्वादिदंव्यर्थमितिभावेनाह॥ आत्मेति ॥ सादनाच्चसइ
त्युक्तइत्यपिग्राह्यं । तत्वमसीत्यैक्यमुच्यतइत्यसत्। ऐतदात्म्यमित्यादिनागतार्थत्वप्रसंगात्। पदसमन्वयेनास्यापिभगवन्नामत्वो
पपत्तेश्च। वाक्यान्वयश्रद्धायामपिअतत्त्वमसीतिपदच्छेदेनभेदपरत्वस्यैवावगतेश्चेतिभावेनातत्वमितितत्वमित्युभयथापिपदच्छे
दमभ्युपेत्यव्याचष्टे ॥ सत्यतइति ॥ अनेनहेश्वेतकेतोतत्वंतत्वतःत्वंअतत्तदन्यद्वस्त्वसीतिव्याख्यातंभवति। अतत्वमसीतिपद
च्छेदेनभेदपरत्वांगीकारेपिभेदोमिथ्यैवेत्यप्यतएवपरास्तं । उपदेशस्यप्रयोजनमाह ॥ **माभूदिति** ॥ यदितवब्रह्मत्वंस्यात्तर्हितं
ज्ज्ञानेनाविनीतत्वलक्षणास्तब्धताकर्तुंशक्येत । तदेवनास्ति । तस्मात्स्तब्धतातेमाभूदित्यर्थः । अन्यथातवाप्यसुरत्वप्राप्तिरिति
भावेनासुरपक्षमनुवदति ॥ **असुराइति** ॥ सुखदुःखादिरूपस्यजगतःसत्यत्वेकथंतेषांब्रह्माहमित्यभिमानइत्यतउक्तं ॥ **असत्य
मिति** ॥ प्रत्यक्षादिप्रमाणेनजगतःसत्यत्वावगमात्कथमेवमाहुरित्यतउक्तं॥ **सिद्धोहमिति**॥ सिद्धोहंअतोमद्वचनमेवसत्यं। तद्विरो
धात्प्रत्यक्षादिकमप्रमाणमितिभावः। प्रमाणसिद्धपदार्थापलापिनोराजादिशंकावाकथंनास्तीत्यतउक्तं ॥ **बलवानितीति** ॥ ननु

भा० । परानंदत्वतःसत्यआत्मापूर्णगुणत्वतः । सत्यतोनासितत्वंहिमाभूत्तेस्तब्धतातततः। असुराःस्तब्धतांयाताब्रह्माहमितिमानिनः । असत्यंजगदित्याहुःसिद्धोऽहंबलवानिति ।

भेदप्रतिपादकान्वेदान्पश्यंतःकथमेवमाहुरित्यतआह ॥ **चेतनेति** ॥ विमतानिशरीराणिदेवदत्तस्यैवभोगायतनानिइत्यादिकुतर्कपरमाः । अथापियःसर्वज्ञइत्यादिश्रुतसार्वज्ञादिगुणविशिष्टेनब्रह्मणाकथमैक्यंब्रूयुरित्यतआह ॥ **नसहंतइति** ॥ अत्रापिब्रह्मनिर्गुणं । अद्रव्यत्वात् । गुणवदितिकुतर्कपरमाइतिसंबध्यते । तत्वमसीत्यादिवेदार्थस्यैवैक्यस्यकथना(वेदना)त्कथमयमसुरपक्षइत्यतआह ॥ **शास्त्रेति** ॥ एकतांप्रतिपाद्यां । तेषांफलमाह ॥ **यांतिचेति** ॥ किंततइत्यतआह ॥ **आलंब्येति** ॥ एवंस्तब्धतांनिरस्यमहामनस्त्वंचनिरस्यति ॥ **एकत्वाभावतइति** ॥ एकत्वाभावेसन्मूलाइत्यत्रैवोक्तांयुक्तिमाह ॥ **तन्निष्ठाहीति** ॥ एतेनसदायतनाःसत्प्रतिष्ठाःइत्यनयोःपुनरुक्तिःपरिहृताभवति ॥ खं० ॥ ८॥ भूयएवमाभगवान्विज्ञापयत्वितिपुनःप्रश्नाभिप्रायःपरेणवर्णितः । यद्धवदुक्तमहन्यहनिसर्वाःप्रजाःसुषुप्तेसत्संपद्यंतइतितत्संदिग्धं । यतःसत्संपद्यनविदुःसत्संपन्नावयमिति । अतोदृष्टांतेनप्रत्यापयत्वित्यर्थइति । सनयुक्तः । तथासतितेयथातत्रविवेकंलभंतेमधुभावंप्राप्तावयमित्येववक्तव्यत्वापातात् । नदीसमुद्रदृष्टांतोक्तिवैयर्थ्याच्च । नचयथालोकेस्वकीयेगृहेसुषुप्तउत्थायग्रामांतरंगतोजानातिस्वगृहादागतोस्मीतिएवंसतआगतोस्मीतिजंतूनांकस्माद्विज्ञानंनभवतीतिपुनःप्रश्नेतत्कथनमितिवाच्यं । तथासतिताःसमुद्रादागतानविदुरितोवयमागताइत्येववक्तव्यत्वा

---

भा० । अनीश्वरंजगत्प्राहुरप्रतिष्ठंतथैवच । चेतनैकत्वविषयान्वेदानाहुश्चसर्वशः । कुतर्कपरमानित्यंनसहंतेगुणान्हरेः । शास्त्रतत्वमविज्ञायब्रूयुर्वेदेषुचैकतां । यांतिचैवतमोघोरंपरमात्मविनिंदकाः । आलंब्यतन्मतंनत्वमेकत्वविद्धिविष्णुना । एकत्वाभावतोनैवभवेथाश्चमहामनाः । तन्निष्ठाहिप्रजायस्मात्तत्प्रतिष्ठाश्चमोक्षगाः । तन्मूलाश्चयतस्तासांतद्भूतःकुतएवतु ॥ खं० ॥ ८ ॥

पातेननदीनांसमुद्रप्राप्तेःपरस्पराज्ञानस्यचकथनायोगात् । नानावृक्षरसायथातत्तद्वृक्षादागत्यनविदुरितआगतोस्मीतितिआगतोस्मीतिपूर्वखण्डएवतत्रापिदृष्टांतस्योक्तप्रायत्वाच्चेतिभावेनस्वयंपुनःप्रश्नाभिप्रायंप्रमाणेनैवाह ॥ यदीति ॥ स्वतःस्वस्मात्मत्तइत्यर्थः। नदृश्यतेभेदेनेतिशेषः । नमत्तोन्योस्मिन्देहेस्ति । मयाभेदेनानुपलभ्यमानत्वात्। योयमात्मनोभेदेननपश्यतिसततोनभिद्यतइतिव्याप्तेरितिभावः । किमत्रज्ञानिभिरदृश्यमानत्वंहेतुरथवाऽज्ञानिभिः । नाद्यः । असिद्धेः । द्वितीयेव्याप्तिभंगमाह॥ अज्ञैरिति ॥ कुतइत्यतस्तत्रयथासोम्यमधुकृतइतिखंडोक्तव्यभिचारस्थानमाह ॥ यथेति ॥ एवमेवखलुसोम्येत्यादिदार्ष्टांतिकवाक्यतात्पर्यमाह॥ अजानंतोपीति ॥ इतिभूयएवमाभगवान्विज्ञापयत्वित्येतद्व्याचष्टे ॥ इतिपित्रेति ॥ पित्रोपदिष्टःसन्नितिशेषोक्तिः। प्रश्नाभिप्रायमाह ॥ चेतनानामिति ॥ भवत्वचेतनानांनानावृक्षरसानांभेदापरिज्ञानं मयातुचेतनत्वेनहेतुर्विशेष्यतइतिभावः । तथासोम्येतिहोवाचेत्यर्थस्तंप्रत्याहेति ॥ खं० ॥ ९ ॥ प्रश्नोत्तरत्वेनेमाःसोम्यनद्यइतिखंडतात्पर्यमाह ॥ यथानद्यइति ॥ नदीशब्दस्यचेतनपरत्वंअभिमान्यधिकरणन्यायसिद्धं ।चशब्दोपिशब्दार्थः। नदीदेवतानामियमहमस्मीयमहमस्मीतिनविदुरित्युक्तस्वस्वरूपापरिज्ञानंकथमित्यतउक्तं ॥स्वंवारीति ॥ सर्वस्यापिनदीजलस्यसामुद्रजलप्रवेशेनमिश्रीभावात्क्षीरनीरयोरिवस्वीयोद

भा० । यदिस्वतोन्यःपरमोदेहेस्मिन्संव्यवस्थितः। नदृश्यतेकुतइतिभूयःपप्रच्छपुत्रकः। अज्ञैरदृश्यमानोपिनभेदोनास्तिपुत्रक । यथापुष्परसायुक्ताअजानंतोपिभेदिनः। अजानंतोपिपुरुषास्तथाविष्णोर्हिभेदिनः। इतिपित्रोपदिष्टःसन्पुत्रःपप्रच्छतंपुनः। चेतनानामविज्ञानंकथमित्येवचिंतयन्। तंप्रत्याह ॥ खं० ॥९॥ यथानद्यश्चेतनाश्चसमुद्रगाः। स्वंवारिनैवजानंतिप्रजास्तद्वत्प्रजालये ।



कभेदाज्ञानंयुक्तमितिभावः ।प्रजानामालयःआश्रयस्तस्मिन्प्रजालयेपरमेश्वरेस्थित्वापितमाश्रिताःस्मइतिनविदुरितिशेषः। अनेनश्रुतौदृष्टांतवाक्यानुसारेणसतआगम्यनविदुरित्येतदुपलक्षणपरमित्युक्तंभवति । एतेनचेतनत्वविशिष्टस्यापिहेतोरनैकांत्यमुक्तंभवति । दृष्टंलोकेजलेवीचीतरंगफेनबुद्बुदादयउत्थिताःपुनस्तद्भावंगताःविनष्टाइति । जीवास्तुतत्कारणभावंप्रत्यहंगच्छंतोपियन्मरणप्रलययोश्चनविनश्यंतीत्येतद्भूयएवमाभगवान्विज्ञापयतुदृष्टांतेनेतिप्रश्नाभिप्रायवर्णनमयुक्तं । जलवीचीतरंगादावुपादानोपादेयभावसत्त्वात्। प्रकृतेचतदभावेनवैषम्यात् । पेपीयमानोमोदमानस्तिष्ठतीत्यंतस्यैवकथंचिद्व्यक्तव्यत्वेनास्ययदैकांशाखांजीवोजहातीत्यादिवैयर्थ्याच्चेतिभावेनभूयएवेतिपुनःप्रश्नाभिप्रायंस्वयमाह ॥ स्वतइति ॥ परःपरमात्मा । स्वतोन्योदेहेऽस्तीतिसत्यं । तथापिजीवस्यतदधीनत्वमितिशेषः ॥ खं० ॥ १० ॥ वृक्षदृष्टांतोक्त्याकथमस्योत्तरंजातमित्यतस्तदभिप्रायमाह ॥ अभिमानिनइति ॥ वृक्षजीवस्यभेदेनतन्नियामकत्वेनच । अनेनवृक्षजीवःकेनचिन्नियम्योऽस्वतंत्रत्वाद्रथादिवदित्यनुमानंसूचितं । किमुमनुष्येष्वितिकथंकैमुत्यमितिचेत्। मनुष्याणांबहुलंभग्नसंकल्पत्वेनास्वातंत्र्यंप्रत्यक्षसिद्धं । वृक्षजीवेत्वस्वातंत्र्यंकार्यलिंगानुमेयमतोयुक्तंकैमुत्यमित्याशयेनाह ॥ शोषइति ॥ अस्यवृक्षजीवस्यानुपहतात्यक्तदेहेनमयाभवितव्यमितीच्छायामप्यस्वातंत्र्यादेवहिशरीरशोषछेदाद्यनिष्टंभवत्यन्यथातन्नस्यादित्यर्थः ॥ खं० ॥ ११ ॥ कथंपुनरिदमत्यंतस्थूलंपृ

भा० । स्वतोन्योस्तिपरोदेहइतिज्ञायेतमेकथं । इतिपृष्टःपुनःप्राहवृक्षदृष्टांततःपिता ॥ खं० ॥ १० ॥ अभिमानिनोस्वतंत्रत्वाद्भेदेनज्ञायतेतरौ । हरिःकिमुमनुष्येषुशोषोह्यस्यास्वतंत्रतः ॥ खं० ॥ ११ ॥

थिव्यादिजगदत्यंतसूक्ष्मात्सतोजायतइत्येतद्दृष्टांतेनभूयएवमाभगवान्विज्ञापयत्वितिपृष्टे यथासूक्ष्मधानासामर्थ्यात्तत्परिणामो
महान्न्यग्रोधस्तिष्ठत्येवंपरमसूक्ष्मपरमात्मसामर्थ्यात्तत्परिणामोयंप्रपंचइत्युत्तरमुच्यतइतिपरकीयप्रश्नोत्तराभिप्रायवर्णनमयुक्तं ।
अस्यार्थस्याव्यवधानेनप्रागनुक्तत्वेनतत्रदृष्टांताकांक्षायोगात् । सतःशुद्धस्यसौक्ष्म्यस्याप्यभावेन विशिष्टस्यतुसौक्ष्म्यवत्स्थौल्य
स्यापिभावेनप्रश्नायोगाच्च । एतस्यवैसोम्यैषोणिम्नइत्युक्ताणिमशब्दस्यधानापरत्वासंभवेनपरिहारायोगाच्च । तथाहि । धानानां
किमत्रपश्यसीतिअण्व्यइवेमाधानाभगवइतिभावप्रत्ययरहितेनस्त्रीलिंगेनबहुवचनांतेनेवशब्दशिरस्केणचाणुशब्देननिर्दिष्टतयात
द्विपरीताणिमशब्दानर्हत्वात् । ननिभालयसइत्युक्तादृश्यत्वायोगाच्च । धानायाएववटोपादानत्वेनधानाभेदनादिवैयर्थ्याच्चेति
भावेनस्वयंप्रश्नाभिप्रायंतावदाह ॥ ज्ञायतइति ॥ सूक्ष्मेजीवे । एवंजीवस्यसत्तादिप्रदोहरिरत्रैवशरीरेजीवेवर्ततेचेज्जीवेनकुतो
नदृश्यतेसूक्ष्मत्वादितिचेत्जीवस्यसूक्ष्मस्वात्मदर्शिनःसूक्ष्मदर्शनशक्तिसद्भावादितिभावः । प्रश्नोत्तरत्वेनयंवैसोम्यैतमणिमानं
ननिभालयसइतिवाक्यतात्पर्यमाह ॥ वटबीजइति ॥ अभिमानीबीजाभिमानी । सएवमहावृक्षाभिमानीत्युक्तं महांश्चासौ
न्यग्रोधश्चतस्मिन्भावयुगिति । अनेनैतस्यवैसोम्यैषोणिम्नइतिवाक्यमुक्तार्थं । सूक्ष्मेवटबीजेदृश्यमानेयथातदभिमानीनदृश्य
तेऽतिसूक्ष्मत्वात् । एवंसूक्ष्मेजीवेदृश्यमानेपिजीवगतोहरिर्निदृश्यते । परमसूक्ष्मत्वादित्यर्थः । नन्वनेन यंवैसोम्यैतमणिमानंन
निभालयसएतस्यवैसोम्यैषोणिम्नइत्युक्ताणिमशब्दोबीजजीवपरतयाव्याख्यातः । तथासतिनहिधानापरमात्मनोरभेदोस्तीत्यु ॥१८६॥

भा०। ज्ञायतेनकथंस्वस्मिन्सूक्ष्मेज्ञातेपरोहरिः। तत्रस्थइतिपृष्टःसंस्तमाहोद्दालकःसुतं । वटबीजेयथासूक्ष्मेमहान्यग्रोधभावयुक्। नदृश्यतेभिमानीसएवंजीवगतोहरिः॥खं०॥१२॥

त्तरवाक्यविरोधः । अणिमशब्दस्यपरमात्मपरत्वंविनातस्यायोगात् । अणिमशब्देनपरएवाभिहितइतितत्वनिर्णयविरोधाच्चेति चेन्न । अयमभिप्रायोभाष्यकारस्य । अणिमशब्दोहिपरेणधानापरोव्याख्यातःसर्वथासनयुक्तः । प्रागुक्तबहुबाधकसद्भावात् । किंतुपरमात्मपरएव । सएषोणिमेत्यणिमशब्देनप्रकृतत्वात् । तत्रैवतच्छब्दस्यमुख्यत्वाच्च । अथवाजीवपरएवास्तु । धानापर त्वपक्षोक्तदोषाणामत्राभावात् । बहुबाधकवशेनाणिमशब्देनाप्रकृतस्या प्यस्यसोम्यमहतोवृक्षस्येत्यादिनाप्रकृतस्यवृक्षजीव स्याणिमशब्देनग्रहणोपपत्तेः । वृक्षाभिमानिनएवबीजाभिमानित्वात् । अतएवमहान्यग्रोधभावयुगितिबीजाभिमानिविशेषण मुक्तमिति ॥ द्वादशःखंडः ॥ १२ ॥ यदितत्सज्जगतोमूलंतर्हिकस्मान्नोपलभ्यतइत्येतद्दृष्टांतेनविज्ञापयत्वितिप्रश्नाभिप्रायवर्ण नमयुक्तं । त्वन्मतेसन्घटइत्यादावप्यधिष्ठानसदर्थोपलब्धेरेवंप्रश्नायोगात् । परमसूक्ष्मत्वान्नदृश्यतइतिपूर्वखंडएवोक्तत्वाच्चेति भावेनस्वयंप्रश्नाभिप्रायमाह ॥ कथमिति ॥ यदिहरिर्जीवात्पृथगेवोक्तरीत्यानदृश्येततर्हितस्यादर्शनेतच्छक्तिःकथंदृश्येत । दृश्यतेचवटावस्थानादिनानाविधकार्येणेश्वरसामर्थ्यंतावत्प्रत्यक्षमिव । एवंतत्सामर्थ्येदृश्यमानेतस्यादर्शनमित्येतत्कथमितिभाव युतमितिभावः । तदुत्तरत्वेनलवणरसदृष्टांतकथनाभिप्रायमाह ॥ यथेति ॥ अप्सुव्याप्तमित्यन्वयः । यथाप्सुव्याप्तंलवणमत एवतद्भिन्नंतद्गुणरसदृष्टावपिनदृश्यते । एवंचेतनगस्तद्भिन्नोविष्णुस्तत्सामर्थ्येदृश्यमानेपिनदृश्यतइत्यर्थः ॥ खं० ॥ १३ ॥ जगन्मूलसदुपलब्धौकउपायइतिविज्ञापयत्वितिपरकीयप्रश्नाभिप्रायवर्णनमयुक्तं । विवर्ताधिष्ठानस्यसतःसर्वप्रत्ययवेद्यत्वांगीका

भा० । कथंदृश्येतेतच्छक्तिःपृथक्तस्यह्यदर्शने । इतिभावयुतंप्राहपुत्रमुद्दालकःपुनः । यथाप्सुलवणंव्याप्तंरसदृष्टौनदृश्यते । एवंचेतनगोविष्णुस्तद्भिन्नोपिनदृश्यते ॥खं०॥१३॥

रेणाचार्योपदेशानपेक्षणात् । किंचाचार्योपदेशस्यविशिष्टज्ञापकत्वेत्वप्रामाण्यं । स्वरूपमात्रज्ञापकत्वेसिद्धार्थत्वं । स्वरूपमात्रस्यपूर्वमेवसिद्धत्वादितिभावेनस्वयंप्रश्नाभिप्रायमाह ॥ **कथमिति** ॥ कथंकेनोपायेन सःजीवगोभिन्नोविष्णुरविद्यापटलपिहितनयनेनकथंकेनोपायेनदृश्यतेप्राप्यतेचेत्यर्थः । तदुत्तरत्वेनयथासोम्यपुरुषमितिखंडतात्पर्यमाह ॥ **यथेति** ॥ पूर्वबद्धाक्षःअनंतरंमुक्ताक्षबंधइत्यपिग्राह्यं । व्रजेत् जानीयात्गच्छेच्च ॥ खं० ॥ १४ ॥ ननुविद्वान्केनक्रमेणब्रह्माप्नोतीतिजिज्ञासायांतत्क्रमप्रदर्शनार्थंपुरुषंसोम्योपतापिनमित्याद्युच्यतइतिव्याख्यानमसत् । अस्यसोम्यपुरुषस्यप्रयतोवाङ्मनसिसंपद्यतइतिप्रागेवोक्तत्वात् । पूर्ववदत्रापितस्यवाङ्मनसिसंपद्यतइत्यादितेजःपरस्यांदेवतायामित्यंतेनैवपूर्तेस्तस्ययावन्नवाङ्मनसिसंपद्यतइत्यादिनाज्ञानेजीवस्यपराधीनत्वोक्तिवैयर्थ्याच्च । यदाप्राणान्ददातीशस्तदाचेतनकोखिलं । जानातिग्रस्तकरणस्तेनवेत्तिनकिंचनेतिस्मृतिविरोधाच्चेतिभावेनप्रश्नाभिप्रायमाह ॥ **यथेति** ॥ अवगतंवृक्षशरीरेभगवदधीनत्वंजीवस्य मानुषशरीरएवतज्ज्ञापयत्वित्यर्थः । तेननसिद्धार्थत्वंप्रश्नस्य । तदुत्तरत्वेनपुरुषंसोम्येतिखंडतात्पर्यमाह ॥ **ज्ञानेहीति** ॥ ज्ञानस्यवागादिव्यापारान्वयव्यतिरेकानुविधायित्वोक्तेरित्यर्थः ॥ खं० ॥ १५ ॥ यदिवागादिलयक्रमेणमरिष्यतोमुमुक्षतश्चतुल्यासतससंपत्तिस्तत्रविद्वान्संपन्नोनावर्तते आवर्ततेत्वविद्वानित्यत्रकिंकारणमितिजिज्ञासायांसत्यब्रह्मात्मत्वाभिसंधित्यागात्यागौतत्रकारणमितिप्रदर्शनार्थंपुरुषंसोम्ये

भा० । कथंसज्ञायतेविष्णुर्भिन्नइत्यत्रचाब्रवीत् । यथैवान्योपदेशेनबद्धाक्षःस्वगृहंव्रजेत् । तथाचार्योपदेशेनभिन्नमीशंव्रजेत्पुमान् ॥ खं० ॥ १४ ॥ यथापुंसोस्वतंत्रत्वंतज्ज्ञापयतुमाभवान् । इत्युक्तआहज्ञानेहिदृष्टैवास्यास्वंतत्रता ॥ खं० ॥ १५ ॥



त्यादिवाक्यंपठ्यतइत्यसत् । दूषयिष्यमाणत्वादितिभावेनप्रश्नाभिप्रायमाह ॥ **अभेदेति** ॥ दोषोनर्थः । भेदज्ञानिनांचकीदृशःपुरुषार्थःस्यादित्यपिग्राह्यं । तदुत्तरत्वेनपुरुषंसोम्येतिखंडतात्पर्यमाह ॥ **यस्मादिति** ॥ यदेत्यर्थः । राज्ञोपहर्त्ता सत्यपिराज्ञिराजाहमितिवदन्नित्यर्थः । स्वव्यतिरिक्तराजाभावोक्तेरितिभावः । यथाराजापहर्तैवं । श्रुतावपहर्त्रादिदृष्टांतेनाभेदज्ञानिनःफलमुक्तं । तच्चुनपरस्वापहर्त्रादिदृष्टांतेन ऐक्यज्ञानिनस्तत्साम्याभावात् । किंनामराजापहर्त्रादिदृष्टांतेनैव । ततश्चहत्याधिक्यंतस्यफलमित्यनेनोक्तंभवति । ननुकथमभेदज्ञानिनोब्रह्मस्तेनत्वं । कुत्रवासनिहन्यतइत्यतआह ॥ **सर्वेषामिति** ॥ शास्तृशिक्षकं । स्वस्वरूपव्यतिरेकेणब्रह्माभावस्मरणाद्ब्रह्मस्तेनइत्यर्थः । ननुराजाहमितिदृढाभिमानमतदर्हंराजपुरुषाब्राधंते । ब्रह्मस्तेनंकेबाधंतइत्यतआह ॥ **दोषाहीति** ॥ दोषाइतितदभिमानिनोदेवावायुकिंकराः । मिथ्याज्ञानपूर्वाइत्यर्थः । वस्तुतःकिमयंविष्णोरपहर्ता नेत्याह ॥ **अभिमानेति** ॥ ब्रह्मैवाहमित्यभिमानेकृतास्पदमित्यर्थः । एवं सदह्यतेथहन्यतइत्यंतेनोक्तसाम्यंदार्ष्टांतिकेप्रदर्श्यसयदितस्याकर्ताभवतीत्यारभ्यसयथातत्रनदाह्येतेत्यंतेनोक्तसाम्यमपिदार्ष्टांतिकेदर्शयति ॥ **ततइति** ॥ ततइतिबुद्धिस्थपरामर्शः । आनयनानंतरमित्यर्थः । एनंभेदज्ञानिनं । अपभ्रष्टैःब्रह्मस्तेनत्वेनसूचितं विचारयंति । परशुतापादिना ।

भा० । अभेदज्ञानिनांदोषःकीदृशःस्यादितीरिते । प्राहयस्मात्परस्वानांहर्ताराज्ञानिहन्यते । किमुराज्ञोपहर्तैवंब्रह्मस्तेनोनिहन्यते । सर्वेषांशास्तृयद्ब्रह्मतत्स्वरूपतयास्मरन् । ब्रह्मस्तेनोनिहन्येततमस्यंधेसदैवहि । दोषाह्यज्ञानपूर्वास्तुबध्वापुरुषमीशितुः । विष्णोर्हर्तेतिबाधंतेचाभिमानकृतास्पदं । ततोविचारयंत्येनंदेवताहरिणासह । नाहंविष्णुर्नस्वतंत्रोनचपूर्णगुणोस्म्यहं । ममस्वामीहरिर्नित्यंस्वतंत्रःपूर्णषड्गुणः । एवंदार्ढ्यंशपथवद्यदाकुर्यादयंसदा । जानन्नेवनतापीस्याद्दंतरानंदभोगतः ।

इदंपूर्ववाक्येपिग्राह्यं । नकेवलंतापाभावमात्रं किंनाम यथाराजाशिक्षकेभ्यस्तंमोचयित्वामृषावादिनःपिशुनान्हत्वास्वकीयं कुरुते एवंविष्णुरपीत्याह ॥ **तदेति** ॥ तेभ्योऽज्ञानादिदोषेभ्यःतमितिशेषः । मिथ्याभिशंसिनोपभ्रष्टदेवान् । अवश्यमेतदेव संपाद्यमितिभावेनविपक्षेबाधकंसूचयन्नुक्तंविशदयति ॥ **अन्यथेति** ॥ अभेदज्ञानेतैःपूर्वाभेदज्ञानिभिःसहपातयतिवायुकिंकरैः । महातमस्त्रिधाप्रोक्तमूर्ध्वंमध्यंतथाधरमित्युक्तेरभेदज्ञानतारतम्यानुसारेणेयंफलोक्तिः । एवमेवखलुसोम्याचार्यवान्पुरुषोवेदेति वाक्यंस्थानांतरस्थमपिसर्वत्रसंबध्यतइतिज्ञापयितुमेतद्वाक्यतात्पर्यमाह ॥ **तस्मादिति** ॥ जीवभेदेन ॥ **षोडशःखंडः** ॥१६॥ ननुस्वमपीतोभवतीत्यस्यविष्णुमाप्नोतीतिव्याख्यानंनयुज्यते । स्वशब्दस्यस्वात्मन्येवरूढत्वात् । विष्णौचयौगिकत्वात् । योगाद्रूढेःप्राबल्यादित्यतःस्वशब्दस्यविष्णावेवरूढिंसाधयितुमाह ॥ **स्वयंभूरितीति** ॥ इतिशब्देनस्वयंस्वात्स्वतंत्राद्भवतीतिव्युत्पत्तेरित्यर्थः । ननुस्वयमेवभवतीतिस्वयंभूरितिकिंनस्यात् । तेननस्वयंशब्दोविष्णुवाचीतिसिध्यतीत्यतआह ॥ **नहीति** ॥ आत्माश्रयप्रसंगादितिभावः । अथापिभवदुक्तार्थेकिंनियामकं ।व्युत्पत्त्यंतरस्यापिसंभवादित्यतोब्रह्मणोविष्णुजत्वेतावत्प्रमाणमाह ॥ **यइति** ॥ विदधातिकरोति । किंचात्मभूशब्दस्तावद्विरिंचवाचकः । सचतस्यविष्णुजत्वमेवाभिधत्ते । नतुस्वात्मोत्पन्नत्वं आ

---

भा० । तदातेभ्योमोचयित्वाहत्वामिथ्याभिशंसिनः।स्वकीयंकुरुतेविष्णुरन्यथातैस्सहप्रभुः । तमस्यंधेपातयतिमहाकारागृहोपमे। महांधेवापातयतिहस्तच्छेदादिसंमिते ।ततोधरेवातद्योग्यंदृढाभेदंवधोपमे । तस्मादाचार्यतोज्ञात्वाविष्णोर्भेदेनपूर्णतां । उपासीतततोमुक्तियातिनास्त्यत्रसंशयइत्यादिसामसंहितायां ॥ खं० ॥ १६ ॥ स्वयंभूरितिविष्णुजत्वाद्विरिंचउच्यते । नाहंविरिंचादेवविरिंचोजातः । योब्रह्माणंविदधातिपूर्वमितिश्रुतेः ।

त्माश्रयप्रसंगादेव । नापिजीवोत्पन्नत्वं श्रुतिविरोधात् । ततश्चतत्समाख्यानात्स्वयंभूशब्दोप्युक्तार्थएवेतिभावेनाह ॥ आत्मे ति ॥ भूतत्वादुत्पन्नत्वात् । आत्मभूरितिविरिंचउच्यतइतिसंबंधः । आत्माभगवानितिकुतइत्यतस्तत्रस्मृतिमाह ॥ दत्तमि ति ॥ किंचाजशब्दस्तावद्विरिंचवाचीतिप्रसिद्धं । सोपितस्यविष्णुजत्वमेवाभिधत्ते । नतुनजायतइत्यजइत्यनुत्पत्तिं । योब्रह्माण मितिश्रुतिविरोधात् । ततस्तत्समाख्यानाच्चस्वयंभूशब्दउक्तार्थएवेतिभावेनाह ॥ अइतीति ॥ अजइतिविरिंचउच्यते । अश ब्दस्यविष्णुवाचित्वेप्रमाणमाह ॥ अःइतीति ॥ नन्वत्रब्रह्माकारवाच्यंप्रतीयतेनविष्णुरित्यतोब्रह्मशब्दस्यविष्णुपरत्वेतस्यैवाका रवाच्यत्वप्राप्तिरितिभावेनब्रह्मशब्दस्यतद्वाचित्वेस्मृतिमाह ॥ वासुदेवादिति ॥ अस्त्वेवंस्वयंभूरितिविष्णुजत्वाद्विरिंचउच्यत इति किंततइतिचेत् । स्वयंशब्दस्यविष्णुवाचकत्वसिद्धौतत्पर्यायस्वशब्दस्यापिविष्णुवाचकत्वसिद्धिरितिभावेनाह ॥ अतइति ॥ मुख्यतइतिशेषः । स्वशब्दस्यविष्णुरूढत्वसमर्थनमपिप्रकृतानुपयुक्तमित्यतआह ॥ ततइति ॥ यतःस्वशब्दोविष्णावेवप्रसिद्ध स्ततःस्वमपीतोभवतीत्यस्यविष्णुमाप्नोतीतिव्याख्यानंयुज्यतइत्यर्थः । ननुस्वशब्दस्यविष्णुपरत्वेप्यपीतशब्देनैक्यमुच्यते । याव दुक्तंभवत्येकीभवतीतितावदपीतोभवतीति । अतोअपीतोभवतीत्यस्यआप्नोतीतिव्याख्यानंनयुज्यते।तथासतिइतोभवतीत्येवव क्तव्यतयापीत्यस्यवैयर्थ्यापत्तेरितिचेन्न । त्वन्मतेस्वशब्दस्याप्यैक्यपरत्वेनास्यवैयर्थ्यापत्तेः । किंचकिमपीतशब्दस्याखंडवृत्ति

भा० । आत्माभगवान्ततोभूतत्वादात्मभूः । दत्तंदुर्वाससंसोममात्मेशब्रह्मसंभवानितिवचनात् । अइतिविष्णुस्तज्जातत्वादजः । अःइतिब्रह्मेत्यादिश्रुतेः । वासुदेवात्प रोनैवब्रह्मशब्दोदितोभवेदित्यादेश्च । अतःस्वशब्दोविष्णावेवप्रसिद्धः । ततःस्वमपीतोभवतीतियुज्यते ।

माश्रित्यैक्यार्थत्वमुच्यतेउतावयववृत्तिं । नाद्यः । अपीतइत्यस्यभवतेश्चाकर्मकत्वेनश्रुतद्वितीयायोगात् । अश्रुततृतीयाकल्पना प्रसंगाच्च । द्वितीयेतुनैक्यमस्माल्लभ्यतइत्याशयवानाह ॥ अप्ययइति ॥ यद्यप्यत्रापीतिर्नामेतिवक्तव्यं । तथाप्यप्ययइति तत्समानार्थकशब्दनिर्वचनं तदन्येषामदर्शनं अप्ययोयंसमुद्दिष्टोनस्वरूपैकताक्वचिदितिश्रुतिसूचनार्थं । अदर्शनमदर्शनविशिष्टाप्राप्तिरितिश्रौतपदार्थः । अविज्ञेयत्वेनप्राप्तिरितिशेषः । अपिरपिधानेवर्तते । अयपयगतौ । भावेक्विप् । ततश्चाविज्ञेयत्वेन तिरोधानेनगतिःप्राप्तिरप्ययशब्दार्थः । प्रवेशस्त्वर्थलब्धः । अपिहितस्यप्राप्तिःप्रवेशेसतिसंभवतीति । प्रलयेप्यप्ययशब्दस्यै तदेवनिर्वचनं । प्रध्वंसस्तुप्रमाणांतरगम्यः । एवंचतमाप्नोतीतिप्रागुदाहृतवचनेऽविज्ञेयत्वेनेतिपूरणीयमितिनदोषइतिभावः । अनेनापीतइत्यस्याविज्ञेयत्वेनप्राप्तःप्रविष्टइत्यर्थउक्तोभवति । इणोगत्यर्थत्वान्निष्ठाप्रत्ययस्यकर्त्रर्थत्वात् । अत्रस्मृतिंचाह ॥ अविज्ञातमिति ॥ क्रियाविशेषणमेतत् । प्राप्तमितिशेषः । प्रविष्टमित्यर्थलब्धं । समुद्रेसमुद्रमपीताइत्युच्यंते । ताःसमुद्रमेवापियंतीत्यादौ एतेनसमुद्रमपियंतीत्यस्यसमुद्रात्मनैकतांगच्छंतीतिव्याख्यानंप्रमाणविरुद्धमितिसूचितं । प्रजाअपीताइत्युच्यंते । किंचतिष्ठतुतावदयंशब्ददोषः । यदिजीवस्यब्रह्मभावःस्यात्तदास्वमपीतोभवतीतिवाक्यंतदर्थकंस्यात् । नचसोस्ति । अतोबाधितार्थस्यादितिभावेनाह ॥ नचेति ॥ तद्भावोब्रह्मभावः । कुतोनेतिचेत् । स्वमपीतोभवतीतिवाक्यंतावत्सुप्तमुक्तोभयपरं । स्वप्नांतंमेसोम्येत्युपक्रमात् । सुप्तिप्रकरणस्यमुक्तिपरतायाश्च स्वाप्ययसंपत्त्योरन्यतरापेक्षमितिसूत्रकृतानिर्णीतत्वात् ।



भा० । अप्ययोनामाविज्ञेयत्वेनप्रवेशः । अविज्ञातंप्रविष्टंयदपीतमितिकीर्त्यते । यथानद्यःसमुद्रेतुयथाविष्णुंलयेप्रजाइतिशब्दनिर्णये । नचजीवस्यतद्भावोस्ति ।

नचेदंसूत्रंवाजसनेयकसुप्तिप्रकरणनिर्णायकमितिवाच्यं । तथासतिविश्वतोमुखत्वहानेः । नचैवंस्वप्नस्यांतःसुषुप्तिरिति तमाप्नोतिमनोनामासंसारीतिव्याख्यानविरोधः । मुक्तिपरतायाअनिवारणेनतदुपपत्तेः । स्वर्गःसुषुप्तिरित्याख्यामुक्तेरपियतःसमेतिवचनेन भाष्यस्थसुषुप्तिशब्दस्यमुक्तिपरतायाअप्युपपत्तेश्च । तथाचस्मृतिः । स्वंकुलायंयथापीतःपक्षीस्यादेवमीश्वरं । अप्येतिजीवः प्रस्वापेमुक्तौचान्योपिसन्सदेति । ततश्चस्वमपीतोभवतीत्युच्यमानोजीवस्यब्रह्मभावःकिंसुप्तस्यमुक्तस्यवा । पक्षद्वयमपिदूषयति ॥ उत्थितस्येति ॥ नजीवस्यसुप्तस्यमुक्तस्यवातद्भावोस्ति । सुप्तिसंसारयोःसकाशात् । उत्थितस्यप्रबुद्धस्यमुक्तस्यवा सुप्तिसंसारयोःपरामर्शदर्शनात् । नचब्रह्मणोजीववदहमस्वाप्संदुःख्यासमित्यादिरूपेणसुप्तिसंसारपरामर्शोस्ति । सर्वज्ञस्यतस्य तत्कारणाज्ञानस्यैवाभावात् । नचविरुद्धधर्माधिकरणयोरैक्यंदृष्टमितिभावः । नन्वस्तुसुप्तेरुत्थितस्यसुप्तिपरामर्शः अस्वाप्समितिप्रत्यक्षसिद्धत्वात् । संसारादुत्थितस्यमुक्तस्यसंसारपरामर्शोस्तीतिकुतइत्यतआह ॥ अहमिति ॥ अहंसर्वंजगदभिअभिभूयाधिपतित्वेनाभवमितिमुक्तब्रह्मवाक्यं । अस्यमुक्तपरत्वेविप्रतिपन्नंप्रतिस्पष्टांस्मृतिंचाह ॥ आजन्मेति ॥ जन्मारभ्यमरणपर्यंतमनुभूतंदुःखंस्मृत्वाइदानीमेतादृशदुःखाद्विमुक्ताइतिमुक्ताहर्षमवाप्नुयुरित्यर्थः । अत्रमुक्तज्ञानस्यस्मरणत्वंनामपूर्वानुभूतार्थविषयीकरणोन्मुखत्वं । अतएवेशस्यभक्तविषयकस्मरणंनिरुक्तमन्यत्र । भक्तानांस्मरणंविष्णोर्नित्यज्ञप्तिस्वरूपतः । अनुग्रहोन्मुखत्वंतुनैवान्यत्किंचिदिष्यतइति । किंचयदिजीवस्यसुप्तौब्रह्मभावःस्यात् तर्हितदाब्रह्मभावानुभवःस्यात् । तथाचसुप्तेरुत्थिते

भा० । उत्थितस्यसुप्तिसंसारयोःपरामर्शदर्शनात् । अहंविश्वंभुवनमभ्यभवां । आजन्ममरणंस्मृत्वामुक्ताहर्षमवाप्नुयुरिति ।

नसुषुप्त्यादिकमिवतद्भावःपरामृश्येतअन्यथासुप्त्यादिकमपिनपरामृश्येत । नचपरामृश्यते । कस्यापिप्रबुद्धस्याहंब्रह्मीभूतोस्मी
तिपरामर्शादर्शनात् । अतोनसुप्तौजीवस्यब्रह्मभावइतिभावेनाह ॥ तद्भावस्येति ॥ नचजीवस्येतिपूर्वेणसंबंधः । किंचसुप्तौ
मुक्तौवानजीवस्यब्रह्मभावोस्ति । तदाप्राज्ञात्मसंपरिष्वंगश्रुतेः । नचाभेदेसंपरिष्वंगःसंभवतीत्याह ॥ प्राज्ञेनेति ॥ संपरिष्वं
गोप्येकीभावःकिंनस्यादित्यतःश्रुत्यर्थनिर्णायकंसूत्रंपठति ॥ सुषुप्तीति ॥ प्राज्ञेनात्मनासंपरिष्वक्तः प्राज्ञेनात्मनान्वारूढइति
सुषुप्त्युत्क्रांतिप्रकरणयोर्जीवस्येश्वराद्भेदेनव्यपदेशादितिसूत्रार्थः । श्रुतिसूत्रेमुक्तिपरेचभवतः । सुप्तिप्रकरणस्यमुक्तिपरतायाः
सूत्रकृतैवनिर्णीतत्वात् । किंच नस्वमपीतइतिवाक्यंजीवस्यब्रह्मभावाभिधायकं । यतोत्रैवनवप्रकरण्यामाद्यप्रकरणेसन्मूलाइ
तिजीवस्यसन्मूलकत्वादिकं । संपत्स्यामहइति तइहव्याघ्रोवेतिद्वितीयप्रकरणे आगच्छामहइति तइहव्याघ्रोवेतितृतीयप्र
करणेच भिन्नस्यवस्तुनोभेदापरिज्ञानाद्व्याघ्रादित्वापत्तिरूपोनर्थः । सएषइतिचतुर्थप्रकरणेजीवस्यभगवदधीनत्वं । अण्व्यइवे
माइतिपंचमप्रकरणेजीवस्यसुज्ञेयत्वेपिभगवतःपरमसूक्ष्मत्वेनदुर्विज्ञेयत्वं । लवणमेतदितिषष्ठप्रकरणेचभगवत्सामर्थ्यस्यदृश्यमा
नत्वेपिभगवतोदुर्विज्ञेयत्वं । एतांदिशंगंधाराइतिसप्तमप्रकरणेचाचार्योपदेशमंतराभगवतोदुर्विज्ञेयत्वंअतएवतद्भेदस्यापिदुर्वि
ज्ञेयत्वं । तेजइत्यष्टमप्रकरणेज्ञानेजीवस्यभगवदधीनत्वं । अपहार्षीदितिनवमप्रकरणेचाभेदभेदज्ञानयोर्हेतिमुक्तिफलकत्वंचो ॥१९०॥

भा० । तद्भावस्यापरामर्शाच्च । प्राज्ञेनात्मनासंपरिष्वक्तोनबाह्यंकिंचनवेदनांतरमित्यादिश्रुतेश्च । सुषुप्त्युत्क्रांत्योर्भेदेनेतिचभगवद्वचनं ।

च्यते । नचैतदभेदेसंभवतीतिभावेनाह ॥ **सन्मूलाइत्यादिना** ॥ इत्यादिवाक्यमितिशेषः । चशब्दात्पूर्वोक्तसन्मूलत्वादिस समुच्चयः । नवकृत्वःसदृष्टांतमितितात्पर्यद्योतकं । अभ्यासोपपत्त्योस्तात्पर्यलिंगत्वात् । नवकृत्वइत्युक्तोभ्यासोभेदमात्रेद्रष्ट व्यः । नन्वत्रनवप्रकरण्यांजीवेशाभेदोप्युच्यते । तत्वमसीतिनवकृत्वःश्रवणात् । अतस्तदनुसारेणस्वमपीतइत्युपक्रमवाक्यम पिजीवस्यब्रह्मभावाभिधायकमितिचेन्न । सआत्माऽतत्वमसीत्यत्रोभयथापिपदच्छेदसंभवेपिभेदाभिधायकासंदिग्धदृष्टांतवाक्य बलेनातत्वमसीतिपदच्छेदेनभेदपरमेवेदमितिनिश्चयात् । यथासधर्मघटदृष्टांताभिधानसामर्थ्याच्छब्दोनित्यइतिप्रतिज्ञासंदि ग्धार्थाप्यनित्यताविषयेतिनिश्चीयतेतद्वत् । यदात्वेकमपिभेदविषयत्वेनासंदिग्धाभिधानंसंदिग्धप्रतिज्ञावाक्यार्थनिश्चयायालं तदाकिमुवक्तव्यंनवस्वपिप्रकरणेषुनवासंदिग्धार्थानिभेदविषयाणिदृष्टांताभिधानानानि । नचैवमभेदेकश्चिद्दृष्टांतोभिहितः । येन

---

भा० । सन्मूलाःसोम्येमाःसर्वाःप्रजाःसदायतनाःसप्रतिष्ठाः । सतिसंपद्यनविदुःसतिसंपत्स्यामहइति । सतआगम्यनविदुःसतआगच्छामहइति । सएषजीवेनात्म नानुप्रभूतः पेपीयमानोमोदमानस्तिष्ठति । अण्व्यइवेमाधानाभगवइत्यासामंगैकांभिंधीतिभिन्नाभगवइतिकिमत्रपश्यसीतिनकिंचनभगवइतियंवैसोम्यैतमणिमानंननिभालयसएतस्यवैसोम्ये षोणिम्नएवंमहान्यग्रोधस्तिष्ठति। लवणमेतदुदकेवधायाऽथमाप्रातरुपसीदथाइतिसहतथाचकारतंहोवाचयद्दोषाल्लवणमेतदुदकेऽवधाअंगतदाहरेतितद्धावमृश्यननविवेदयथाविलीनमे वांगास्यांतादाचामेतिकथमितिलवणमिति । मध्यादाचामेतिकथमितिलवणमित्यंत्यादाचामेतिकथमितिलवणमिति । अत्रवावकिलसत्सोम्यननिभालयसेत्रैवकिलेति । एतांदि शंगंधाराएतांदिशंव्रजेति । तेजःपरस्यांदेवतायांतावन्नजानाति । अपहार्षीत्स्तेयमकार्षीदित्यादि । नवकृत्वोभिन्नस्यवस्तुनोभेदापरिज्ञानादनर्थंसूक्ष्मत्वाद्भेदस्यदुर्ज्ञेयत्वंचस दृष्टांततात्पर्येणाह ।

तत्वमसीतिपदंविच्छद्यतस्याभेदपरतानिश्चीयेतेतिभावेनाह ॥ **नचेति** ॥ तदेवविवृणोति ॥ **नहीति** ॥ अल्पाच्चतरमित्यस्या नित्यत्वाच्छकुनिसूत्रयोरितिसाधु ॥ **वृक्षपरमात्मनोरिति** ॥ जीववृक्षयोरित्यन्यत्रोक्तस्याप्ययमेवार्थः । धानापरमात्मनो रित्यनेनाणिमशब्दःपरमात्मपरोवगम्यते । अतएवान्यत्राणिमधानयोरित्युक्तं । नियतंपराधीनंज्ञानंयस्यासौनियतज्ञानोजी वः । अनियतमपराधीनंज्ञानंयस्यासावनियतज्ञानोभगवांस्तयोरित्यर्थः । स्वमपीतइत्यत्रजीवेशाभेदेप्रतिपाद्यतयाविवक्षितेसति दूषणांतरमाह ॥ **महेति** ॥ स्यान्महातात्पर्यविरोधोऽभेदे यदितद्विरोध्यर्थेतात्पर्यंप्रमितंस्यात् । तदेवकुतइत्यतआह ॥ **विष्णोरिति** ॥ हिशब्दोहेतौ । अभिहितंहीतिअभिधानप्रसिद्धिद्योतकोवा । सर्वप्रमाणानांप्रत्यक्षादीनां । अत्रप्रत्यक्षानुमानेआगमा नुकूलेविवक्षिते । महातात्पर्यमतिशयेनतत्सिध्यर्थंप्रवृत्तत्वं । भगवता वासुदेवेन । तेनयोमामित्याद्यस्मच्छब्दविषयोदर्शितः । वेदव्यासेनेतिवा । नचाभेदेसर्वोत्कर्षःसंभवतीतिभावः । कुत्राभिहितमित्यतस्तद्वाक्यमुदाहरति ॥ **द्वाविमावित्यादिना** ॥ क्षरःसर्वाणीत्यारभ्यैवकुत्रचित्पाठः । तत्रतावतैवविवक्षितार्थसिद्धेःपूर्वार्धानुदाहरणं । इदंश्लोकपंचकमन्यत्रव्याख्यातं । अत्र भवतोवासुदेवस्यक्षराक्षरोत्तमत्वेपौरुषेयापौरुषेयागमस्यमहातात्पर्यमस्तीतियोमामितिवेत्तुःफलकथनादवगम्यते । इत्यभिहित

भा० । नचाभेदेकश्चिद्दृष्टांतउक्तः । नहिशकुनिसूत्रयोर्नानावृक्षरसानांनदीसमुद्रयोर्वृक्षपरमात्मनोर्धानापरमात्मनोर्लवणोदकयोःपुरुषगंधारयोर्नियतज्ञानानियतज्ञानयोश्चोरापह्रिय माणयोश्चाभेदोस्ति । महातात्पर्यविरोधश्चाभेदे । विष्णोःपरमोत्कर्षेहिसर्वप्रमाणानांमहातात्पर्यंभगवताभिहितं । द्वाविमौपुरुषौलोकेक्षरश्चाक्षरएवच । क्षरस्सर्वाणिभूतानिकूटस्थो क्षरउच्यते । उत्तमःपुरुषस्त्वन्यःपरमात्मेत्युदाहृतः । योलोकत्रयमाविश्यबिभर्त्यव्ययईश्वरः । यस्मात्क्षरमतीतोहमक्षरादपिचोत्तमः । अतोस्मिलोकेवेदेचप्रथितःपुरुषोत्तमः । योमामेवमसंमूढोजानातिपुरुषोत्तमं । ससर्वविद्भजतिमांसर्वभावेनभारत । इतिगुह्यतमंशास्त्रमिदमुक्तंमयानघ । एतद्बुध्वाबुद्धिमान्स्यात्कृतकृत्यश्चभारतेति ।



मित्यन्वयः । किंचयज्ज्ञानान्मोक्षोभवतितत्रैवमोक्षप्रयोजनकसर्वागमानांमहातात्पर्यंयुक्तं । मोक्षश्चसर्वलोकमहेश्वरत्वादिविशि ष्टस्यभगवतोवासुदेवस्यज्ञानादेव । अतस्तत्रैवमहातात्पर्यंसर्वागमानामितिभावेनाह ॥ **भोक्तारमिति** ॥ शांतिंमोक्षं । किंच ज्ञानंतेहमितिप्रतिज्ञाययज्ज्ञात्वेहवेदादिषुज्ञातव्यंनावशिष्यतेइतिप्रशस्य मत्तःपरतरंनान्यदितिमयिसर्वमितिचभगवतःसर्वोत्कर्षो क्त्याचतत्रैवसर्वागमानांमहातात्पर्यमितिभावेनाह ॥ **ज्ञानमिति** ॥ अत्रज्ञानविज्ञानशब्दौज्ञेयविज्ञेयभगवन्माहात्म्यपरौ । अह मेवपरतरोमत्तोन्यत्परतरंनकिंचिदपीत्यर्थः । तेनतरपोऽन्यशब्दस्यचनवैयर्थ्यं । भगवतःसर्वोत्कर्षएवसर्वागमानांमहातात्पर्यमि त्यत्रवाक्यांतरमप्याह ॥ **राजेति** ॥ राजेवराजा । राजाचासौविद्याचेतिराजविद्या प्रधानविद्या । प्रत्यक्षनामकंब्रह्मावगम्यते येनतत्प्रत्यक्षावगमं । सर्वंजगद्धत्तइतिधर्मोभगवान् तद्विषयंधर्म्यं । प्रतिज्ञातविद्यायाःवक्ष्यमाणार्थेतात्पर्यद्योतनायतत्रनिष्ठार हितानांनिंदामाह ॥ **अश्रद्दधानाइति** ॥ प्रतिज्ञातविद्यामाह ॥ **मयेति** ॥ तर्हिंकिमितिनदृश्यतइत्यतउक्तं ॥ **अव्यक्तमूर्तिनेति** ॥ मत्स्थत्वेपियथापृथिव्यांस्पृष्ट्वास्थितानिनतथामयीत्याह ॥ **नचमत्स्थानीति** ॥ अत्रराजविद्येतिप्रतिज्ञायाश्रद्दधा नाइतितात्पर्यज्ञापनायार्थवादमुक्त्वामयाततमित्यादिनाभगवदुत्कर्षस्यैवोक्तत्वेनतत्रैवसर्वविद्यानांतात्पर्यमितिज्ञायते । तर्हिंकेचि

भा० । भोक्तारंयज्ञतपसांसर्वलोकमहेश्वरं । सुहृदंसर्वभूतानांज्ञात्वामांशांतिमृच्छति । ज्ञानंतेहंसविज्ञानमिदंवक्ष्याम्यशेषतः । यज्ज्ञात्वानेहभूयोन्यज्ज्ञातव्यमवशिष्यते । मत्तःपरतरंनान्यत्किंचिदस्तिधनंजय । मयिसर्वमिदंप्रोतंसूत्रेमणिगणाइव । राजविद्याराजगुह्यंपवित्रमिदमुत्तमं । प्रत्यक्षावगमंधर्म्यंसुसुखंकर्तुमव्ययं । अश्रद्दधानाःपुरुषाधर्मस्यास्यपरंतप । अप्राप्यमांनिवर्तंतेमृत्युसंसारवर्त्मनि । मयाततमिदंसर्वंजगदव्यक्तमूर्तिना । मत्स्थानिसर्वभूतानिनचाहंतेष्ववस्थितः । नचमत्स्थानिभूतानिपश्यमेयोगमैश्वरं ।

त्कथंत्वामवजानंतीत्यतआह ॥ **अवजानंतीति** ॥ मानुषींतनुंमूढानांमनुष्यवत्प्रतीतांनतुमनुष्यरूपामित्यर्थः । भूतंसर्वदावि द्यमानं । महत्देशतोऽव्याप्तं । ईश्वरंगुणतोनंतमितिभूतमहेश्वरं । भावंयाथार्थ्यं । काचतेषांगतिरित्यतआह ॥ **मोघाशाइ ति** ॥ मोघाशाःवृथाशाः । भगवद्द्वेषिभिराशासितंआमुष्मिकंनकिंचिदाप्यतइत्यर्थः । मोघकर्माणः । यज्ञादिकर्माणिचतेषांवृ थैवेत्यर्थः । मोघंज्ञानंतत्वविषयंयेषांतेतथोक्ताः । केनापिब्रह्मरुद्रादिभक्त्याद्युपायेननकश्चित्पुरुषार्थःआमुष्मिकस्तैराप्यतइति भावः । द्वेषकारणमाह ॥ **राक्षसीमिति** ॥ नेतरेद्विषंतीतिदर्शयितुंदेवानाह ॥ **महात्मानइति** ॥ अत्रावजानंतीत्यादिना निंदारूपस्यमहात्मानइतिस्तुतिरूपस्यचार्थवादस्योक्त्याचतात्पर्यंज्ञायते । भगवदुत्कर्षज्ञानस्यैवमोक्षसाधनत्वोक्तेस्तत्रैवतत्फलकै रागमैस्तात्पर्यवद्भिर्भवितव्यमितिभावेनाह ॥ **योमामिति** ॥ अनश्चेष्टयिताआदिश्चसर्वस्येत्यनादिःअजत्वेनसिद्धेरितरस्य । किं चज्ञानानामुत्तमंज्ञानंप्रवक्ष्यामीतिप्रतिज्ञाययज्ज्ञात्वेतिवेदार्थविचारकाणामेतज्ज्ञानादेवमोक्षइतिप्रशस्यममयोनिरितिप्रकृतिपति त्वाद्युत्कर्षाभिधानात्तत्रैवतात्पर्यंसर्वागमानामितिभावेनाह ॥ **परमिति** ॥ महद्ब्रह्मप्रकृतिः । एवंगीतावचनैर्भगवदुत्कर्षएवस

भा० । अवजानंतिमांमूढामानुषींतनुमाश्रितं । परंभावमजानंतोममभूतमहेश्वरं । मोघाशामोघकर्माणोमोघज्ञानाविचेतसः । राक्षसीमासुरींचैवप्रकृतिंमोहिनींश्रिताः । महात्मानस्तुमांपार्थदैवींप्रकृतिमाश्रिताः । भजंत्यनन्यमनसोज्ञात्वाभूतादिमव्ययं । योमामजमनादिंचवेत्तिलोकमहेश्वरं । असंमूढःसमर्त्येषुसर्वपापैःप्रमुच्यते । परंभूय प्रवक्ष्यामिज्ञानानांज्ञानमुत्तमं । यज्ज्ञात्वामुनयःसर्वेपरांसिद्धिमितोगताः । ममयोनिर्महद्ब्रह्मतस्मिन्गर्भंदधाम्यहं । संभवःसर्वभूतानांततोभवतिभारत ।

र्वागमानांमहातात्पर्यमवगम्यतइत्युक्तं । तत्रैवस्पष्टंवचनांतरमप्याह ॥ येमामित्यादिना ॥ नकेवलंज्ञानस्थैर्यंमोक्षहेतुरपितु भक्तिस्थैर्यमपीतिभावेनाह ॥ येत्विति ॥ तद्विपरीतज्ञानिनामनर्थमाह ॥ यइति ॥ परायणंप्राप्यं । निगमयति ॥ यश्चेति॥ तस्मादित्यादौयोज्यं । चशब्दःप्रकृतत्वानुसंधानार्थः । किंततइत्यतआह ॥ प्रमाणानीति ॥ तस्मादित्यादौग्राह्यं । प्रमा णानिप्रत्यक्षानुमानागमाः । तर्काइतिदूषणानुमानं । यस्मादेवंभगवद्गुणपूर्तिज्ञानमेवतत्प्रीतिद्वारामोक्षहेतुस्तस्मान्मोक्षप्रयोजन कान्यखिलानिप्रमाणानितर्काश्चैतत्पराएव । गुणपूर्णत्वज्ञानजननायैवप्रवृत्ताइत्यर्थः । तथाचश्रुतिः । नतादृशीप्रीतिरीड्यस्ये त्यादिका । इत्यादौअभिहितमित्यन्वयः । भगवदुत्कर्षज्ञानादेवमोक्षंवदंतीश्रुतिरपिविष्णोरुत्कर्षएवसर्वप्रमाणानांमहातात्पर्यंक थयतीतिभावेनाह ॥ तंभूतिरिति ॥ भूतिरितिपूर्णइति । बभूवुर्भूतिमंतः । सुप्तःसुप्तस्थोवायुः । देवःसर्वैर्भूमत्वेनोपास्यः । क स्मात् । भूमाभूमगुणोगुणराशितोयतःक्रतुवद्विशिष्टः । कथं । यस्माद्भूमैवोपासितःफलंविधत्ते नैवाभूमा तस्मादित्यर्थः । यस्ते मयस्त्वप्रधानोनभवति । त्वद्दूषकइतियावत् । तमसुन्वंतंसवनोपलक्षितंस्वकर्माकुर्वाणमतएवदुर्नशमाधिक्येनदुःखाख्यनाशयो

---

भा० । येमांज्ञात्वागुणैःपूर्णंनचलंतिततःक्वचित् । तैरेवाप्योनचैवान्यैरहंसर्वेश्वरेश्वरः । येतुमद्गुणसंपूर्तौज्ञानस्नेहस्थिरात्मकाः । तेषांहस्तगतोमोक्षोमामेवस्मरतांसदा । येमन्यंतेगुणापूर्तितमस्तेषांपरायणं । नचतेभ्योप्रियोमह्यंयश्चस्याद्गुणपूर्तिवित् । समामाप्नोतिनियतंनचतस्मात्प्रियोमम । प्रमाणान्यखिलान्येवतर्काश्चैतत्पराःसदा । एतद्विरूद्धंयन्मानंतर्कश्चाभासएवत्वित्यादौ । तंभूतिरितिदेवाउपासांचक्रिरेतेबभूवस्तस्माद्धाप्येतर्हिसुप्तोभूर्भूरित्येवप्रश्वसित्यभूतिरित्यसुरास्तेहपराबभूवुः । भूमैवदेवःपरमोह्युपास्योनैवाभूमाफलमेषांविधत्ते । तस्माद्भूमागुणतोवैविशिष्टोयथाक्रतुःकर्ममध्येविशिष्टः । असुन्वंतंसमंजहिदूणाशंयोनतेमयः । अस्मभ्यमस्यवेदनंदद्धिसूरिश्चिदोहते । सत्यःसोअस्यमहिमागृणेशवोयज्ञेषुविप्रराज्ये । एतावनस्यमहिमाअतोज्यायांश्चपूरुषः । तमेवंविद्वानमृतइहभवतिनान्यःपंथाअयनायविद्यते ।

ग्यं । समंतद्योग्यतानुसारेणेतियावत् । जहितमसिपातय । अस्मभ्यंत्वत्प्रधानकेभ्यः सुन्वद्भ्यश्चास्यपूर्वोक्तस्यत्वन्माहात्म्यस्य वेदनंदद्धिदेहि । कुतःयतःसूरिश्चित्ज्ञान्येव । ओहतेओहाक्त्यागेसंसारंत्यजति । मोक्षंप्राप्नोतीत्यर्थः । अस्यपरमेश्वरस्यसमहिमासत्यएव । शवोमोक्षसुखमुद्दिश्य । विप्रप्रधानकेषुयज्ञेषुतंगृणे । अस्यपुरुषस्यैतावान्पूर्वोक्तोमहिमानकेवलमेतावान् । किंतु पुरुषोतःपूर्वोक्तादपिमहिम्नोज्यायानित्युक्तमेवतमेवमितिपरामृश्यतज्ज्ञानस्यमोक्षसाधनत्वमुच्यते । ननुतत्रतत्रसृष्ट्याद्युक्तेः कथंसर्वागमानांविष्णूत्कर्षेतात्पर्यमित्यतआह ॥ **सृष्टिरिति** ॥ मोक्षौचेत्येतेकथ्यंतेवेदादौ । तत्रहेतुमाह ॥ **यस्येति** ॥ प्रवृत्ता इतिशेषः । चोयस्मादित्यर्थेच । इदमपिकुतइत्यतआह ॥ **ज्ञात्वेति** ॥ चोहेतौ । अद्यातमस्यअवगतिसाधनत्वादायवोवेदाः । अस्येंद्रस्यतंमहिमानं । पूर्वथापूर्वमिव । अद्यापिस्वयोग्यतानुसारेणस्तुवंतीत्यर्थः । विष्णूत्कर्षएवसर्वागमतात्पर्येचेद्धर्मादिसिद्धिर्नस्यादित्यतआह ॥ **महेति** ॥ ततोन्यत्र । विशेषतोमहातत्परतेतिवाविशेषतउत्कर्षइतिवान्वयः । अत्रैवसूत्रमप्याह ॥ **भूम्न इति** ॥ सर्वगुणेषुभूमगुणस्यज्यायस्त्वंमुख्यतोवेदप्रतिपाद्यत्वमितिभगवतःपूर्णत्वदृष्टिरेवाधिक्येनवेदादिसाध्येतिचसूत्रार्थोत्राभिमतः । यद्वा भाष्यदिशासूत्रद्वयेपिविष्णोःपूर्णत्वोपासनेनैवमोक्षोक्तेस्तदन्यथानुपपत्त्यासर्ववेदानांतत्रैवमहातात्पर्यमित्य

भा० । सृष्टिःस्थितिश्चसंहारोनियतिर्ज्ञानमावृतिः । बंधमोक्षौचकथ्यंतेयस्योत्कर्षप्रसिद्धये । यस्योत्कर्षप्रसिद्ध्यर्थंसर्वेवेदाश्चयुक्तयः । ज्ञात्वैवचयदुत्कर्षंमुच्यंतेसहरिःपरः । अद्यातमस्यमहिमानमायवोनुष्टुवंतिपूर्वथेत्यादिश्रुतिश्चविष्णोरुत्कर्षेमहातात्पर्यंकथयति । महातत्परताविष्णोरुत्कर्षेवांतराततः । अन्यत्रसर्ववाक्यानांयुक्तीनांचविशेषतइतिब्रह्मांडे । ॐभूम्नःक्रतुवज्ज्यायस्त्वंतथाचदर्शतिॐ । ब्रह्मदृष्टिरुत्कर्षादित्यादिनिर्णयात्मकंभगवद्वचनं ।



वसीयते । अद्वैतवादिनस्त्वाहुः । शरीरपराभेदएवसर्वागमानांमहातात्पर्यं । तत्वमसिपुरुषएवेदंसर्वमेकमेवाद्वितीयमहंब्रह्मास्मि । योसौसोहमित्यादावभेदस्यैवोक्तेः । अभ्यासफलादिनातत्परत्वावगतेश्च । एवंचैतदनुरोधेनान्यस्याप्यागमगस्यतत्रैवयथायथंतात्पर्यंवर्णनीयमिति । तन्निराकरोति ॥ **नचेति** ॥ नकेवलंप्रमाणाभावः । किंतुतद्विरोधश्चेत्याह ॥ **अतत्वमसीति** ॥ ननुतत्त्वमसीतिपदच्छेदेनाभेदाभ्यासएवायंकिंनस्यात् । नस्यात् । नचाभेदेकश्चिद्दृष्टांतउक्तइत्युक्तत्वात् । सूत्रविरोधंचाह ॥ **भेदेति** ॥ यदुक्तंपुरुषएवेदंसर्वमितिश्रुतिरभेदेमानमितितदसत् । श्रुत्यैवतस्यान्यथाव्याख्यातत्वादितिभावेनतांश्रुतिमुदाहरति ॥ **पुरुषइत्यादिना** ॥ पुरुषएवेदंसर्वमितिवाक्यंचयद्भूतंयच्चभव्यंतदिदंसर्वंपुरुषेणव्याप्तमित्यर्थः । सर्वाभेदएवार्थःकिंनस्यादित्यतउक्तं ॥ **नचेति** ॥ प्रतीतिरेववस्तूपगमेशरणं । प्रतीयतेचसर्वाभेदस्तत्कथंनभवतीत्यतःसामिथ्यादृष्टिरित्याह ॥ **आतृणादिति** ॥ ननुपुरुषएवेदंसर्वमित्यस्यपुरुषेणेदंसर्वंव्याप्तंइत्यपिव्याख्यानंनयुज्यते । सप्तसुप्रथमेतिसूत्रेणपुरुषइतिप्रथमायास्तृतीयार्थत्वेपिव्याप्तशब्दाश्रवणादित्यतःश्रुतिःस्वयमेवाह ॥ **दधीति** ॥ दधिसक्तवोघृतौदनमित्यादौवाक्येयथासिक्तशब्दाभावेपिदधिसिक्ताःसक्तवोघृतसिक्तमोदनमितिसिक्तशब्दोवगम्यते तथाप्रकृतेपिव्याप्तशब्दाभावेपिव्याप्तशब्दोवगम्यते

भा० । नचशारीरपराभेदेतात्पर्यमित्यत्रकिंचिन्मानं । अतत्वमसीतिभेदस्यनवकृत्वोभ्यासाच्च । ॐभेदव्यपदेशात्ॐ । ॐभेदव्यपदेशाच्चान्यःॐ । ॐअनुपपत्तेस्तुनशारीरः ॐ। ॐशारीरश्चोभयेपिहिभेदेनैनमधीयतेॐ । ॐपृथगुपदेशादित्यादिनासर्वत्रभेदस्यैवभगवतानिर्णीतत्वाच्च । पुरुषएवेदंसर्वमितिचपुरुषेणेदंसर्वंव्याप्तंयद्भूतंयच्चभव्यं । नचभगवान्गोत्वेनमनुष्यत्वेनवाभवति । आतृणादाकरीषात्सर्वंभगवानितिमिथ्यादृष्टिरेषा । दधिसक्तवोघृतौदनमित्यादौव्याप्तशब्दाभावेपिव्याप्तशब्दोऽवगम्यते । दधिसिक्ताःसक्तवोघृतसिक्तमोदनमितिश्रुतिः ।

योग्यताबलादित्यर्थः । अन्येतुननुव्याप्तशब्दाभावात्पुरुषएवेदंसर्वमित्यस्यपुरुषेणव्याप्तमितिकथंव्याख्यानमित्यतस्तद्दृष्टांतो
त्त्याघटयति ॥ दधिसक्तुवइति ॥ व्याप्तशब्दोवगम्यतेतदर्थोवगम्यते । तथाप्रकृतेपीतिभावः । उदाहृतोदाहरणेव्याप्तश
ब्दाभावेपितदर्थोवगम्यतइत्युक्तं । तज्ज्ञापिकांश्रुतिंपठति । दधीतिइत्याहुः । प्रकारांतरेणपुरुषएवेतिवाक्यव्याख्यानरूपांश्रुतिं
पठति ॥ पुरुषइति ॥ इतिवाक्यंनेनीयतइत्यर्थकमित्यर्थः । नेनीयतेपुनःपुनर्भृशंवानियम्यते । यद्वानेनीयतेविशेषेणप्राप्यते
व्याप्यतइत्यर्थः । णीञ्प्रापणइतिधातोः । एवंचपूर्वोक्तदार्ढ्यायश्रुत्यंतरमिदं । एवंमहातात्पर्यविरोधश्चाभेदइत्युक्तमुपपाद्योप
संहरति ॥ अतइति ॥ ऐक्येतात्पर्यमित्यत्रप्रमाणाभावात्स्वपक्षेप्रमाणसद्भावाच्चेत्यर्थः । यद्यपिवक्ष्यमाणरीत्यावक्तव्यशेषो
स्त्येव । तथापियदैक्येसर्वागमतात्पर्यसाधकत्वेनोदाहृतंवाक्यं तदुक्तरीत्याभगवदुत्कर्षसाधकमेव । अतस्तेनैवसर्वप्रमाणानांभ
गवदुत्कर्षएवमहातात्पर्यावगतेः शारीरपराभेदंवदतांतद्विरोधः । एवंचभवत्प्रयुक्तापिशाचीभवंतमेवानुधावतीतिसूचयितुमत्राय
मुपसंहारः । स्यादेवंयदिशारीरपराभेदेभगवदुत्कर्षविरोधीभवेत् । सएवकथमित्यतस्तत्प्रकारंप्रमाणेनैवदर्शयति ॥ अज्ञानेति॥
सर्वदाज्ञानसुखरूपंविष्णुमहमस्मीतियेविदुस्तेविष्णोरज्ञानदुःखमंतारः ।कुतः शरीरिणोऽद्वैतज्ञानिनोयावज्ज्ञानंतावदज्ञानदुःखसं
बंधात् । यतएवंततस्तेनीचतांविदुरितियोजना । नीचताचोत्कर्षविरोधिनीतिप्रसिद्धमितिभावः । तज्ज्ञानस्यमिथ्याज्ञानत्वख्या

भा० । पुरुषएवेदंसर्वंयद्भूतंयच्चभव्यमितिपुरुषेणह्यीदंसर्वंनेनीयतइतिच । अतःसर्वप्रमाणानांभगवदुत्कर्षएवमहातात्पर्याच्छारीराभेदंवदतांमहातात्पर्यविरोधः । अज्ञानदुः
खसंबंधाद्यावज्ज्ञानंशरीरिणः । सर्वदाज्ञानकंविष्णुमहमस्मीतियेदुः । अज्ञानदुःखमंतारस्ततस्तेनीचतांविदुः ।

पनायतद्भवमनर्थमाह ॥ विष्णोरिति ॥ हरणमत्रान्यथाज्ञानमेव। ननुदुःखाद्यनर्थस्यपापफलत्वश्रवणात्कथंविष्णूत्कर्षहरणफलत्वमित्यतआह ॥ यइति ॥ सर्वमपिपापंकर्मकृतमेवेत्यर्थः । तदेवाह ॥ चोरेणेति ॥ चोरत्वस्यैवविवरणमीशापहारिणेति । अभेदेखल्वेकशेषःस्यात् । तत्रजीवावशेषेध्यातेस्फुटंपरमात्मापहारित्वं । जीवभावप्रविलयेप्यैश्वर्यापलापात्परमात्मापहारित्वमेव । ऐक्यज्ञानिनोब्रह्मस्तेनत्वंवचनांतरेणाप्याह ॥ ऐकात्म्यमिति ॥ यदैकात्म्यंसर्वात्मनांब्रह्मैक्यंनामइदमनैपुणाःअविद्यमाननैपुणाःकेचिद्ब्रूयुः । तेषांतथावचनेकिंमूलमित्यतउक्तं ॥ शास्त्रेति ॥ अहंब्रह्मास्मीत्यादिशास्त्राणांतत्वमभिप्रेतार्थमविज्ञायब्रूयुः । कथमज्ञानमात्रेणतदुक्तिरित्यतउक्तं ॥ तथेति ॥ ऐक्यप्रतिपादकवादसदृशोयोवादः एकविभक्तित्वादिरूपःसःबलंएषांतेतथोक्ताः । अहंब्रह्मास्मीत्यादिवाक्यानांतात्पर्यमविज्ञायापाततःप्रतीतएवार्थेभ्रांताइत्यर्थः । सर्वेषामविद्यमानंशास्त्रतत्वाज्ञानादिकंतेषामेवकिंनिमित्तमित्यतउक्तं ॥ कामेति ॥ कामक्रोधादीनांमिथ्याज्ञानहेतुत्वमिच्छाद्वेषसमुत्थेनद्वंद्वमोहेनेतिस्मृतिसिद्धं । एवंऐक्यंमन्यमानाःब्रह्मस्तेनाः । कामादीनामागंतुकत्वान्मूलकारणमाह ॥ निरानंदाइत्यादिना ॥ एतेनाधमानांस्वरूपयोग्यतांलक्षयति । ननुद्वासुपर्णेत्यादिशास्त्रेषुविरोधिषुसत्सुकथमैक्यंब्रूयुरित्यतआह ॥ याथातथ्यमिति ॥ भेदपराणांशास्त्राणांयाथार्थ्यमविज्ञायशास्त्रदस्यवस्तान्यतत्वावेदकानीतिमन्यमानाइत्यर्थः । तथापिसर्वज्ञत्वाल्पज्ञत्वादिविरुद्धधर्माधिकरण

---

भा० । विष्णोरुत्कर्षहर्तॄणांनैवतेषांमुखंक्वचित् । योन्यथासंतमीशेशंस्वरूपंप्रतिपद्यते । किंतेननकृतंपापंचोरेणेशापहारिणा । ऐकात्म्यंनामयदिदंकेचिद्ब्रूयुरनैपुणाः । शास्त्रतत्वमविज्ञायतथावादबलाजनाः । कामक्रोधाभिभूतत्वादहंकारवशंगताः । ब्रह्मस्तेनानिरानंदाअपक्वमनसोशिवाः । याथातथ्यमविज्ञायशास्त्राणांशास्त्रदस्यवः ।

त्वानुमानविरुद्धमैक्यंकथंब्रूयुरित्यतआह ॥ **वैगुण्यमेवेति** ॥ जीवब्रह्मणोस्तत्वतोनिर्गुणत्वमेवपश्यंतोगुणान्सार्वज्ञादिगुणान्नविनियुंजते तत्स्वरूपेणनयोजयंति । एवंभूतानांफलमाह ॥ **तेषामिति** ॥ तमोगुणप्रचुरशरीराणां । तमोनरकविशेषः । परायणंप्राप्यं । नन्वहंब्रह्मास्मीत्यादिनास्फुटमैक्यंप्रतीयते । अतस्तद्बलाद्भेदशास्त्रादेरतत्वावेदकत्वकल्पनंयुक्तमेवेत्यत आह ॥ **यतइति** ॥ स्वरूपतःपरिमाणभेदतो जातितोजीवत्वादिजातिभेदतः श्रुतितःद्वासुपर्णेत्यादिश्रुतेः । अर्थतःप्रयोजन भावाभावाभ्यां यतःसभगवानन्यःप्रतीयते अतःसोस्मीतिसंबंधोन्वयो संहितोऽयोग्यः कथमेवस्यादित्यर्थः । अहंब्रह्मास्मीत्यादिवाक्यानामैक्यपरत्वेनिश्चितेन्येषांअतत्वावेदकत्वादिककल्पनंयुक्तंस्यात् । नचैवं । अनुमानागमविरोधेनप्रतीतान्वययोग्यताविरहात् । अन्यथान्योन्याश्रयत्वादितिभावः । ननुशारीरपराभेदेतात्पर्यमित्यत्रतत्वमसीत्यस्यपुरुषएवेदमित्यस्यचोक्तरीत्याप्रमाणत्वासंभवेपि एकमेवाद्वितीयं अहंब्रह्मास्मि योसौसोहमित्यादिश्रुतिरेवमानंस्यात् । तत्राभेदस्यस्फुटमुक्तत्वात् । उपक्रमादिबलेनतत्रैवतात्पर्यावगतेश्चेतिचेन्न । एकमेवेतिवाक्यस्यापिभगवदुत्कर्षपरतयैवव्याख्यातत्वेनत्वत्प्रतिकूलत्वात् । मोक्षधर्मवचनेपितथाव्याख्यातमितिभावेनतदुदाहरति ॥ **बहवइति** ॥ हेब्रह्मन्पुरुषाःकिंभेदवाक्याद्बहवोंगीकार्याः । उतैकत्वोक्तेरेकएव । बहुत्वपक्षेपिसर्वेषांसाम्यासंभवादेकःश्रेष्ठोवाच्यः । सकस्त्वंवक्तुमर्हतीत्यर्थः । तत्रपुरुषैक्यपक्षं

भा० । वैगुण्यमेवपश्यंतिनगुणानिनियुंजते । तेषांतमःशरीराणांतमएवपरायणं । यतःस्वरूपतश्चान्योजातितःश्रुतितोर्थतः । कथमस्मिसइत्येवसंबंधःस्यादसंहितइति । बहवःपुरुषाब्रह्मन्नुताहोएकएवतु । कोह्यत्रपुरुषश्रेष्ठस्तंभवान्वक्तुमर्हति ।



दूषयति ॥ **नैतदिति** ॥ विद्वांसः । एतदित्यस्यविवरणमेकंपुरुषमिति । किंतुबहवएव । तर्ह्येकमेवाद्वितीयमित्यादिश्रुतिविरोधइत्यतोविशिष्टैक्यार्थतयातांव्याकुर्वन्कोहीतिद्वितीयप्रश्नोत्तरमाह ॥ **बहूनामिति** ॥ मोक्षधर्मवचनाच्चसर्वप्रमाणानांभगवदुत्कर्षएवमहातात्पर्यमितिसंबंधः । इदानींअहंब्रह्मास्मियोसौसोहंइतिवाक्यमपिपरप्रातिकूल्यमेवाचरतीतिभावेनतदर्थनिश्चायकंप्रमाणमाह ॥ **हंनामेति** ॥ हंनभवतीत्यहमित्यहंशब्दंव्याख्यायास्मिशब्दंव्याख्यातुंतत्स्थंस्मीतिशब्दंव्याचष्टे ॥ **स्मीतीति** ॥ स्मीतिशब्देनजीवःसमुद्दिष्टः । कथंस्मीत्यल्पमुच्यते । कुतः । सुमितत्वतः । जीवोप्यल्पएवेतिभावः । इदानीमस्मीत्यस्यार्थमाह ॥ **पूर्णत्वादिति** ॥ नञोविरुद्धार्थत्वादितिभावः । तर्हिब्रह्मशब्दोव्यर्थःस्यादित्यतआह ॥ **पूर्णेति** ॥ ब्रह्मत्वोक्त्याकथमयमर्थोलब्धइत्यतस्तमेवहेतुंविवृणोति ॥ **बृहत्पूर्णइति** ॥ तथाचास्मीत्युक्तंपूर्णत्वंनौपचारिकमितिभावेनब्रह्मत्वंतद्विशेषणमुक्तमितिभावः । अनेन अहं जीवभिन्नत्वेनाहंनामाविष्णुःब्रह्मास्मि बृहत्पूर्णइतिवाक्यंव्याख्यातंभवति । योसौसोहमितिवाक्यमप्यसावहमित्यनयोरर्थोक्तिमात्रेणकृतव्याख्यानमितिभावेनतयोरर्थभेदमाह ॥ **असाविति** ॥ एवंचसूर्यजीवांतर्यामिणोरैक्यपरंतद्वाक्यमितिभावः । ब्रह्मांडपुराणवचनाच्चसर्वप्रमाणानांभगवदुत्कर्षएवमहातात्पर्यमवगम्यतइतिसंबधः । किंचनतत्वम

भा० । वैशंपायनउवाच । नैतदिच्छतिपुरुषमेकंकुरुकुलोद्वह । बहूनांपुरुषाणांहियथैकायोनिरुच्यते । तथातंपुरुषंविश्वमाख्यास्यामिगुणाधिकमितिमोक्षधर्मवनाच । हंनामहन्यमानत्वाज्जीवस्यसमुदाहृतं । जीवादन्योयतोविष्णुरहंनामाततःस्मृतः । स्मीतिजीवःसमुद्दिष्टःस्मीत्यल्पंसुमितत्वतः । पूर्णत्वादस्मिनामासौपूर्णपूर्णत्वहेतुतः । ब्रह्मास्मीत्युच्यतेविष्णुर्बृहत्पूर्णोयतःसदा । असौसूर्यगतोविष्णुर्दूरस्थत्वात्प्रकीर्तितः । अहंनामाजीवगतोनित्याहेयत्वहेतुतइतिब्रह्मांडे ।

 

सीत्यादिवाक्यानामैक्यार्थत्वंवक्तुंयुक्तं । भेदवाक्यविरोधात् । नचवैपरीत्यंशंकनीयं । भेदवाक्यानांबहुत्वान्निरवकाशत्वाच्च । ऐक्यवाक्यस्यचाल्पत्वादुक्तरीत्यासावकाशत्वाच्च । नचभेदवाक्यमपिव्यावहारिकभेदपरमितिवाच्यं । मोक्षेपिभेदश्रुतेरितिभावेनमोक्षेपिभेदपराणिस्पष्टानिबहूनिवाक्यानिपठति ॥ परमित्यादिना ॥ श्रुतिस्मृतिषुसतात्पर्यंमुक्तानांविष्णोर्भेदस्यैवोक्तेस्तद्विरोधेन नतत्वमसीत्यादिवाक्यानामैक्यार्थत्वं । किंतूक्तार्थत्वमेवेत्यर्थः । अत्रसमीपप्राप्त्यादिनाभेदोवगम्यते । अस्माच्छरीरात्समुत्थायस्वेनरूपेणाभिनिष्पद्यतइत्युक्त्यामोक्षपरत्वंच । सएकधेतिमुक्तस्यभेदेनावस्थानमुच्यते । नचपरपक्षेतद्युज्यते । अस्यमोक्षपरत्वंवक्ष्यति । गुहायांहृदये । व्योमन्व्योम्नि । ब्रह्मणासहेतिभेदोक्तिः । ब्रह्मविदाप्नोतिपरमित्युक्तब्रह्मप्राप्तिस्वरूपकथनपरत्वान्मुक्तपरं । आनंदमयस्यपरब्रह्मत्वंत्वन्यत्रनिर्णीतं । उपसंक्रम्येतिसमीपप्राप्त्युक्त्याभेदोक्तिः । अस्माल्लोकात्प्रेत्येत्युपक्रमान्मुक्तपरं । आत्मानंपरमात्मानं । लोकंसर्वाश्रयं । उपास्तेजानाति । अस्यज्ञानिनःकर्मनक्षीयते । सःमुक्तोयद्यत्कामयतेतत्तत्परमात्मप्रसादद्वाराकर्मसृजति । अत्रपरमात्मप्रसादायत्तभोगोक्त्याभेदः । मुक्तपरत्वज्ञापनायसयइत्यादिपूर्ववाक्यमुदाहृतं । नह्यमुक्तस्यकर्मोक्षयोस्ति । तेनपुनर्महात्मानोदेवाःस्वाधिकारावसाने । नाकंपूर्णसुखात्मकंमोक्षंसचंतअवाप्नुवन् । यत्रमोक्षे । पूर्वकल्पेमुक्ताःसाध्यादिदेवाःसंतीत्यर्थः । परमंसाम्यमुपैतीतिभेदोक्तिः । पुण्यमनिष्टं । तादृगेवभवति । नतुतदेव । एवंमुनेर्विजा

---

भा० । परंज्योतिरूपंसंपद्यस्वेनरूपेणाभिनिष्पद्यतेसउत्तमःपुरुषः । सतत्रपर्येतिजक्षन्क्रीडन्रममाणःस्त्रीभिर्वायानैर्वा । सएकधाभवतित्रिधाभवतिपंचधासप्तधा । योवेदनिहितंगुहायांपरमेव्योमन् । सोश्नुतेसर्वान्कामान्त्सहब्रह्मणाविपश्चिता । एतमानंदमयमात्मानमुपसंक्रम्य । इमाँल्लोकान्कामान्नीकामरूप्यनुसंचरन् । एतत्सामगायन्नास्ते । सयआत्मानमेवलोकमुपास्तेनहास्यकर्मक्षीयतेऽस्माद्ध्येवात्मनोयद्यत्कामयतेतत्तत्सृजते । तेहनाकंमहिमानःसचंतयत्रपूर्वेसाध्यास्संतिदेवाः । तदाविद्वान्पुण्यपापेविधूयनिरंजनःपरमंसाम्यमुपैति । यथोदकंशुद्धेशुद्धमासिक्तंतादृगेवभवति । नानात्वेनाभिसंबद्धास्तदातत्कालभाविना ।

नतआत्माभवतिगोतमेतिवाक्यशेषः । एवंविजानतांमुनीनामात्माधिपतिःहिरण्यगर्भोपिमुक्तःपरमात्मानंप्राप्यताद्दगेवभवतिकि मुतान्यइत्यर्थः । तदामोक्षेपुरुषाःनानात्वेनभेदेनाभिसंबद्धाः । नायंभूतपूर्वगत्याव्यवहारइत्याह ॥ तत्कालभाविनेति ॥ मु क्तिकालेपिविद्यमानेनेत्यर्थः । मुक्तज्ञापकमाह ॥ प्रकृताविति ॥ प्रकृतिनिमित्तकेंद्रियरहिताइत्यर्थः। स्वात्मन्येवस्थिताःस्वस्व रूपएवरताः । कुतः । प्रकृतौकरणातीताः । प्रकृतिसंबंधस्यैवाभावादित्याह ॥ संयोगइति ॥ तत्रहेतुस्तत्वदर्शनादिति । प्रकृ तिपुरुषविवेकज्ञानादित्यर्थः । ननुदृष्टतत्वापिप्रकृतिःपुनर्मुक्तबंधनायप्रवर्ततेकिं नेत्याह । प्रतीतेति ॥ तर्हिंनिर्व्यापाराकिं ने त्युक्तं ॥ पुरुषेति ॥ पुरुषेभ्यःप्रकृतमुक्तेभ्योऽन्येषांसंसारिणांबहुत्वेनतत्रैवलब्धव्यापारात्रनवर्ततइत्यर्थः । प्रलयकालेमुक्तानां प्रकृतिसंयोगाभावेपिसृष्टिकालेस्यादित्यतउक्तं ॥ प्रवर्ततीति ॥ सर्गेप्रवर्ततिप्रवर्तमानेसत्यपितेषांमुक्तानांसानप्रवर्ततइत्यर्थः । व्यत्ययोबहुलमितिपरस्मैपदं । साधर्म्यमितिभेदोक्तिः । वाक्यशेषान्मुक्तपरं । यत्रविष्णुलोके । मायाप्रकृतिःनेतिमुक्तत्वज्ञाप कं । अपरेसंसारिणोरागादयोवानेतिकिमुवक्तव्यं । सुरासुरार्चिताःहरेरनुव्रताःयत्रसंतीतिभेदोक्तिः । असुराःसाधवोपिसंति । एवंस्थानांतरस्थवाक्यविरोधान्नतत्वमसीत्यादिवाक्यमैक्यपरमित्युक्तमिदानीमेतत्प्रकरणगतवाक्यविरोधाच्चनैवमित्याह ॥ स

भा० । प्रकृतौकरणातीताःस्वात्मन्येवव्यवस्थिताः । संयोगःप्रकृतेनैषांमुक्तानांतत्वदर्शनात् । पुरुषान्यबहुत्वेनप्रतीतानप्रवर्तते । प्रवर्ततिपुनःसर्गेतेषांसानप्रवर्तते । इदंज्ञानमु पाश्रित्यममसाधर्म्यमागताः । सर्गेपिनोपजायंतेप्रलयेनव्यथंतिच । नयत्रमायाकिमुतापरेहरेरनुव्रतायत्रसुरासुरार्चिताइत्यादिश्रुतिस्मृतिषुसतात्पर्यंमुक्तानांविष्णोर्भेदस्यैवोक्तेः।

न्मूलाइति ॥ सन्मूलाइत्यस्यभेदपरत्वंप्रागुक्तसमाख्यावाक्यादवगम्यते । सतीत्यादौभेदःस्फुटएव । नहिगृहेप्रविष्टस्यगृहा
दागतस्यचतदैक्यमितिभावः । परस्परभिन्ननानावृक्षरसनदीसमुद्रदृष्टांतोक्तिरेवतात्पर्यज्ञापिकातोभेदएवह्यत्रप्रतिपादितः ।
तथाचतद्विरुद्धमैक्यंतत्वमसीत्यादौकथमुच्येतेतिभावः । ननुनानावृक्षरसानामेकतामित्यैक्यमेवोक्तमितिचेत् । न । एकतामि
त्यस्यमिश्रतामित्यर्थोपपत्तेः । नहिनानावृक्षरसाअन्योन्यभेदपरित्यागेनप्राक्सिद्धेनमधुनैक्यमापद्यंते । किंतुतंतवइवपटमन्योन्यं
भिन्नाएवप्रागसिद्धंमधूत्पादयंति । तथापिनदीसमुद्रदृष्टांतेससमुद्रएवभवतीतिनदीनांसमुद्रेणैक्यमुच्यतइतिचेत् । न । तथासति
वृद्धिदर्शनानुपत्तेः । अस्तिचेषत्समुद्रेपिद्धारि । महत्त्वादन्यत्रादृष्टि रितिभावेनताःसमुद्रादित्यादिकंयथावद्व्याचष्टे ॥ ताइति ॥
समुद्रान्नियतजलराशिरूपात् । खातरूपाद्वादेवतारूपाद्वेत्यर्थः । आगत्येतिशेषोक्तिः । समुद्रमपियंतीत्यस्यार्थःसमुद्रंप्रविशं
तीति । श्रौतैवकारान्वयोभविष्यति । एतावतानदीनांसमुद्रेणैक्यंनमंतव्यमित्याह ॥ सइति ॥ ससमुद्रःसमुद्रएवभवति ।
अवधारणव्यावृत्तिमाह ॥ नेति ॥ यतोवधारणंततोन्यत्रतत्फलंइत्यतःएतल्लभ्यते । एवंसमुद्रएवभवतीतिवाक्यंयथाश्रुतान्व
येनसमुद्रस्यनदीभावनिषेधपरत्वेनव्याख्यायनदीनांसमुद्रभावनिषेधपरत्वेनापिव्याख्यातुमवधारणान्वयंतावदाह ॥ सएवेति ॥
यथाश्रुतैवशब्दपरित्यागेनसमुद्रमेवापियंतीत्युक्तैवशब्दस्यान्वयकथनमिदं । अन्यथातद्वैयर्थ्यापत्तेः । अवधारणद्वयानुरोधेनैव

भा० । सन्मूलाःसोम्येमाःसर्वाःप्रजाःसदायतनाःसत्प्रतिष्ठाःसतिसंपद्यनविदुःसतआगम्यनविदुरित्यादौभेदएवह्यत्रसतातात्पर्येप्रतिपादितः । तानद्यःसमुद्रादागत्यसमुद्रंप्रविशं
तिससमुद्रएवभवतिननदीभावंप्राप्नोति । सएवचसमुद्रोभवतिसमुद्रएवसमुद्रोभवतिननद्यइतिभेदस्यैवावधारणंक्रियते ।



हिससमुद्रइतिवाक्यंद्वेधाव्याख्यायतइतिमंतव्यं । चशब्दोव्याख्यानांतरत्वद्योतनार्थः । तच्छब्दपरामृश्यंदर्शयंस्तद्व्याचष्टे ॥
समुद्रएवेति ॥ अवधारणव्यावृत्यमाह ॥ नेति ॥ समुद्रभावंप्राप्नुवंतीतिशेषः । इतिभेदस्यैवावधारणंक्रियते । तथाचतदृ
ष्टांतेनसतआगम्येत्यादिदार्ष्टांतिकवाक्येपिभेदएवप्रतिपाद्यतइतिभावः । किंचचोरापहार्यदृष्टांतेह्यैक्यज्ञानिनोनर्थःफलत्वेनक
थ्यते । तेनैक्याभावोवगम्यते । निंदायाःप्रतिषेधेतात्पर्यात् । तत्कथंतद्विरुद्धमैक्यंतत्वमसीत्यादौप्रतिपाद्येत । स्यादेतत्यदि
पुरुषंसोमेत्यादिकमुक्ताभिप्रायंस्यात् । नचैवं किन्नाम । यदिवागादिलयक्रमेणमरिष्यतोमुमुक्षतश्चतुल्यासत्संपत्तिस्तत्रविद्वान्
सत्संपन्नोनावर्तते । आवर्ततेत्वविद्वानित्यत्रकिंकारणमितिजिज्ञासायांसत्यब्रह्मात्मत्वाभिसंधितत्त्यागौहितत्रकारणमितिप्रदर्शना
र्थंपुरुषंसोम्येत्यादिप्रवृत्तं । एवंचसत्यब्रह्मात्मत्वाभिसंधित्यागवान् भेदज्ञान्येवअपहार्षीत्स्तेयमकार्षीदितिदृष्टांतपूर्वकमुच्यतइ
तिभेदज्ञानिनएवतदृष्टांतेनानर्थःफलत्वेनकथ्यतइत्यतःपरव्याख्यानंदूषयति ॥ नचेति ॥ त्वन्मतेजीवस्यब्रह्मभावोहिविद्यमान
एव । अन्यथातदज्ञानेनानर्थोक्त्यनुपपत्तेः । तथाचविद्यमानस्यस्वकीयस्यब्रह्मभावस्याज्ञस्तदभिसंधित्यागवानितियावत् । नाप
हर्त्रुपमोभवतीत्यर्थः । कस्तर्ह्यपहर्त्रुपमइतिपृच्छति ॥ किंत्विति ॥ उत्तरमाह ॥ अविद्यमानेति ॥ स्वस्येतिपूरणीयं । स्वस्या
विद्यमानोब्रह्मण्येवविद्यमानोयोब्रह्मभावस्तंस्वस्मिन्नभिमंतैवापहर्त्रुपमोभवतीत्यर्थः । स्वकीयब्रह्मभावाभिसंधित्यागवान्नापहर्त्रु
पमइतिकुतइतिचेत् । लोकानुसारादित्याह ॥ नहीति ॥ लोकेइतिशेषः । किंतुमंदोवाविरक्तोवाभवति । तथाचभेदज्ञानिनो

भा० । नचस्वकीयस्यब्रह्मभावस्याज्ञोपहर्ताभवति । किंत्वविद्यमानब्रह्मभावाभिमंतैवापहर्ताभवति । नहिस्वकीयवित्तपरित्यागयपहर्ताभवति ।

नापहर्त्रुपमत्वमितिभावः । कस्तर्ह्यपहर्तेतिपृच्छति ॥ किंत्विति ॥ उत्तरमाह ॥ परस्वेति ॥ अस्तुपरस्वापहर्तैवापहर्ता किंतत इत्यतआह ॥ तस्मादिति ॥ लोकानुसारादित्यर्थः । ततश्चाभेदज्ञानिनएवतद्दृष्टांतेनानर्थःफलत्वेनकथ्यतइतितद्विरोधान्नत त्वमस्यादिवाक्यानामैक्यार्थत्वमितिभावः । नन्वेतदयुक्तं । लोकेइदंवित्तंपरकीयमेवमदीयंनभवत्येवेतिजानतोवंचनयातत्स्वा त्मीयंकुर्वतःस्तैन्यं । पश्यतोपहारंकुर्वतोह्यपहारः । नचैक्यज्ञानिनापरकीयंब्रह्मत्वंवंचनयाबलाद्वास्वकीयंकर्तुंशक्यं । तत्कथमैक्य ज्ञानीस्तेनोपहर्ताचेत्यतआह ॥ अदुःखित्वेति ॥ अनर्थातिशयद्योतनायमहातस्करत्वोपपादनार्थमदुःखित्वेत्यादिबहुविशेषणं । ज्ञात्वैवेत्यंतस्यब्रह्मत्वंपरकीयमेवनस्वकीयमितिज्ञात्वेत्यर्थः । ज्ञात्वैवतद्भावाभिमतेरित्यनेनस्ववंचनंलभ्यते । स्वगतदुःखित्वापू र्णत्वाद्यनुभववंचनात् । स्तैन्यमैक्यज्ञानिनः । परकीयाभिमतेःपरकीयस्यब्रह्मभावस्यस्वात्मन्यभिमतेरुपपादनात्पश्यतोपहर णादपहारः । तथाभिमानएवात्रविवक्षितइतिभावः । नन्वेवंतर्हिकथमैक्यज्ञानीस्तेनोपहर्तावा । नहिपरकीयंवित्तंस्वात्मीयंमन्य मानस्तेनोपहर्तावेतिचेन्न । ऐक्यज्ञानिनोहिस्तेनापहर्त्रुपमत्वमुच्यते । नहिदृष्टांतदार्ष्टांतिकयोःसर्वसाम्यं । अतएवोक्तंदृष्टांतपू र्वकमुच्यतइति । ब्रह्मणोऽभेदवेत्तापरकीयस्वभावाभिमतेरपहर्ता । स्वानुभववंचनात्स्तेनश्च । अतएवतस्यानर्थातिशयइत्यत्रस्मृ तिंचाह ॥ परेति ॥ अत्रकश्चित् । यदुक्तंस्तेनापहर्तृदृष्टांतेनैक्यज्ञानिनोनर्थःकथ्यतइति तदयुक्तं । स्यादेतदेवंकथंचित् । य

---

भा० । किंतुपरस्वहर्तैव । तस्मादविद्यमानब्रह्मभावाभिमंतैवापहार्षीत्स्तेयमकार्षीदितिदृष्टांतपूर्वकमुच्यते । अदुःखित्वपूर्णज्ञानानंदस्वातंत्र्यादिब्रह्मस्वभावाननुभवन्स्वात्म नोपिज्ञात्वैवतद्भावाभिमतेःस्तैन्यं । परकीयाभिमतेरपहारः । परस्वभावाभिमतेरपहर्तास्ववंचनात् । स्तेनश्चाभेदवेत्तातुब्रह्मणाहन्यतेसदेतितत्वविवेके ।

द्यत्रदृष्टांतवाक्येथहन्यतेथमुच्यतइत्युक्तयोर्हतिमुक्तयोरपहारतदभावकारणत्वंविवक्षितंस्यात् । नचैवं । ज्ञापकाभावात् । किंना मस्तेयकर्त्रकर्त्रोर्मध्येयःशपथपुरस्सरंविचारितेपिसुदृढःसमुच्यते । यस्त्वदृढःसहन्यतइतिमुक्तिहननयोर्दार्ढ्यादार्ढ्यमात्रनिमित्त कत्वमेव । एवंचतद्दृष्टांतेनब्रह्मात्मत्वेसाक्षेपंविचारितेपिसुदृढश्चेन्मुच्यतेऽदृढश्चेद्धन्यतइत्यर्थोलभ्यतइति । तदेतद्दूषयति ॥ नचेति ॥ दार्ढ्यमात्रेदार्ढ्यमात्रस्यमुक्तिकारणत्वइत्यर्थः । दार्ढ्यस्यमुक्तिकारणत्वंसिद्धांतेप्यंगीकृतमेव । यथोक्तं । यदाकुर्यात् दार्ढ्यंशपथपूर्वकमिति । अतोमात्रशब्दः । एवमदार्ढ्यमात्रस्यहतिकारणत्वेइत्यपिग्राह्यं । कुतोनेत्यतोहतिमुक्त्योरपहारानपहार हेतुकत्वेज्ञापकमाह ॥ सइति ॥ परोक्तार्थेबाधकमाह ॥ अन्यथेति ॥ मुक्तिहननयोर्दार्ढ्यादार्ढ्यमात्रहेतुकत्वेसयदिदृढोभव त्यथमुच्यते । सयद्यदृढोभवत्यथहन्यतइत्येववक्तव्यमित्यर्थः । संकरस्त्वाह ॥ अत्रदृष्टांतवाक्येसत्यानृताभिसंधिमात्रंविवक्षि तं । तप्तपरशुहस्ततलसंयोगस्यतुल्यत्वेपिस्तेयकर्त्रकर्त्रोरनृताभिसंधोदह्यते । नतुसत्याभिसंधइति । एवंसत्यब्रह्मात्मत्वाभिसंधो विद्वान्सत्संपद्यनपुनरावर्तते । अविद्वांस्तुविकारानृताभिसंधःपुनरावर्ततइति । तदिदंदूषयति ॥ नचेति ॥ सत्यानृताभिसंधि मात्रमिहविवक्षितमितिचनेत्यर्थः । कुतोनेत्यतआह ॥ तदेति ॥ यदिसत्यानृताभिसंधिमात्रमिहविवक्षितंस्यात्तदासत्याभिसं धइत्यादिनामुच्यतइत्यंतेनसोनृताभिसंधइत्यादिनाहन्यतइत्यंतेनसत्यानृतवाग्दृष्टांतेनैवपूर्तेः। सयदितस्यकर्ताभवतीत्याद्यपहारदृ

भा० । नचदार्ढ्यमात्रेदृष्टांतोयं । सयदितस्यकर्ताभवतिसयदितस्यनकर्ताभवतीतिहतिमुक्त्योरपहारानपहारैकहेतुत्वश्रुतेः । अन्यथायदिदृढोभवतियद्यदृढोभवतीत्युच्येत । नचसत्यासत्यमात्रं । तदासत्यानृतवाग्दृष्टांतेनपूर्तेरपहारदृष्टांतोनस्यात् ।

ष्टांतोनस्यादित्यर्थः । अपव्याख्यानदूषणस्योपयोगंदर्शयन्स्वमतेखंडतात्पर्यमुपसंहरति ॥ **तस्मादिति** ॥ परव्याख्यानस्या
योगादित्यर्थः । अथहन्यतइत्यंतेनस्तेनापहर्तृदृष्टांतेनजीवेश्वराभेदज्ञानेनमहांतंविनाशंप्रदर्श्याथमुच्यतइत्यंतेनअनपहर्तृदृष्टांते
नभेदज्ञानेनमुक्तिप्रदर्शकमेवपुरुषंसोम्येत्यादिमहावाक्यमित्यर्थः। तथाचैतत्प्रकरणविरोधान्नतत्वमस्यादिवाक्यस्यजीवेशाभेदार्थ
कत्वं । अतोनशारीरपराभेदेतात्पर्यमित्यत्रकिंचिन्मानमितिविष्णोःपरमोत्कर्षएवसर्वप्रमाणानांमहातात्पर्यान्महातात्पर्यविरोधश्चा
भेदइतिस्थितं । अत्राहुर्भेदाभेदवादिनः । अस्तुविष्णोःपरमोत्कर्षेमहातात्पर्यं । तथाप्यभेदांगीकारेतद्विरोधःकथं । भेदा
भेदांगीकारेणानुपपत्त्यभावादिति । तान्प्रत्याह॥ **भिन्नस्यैवेति** ॥ एवशब्दोऽभेदव्यावर्तकः । अन्यस्यैवान्यस्मादुत्कर्षो
दृष्टइतिसर्वाभिन्नस्यकुतउत्कर्षःस्यात्। नचभेदस्यापिविद्यमानत्वेनतदुपपत्तिः । अभेदेनानुत्कर्षापरिहारादित्यर्थः।जीवाभिन्नस्यो
त्कर्षाभावेहेत्वंतरमाह॥ **अज्ञानेति** ॥ अज्ञानादिविशिष्टजीवाभेदेस्वस्यापितदापत्तेरुत्कर्षःकुतः। किंत्वपकर्षएवस्यादित्यर्थः। ननुब्र
ह्मणोजीवाभेदेपिनोत्कर्षहानिः। ब्रह्मणोभ्रांत्यैवदुःखाज्ञानयुक्तत्वात्।जीवस्यतुपरमार्थतएवदुःखादियुक्तत्वात्। नचभ्रांत्यादुःखा
दियुक्तस्यपारमार्थिकोत्कर्षहानिः । तथासतिरामकृष्णादावपितदभावप्रसंगादितिचेन्न । पारमार्थिकदुःखिजीवाभेदेपरमार्थतो
दुःखित्वाद्यपरिहारात् । किंचभ्रांत्यादुःखादियुक्तस्यापिपरमार्थदुःखिजीववदुत्कर्षाभावएवभवेत् । भ्रांतस्यबाधोत्तरंतदभावा
नुसंधानेपितत्कालेदुःखानुभवस्योभयत्रापितुल्यत्वात् । नहिवस्तुतोमृतपुत्रस्यपरमार्थदुःखिनोपुत्रमरणभ्रांत्यादुःखिनश्चतत्काले ॥१९९॥

भा० । तस्मादभेदज्ञानेनमहांतंविनाशंप्रदर्श्यभेदज्ञानान्मुक्तिपरमेवैतद्वाक्यं । भिन्नस्यैवोत्कर्षोभवति । अभिन्नस्यकुतउत्कर्षःस्यात् । अज्ञानदुःखयुक्तत्वाच ।

कश्चिद्विशेषोस्तीत्याह ॥ **नहीति** ॥ तत्पक्षेपीत्यर्थः । तेनोभयसंमतमेतदित्याह । किंचयदिब्रह्मणोभ्रांत्यादुःखित्वमंगीक्रिय
ते । तदाभ्रांतत्वेनतस्यास्वातंत्र्यंस्यादितिभावेनव्याप्तिमाह ॥ **अस्वातंत्र्यमिति** ॥ स्वेच्छानुसारित्वाभावः। चशब्दःप्रसंगसमु
च्चयार्थः । भ्रांतस्यापिस्वेच्छानुसारित्वंकिंनस्यादित्यतआह ॥ **नहीति** ॥ ननुयथास्वस्वरूपापरिज्ञानेनभ्रांत्यादुःखिनोपिराघव
स्यनोत्कर्षहानिस्तथाब्रह्मणोपिकिंनस्यादित्यतोसंप्रतिपन्नोदृष्टांतइतिभावेनाह ॥ **स्वात्मानमिति** ॥ जीवब्रह्मणोर्भेदाभेदांगी
कारेसूत्रविरोधंचाह ॥ **जगद्व्यापारेति** ॥ एवेत्यभेदंव्यावर्तयति । ननुब्रह्मवेदब्रह्मैवभवतीत्यादौवेदेमुक्तस्यब्रह्माभेदोक्तेर्गौणमु
क्तिपरमेवेदंसूत्रंकिंनस्यादित्यतआह ॥ **ब्रह्मसूत्रेति** ॥ निर्णायकनिर्णेययोर्निर्णायकस्यैवप्रबलत्वादितिभावः । अतएवोक्तंनि
र्णीतत्वादिति । किंचात्रैवश्रुतौचोरदृष्टांतेनाभेदज्ञानिनोऽनर्थश्चोरदृष्टांतेनभेदेनैवोत्कर्षवेत्तुर्मुक्तिश्चकथ्यते । ततश्चतद्विरोधान्न
जीवब्रह्मणोरभेदोवक्तुंयुक्तइतिभावेनश्रुत्यर्थनिश्चायकंप्रमाणमाह ॥ **चोरेति** ॥ यस्य कस्यापि । ननुब्रह्मसूत्रानुसारेणवेदाद्यं
योज्यमित्युक्तं । तत्रभेदप्रतिपादकसूत्रानुसारेणतत्वमसीत्याद्यभेदवाक्यंकथंयोज्यमित्यतःप्रमाणेनैवतद्योजनाप्रकारंदर्शयति ॥

भा० । नहितत्पक्षेपरमार्थदुःखिनोभ्रांत्यादुःखिनश्चतत्कालेकश्चिद्विशेषः । अस्वातंत्र्यंचभ्रांतस्यनिश्चितमेव । नहिभ्रमःस्वेच्छयायुज्यते । स्वात्मानंपरमंविष्णुंविदित्वैवसरा
घवः । दैत्यानांमोहनार्थायदर्शयामाससमूढतामितिपाद्मे । ॐजगद्व्यापारवर्जंॐ । ॐप्रकरणात्ॐ । इत्यैश्वर्यमर्यादयामुक्तानांब्रह्मणश्चभेदस्यैवनिर्णीतत्वाचभगवता । ब्रह्मसू
त्रानुसारेणवेदाद्यंसर्वमेवच । योज्यंनब्रह्मसूत्राणिदृश्यमानार्थतोन्यथेतिचब्रह्मवैवर्ते । चोरदृष्टांततोयस्यह्यभेदज्ञानतस्तमः । भेदेनोत्कर्षवेत्तुस्तुमुक्तिरेवह्यचोरवदितिच ।

सारत्वादिति ॥ यद्यपिसयएषइत्यादिकंप्रागेवव्याख्यातं । तथापिअस्मिन्खंडेसयएषइत्यादेरश्रवणादितरखंडवदत्रापितद
ध्याहार्यमितिसूचयितुं प्रागव्याख्यातपदव्याख्यानार्थंच सर्वथानेदमभेदपरमितिदार्ढ्यार्थंचसामसंहितागतमेवोपसंहारवाक्यमु
दाहृतं । मानानांज्ञानानांमानाभिमानिदेवतानांवाअणकश्श्रेष्टकइत्यर्थः । ततेर्व्याप्तेस्तत् । अध्यायार्थगुणविशिष्टत्वेनभगवन्नम
नरूपंमंगलमाचरतिसंहिताकारः ॥ इतियउक्तइत्यादिना ॥ नवकृत्वइत्यनेननवप्रकरणीगतस्यापिवाक्यस्यायमेवार्थइतिद्रढ
यति । तदनुसारेणस्वयमप्यध्यायार्थमुपसंहरति ॥ अतइति ॥ ७ ॥ खं० ८–१६ ॥ ततश्चेयंखंडनवकस्याक्षरयोजना ॥
उद्दालकोहकिलारुणिःश्वेतकेतुंपुत्रमुवाच । किमिति । स्वप्नस्यांतःसुषुप्तिःतंस्वप्नांतंसुषुप्तिस्वरूपं मेममसकाशात्विजानीहीति ।
ननुकःसुषुप्तौविशेषोयेनतज्ज्ञातव्यमित्यतआह ॥ यत्रेति ॥ यत्रकाले । एषचासौपुरुषश्चेत्येतत्पुरुषोजीवःस्वपितितदासतापर
मात्मनासंपन्नःसंगतोभवति । यत्रायंपुरुषइतिशाखांतरपाठः । किंतत्रमानमित्यतःसुप्तेस्वपितिशब्दप्रयोगएवेतिवक्तुमुक्तमेववि
शदमाह ॥ स्वमिति ॥ तदाप्रस्वापकालेस्वंस्वतंत्रंभगवंतमपीतोभवति अविज्ञेयत्वेनप्राप्तः प्रविष्टोभवति ।एषपुरुषइतिवर्तते ।

भा० । सारत्वात्सइतिप्रोक्तोज्ञानत्वाद्यइतीरितः । सर्वस्येष्टइतिह्येषमानानामणकोणिमा । तत्तंत्रत्वादैतदात्म्यंससत्यःसाधुरूपतः । तततेःपूर्णतश्चात्मासादनात्सइतीरितः ।
अतत्वमसिपुत्रेतियउक्तोगौतमेनतु । नवकृत्वःसदृष्टांतंसर्वभेदेनकेशवः । तस्मैनमोभगवतेचिदचित्परमायते । पुरुषोत्तमायदेवायपूर्णानंदैकरूपिणइतिसामसंहितायां । अतः
सर्वचिदचिद्विलक्षणःसर्वोत्तमःसर्वगुणपरिपूर्णोभगवान्पुरुषोत्तमइतिसिद्धं ॥ खं० ८–१६ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेछांदोग्योपनिषद्भा
ष्येषष्ठोध्यायः ॥ ६ ॥



उप० । उद्दालकोहारुणिःश्वेतकेतुंपुत्रमुवाचस्वप्नांतंमेसोम्यविजानीहीतियत्रैतत्पुरुषःस्वपितिनामसतासोम्यतदासंपन्नोभवतिस्वमपीतोभवतितस्मादेनꣳस्वपितीत्याचक्षते

सुषुप्तौजीवस्यभगवत्प्राप्तिसद्भावेप्रमाणमाह ॥ **तस्मादिति** ॥ हियस्मात्स्वमपीतोभवति तस्मादेवैनंसुषुप्तंस्वपितीत्याचक्षतेविद्वांसः । अन्यथातन्नस्यात् । स्वपितिशब्दप्रयोगादेवसुषुप्तस्यस्वनामकभगवत्प्राप्तिरवगम्यतइत्यर्थः । मुक्तिपक्षेतुस्वप्नस्यांतोमुक्तिः । स्वप्नशब्देनजीवन्मुक्तिरूपायाःसंध्यावस्थायाःग्रहणात् । संध्यंतृतीयंस्वप्नस्थानमित्यत्रतथानिर्णीतत्वात् । तंस्वप्नांतंमुक्तिमेवविजानीहि । यत्रैतत्पुरुषोमुक्तजीवः । स्वपितिनाममुक्तोभवति । तदासतासंगतोभवति । तत्रप्रमाणंवक्तुंतदेवविशदमाह ॥ **स्वमिति** ॥ तदामुक्तौस्वंस्वतंत्रंभगवंतंसंसारिभिरविज्ञेयत्वेनप्राप्तःप्रविष्टोभवतिमुक्तजीवः । मुक्तस्यभगवत्प्राप्तौस्वपितिशब्दमेवप्रमाणमाह ॥ **तस्मादिति** ॥ योजनापूर्ववदेव ॥ १ ॥ एवंजागरस्वप्नयोःसंसारेवाशरीरेंद्रियमनसामितस्ततोविक्षेपणश्रांतस्यजीवस्यश्रमापनोदनायसुप्तौमुक्तौवापरमेश्वराश्रयणमभिधायतत्रदृष्टांतमाह ॥ **सयथेति** ॥ सवक्ष्यमाणोदृष्टांतःयथा । शकुनिःपक्षी शकुनिघातकस्यहस्तगतेनसूत्रेणप्रबद्धः । दिशंदिशंबंधनमोक्षार्थीसन्प्रतिदिशंपतित्वान्यत्रबंधनादायतनमाश्रयंविश्रमणायालब्ध्वाऽप्राप्यबंधनमेवोपश्रयतेएवमेवखलुहेसोम्यैतन्मनःपूवप्रकृतोमननान्मनोनामाजीवःस्वप्नजागरणयोःसंसारेवादिशंदिशंपतित्वाप्राणादन्यत्रायतनमलब्ध्वाप्राणमेवप्राणनात्प्राणनामकंपरमात्मानमेवोपश्रयते । दृष्टांतेबंधनमेवोपश्रयतइत्युक्तत्वादत्रापिप्राणस्यबंधनत्वमुपपादयति ॥ **प्राणेति** ॥ हियस्मान्मनोजीवःप्राणबंधनंप्राणएवबंधनंबंधकोयस्यतत्तथोक्तं । तस्मा

---

उप० । स्वꣳह्यपीतोभवति ॥ १ ॥ सयथाशकुनिःसूत्रेणप्रबद्धोदिशंदिशपतित्वान्यत्रायतनमलब्ध्वाबंधनमेवोपश्रयतएवमेवखलुसोम्यैतन्मनोदिशंदिशंपतित्वान्यत्रायतनमलब्ध्वाप्राणमेवोपश्रयतेप्राणबंधनꣳहिसोम्यमनइति ॥ २ ॥

त्प्राणमेवोपयश्रयतइत्यर्थः ॥ २ ॥ एवंसुप्तौमुक्तौचजीवस्यभगवदधीनत्वमभिधायजाग्रदवस्थायामपिअशनापिपासयोःस्वरूप पर्यालोचनयाजीवानांभगवदधीनत्वंप्रतिपादयितुंप्रस्तावयति ॥ अशनेति ॥ हेसोम्याशितुमिच्छाऽशनाया यालोपःछांदसः । अशनायेत्यपिक्वचित्पाठः । पातुमिच्छापिपासा तेअशनापिपासे तयोःस्वरूपंविजानीहीत्युवाचेतिसंबंधः । कस्तत्रविशेषइत्यतआह ॥ यत्रेति ॥ यत्रयदैतत्पुरुषःसंसार्यशिशिषतिअशितुमिच्छतिनामतत्तदातदशितमन्नंपीताआपएवतदभिमानीप्राणएवेतियावत्। नयंतेरसवीर्यादिभावेनपरिणामयंते । अन्नंरसादिरूपेणप्राणःपरिणयत्यसावितिवचनात्। अशितनेतृत्वमपांकुतइत्यतो अशनायाशब्दाभिधेयत्वादितिसदृष्टांतमाह ॥ तद्यथेति ॥ तत्वक्ष्यमाणंनिदर्शनंयथागांनयतीतिगोनायइत्युच्यतेगोपालो यथावाश्वंनयतीत्यश्वनायइत्युच्यतेश्वपालः । यथाचपुरुषान्नयतीतिपुरुषनायइत्युच्यतेराजासेनापतिर्वा । एवंतत्तस्मादशितनेतृत्वादपस्तदभिमानिदेवतांप्राणमशनायेत्याचक्षतेविद्वांसः । नन्वेतावताजीवस्याबभिमानिप्राणाधीनत्वेपिभगवदधीनत्वंकुतइत्यतआह ॥ तत्रेति ॥ तत्रैवंसतिअद्भीरसादिभावेनाशितस्यजीर्णीभावेसतितद्रेतोद्वाराएतत्प्रत्यक्षसिद्धंशिशुशरीरमुत्पतितंसोम्य विजानीहि । शुंगमितिदृष्टांतोक्तिः । वटबीजात्परिणताच्छुंगमंकुरमिवेत्यर्थः । किंततइत्यतआह ॥ नेति ॥ हेसोम्येदमुत्पतितंशरीररूपंकार्यममूलमकर्तृकंनभविष्यतीतिविजानीहि । अयमत्रप्रयोगः । इदंसकर्तृकंकार्यत्वादंकुरवदिति । नचदृष्टांतःसाध्य

उप० । अशनापिपासेसोम्यविजानीहीतियत्रैतत्पुरुषोशिशिषतिनामापएवतदशितंनयंतेतद्यथागोनायोश्वनायःपुरुषनायइत्येवंतदपआचक्षतेऽशनायेतितत्रैतच्छुंगमुत्पतितं सोम्यविजानीहिनेदममूलंभविष्यतीति ॥ ३ ॥



विकलः । घटादिदृष्टांतेनतत्रापिसकर्तृकत्वानुमानात् । तर्हिघटएवदृष्टांतत्वेनोपादीयतां । नशरीरस्यसर्वात्मनांकुरुसाम्यमितिवस्तुस्थितिज्ञापनार्थं । तथाचश्रुतिः । यथावृक्षोवनस्पतिस्तथैवपुरुषोमृषा । तस्यलोमानिपर्णानित्वगस्योत्पाटिकाबहिरित्यादिका ॥ ३ ॥ एवंशरीरस्यकार्यत्वेनकर्तृसामान्येऽनुमितेकिंतदितिजिज्ञासायांपरिशेषेणान्नमेवेतिभावेनप्रसक्तप्रतिषेधंविधत्ते ॥ तस्येति ॥ तस्यशरीरस्यान्नादन्यत्रक्वकिंमूलंस्यात् । नकिमपि । तस्मादन्नमेवपरिशेषेणमूलमित्यर्थः । अत्रान्नमितितदभिमानी रुद्रः । अन्नस्यापिकार्यत्वाच्छुंगवत्सकारणकत्वमनुमायपरिशेषेणाप्कारणकत्वमनुमेयमेवेत्याह ॥ एवमेवेति ॥ यथाशरीरे एवमेवखलुसोम्यान्नेनकार्येणशुंगेनदृष्टांतेनकर्तृसामान्यमनुमायपरिशेषेणापोमूलमन्विच्छानुमातुमिच्छेत्यर्थः । आपइतितदभिमानीप्राणः । एवमेवहेसोम्याद्भिःकार्येणशुंगेनदृष्टांतेनकर्तृसामान्यमनुमायपरिशेषेणतेजोमूलमन्विच्छ । तेजइतिश्रीः । एवमेवहेसोम्यतेजसाकार्येणशुंगेनदृष्टांतेन । कर्तृसामान्यमनुमायसत्परंब्रह्ममूलमन्विच्छेत्यर्थः । तर्हिसतस्तेजोमात्रमूलत्वं । नसर्वमूलत्वमित्याशंकांपरिहरन्नुपसंहरति ॥ सन्मूलाइति ॥ हेसोम्येमाःसर्वाःप्रजाःसत्परंब्रह्म मूलंकर्तृ यासांताःसन्मूलाः । नकेवलमेतावत् । किंतुसत्परंब्रह्मायतनमाश्रयोयासांताःसदायतनाश्च । नकेवलमुक्तरीत्याजीवस्यसंसारएवभगवदधीनत्वं । किंतु मोक्षेपीत्याह ॥ सत्प्रतिष्ठाइति ॥ सत्परंब्रह्मप्रतिष्ठाप्रतिस्थापकंयासांमुक्तप्रजानांताःसत्प्रतिष्ठाइत्यर्थः ॥ ४ ॥ एवमशनाया

उप० । तस्यक्वमूलꣳस्यादन्यत्रान्नादेवमेवखलुसोम्यान्नेनशुंगेनापोमूलमन्विच्छाद्भिःसोम्यशुंगेनतेजोमूलमन्विच्छतेजसासोम्यशुंगेनसन्मूलमन्विच्छसन्मूलाःसोम्येमाःसर्वाःप्रजाःसदायतनाःसत्प्रतिष्ठाः ॥ ४ ॥

स्वरूपपर्यालोचनयाजीवानांभगवदधीनत्वमुपपाद्यपिपासास्वरूपपर्यालोचनयापितदुपपादयति ॥ अथेति ॥ योजनातुपूर्ववदेव । तत्तेजआचष्टेविद्वानुदन्येति । उदंनयतीतिव्युत्पत्तेः । पूर्वमन्नकार्यस्यप्रक्रांतत्वाच्छरीरेणान्नद्वारासदनुमानमिहत्वपकार्यस्यप्रक्रांतत्वात्तद्वारैवानुमानमित्यवधेयं ॥ ५ ॥ ननुपूर्वोक्तास्तेजोबन्नाभिमानिदेवताःशरीरंप्राप्यकथंशरीरधातुंकुर्वतीत्यतस्तत्प्रागेवोक्तमनुसंधेयमित्याह ॥ यथेति ॥ हेसोम्येमास्तिस्रोदेवता स्तेजोबन्नाभिमानिन्योलक्ष्म्याद्याःपुरुषंशरीरिणंप्राप्ययथातु येनैवप्रकारेणैकैकादेवतात्रिवृत्त्रिवृद्भवति । तत्पुरस्तादेवोक्तंभवति । अन्नमशितंत्रेधाविधीयतइत्यादिना । तदेवानुसंधेयमिति भावः । किंचभगवतोमोक्षेदेवैःप्राप्यत्वाच्च । सिद्धंजीवानांतदधीनत्वमितिभावेनदेवानांदेहलयप्रकारमाह ॥ अस्येति ॥ अस्यपुरुषस्यचतुर्मुखस्यप्रयतोमुच्यमानस्यसतश्चतुर्मुखमुक्तिकालेप्राप्तेइतियावत्। अत्रसर्वेदेवावाचिसंपद्यंतेइतिवक्तव्यं । वागभिमानिन्युमामनसिमनोभिमानिरुद्रेसंपद्यतेदेहलयमाप्नोति । मनोरुद्रःप्राणेमुख्यवायौसंपद्यते । प्राणस्तेजसिलक्ष्म्यांसंपद्यते । तेजः परस्यांदेवतायांसंपद्यते । हरेरत्यंतसामीप्यंलयोलक्ष्म्याःप्रकीर्तितइतिस्मृतेः । अथवासर्वसाधारणमरणेपिजीवस्यभगवदधीनत्वं प्रतिपत्तव्यमितिभावेनसतितत्वाभिमानिदेवताव्यापारेजीवस्यमरणानुपपत्तेस्तद्व्यापारोपरमप्रकारमाह ॥ अस्येति ॥ अस्यपुरु

---

उप० । अथयत्रैतत्पुरुषःपिपासतिनामतेजएवतत्पीतंनयंतेतद्यथागोनायोश्वनायःपुरुषनायइत्येवंतत्तेजआचष्टउदन्येतितत्रैतदेवशुंगमुत्पतितꣳसोम्यविजानीहिनेदममूलंभविष्यतीति ॥ ५ ॥ तस्यक्वमूलꣳस्यादन्यत्राद्भ्योद्भ्यःसोम्यशुंगेनतेजोमूलमन्विच्छतेजसोसोम्यशुंगेनसन्मूलमन्विच्छसन्मूलाःसोम्येमाःसर्वाःप्रजाःसदायतनाःसत्प्रतिष्ठाःयथातु खलुसोम्येमास्तिस्रोदेवताःपुरुषंप्राप्यत्रिवृत्त्रिवृदेकैकाभवति तदुक्तं पुरस्तादेवभवत्यस्यसोम्यपुरुषस्यप्रयतोवाङ्मनसिसंपद्यतेमनःप्राणेप्राणस्तेजसितेजःपरस्यांदेवतायां ॥ ६ ॥

षस्यप्रयतोम्रियमाणस्ययावाक्वागभिमानिन्युमासामनसिसंपद्यतेग्रस्तव्यापाराभवति । इतरेंद्रियदेवताःसजीवावाचिसंपद्यंतइ
त्यादौवक्तव्यं । मनोरुद्रःप्राणेमुख्यप्राणेसंपद्यते । प्राणस्तेजसिसंपद्यते । तेजःपरस्यांदेवतायांसंपद्यते ॥ ६ ॥ एवंसर्वात्मना
जीवस्यभगवदधीनत्वान्नजीवस्यतदभिन्नत्वशंकाकार्येत्युक्तं । इतोपीत्याह॥ **सयइति** ॥ प्रकृतःपरदेवताख्योविष्णुःसारत्वात्स
इत्युच्यते । यमनात्ज्ञानरूपत्वाद्वायः । सर्वस्येष्टइतिह्येषः । अणीयसासूक्ष्मेणज्ञानेनमीयतेविषयीक्रियतइत्यणिमा । मानाना
माणकइतिवाणिमा । इदंसर्वंजगदैतदात्म्यमेतदात्मवशं । ततत्वात्तत् । परानंदत्वतःसाधुस्वरूपत्वाद्वासत्यं । सादनात्सः । पू
र्णगुणत्वादात्मा । अतत्वमितितत्वमितिचपदच्छेदः । एवंसतिहेश्वेतकेतोतत्वंतत्वतः । त्वमतदसि तस्मादन्यद्वस्त्वसीत्यर्थः ।
इतिपित्रोपदिष्टेनश्वेतकेतुनाजीवानांभगवदाश्रयत्वंकथमुपपन्नं । यतोनमत्तोन्योस्मिन्देहेस्ति । मयाभेदेनानुपलभ्यमानत्वात्इ
त्याशयेनभूयएवमामांभगवान्विज्ञापयत्विविपृष्टेतथासोम्येतिहोवाचपिता । त्वच्छंकायायथोत्तरंस्यात्तथावक्ष्यामीत्याहेत्यर्थः
॥ ७ ॥ **अष्टमःखंडः** ॥ ८ ॥ किमुवाचेत्यतआह ॥ **यथासोम्येत्यादि** ॥ हेसोम्ययथामधुकृतोभ्रमराःमधुनिस्तिष्ठंतिनिर्मि
मते । कथंनानात्ययानांनानागतीनांपरस्परविलक्षणानांवृक्षाणांरसानांसमवहारंसमूहमेकतांमिश्रतांगमयंति । रसान्समवहारमि
तिपाठेरसानितिद्वितीयाषष्ठ्यर्थे ॥ १ ॥ यथाचतेनानावृक्षरसास्तत्रमिश्रतायांविद्यमानमपिविवेकंपरस्परभेदंनलभंतेनजानंति ।

---

उप० । सयएषोणिमैतदात्म्यमिदꣳसर्वंतत्सत्यंसआत्मातत्वमसिश्वेतकेतोइतिभूयएवमाभगवान्विज्ञापयत्विति तथासोम्येतिहोवाच ॥ ७ ॥ खं० ॥८॥ यथासोम्यमधुमधु
कृतोनिस्तिष्ठंतिनानात्ययानांवृक्षाणाꣳरसानाꣳसमवहारमेकतांगमयंति ॥ १ ॥

अमुष्यवृक्षस्यामुस्याहंरसोस्म्ययंत्वन्यस्येति । तथापरोप्यमुष्यपनसस्याहंरसोस्म्ययंत्वन्यस्येति । एवमेवखलुसोम्येमाःसर्वाःप्रजाः जीवाःपरमेश्वरशक्तिभिरेवस्वेस्वेशरीरेसतिपरमेश्वरेसंपद्यतेनमिश्रीभावंप्राप्यसतिसंपत्स्यामहे उपलक्षणमेतत् । संपन्नाःसंपद्याम हेइतिनविदुः ॥ २ ॥ अज्ञानभवमनर्थमाह ॥ तइत्यादिना ॥ इहलोकेतेप्रसिद्धाः । व्याघ्रोवेत्यादियद्यद्भवंतितत्तदातस्मात्पर मेश्वराश्रितत्वाज्ञानापराधाद्भवंतीति । एतेनयोयमात्मनोभेदेननपश्यतिसततोनभिद्यतइतिव्याप्तेर्भंगोदर्शितोभवति ॥ ३ ॥ स यइत्याद्यभ्यासस्तात्पर्यद्योतनार्थः । आत्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्यइत्युक्तानांश्रवणादीनांनाग्निष्टोमादिव देकवारेणैवफलप्राप्तिः । किंत्वावृत्तिःकर्तव्येतिज्ञापनार्थेचायमसकृदुपदेशः । तथाचोक्तंसूत्रकृता । आवृत्तिरसकृदुपदेशादिति । इतिपित्रोपदिष्टेनश्वेतकेतुनाभवत्वचेतनानांनानावृक्षरसानांभेदापरिज्ञानं । मयातुचेतनत्वेनहेतुर्विशेष्यतइत्यभिप्रायेणभूयएव माभगवान्विज्ञापयत्विविपृष्टेपितातथासोम्येतिहोवाच ॥ ४ ॥ नवमःखंडः ॥ ९ ॥ किमुवाच ॥ इमाःसोम्येत्यादि ॥ हेसो म्येमाःप्रसिद्धाःगंगाद्याःनदीदेवताः । प्राच्यः प्रागंचनात्प्राचीशब्दवाच्याः पुरस्तात्स्यंदतेस्रवंति । तथाप्रत्यगंचनात्प्रतीचीश ब्दवाच्याः पश्चात्स्यंदंते । एवमत्यंतविलक्षणास्तानद्योमेघादिद्वारेणसमुद्रादागत्यउत्पन्नजलत्वात्समुद्रमेवापियंति । एवशब्दस्यो

उप० । तेयथातत्रनविवेकंलभंतेऽमुष्याहंवृक्षस्यरसोस्म्यमुष्याहंवृक्षस्यरसोस्मीत्येवमेवखलुसोम्येमाःसर्वाःप्रजाःसतिसंपद्यनविदुःसतिसंपत्स्यामहइति ॥ २ ॥ तइहव्याघ्रोवा सिꣳहोवावृकोवावराहोवाकीटोवापतंगोवादꣳशोवामशकोवायद्यद्भवंतितत्तदाभवंति ॥ ३ ॥ सयएषोणिमैतदात्म्यमिदꣳसर्वंतत्सत्यꣳसआत्मातत्वमसिश्वेतकेतोइतिभूयएवमाभ गवान्विज्ञापयत्विवितितथासोम्येतिहोवाच ॥ ४ ॥ खं० ॥ ९ ॥ इमाःसोम्यनद्यःपुरस्तात्प्राच्यःस्यंदंतेपश्चात्प्रतीच्यस्ताःसमुद्रात्समुद्रमेवापियंतिसंसमुद्रएवभवति तायथातत्रन विदुरियं महमस्मीयमहमस्मीति ॥ १ ॥



त्तरत्रान्वयः । अविज्ञेयत्वेनप्राप्नुवंति । प्रविशंतीतियावत् । तथापिससमुद्रःसमुद्रएवभवति । ननदीभावंप्राप्नोतीत्यर्थः । सएव समुद्रोभवतीतिपूर्ववाक्यगतैवकारान्वयः । समुद्रएवसमुद्रोभवति । ननद्यइत्यर्थः । तानदीदेवताःयथातत्रसमुद्रेइयंगंगाहम स्मीयंतुयमुनाऽयंचसमुद्रइत्येवमन्याअपिनविदुः । स्वंस्वंवारिनैवजानंति ॥ १ ॥ एवमेवखलुसोम्येमाःसर्वाःप्रजाःसतःपरमेश्वरा दागम्योत्पद्यापिसतआगच्छामहेउत्पन्नास्मइतिनविदुः । एवंपरमेश्वरेस्थित्वापितमाश्रितास्मइतिनविदुः । तइहेत्यादिपूर्ववत् । अनेनचेतनत्वविशिष्टस्यापिहेतोरनैकांत्यमुक्तंभवति । इतिपित्रोपदिष्टेनपुत्रेणास्तीश्वरःस्वतोभिन्नस्तथापिजीवस्यतदधीनत्वंकुत इत्याशयवताभूयएवमाभगवान्विज्ञापयत्विवितिपृष्टेतथासोम्येतिहोवाचपिता ॥ ३ ॥ दशमःखंडः ॥ १० ॥ किमुवाच ॥ अस्ये त्यादि ॥ हेसोम्यमहतोवृक्षस्ययोयःकश्चिद्यदिमूलेभ्याहन्यात्तदाजीवन्जीवेनानिरुद्धाख्येनपरमेश्वरेणाऽधिष्ठितश्चेत्तदास्रवेत् रसमेवोद्गिरेत् । नतुम्रियते । अंकुरमात्रस्याऽभ्याघातेऽवस्थानासंभवान्महतइत्युक्तं । एवंयोमध्येभ्याहन्यादित्यादिकमपिव्या ख्येयं । एवंसएषःवृक्षजीवोनेनप्रकृतेनजीवेनात्मनापरमात्मनानुप्रभूतःप्राप्तोधिष्ठितदेहःपेपीयमानःपुनःपुनर्भृशंवापिबन्मोदमा नस्तिष्ठति ॥ १ ॥ एवंवृक्षजीवस्यसर्वदानुपहताऽत्यक्तदेहेनसुखिनैवमयास्थातव्यमितीच्छायामपिकदाचिदेवेश्वरानुग्रहेसतिवि

उप० । एवमेवखलुसोम्येमाःसर्वाःप्रजाःसतआगम्यनविदुःसतआगच्छामहइतितइहव्याघ्रोवासिꣳहोवावृकोवावराहोवाकीटोवापतंगोवादंशोवामशकोवायद्यद्भवंतितत्तद्भवंति ॥ २ ॥ सयएषोणिमैतदात्म्यमिदꣳसर्वंतत्सत्यꣳसआत्मातत्वमसिश्वेतकेतोइतिभूयएवमाभगवान्विज्ञापयत्विवितितथासोम्येतिहोवाच ॥ ३ ॥ खं० ॥ १० ॥ अस्यसोम्यमह तोवृक्षस्ययोमूलेभ्याहन्याज्जीवन्स्रवेद्योमध्येभ्याहन्याज्जीवन्स्रवेद्योग्रेभ्याहन्याज्जीवन्स्रवेत्सएषजीवेनात्मनानुप्रभूतःपेपीयमानोमोदमानस्तिष्ठति ॥ १ ॥

घातिषुबाह्यकारणेषुसत्स्वप्येवमवस्थानंभवतीत्युक्तं । इदानींकदाचिदीश्वरानुग्रहाभावेबाह्यकारणबलवत्त्वाभावेपिशरीरशोषाद्य निष्टंभवत्येवेत्याह ॥ अस्येति ॥ अस्यवृक्षजीवस्ययदैकांशाखांजीवःपरमात्माजहात्यथतदासाशुष्यति । यदाद्वितीयांशाखांज हातितदासापिशुष्यति । यदातृतीयांजहातितदासापिशुष्यति । यदासर्वंजहातितदासर्वोपिशुष्यति । यथायंदृष्टांतःएवमेवख लुसोम्यमानुषशरीरेपिजीवस्येश्वराधीनत्वंविद्धीतिहोवाचपिता ॥ २ ॥ तदेवविशदमाह ॥ जीवापेतमिति ॥ जीवेनपरमात्म नाऽपेतंत्यक्तं । त्यक्तदेहमितियावत् । इदंसंसारिजातंम्रियतेप्राणैर्वियुज्यते । तथाचस्मृतिः । ब्रह्मणात्यक्तदेहस्तुमृतइत्युच्य तेबुधैरिति । एवंभगवतोपिमरणंचेत्कोविशेषस्तस्येत्यतआह ॥ नजीवइति ॥ जीवःपरमात्मातुकदापिनम्रियतइत्येवमत्यंतवि लक्षणौजीवपरावितिशेषः । अत्रप्रकरणेजीवशब्देनपरमात्मैवाभिहितः । जीवइतिभगवतोनिरुद्धस्याख्येतिश्रुतेः । विष्णुर्जीव इतिप्रोक्तःसततंप्राणधारणादित्यादिस्मृतेश्च । नहिसंसारिणोमुख्यतःप्राणधारकत्वंयुज्यतइत्यवगंतव्यं । इत्युपदिष्टेनपुत्रेणएवं जीवस्यसत्तादिप्रदःपरमात्मात्रैवशरीरेजीवांतर्वर्तमानोजीवेनकुतोनदृश्यते । सौक्ष्म्यादितिचेत् । जीवस्यसूक्ष्मस्वात्मदर्शिनःसू क्ष्मदर्शनशक्तिसद्भावादित्याशयेनपुनःपृष्टेपिताऽवोचत् ॥ ३ ॥ एकादशःखंडः ॥ ११ ॥ किमवोचत् ॥ न्यग्रोधफलमि

उप० । अस्ययदैकांशाखांजीवोजहात्यथसाशुष्यति द्वितीयांजहात्यथसाशुष्यति तृतीयांजहात्यथसाशुष्यति सर्वंजहातिसर्वःशुष्यत्येवमेवखलुसोम्यविद्धीतिहोवाच ॥ २ ॥ जीवापेतंवावकिलेदंम्रियतेनजीवोम्रियतइति सयएषोणिमैतदात्म्यमिदꣳसर्वंतत्सत्यꣳसआत्मातत्वमसिश्वेतकेतोइतिभूयएवमाभगवान्विज्ञापयत्विवितितथासोम्येतिहोवाच ॥ ३ ॥ खं० ॥ ११ ॥ न्यग्रोधफलमतआहरेतीदंभगवइति भिंधीति भिन्नंभगवइति किमत्रपश्यसीत्यण्व्यइवेमाधानाभगवइत्यासामंगैकांभिंधीतिभिन्नाभगवइतिकिमत्रपश्यसीतिन किंचनभगवइति ॥ १ ॥

त्यादि ॥ हेसोम्यातोवृक्षान्न्यग्रोधफलमाहरेत्युवाचपिता । आहृत्येदंन्यग्रोधफलमाहृतंभगवोभगवन्निितिपुत्रः । इदंफलंभिंधीति पिता । तद्भित्वाभिन्नंभगवइतिपुत्रः । अत्रभिन्नेफलेकिंपश्यसीतिपिता । अण्व्यइवसूक्ष्माइवेमाधानाबीजानिपश्यामीतिपुत्रः । हेअंगआसांधानानांमध्येएकांधानांभिंधीतिपिता । भित्त्वाभिन्नाभगवइतिपुत्रः । अत्रभिन्नायांधानायांकिंपश्यसीतिपिता । न किंचनपश्यामिभगवइतिपुत्रः ॥ १ ॥ एवमुक्तवंतंतमुवाचपिता । यमेतमणिमानंभावभवित्रोरभेदात् । अतिसूक्ष्मंबीजजीवंन निभालयसेनपश्यसि । एतस्याणिम्नः सामर्थ्यादेवंपरिदृश्यमानप्रकारेणमहान्न्यग्रोधस्तिष्ठति । यद्वाणिमशब्दःपरमात्परः । नात्रान्यथात्वशंकाकार्येत्याह ॥ श्रद्धत्स्वत्सोम्येतिपिता ॥ अत्रवृक्षःप्रपंचः । फलंशरीरं । धानाजीवः । तत्रयथासूक्ष्मवटबीजेदृश्यमानेपि यत्प्रभावाद्वटावस्थानंसबीजांतर्गतोबीजजीवःपरमात्मावा यथापरमसूक्ष्मत्वान्नदृश्यते । तथाजीवादपिसूक्ष्मत्वात्तदंतर्गतःइत्युक्तंभवति ॥ २ ॥ सयइत्यादिकमुक्तार्थं । इत्युपदिष्टेनश्वेतकेतुना । ननुवटावस्थानादिनाकार्येणेश्वरसामर्थ्यंतावत्प्रत्यक्षमिवदृश्यते । एवंतत्सामर्थ्येदृश्यमानेपितस्यादर्शनमित्येतत्कथमहंविजानीयामित्याशयवताभूयएवमाभगवान्विज्ञापयत्विति प्रार्थितेपितातथासोम्येतिहोवाच ॥३॥ द्वादशःखंडः ॥ १२ ॥ लवणमित्यादि ॥ हेअंगैततपिंडरूपंलवणमुदकेघटादिस्थेवऽधाय

---

उप० । तꣳहोवाचयंवैसोम्यैतमणिमानंननिभालयसएतस्यवैसोम्यैषोणिम्नएवंमहान्न्यग्रोधस्तिष्ठतिश्रद्धत्स्वसोम्येति ॥ २ ॥ सयएषोणिमैतदात्म्यमिदꣳसर्वंतत्सत्यꣳसआत्मातत्त्वमसिश्वेतकेतोइतिभूयएवमाभगवान्विज्ञापयत्वितितथासोम्येतिहोवाच ॥ ३ ॥ खं० ॥ १२ ॥ लवणमेतदुदकेऽवधायाथमाप्रातरुपसीदथाइतिसहतथाचकारतꣳहोवाचयद्दोषालवणमुदकेऽवधाअंगतदाहरेतितद्धावमृश्यनविवेदयथाविलीनमेव ॥ १ ॥

निक्षिप्यमामांप्रातरुपसीदथाःउपागच्छेतिपित्रोक्तःसहतथाचकार। तद्धतथाचकारेतिक्वचित्पाठः । तत्रयथापित्रोक्तंतत्तथाचकार पुत्रइत्यर्थः । तंहोवाचपिता । हेअंगदोषारात्रौयल्लवणमुदकेऽवधाःअवाधास्तदाहरेति । ततूलवणमुदकेहस्तेनावमृश्यनविवेदपुत्रः । यथाविलीनमेवात्यंतंविनष्टंवस्तुनविंदति तथा। अंगास्योदकस्यांतात्पूर्वदिगवस्थितादवयवादुद्धृत्यैकदेशमाचामेतिपिता । आचांतवंतंकथंतिष्ठतीतिपप्रच्छपिता । लवणंलवणरसोपेतमित्याहपुत्रः । एवंमध्यादित्यादिव्याख्येयं । अंत्यात्पश्चिमदिगवस्थितात् । एतत्उदकमभिप्रास्यनिरस्याथमामांउपसीदथाइतिपिता । तद्धतथाचकारपुत्रः । तल्लवणंशश्वदुदकएवसंवर्तते । नह्यपगतमितिश्रुतेःस्ववाक्यंतत् । तद्धतथाचकारेतिवाक्यंशश्वदंगतदाहरेत्याद्यनंतरंसंवर्तते ॥ अनुवर्तनीयमितिवा । तंहोवाचपिता। हेसोम्यात्रवावात्रैवोदकेसत्विद्यमानंलवणं तद्गुणेदृश्यमानेपिननिभालयसे । अत्रैव किलेतिपुनर्वचनमादरार्थं। इत्युवाचेतिसंबंधः। यथेदंतथासामर्थ्येदृश्यमानेपिभगवान्नदृश्यतइतिभावः ॥ २ ॥ इतिपित्रोपदिष्टेनपुत्रेणैवंविधोहरिरविद्यापिहितनयनेनानेनकेनोपायेनदृश्यतेप्राप्यतेचेति जिज्ञासावताभूयएवेतिपृष्टेतथासोम्येतिहोवाचपिता ॥ ३ ॥ त्रयोदशःखंडः ॥ १३ ॥ हेसोम्ययथापुरुषंधनिकंगंधारेभ्योगंधारसंज्ञिकेभ्योजनपदेभ्योऽभिनद्धाक्षंअक्षिणीबध्वेति

उप० । अंगास्यांतादाचामेतिकथमितिलवणमिति मध्यादाचामेतिकथमितिलवणमितिअंत्यादाचामेतिकथमितिलवणमितिअभिप्रास्यैतदथमोपसीदथाइतितद्धतथाचकारतच्छश्वत्संवर्ततेतं होवाचात्रवावकिलसत्सोम्यननिभालयसेत्रैवकिलेति ॥ २ ॥ सयएषोणिमैतदात्म्यमिद सर्वंतत्सत्य सआत्मातत्वमसिश्वेतकेतोइतिभूयएवमाभगवान्विज्ञापयत्विितितथासोम्येतिहोवाच ॥ ३ ॥ खं० ॥ १३ ॥ यथासोम्यपुरुषंगंधारेभ्योऽभिनद्धाक्षमानीयतंततोतिजनेविसृजेत्सयथातत्रप्राङ्वोदङ्वाऽधराङ्वाप्राध्मायीताभिनद्धाक्षआनीतोभिनद्धाक्षोविसृष्टः ॥ १ ॥



यावत् । आनीयतंततोनंतरंअतिजनेजनरहितेरण्येविसृजेच्चोरः । सःविसृष्टोयथातत्रारण्येप्राङ्वोदङ्वाधराङ्वासर्वदिगभिमुखःप्राध्मायीतउच्चैःशब्दंकुर्यात्। किमिति। अभिनद्धाक्षःआनीतोस्मिअभिनद्धाक्षोविसृष्टोस्मीति ॥१॥ यथासम्यक्तद्वाक्यंश्रुत्वा कश्चित्कृपावांस्तस्याभिनहनंबंधनंप्रमुच्यमुक्त्वाब्रूयात्। एतांदिशमस्यांदिशिगंधाराःसंति । अतएतांदिशंव्रजेति । सःतेनोपदिष्टाद्ग्रामान्निर्गत्यापरंग्रामंपृच्छन्पंडितःप्राज्ञोमेधावीस्मृतिमान्गंधारानेवोपसंपद्यतेपश्यतिप्राप्नोतिच । एवमेवअनाद्यविद्यादिभिराच्छादितनिजज्ञानःपुरुषोजीवःसंसारेपतितःपरमेश्वरानुग्रहाज्जातजिज्ञासःआचार्यवान्गुरूपदेशंलब्धेतियावत् । क्रमापन्नानि श्रवणादीनिसाधनान्यनुष्ठायस्वजन्मभूमिंभगवंतंवेदपश्यतिप्राप्नोतीतिचेत्यर्थः । ननुयथान्योपदेशेनबद्धाक्षःस्वगृहंपश्यतिव्रजतिच तथापुमानाचार्योपदेशेनभिन्नमीशंपश्यति व्रजतिचेत्यनुपपन्नं। दर्शनाव्यवहितोत्तरकालंभगवत्प्राप्तेरभावादित्यतआह ॥ तस्येति ॥ तस्यापरोक्षज्ञानिनः । तावदेवमोक्षायचिरंक्षेपोयावन्नविमोक्ष्येविमोक्ष्येतप्रतिबंधेनप्रारब्धकर्मणा । यथाज्ञानानंतरमपिनमोक्षस्तथाकर्मक्षयानंतरमपीतिशंकामाभूदितिभावेनाह ॥ अथेति ॥ अथारब्धपुण्यपापस्यभोगेनक्षपणादनु । ब्रह्मसंपत्स्यतएव । अथशब्दोनियमसूचकश्च । इत्युवाचेतिपूर्वखंडस्थेनान्वयः ॥ २॥ इतिपित्रोपदिष्टेनावगतंवृक्षशरीरेभगवदधीनत्वं

उप० । तस्ययथाभिनहनंप्रमुच्यप्रब्रूयादेतांदिशंगंधाराएतांदिशंव्रजेतिसग्रामाद्ग्रामंपृच्छन्पंडितोमेधावीगंधारानेवोपसंपद्येतैवमेवेहाचार्यवान्पुरुषोवेदतस्यतावदेवचिरंयावन्नविमोक्ष्येथसंपत्स्यतइति ॥२॥ सयएषोणिमैतदात्म्यमिद सर्वंतत्सत्य सआत्मातत्वमसिश्वेतकेतोइतिभूयएवमाभगवान्विज्ञापयत्विितितथासोम्येतिहोवाच ॥ ३ ॥ खं० ॥ १४॥

जीवस्य मानुषशरीरएवतज्ज्ञापयेत्याशयवताभूयएवमाभगवान्विज्ञापयत्वित्युक्तःपितातथासोम्येतिहोवाच ॥ ३ ॥ चतुर्दशःखंडः ॥ १४ ॥ हेसोम्योपतापिनंरोगिणंपुरुषंज्ञातयःपर्युपासते । परितउपविशंति । किंकुर्वंतः । हेदेवदत्तत्वंमांजानासिमांजानासीतिवदंतः । एवमेभिरुक्तेसकदाजानातिकदाचनजानातीत्यतआह ॥ तस्येति ॥ तस्यम्रियमाणस्यपुरुषस्य वाक्वागभिमानिन्युमा मनसिमनोभिमानिनिरुद्रे यावन्नसंपद्यते ग्रस्तव्यापारानभवति । मनश्चप्राणेनसंपद्यते । प्राणस्तेजसिनसंपद्यते । तेजःपरस्यांदेवतायांनसंपद्यते । तावज्जानाति ॥ १ ॥ अथयदास्यवाङ्मनसिसंपद्यतेमनःप्राणेप्राणस्तेजसितेजःपरस्यांदेवतायांसंपद्यते । अथतदानजानाति । एवंमानुषशरीरएवजीवस्यमरणकालेज्ञात्यादिस्वरूपज्ञानेऽस्वातंत्र्यंदृष्टमितिभावः ॥ २ ॥ इतिपित्रोपदिष्टेनपुत्रेणैवंसर्वप्रेरकंमहानुभावंभगवंतंयोत्यंतभेदेनजानातियश्चसएवाहमस्मीति । तयोःकीदृशंफलंभवतीतिजिज्ञासयाभूयएवेत्युक्तःपितातथेतिहोवाच ॥ ३ ॥ पंचदशःखंडः ॥ १५ ॥ हेसोम्यराजद्रव्येऽपगतेसतिशंकास्पदंवाराजाहमितिवदंतंअतदर्हंवापुरुषंहस्तगृहीतंबद्धहस्तमानयंतिराजभटाः । किंकृतवानयमितिपृष्टाश्चअपहार्षीत् अपाहर्षीत्स्तेयमकार्षीदितिवदंतःआनयंती

उप० । पुरुषꣳसोम्योपतापिनंज्ञातयःपर्युपासतेजानासिमांजानासिमामितितस्ययावन्नवाङ्मनसिसंपद्यतेमनःप्राणेप्राणस्तेजसितेजःपरस्यांदेवतायांतावज्जानाति ॥ १ ॥ अथ यदास्यवाङ्मनसिसंपद्यतेमनःप्राणेप्राणस्तेजसितेजःपरस्यांदेवतायामथनजानाति ॥ २ ॥ सयएषोणिमैतदात्म्यमिदꣳसर्वंतत्सत्यꣳसआत्मातत्त्वमसिश्वेतकेतोइतिभूयएवमाभगवान्विज्ञापयत्वितितथासोम्येतिहोवाच ॥ ३ ॥ खं० ॥ १५ ॥ पुरुषꣳसोम्योतहस्तगृहीतमानयंत्यपहार्षीत्स्तेयमकार्षीत्परशुमस्मैतपतेति सयदितस्यकर्ताभवतितततएवानृतमात्मानंकुरुतेसोऽनृताभिसंधोऽनृतेनात्मानमंतर्धायपरशुंतप्तंप्रतिगृह्णातिसदह्यतेथहन्यते ॥ १ ॥

तिसंबंधः । पश्यतोहरत्वमपहारः । अन्यत्स्तेयं । ततस्तेननेदंमयाकृतमित्युक्तेभटान्प्रतिराजावक्ति । परशुमस्मैअस्यपरीक्षार्थं तपतेति । सःगृहीतोयदितस्यापहारादेःकर्ताभवतिअथचनेतिब्रूते । सःततएवंकृत्वापिनेतिवचनादेवात्मानमनृतमनृतभाषिणंकुरुते । सोनृतोभिसंधोऽभिसंधिरस्येतितथोक्तोऽनृतेनात्मानंअंतर्धायआच्छाद्यपरशुंतप्तंप्रतिगृह्णाति । सदह्यतेथहन्यतेराजभटैः । हतिश्चापराधाधिक्यक्रमेणनानाविधा । कस्यचित्महाकारागृहेपातनंयतोनविमोकः । कस्यचिद्धस्ताद्यवयवच्छेदः । कस्यचिच्चवधएवेति । अत्रसयथातत्रदह्यतेहन्यतेचैवमेवब्रह्मस्तेनमभेदज्ञानिनंहस्तगृहीतमानयंतिवायुकिंकराः । अयंब्रह्मापहार्षीद्ब्रह्मस्तेयमकार्षीदितिवदंतः । ततस्तेननमयाब्रह्मापहारादिकंकृतमित्युक्तेभटान्प्रतिराजावक्तिपरशुमस्मैतपतेति । सयदितस्यकर्ताभवति । तथाचनेतिब्रूते । ततएवात्मानमनृतंकुरुते । सोनृताभिसंधोऽनृतेनात्मानमंतर्धायपरशुंतप्तंप्रतिगृह्णाति । सदह्यतेऽथहन्यते । अपराधाधिक्यक्रमेणतमसिपात्यतइत्यपिग्राह्यं ॥ १ ॥ अथसगृहीतोयदितस्यापहारादेरकर्ताभवतिनेतिब्रूतेच । ततएवाकृत्वैवनेतिवचनदार्ढ्यादेवात्मानंसत्यंसत्यभाषिणंकुरुते । ससत्याभिसंधःसत्येनात्मानमंतर्धायपरशुंतप्तंप्रतिगृह्णाति । सनदह्यतेथमुच्यतेशिक्षकेभ्यः । नकेवलमेतावत् । किंतुमिथ्याभिशंसिहननपुरःसरंराज्ञास्वीक्रियतेच । किंततइत्यतआह ॥ सइति ॥ सोपहाराद्यकर्तातिदृढोयथातत्रतप्तपरशुपरीक्षायांनादाह्येतईषदपिनदह्यते । एवमेवायंनाहंविष्णुरित्युक्तरीत्यादार्ढ्येशपथवद्यदाकुर्यात्तदातप्तपरशुपरीक्षायांनदह्यते । मुच्यतेचशिक्षकेभ्यः । मिथ्याभिशंसिहननपुरःसरंविष्णुनास्वीक्रियतेचेतिवाक्यशेषः

उप० । अथसयदितस्याकर्ताभवतिततएवसत्यमात्मानंकुरुतेससत्याभिसंधःसत्येनात्मानमंतर्धायपरशुंतप्तंप्रतिगृह्णातिसनदह्यतेथमुच्यते ॥ २ ॥

॥ २ ॥ अत्रापिसयएषोणिमेतिवाक्यंग्राह्यं । अर्थस्तूक्तएव । इतिपित्रोपदिष्टोयंश्वेतकेतुर्विगलिताभेदमोहोयदुपदिष्टंभगवद्गाधान्यादिकंततूहाऽबाधितंविजज्ञौबुबोधेतिश्रुतिवाक्यं । अस्येतिकर्मणिषष्ठी । इतिशब्दःसमाप्त्यर्थः । द्विर्वचनमादरार्थं ॥ ३ ॥ षोडशःखंडः ॥ १६ ॥ अत्रतदेषश्लोकइत्यादिःक्वाचित्कःपाठः । तस्यचायमर्थः । तत्तत्रसत्यवचनान्नदाहोभवति किंतुमुक्तिरेवेत्यत्रैषःवक्ष्यमाणःश्लोकोभवति । श्लोकमुदाहरति । **सर्वेषांखलुभूतानांआत्मासत्येप्रतिष्ठितः । तेनात्मानमंतर्धाय नकिंचित्पापमृच्छतीति** । आत्मास्वामी । सत्येसत्यवचनेतेनसत्यवचनेनआत्मानंस्वात्मानंनकेवलंसत्यवचनमात्रंपापालेपहेतुः । किंतुभगवतिप्रीतिश्चेतिभावेनाह ॥ **आत्मसत्यात्मसाक्षीसतांधर्मःप्रतापवान् । नसपापानिकुरुतेयस्मात्माभवतिप्रियोइति** । आत्मापरमात्मैव । सत्यासत्यः । सत्यवचननियामकः । आत्मापरमात्मैवसाक्षादीक्षतइतिसाक्षी । धर्मोधारकः । प्रतापवान् । कीर्तिमान् । यस्याधिकारिणःआत्मापरमात्माप्रियोभवति । सःनपापानिकुरुतइत्यन्वयः । भगवतिप्रीतिमांश्चभेदज्ञान्येवेतिहृदयं । एवंभेदज्ञानिनःफलमुक्त्वाब्रह्मस्तेनस्याभेदज्ञानिनःफलमाह ॥ **जायत्येकोम्रियत्येकोश्नात्येकःशुभाशुभमितीति** । एकःएकत्वज्ञानी । जायतिजायते । म्रियतिम्रियते । शुभाशुभमितिद्वंद्वैकवद्भावः । पापाभिवृद्ध्यावशुभमेवाश्नातीतितात्पर्यं । तानहंद्विषतइत्यादिवचनात् । इतिशब्दःश्लोकसमाप्तिद्योतकः । तच्छ्लोकोक्तमप्ययंश्वेतकेतुरबाधितंबु



उप० । सयथातत्रनदाह्येतैतदात्म्यमिदंसर्वंतत्सत्यंसआत्मातत्वमसिश्वेतकेतोइति तद्धास्यविजज्ञाविति विजज्ञाविति ॥ ३ ॥ खं० ॥ १६ ॥ इतिश्रीमच्छांदोग्योपनिषदिषष्ठोध्यायः ॥ ६ ॥



बोधेतिश्रुतिःस्वयमाह ॥ तद्धस्यविजिज्ञावितीति । अभ्यासस्तात्पर्यार्थः । विजिज्ञावित्युक्तंकिंतज्ज्ञानेनेत्यतोज्ञानसामर्थ्येश्लोकोप्यस्तीत्याह ॥ **तदेषश्लोकइति** ॥ तमुदाहरति ॥ **सर्वभूतात्मभूतेभ्यःसम्यग्भूतानिपश्यतो । देवाअपिमार्गेमुह्यंतिपदज्ञानात्पदैषिणः । पदज्ञानात्पदैषिणइतीति** ॥ छांदसत्वादुत्तरार्धस्थदकारमादायपश्यतइतिरोरुत्वं । एवंभवतिप्रियोइतिप्रागुक्तमपिज्ञेयं । सर्वभूतानामात्मभूतेभ्यःस्वामिभूतेभ्योदेवेभ्यस्तत्प्रसादादितियावत् । भूतानिसर्वभूतांतर्गतानिभगवद्रूपाणि । पूर्णानिवा । सम्यक्पश्यंतोपरोक्षीकुर्वतोमार्गेपदज्ञानात्भगवत्स्वरूपज्ञानात्पदैषिणःस्वपदप्राप्तीच्छवोदेवाअपिमुह्यंति । देवैरप्याकांक्ष्योयंज्ञानिमार्गइतिस्तुतिरियं । द्विर्वचनमध्यायार्थस्यसर्वस्यापिप्रामाणिकत्वसूचनार्थं ॥ ७ ॥ **इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्यश्रीमच्छंदोगोपनिषद्भाष्यस्यटीकायांवेदेशभिक्षुविरचितायांपदार्थकौमुद्यांषष्ठोध्यायः ॥ ६ ॥**

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ नामादिप्राणपर्यंतदेवश्रेष्ठायविष्णवे ॥ सत्याद्यात्मां
तरूपायनमोभगवतेसदा ॥ १ ॥ पूर्वंजीवभिन्नत्वादिनाविष्णोःसर्वोत्तमत्वंनिरूपितं । इदानींतद्देवतातारतम्यपुरःसरमेवतारत
म्यांतगत्वेनज्ञातंफलवन्नान्यथेतिभावेनदेवतातारतम्यकथनपुरःसरंविष्णोःसर्वोत्तमत्वमेवनिरूपयत्यनेनाध्यायेन । तत्रयद्वेत्थते
नमोपसीदेत्यत्रमेत्यस्यनिषेधार्थत्वंप्रतीयते । अस्मच्छब्दरूपत्वेपितेनमामुपसीदेत्युक्तं । स्वज्ञानपरित्यागेनागमनासंभवेनस्वज्ञा
नेनसहैवनारदेनागतत्वादित्यतस्तद्व्याचष्टे ॥ यद्वेत्थेति ॥ ननुनारदोक्तविद्यामध्येऋग्वेदादिपुराणांताविद्याःप्रसिद्धाः । पित्र्यं
राशिमित्यादिकंअप्रसिद्धमतोप्रतिपत्तिविप्रतिपत्तिनिरासायपित्र्यमित्यादिकंक्रमात्प्रमाणेनैवव्याचष्टे ॥ पितृलक्षणमित्यादि
ना ॥ पितॄणांलक्षणंयस्मिंस्तत्पितृलक्षणंश्राद्धकल्पः । पूगलक्षणंसंख्यासमूहलक्षणंगणितशास्त्रं । देवानांयथाक्रमंद्वात्रिंशल्लक्ष
णादिप्रतिपादकंशास्त्रंदेवतालक्षणंदैवमुत्पातज्ञानमित्यप्रामाणिकं । निधिलक्षणमेतादृशस्थलेनिधिरस्तीत्यादिप्रतिपादकं । मूल
वेदःप्रागेवर्ङ्गिगदादिरूपेणविभक्तः । ततश्चप्रागृगादिशब्दैरवांतरोवेदोग्राह्यइतिभावः । वेदासारोपसंहृतिःमूलवेदसारस्यावांत
रवेदस्योद्धारश्चतुर्विंशत्यादिशाखारूपः । वाकोवाक्यंतर्कशास्त्रमेकायनंनीतिशास्त्रमित्यप्रामाणिकं । देवविद्यादैवमित्युक्तैवेत्य
सत् । तथासतिपुनरुक्त्यापातादितिभावेनोक्तं ॥ देवेति ॥ तुशब्दःपूर्वोक्ताद्विशेषज्ञापनार्थः । देवैरेवज्ञेयायाविद्यासादेवविद्या ।

भा० । यद्वेत्थतेनतदुक्त्वामामुपसीद । पितृलक्षणंतुपित्र्यंस्याद्राशिःस्यात्पूगलक्षणं । देवतालक्षणंदैवंनिधिश्चनिधिलक्षणं । वाकोवाक्यंमूलवेदोवेदसारोपसंहृतिः । एकायन
मितिप्रोक्तंदेववियात्वमानुषी ।

अवधारणव्यावृत्त्यमाह ॥ **अमानुषीति** ॥ नमानुषैर्ज्ञेयेत्यर्थः । अरण्येअधीयतइत्यारणमुपनिषत् । ब्रह्मविद्याशिक्षाकल्पादिकमित्यप्रामाणिकं । भूतचिह्नंदेवेतरभूतचिह्नप्रतिपादकंसामुद्रं । नीतिकानीतिशास्त्रं । क्षत्रविद्याधनुर्वेदइत्यप्रामाणिकं । सर्पलक्षणंगारुडं । देवपरिचारगागांधर्वं । नन्वेवंतर्हिनारदस्यसर्वविद्यावेत्तृत्वेनात्मविद्याविन्त्वात्कथंसोहंमंत्रविदेवास्मिन्नात्मविदितिस्वस्याज्ञत्वमुच्यते । तन्माभगवांच्छोकस्यपारंतारयत्वितिकिमितिकुमारःप्रार्थ्यतइत्याशंकांप्रमाणेनैवपरिहरति ॥ **विद्यानामिति** ॥ सर्वविद्याविदपिपुमानद्धाविद्यानांनिर्णयाज्ञानादविद्वानित्युच्यतेयस्मात्तस्मात्सर्वविद्याविदपिदेवर्षिरद्धानिर्णयवित्तयेकुमारमैच्छदित्यन्वयः । ब्रह्मवित्तममितिगुरुत्वप्रयोजकोक्तिः । तेनदेवर्षिर्नारदःस्वयंश्रेष्ठोपिप्राकृतपुरुषवत्सनत्कुमारमाससादेतिनिरस्तं । सनत्कुमारस्यस्कंदत्वेनतदपेक्षयाप्युत्तमत्वात् । नारदप्रार्थितःकुमारोयद्वैकिंचैतदध्यगीष्ठानामैवैतन्नामवाऋग्वेदइत्यादिनासर्वविद्यानांनामत्वमाहातत्कस्यनामेत्यतआह ॥ **विष्णोरिति** ॥ नामोपास्वेतीतिविधिवाक्यस्थनामशब्दस्यप्रसिद्धार्थत्वप्रतीतिंनिवारयंस्तदर्थमाह ॥ **नामाभिमानिनीति** ॥ ननुविधिवाक्येब्रह्मेतिपूरणीयं । अन्यथेतिशब्दानुपपत्तेः । नाम

---

भा० । देवज्ञेयैवयाविद्याब्रह्मविद्यातथारणं । भूतविद्याभूतचिह्नंक्षत्रविद्यातुनीतिका । नाक्षत्रीज्योतिषाख्याचसर्पलक्षणमेवच । सर्पविद्येतिसंप्रोक्तायादेवपरिचारगा । सादेवजनविद्यास्यादेतावेदसनारदइतिसामसंहितायां ॥ विद्यानांनिर्णयाज्ञानादविद्वानुच्यतेपुमान् । सर्वविद्याविदप्यद्धातस्मान्निर्णयवित्तये । कुमारमैच्छद्देवर्षिर्नारदोब्रह्मवित्तममितिच । विष्णोर्नामयतोविद्याःसर्वनामेत्यतःस्मृतः । नामाभिमानिनीचोषास्तस्यांब्रह्मपरंस्मरेत् । यदेषानत्वमेयास्यान्मीयतेह्युषसिध्रुवं । रात्रिमानमजानद्भिस्ततोनामेत्युषाःस्मृता ॥ खं० ॥ १ ॥

ब्रह्मेत्युपास्तइत्यनुवादायोगाच्च । ततश्चनामब्रह्मशब्दयोःप्रथमांतत्वेनैक्यदृष्टिरत्रकर्तव्येत्युच्यतइत्यबुधानांशंकावारणायतद्व्या
चष्टे ॥ **तस्यामिति** ॥ ननूषसोश्विभार्यायाःनामत्वमेवकथं । तदभिमानित्वादित्युक्तमेव । तर्हिंसर्वविद्याभिमानित्वेभारत्यादि
वदमेयत्वंस्यादित्याशंकांनामशब्दनिर्वचनेनैवपरिहरति ॥ **यदिति** ॥ एषायस्मादमेयानैवततोनामेतिस्मृता । अमाअमेयान
भवतीतिनामेतिनिर्वचनात् । इयंकुतोनामेयेत्यतउक्तं । मीयतइति । रात्रिमानमजानद्भिरुषस्युषःकालेध्रुवंमीयते । तदभिमा
नित्वात् । यस्मात्तस्मान्नत्वमेयेत्यन्वयः ॥ खं० ॥ १ ॥ वाग्वावनाम्नोभूयसीतिद्वितीयखंडतात्पर्यमाह ॥ **तस्याइति** ॥ स्वा
हाग्निर्भार्या । तथाशब्दउपमायां । सर्वदेत्यस्यविवरणंविमुक्तौबंधेचेति । श्रुतौवाग्भूयसीतिश्रवणात्कथंस्वाहेत्युक्तिरित्यतआह ॥
**वाचइति** ॥ वागिंद्रियस्य । वसोरग्नेरंचनात्पूजनाच्चवाङ्नाम्नीः ॥ खं० ॥ २ ॥ मनःशब्दस्यप्रसिद्धार्थत्वप्रतीतिमपाकुर्वन्म
नोवाववाचोभूयइतिखंडतात्पर्यमाह ॥ **एवमिति** ॥ चशब्दाद्बंधेच । पर्जन्यःकश्चिदादित्यः । सर्वतःसर्वैर्गुणैः । कथंतर्हिंश्रु
तौमनःशब्दप्रयोगइत्यतःपर्जन्येश्रौतमनःशब्दप्रयोगंद्वेधाघटयति ॥ **मनोभिमानीति** ॥ वृष्ट्यांकुरादेर्निर्माणतश्चमनः । मा
निर्माणइतिधातोः ॥ खं० ३ ॥ संकल्पोवावमनसोभूयानित्येतद्व्याचष्टे ॥ **तथेति** ॥ श्रौतसंकल्पशब्दोपपत्तिःसंकल्पदेवतेति ।
यस्मादह्निसंकल्पयेत् । प्रजानांसंकल्पमुत्पादयेत्ततःसंकल्पनामकइत्यर्थः । अह्नीतिविशेषणकृत्यमाह ॥ **स्वप्स्यंतीति** ॥ नि

भा० । तस्यास्तुभूयसीस्त्राहाधर्मज्ञानसुखादिभिः । सर्वैर्गुणैर्विमुक्ताैचतथाबंधेचसर्वदा । वाचोभिमानिनीसैववाङ्नाम्नीवाचनाद्वसोः ॥ खं० ॥ २ ॥ एवंतस्याविमुक्तौ
चपर्जन्यःसर्वतोवरः । मनोभिमानसंप्रोक्तोवृष्ट्यानिर्माणतोमनः ॥ खं० ॥ ३ ॥ तथातस्माद्वरोमित्रोमुक्तौसंकल्पदेवता । अह्निसंकल्पयेद्यस्मात्स्वप्स्यंतिनिशियत्ततः ।



शिसंकल्पाभावादेवाह्नीत्युक्तमितिभावः । अह्नीतिस्वापकालातिरिक्तकालपरं । चित्तंवावसंकल्पाद्भूयइत्येतद्व्याचष्टे ॥ **तथेति** ॥
श्रौतचित्तशब्दंद्वेधाघटयति ॥ **चित्तस्येति** ॥ चितत्वाद्यज्ञकुंडेचितत्वाच्च । ध्यानंवावचित्ताद्भूयइत्येतद्व्याचष्टे ॥ **तस्मादिति** ॥
एवेतिप्रसिद्धार्थंव्यावर्तयति । तस्मादग्नेर्वरुणोमुक्तौवरइत्यर्थः । तत्रध्यानशब्दंद्वेधाघटयति ॥ **ध्यानस्येति** ॥ सत्यानृतविवे
कार्थंब्रह्मणानिधानतश्चतन्नामाध्याननामेत्यर्थः । विज्ञानंवावध्यानाद्भूयइत्येतद्व्याचष्टे ॥ **तथेति** ॥ सत्यस्यविवेचनात्तन्नामेत्य
न्वयः । बलंवावविज्ञानाद्भूयइत्येतद्व्याचष्टे ॥ **तस्माच्चेति** ॥ चस्त्वर्थः । प्रधानवायुव्यावृत्त्यर्थंभूतात्मकइत्युक्तं । बलात्मको
बलस्वरूपइतिबलशब्दोपपत्तिः । तथाशब्देनबलदेवतात्वंसमुच्चीयते । अन्नंवावबलाद्भूयइत्येतद्व्याचष्टे ॥ **तस्मादिति** ॥ अन्न
देवइत्यन्नशब्दोपपत्तिः । अनुनादित्वात्युद्धादौशत्रुभीषकशब्दवत्त्वादित्यर्थः । अपोवावान्नाद्भूयइत्येतद्व्याचष्टे ॥ **तैजसेति** ॥
तथाततोनिरुद्धात्तैजसाहंभवस्तैजसाहंकारादुत्पन्नोवरिष्ठइत्यन्वयः । सकइत्युक्तं । प्राणाख्योवायुरिति । परप्राणव्यावृत्त्यर्थंतै
जसाहंभवइत्युक्तं । अप्शब्दमुपपादयति ॥ **सइति** ॥ देहसंव्याप्तेश्चाप्नामा । तेजोवावाद्भ्योभूयइत्येतद्व्याचष्टे ॥ **तथेति** ॥
वरिष्ठइत्यनुवर्तते । तेजःशब्दंयोजयति ॥ **तेजोभिमानीति** ॥ तेजआत्मकश्चेतिशेषः । प्रकाशरूपस्यतेजसःसूर्यादिधर्मत्वा

भा० । तथामित्राद्वरस्त्वग्निर्मुक्तौचित्तस्यदेवता । चितत्वाच्चित्तनामाचतस्माद्वरुणएवच । ध्यानस्यदेवताचासौतन्नामाचनिधानतः । सत्यानृतविवेकार्थंतथातस्मान्निशाकरः ।
विज्ञानदेवताचासौतन्नामाचविवेचनात् । सत्यस्यतस्माच्चतथावायुर्भूतात्मकोवरः । बलात्मकस्तथातस्मादन्नदेवोनिरुद्धकः । अन्ननामानुनादित्वात्तैजसाहंभवस्ततः । तथावरिष्ठः
प्राणाख्योवायुःसोपांचदेवता । अप्नामादेहसंव्याप्तेस्तथातस्मात्पुरंदरः । तेजोभिमानीतन्नामातेजोह्योजइतीर्यते ।

दाह ॥ तेजइति ॥ ओजःपराभिभवशक्तिः । आकाशोवावतेजसोभूयानित्येतद्व्याचष्टे ॥ तथेति ॥ तथाशब्दउपमायां । एव
शब्दःप्रसिद्धव्यावृत्त्यर्थः । चशब्दोवारुण्यादिसमुच्चयार्थः । स्मरोवावाकाशाद्भूयानित्येतद्व्याचष्टे ॥ तस्याइति ॥ सदाशिव
एव । स्मरशब्दंयोजयति ॥ स्थिरेति ॥ सममेकप्रकारमेव । रतेर्भगवतिरमणाच्चस्मरइत्यर्थः । आशावावस्मराद्भूयसीत्येतद्व्या
चष्टे ॥ मुख्येति ॥ मुख्यवायुर्ब्रह्म । तस्मात्सदाशिवात्सरस्वत्येव । सर्वगुणैर्बंधमुक्त्योःपरमेत्यन्वयः । आशाशब्दोपपादन
माशास्वरूपिणीतिआशादेवताच । आशाशब्दंतस्यांनिर्वक्ति ॥ शमिति ॥ प्राणोवाआशायाभूयानित्येतद्व्याचष्टे ॥ तस्याइ
ति ॥ प्राणशब्दंनिर्वक्ति ॥ प्रकृष्टानामिति ॥ प्रकृष्टानांनामादिसरस्वत्यंतानां । नायकोयतोतःप्राणनामा । चशब्देनप्राणदे
वतात्वंसमुच्चीयते । प्रकारांतरेणप्राणशब्दंनिर्वक्ति ॥ णइति ॥ ह्वियस्मात्णइत्यनेनैवशब्देनानंदःसमुदीरितस्तस्मादाणासरस्व
ती । पूर्णानंदत्वात् । ततश्चतदपेक्षयाप्रकृष्टसुखात्मकोवायुःप्राणइत्युच्यते । आणायाःप्रकृष्टःप्राणःप्रकृष्टत्वंचसुखरूपत्वेनैवेति
भावः । नामादिप्राणांतानांआधिक्यमुक्तं । तत्रविशेषमाह ॥ सर्वइति ॥ दशशब्दोयथायोग्यंबहुत्ववाची । उक्तापवादमाह ॥
पर्जन्येति ॥ स्वाहायाःपर्जन्यस्तस्मान्मित्रस्तस्मात्शिखीअग्निः । सोमाद्भूतवायुर्द्विगुणःइतिद्विगुणाएव । अनिलाद्भूतवायोः

---

भा० । तथातस्मादुमाचैवसाचाकाशाभिमानिनी । आकाशनाम्नीदीप्तत्वात्तस्याश्चैवसदाशिवः । स्थिरस्मृत्यभिमानीससममेवरतेःस्मरः । मुख्यवायुप्रियातस्मात्परमैवसरस्व
ती । बंधमुक्त्योःसर्वगुणैःसर्वदाऽऽशास्वरूपिणी । शमित्यानंदउद्दिष्टआशापूर्णसुखत्वतः । तस्याःश्रेष्ठोमुख्यवायुःप्रकृष्टानांचनायकः । प्राणनामाणइत्येवह्यानंदःसमुदीरितः ।
आणासरस्वतीप्रोक्तातत्प्रकृष्टसुखत्वतः । प्राणइत्युच्यतेवायुःसर्वेत्वेतेदशोत्तराः । पर्जन्यमित्रशिखिनोभूतवायुस्तथैवच । द्विगुणाएवानिरुद्धोऽनिलात्पंचगुणाधिकः ।

पादेनोनःपादोनः । सःवरुणःसोमतोऽध्यर्धोनःपादपादार्धोनः । आशामुख्यवायुश्चेत्येतौशिवात् । अस्याःआशायाःक्रमेणशतोत्तरावित्यर्थः । एवंचदशोत्तराइतिसामान्यवचनस्योक्तातिरिक्तविषयत्वंमंतव्यं । ततश्चायंविवेकोभवति । पुष्करोनामकर्माभिमानीसर्वावरोग्राह्यः । अन्यत्रोक्तत्वात् । ततोनामदशोत्तरं । नाम्नःस्वाहादशोत्तरा । तस्याःपर्जन्योद्विगुणोत्तरः । ततोमित्रोद्विगुणः । मित्रादग्निर्द्विगुणः । अग्नेर्वरुणःपादाधिकः । वरुणात्सोमःपादार्धतोधिकः । सोमात्प्रवहःद्विगुणोत्तरः । भूतवायोरनिरुद्धःपंचगुणः । अनिरुद्धात्तैजसाहंभवोदशोत्तरः । तस्मात्पुरंदरोदशोत्तरः । तस्मादुमादशोत्तरा । उमायाःशिवोदशोत्तरः । शिवादाशाशतोत्तरा । तस्यामुख्यवायुःशतोत्तरइति । ननूक्तानांक्वचिदन्यथापिसंख्योक्तेःकथमयंनियमइत्यतआह ॥ संख्येति ॥ यत्रोक्तानांसंख्यान्यथात्वंस्यात्तत्रोत्तमावेशविशेषतस्तद्घटनीयमित्यर्थः । आवेशविशेषतोपिसंख्यान्यथात्वेभवदुक्तंनियमभंगइत्यतआह ॥ अवराणामिति ॥ यदावराणनिजगुणस्यांपिपरमीयत्वंतदाकिम्वावेशप्रयुक्तस्येत्यर्थः । निजगुणापेक्षयानोक्तनियमभंगइतिभावः । यद्वाएवमधमानांक्लृप्तस्वरूपापेक्षयाधिकसंख्योक्तिरावेशविशेषप्रयुक्तेत्यभिधायेदानींउत्तमानांक्लृप्तस्वरूपापेक्षयाधिकसंख्योक्तौनिमित्तमाह ॥ अवराणामिति ॥ परमीयत्वतःउत्तमाधीनत्वात् । तथाचाधमगुणानामप्युत्तमीयत्वविवक्षयोत्तमानांक्लृप्तापेक्षयाधिक्योक्तिरितिभावः । प्रश्नप्रतिवचनाध्याहारेणसत्यंवावप्राणाद्ब्रूयइतिवाक्यंनामादिप्राणांता

---

भा० । पादोनोवरुणादग्निरध्यर्धोनःसमोमतः । शिवादाशातथैवास्यामुख्यवायुश्शतोत्तरौ । संख्यान्यथात्वंयत्रस्यात्तत्रावेशविशेषतः । अवराणांगुणस्यापिपरमीयत्वतस्तथा ।

नामिवपरिमितत्वशंकांनिवारयन्व्याचष्टे ॥ प्राणादिति ॥ योवैभूमातदमृतमित्यस्यार्थोनित्यमुक्तइति । यत्रनान्यत्पश्यती त्यस्यार्थोनित्यशक्तिरिति । सएवाधस्तादित्यादेस्तात्पर्यंनित्योद्रिक्तेति । नामादिप्रकरणंमुक्तावपितारतम्यपरमितिप्रमाणेनैवव्या ख्यातं । तत्रतैत्तिरीयसमाख्यामप्याह ॥ सैषेति ॥ इयंचमुक्ततारतम्यपरेत्यन्यत्रोक्तं । तैत्तिरीयश्रुतावपिनामादिक्रमाभावा न्नामादीनामेवमुक्तौतारतम्यपरंश्रुत्यंतरमाह ॥ अथेति ॥ संभूतिरुत्पत्तिःकथ्यते । विद्यारमाजायतइतिप्रत्येकंसंबध्यते । श्र द्धातत्पत्नी । बुद्धिरुमा । तेषांपूर्वोक्तानांमध्येपरःपरःपूर्वपूर्वस्त्तोगुणैर्ज्यायान् । उत्तरउत्तरःउत्तरोत्तरोक्तःप्रत्यवरइत्यर्थः । तत्र हेतुमाह ॥ परस्मादिति ॥ मुक्तिमेवविवृणोति ॥ स्वमिति ॥ मुक्तिर्हित्वान्यथारूपंस्वरूपेणव्यवस्थितिरितिवचनात् । उक्त पारावर्यस्यमोक्षावधिकत्वशंकांपरिहरति ॥ नैषामिति ॥ स्वाभाविकस्यापिप्रबलकारणवशादुच्छित्तिशंकायामाह ॥ नैषामि ति ॥ नामब्रह्मेत्युपास्वेत्यारभ्यप्राणोब्रह्मेत्युपास्वेत्यंतेषुबहुषुस्थलेषुसामानाधिकरण्यश्रवणात्तत्तदभेदेनैवोपास्तिःकार्येतिप्रतीतिं निवारयंस्तानिवाक्यानिप्रमाणेनैवव्याचष्टे ॥ नामादीति ॥ ननुप्रतिमायांविष्णूपास्तिवत्नामादिषुब्रह्मोपास्तौतदभेदेनोपा

भा० । प्राणात्तुभगवान्विष्णुरनंतगुणतोधिकः । नित्यमुक्तोनित्यशक्तिर्नित्योद्रिक्तगुणःप्रभुरितितत्वविवेके । सैषानंदस्यमीमांसाभवतीत्यादेश्च । अथातःसंभूतिःपरमाद्विद्या विद्यायाःप्राणःप्राणाच्छ्रद्धाश्रद्धायाःशिवःशिवाद्बुद्धिर्बुद्धेरिंद्रइंद्रात्तैजसःप्राणस्तैजसादनिरुद्धोऽनिरुद्धात्स्पर्शवातःस्पर्शवातात्सोमःसोमाद्वरुणोवरुणादग्निरग्नेर्मित्रोमित्रात्पर्जन्यःपर्ज न्यात्स्वाहास्वाहायाउषाजायतेतेषांपरःपरोज्यायान्गुणैरुत्तरउत्तरःप्रत्यवरःपरस्मात्परस्मादुत्तरउत्तरोमुच्यतेस्वंस्वंभावमापद्यते । नैषांपारावर्यमुच्छिद्यतेकदाचननै षांपारावर्यमु च्छिद्यतेकुतश्चनपारावर्येणैवब्रह्मोपयंतिपारावर्येणैवमुक्ताःसंचरंतीत्यादिश्रुतेश्च । नामादिमारुतांतेषुदेवेष्वेभ्यश्चभेदतः । उपासितोहरिर्मुक्तिंदद्यान्नास्त्यत्रसंशयइतिसत्तत्वे ।

स्तिःप्राप्तेत्यतउक्तं । एभ्योभेदतश्चेति । नमादिप्राणांतेषुब्रह्मोपास्तिःकर्तव्येत्युक्तं । नामादीनांतरतमभावेनतद्गतब्रह्मणोपित रतमभावापत्तेरित्याशंकांस्मृत्यैवपरिहरति ॥ उषादीति ॥ उषेत्याकारांतोप्यस्ति । सूषाचमेसुदिनंचमइत्यादिप्रयोगदर्शनात् । समःस्वरूपेण । उत्तरोत्तरेध्यातइत्यन्वयः । कुतइत्यतआह ॥ उत्तमेष्विति ॥ यतउत्तमेषूत्तमाप्रीतिर्भगवतस्ततस्तत्रोत्तमेषु स्मृतोध्यातुरप्युत्तमांप्रीतिंयायादित्यन्वयः । नकेवलमुत्तमोत्तमेषुभगवदुपास्तेरेवफलहेतुत्वं । किंतुतत्तारतम्यज्ञानपुरःसरमेवे त्याह ॥ तारतम्येति ॥ तदविहाय । ध्यातोध्यानेनप्रीतः । अन्यथातारतम्यपरिज्ञानंविना । नामब्रह्मेत्यादौनामादिशब्दःस प्तम्यर्थतयाव्याख्यातः । तदेवस्पष्टप्रमाणेनद्रढयन्नर्थांतरमाह ॥ नामादीति ॥ प्राणपर्यंताःसर्वशःशब्दाःतृतीयार्थत्वेनाम्नाब्र ह्मोपास्वइति । पंचम्यर्थत्वेतुनाम्नोभिव्यक्तंब्रह्मेति ॥ षष्ठ्यर्थत्वेनाम्नःप्रीतिविषयोब्रह्मेति । चतुर्थ्यर्थत्वेतुनाम्नेफलप्रदंब्रह्मेति । उपास्वेतिवाक्ययोजनाद्रष्टव्या । यद्वैकिंचिदध्यगीष्टानामैवैतदित्यादौयत्रकुत्रचिच्छ्रुतानांनामादिप्राणांतशब्दानांसप्तम्याद्यर्थ त्वप्राप्तावाह ॥ तइति ॥ तदासप्तम्यर्थाइतिपूर्वेणसंबंधः । ननुप्रथमासप्तम्याद्यर्थेत्ययुक्तं । प्रयोगाभावात् । नियामकाभावा च्चेत्यतःप्रयोगंतावदाह ॥ ब्राह्मणइति ॥ ब्राह्मणोस्यमुखमित्यत्रमुखमितिप्रथमायद्वत्यथापंचम्यर्था । यथाआत्मावैपुत्रनामा

भा० । उषादिमारुतांतेषुसमःसमगुणोपिसन् । ध्यातःप्रीतिंहरिर्यायादधिकामुत्तरोत्तरे । उत्तमेषूत्तमाप्रीतिस्तस्यतत्रस्मृतस्ततः । ध्यातुरप्युत्तमांप्रीतिंयायान्नास्त्यत्रसंश- यः । तारतम्यपरिज्ञानात्तेषुध्यातोविमुक्तिदः । प्रीतिंचनान्यथायायादितिशास्त्रस्यनिर्णयइतितत्वविवेके । नामादिप्राणपर्यंताःसप्तम्यर्थाःप्रकीर्तिताः । तृतीयापंचमीषष्ठीचतुर्थ्य र्थाश्चसर्वशः । शब्दास्तेब्रह्मशब्देनसंबध्येयुर्यदातदा । ब्राह्मणोस्यमुखंयद्वदात्मावैपुत्रकोयथा । यथाचयूपआदित्यएवमेषप्रकीर्तितः ।

सीत्यत्रात्मेतिप्रथमाआत्मनःपुत्रइतिषष्ठ्यर्थोयथाचादित्योयूपइत्यत्रयूपइतिप्रथमासप्तम्यर्थो । सामानाधिकरण्यस्यबाधितत्वा
त् । एवमेषनामादिशब्दःपंचम्याद्यर्थःप्रकीर्तितइत्यर्थः । नियामकंसूत्रंपठति ॥ सप्तस्विति ॥ प्रतीतंनामादेर्ब्रह्मैक्यमेवार्थः
किंनस्यादित्यतस्तत्रबाधकमाह ॥ भूयोभूयस्त्वतइति ॥ वाग्वावनाम्नोभूयसीत्यादिनावागादीनांनामादिभ्यउत्तरोत्तरंभूय
स्त्वोक्तेर्ब्रह्मणोनामाद्यात्मकत्वेब्रह्मणएवोत्तमाधमत्वप्रसंगान्नैवमित्यर्थः । अस्त्वेवंमनोहिब्रह्मेत्यादिवाक्यस्यार्थः । सयोनामब्रह्मे
त्युपास्तेवाचंब्रह्मेत्युपास्तइत्यादिवाक्यस्यतुकथं । नहिप्रथमावत्द्वितीयायाःसप्तम्याद्यर्थत्वेनियामकमस्तीत्याह ॥ षट्त्स्विति॥
नामरूपेव्याकरोदितिश्रुतेः । परस्यनामाद्युत्पत्तिकारणत्वाच्च । नतदात्मकंब्रह्मांगीकार्यमित्याह ॥ कारणत्वादिति ॥ ननुव
यमपिननामाद्यात्मकंब्रह्मेतिब्रूमः । किंतुनामाद्यात्मकतयाध्यानंकार्यमिति । अविद्यमानस्यापिध्यानसंभवादित्यतआह ॥ नही
ति ॥ नकेवलंपुरुषार्थाभावः । किंत्वित्यतआह ॥ अनर्थश्चेति ॥ तस्मादधमस्योत्तमत्वध्यानात् । तत्रदृष्टांतमाह ॥ भृत्यइ
ति ॥ बोधोध्यानं । ननुनवयंनामादौब्रह्मत्वबोधःकार्यइत्यर्थंब्रूमः । किंतुब्रह्मणीवनामादौपूजाकार्येति । तद्भिन्नत्वेनज्ञानेपित
त्पूजाकरणोपपत्तेरित्यतस्तत्राप्यनर्थंसदृष्टांतमाह ॥ राजेति ॥ कुर्याद्यस्तमितिशेषः । भृत्यश्चहिनस्ति । स्वपूजकंकथंहिनस्ती
त्यतउक्तंतद्वशत्वादिति । राजवशत्वात् । अन्यथाराजोल्लंघनेनस्वस्यापराधप्राप्तेः । उपास्तेपूजयति । इतराणिनामादीनि । उ

भा० । सप्तसुप्रथमायस्माद्भूयोभूयस्त्ववतस्तथा । षट्सुद्वितीयायस्माच्चकारणत्वात्परस्यच । नह्यन्यदन्यदित्येवध्यातंस्यात्पुरुषार्थदं । अनर्थश्चभवेत्तस्माद्भृत्येराजेतिबोधवत् ।
राजपूजांयथाभृत्येकुर्याद्राजाहिनस्तिहि । तद्वशत्वात्तथाभृत्यएवंनामादिकंचयः । उपास्तेब्रह्मरूपेणतंब्रह्माथेतराणिच । पातयंतितमस्यंधेतस्मान्नेक्षेततांस्तथेतिसामसंहितायां ।

पसंहरति ॥ **तस्मादिति** ॥ तान्नामादीन्तथाब्रह्मत्वेन । किंचनामादिप्राणपर्यंतंचत्वन्मतेह्यचेतनमेव । नचतद्ब्रह्मत्वेनोपा सितंफलदमितिभावेनाह ॥ **अचेतनमिति** ॥ अयोग्यंयथाब्रह्मणिसोरोदीदित्यादिप्रतीतंरोदनादि । अतात्विकमितिवचनेना तात्विकमेवैक्यंतथाध्येयमितिनिरस्तं । ननुयज्ञेदर्भचर्मादीनामचेतनानामेवफलप्रदत्वंश्रूयते । तथाचकथमचेतनोपास्तिरनर्थफ लेत्यतआह ॥ **दर्भेति** ॥ अतःअचेतनोपास्तेरनर्थफलत्वादेव । तत्रश्रुतौदर्भादिशब्दास्तदभिमानिदेवतापराइत्यर्थः । ननुय स्यकस्यचिदचेतनस्यफलदत्वाभावेपियज्ञाद्युपयुक्तंफलप्रदंकिंनस्यादित्यतआह ॥ **नहीति** ॥ ननुरसौषधादीनामचेतनानामेव सेवितानामारोग्यादिफलप्रदत्वदर्शनात्कथमेतदित्यतआह॥**औषधेति**॥स्थिताइतिशेषः। एतस्मादचेतनस्यफलदत्वाभावात्। एवं चेदौषधादिस्तदेवाज्ञस्यौषधग्रहणेफलंनस्यादित्यतोदेवानांस्वभावमुत्तरमाह॥**औषधादिस्थिताइति**॥ अनेनवरप्रदाइत्युक्तंविवृ तं। उक्तमर्थंसदृष्टांतमुपपादयति॥**यथेत्यादिना**॥ ग्रामप्राप्तिःग्रामलाभःराजाज्ञस्याप्यन्यस्माद्ग्रामलाभदर्शनादुक्तं॥**ततइति**॥ रा ज्ञः। एवमितिदार्ष्टांतिकोक्तिः। अल्पतः दृष्टफलस्यभोजनवदल्पत्वात्। नचौषधादिस्थितादेवाअज्ञस्यापिदृष्टफलंदद्युश्चेत्कथमौषध स्वीकारेपिरोगानिवृत्तिरित्यतस्तद्दानेपिनिमित्तमाह॥**किंचिदिति**॥तच्चदृष्टमपिफलं। किंचिज्ज्ञानपूर्वकृताद्दृष्टसहकारादेवभवेत्।

---

भा० । अचेतनमयोग्यंचतथैवातात्विकंक्वचित् । नोपासीतपरोनर्थःस्यात्तथोपासनाकृतः । दर्भचर्मादयश्चातोदेवताह्यभिमानिनः । नह्यचेतनकंकिंचित्फलदंस्यात्कदाचन । औषधादिषुचैतस्माद्देवाएववरप्रदाः । औषधादिस्थितादेवास्तेऽज्ञेदृष्टफलप्रदाः । ज्ञानिन्यदृष्टदाश्चस्युर्नादैवंकिंचिदिष्यते । यथाऽज्ञस्यापिराज्ञस्तुभोजनंकॢप्तमिष्यते । नत्ववि ज्ञायराजानंग्रामप्राप्तिस्ततोभवेत् । एवंदेवादृष्टफलंदद्युरज्ञस्यचाल्पतः । किंचिज्ज्ञानकृताद्दृष्टात्तचनैवान्यथाभवेत् । अदृष्टाख्यंफलंयत्तुतज्ज्ञस्यैवनचान्यगं ।

अन्यथानैव । ततश्चतस्यादृष्टाभावादेवरोगानिवृत्तिरितिभावः । अचेतनमयोग्यंचेत्युक्तमुपसंहरंस्तदुपासावर्जनाधिकारिणमाह॥ तस्मादिति ॥ असत्यांअयोग्यामितितदुपासोपलक्ष्यते । हरिप्रियानिच्छायांबाधकंसूचयति ॥ अथेति ॥ दर्भचर्मादयश्चातो देवताद्यभिमानिनइत्युक्तार्थेसूत्रंपठति ॥ अभिमानीति ॥ मृदब्रवीदापोब्रुवन्इत्यादौमृदाद्यभिमानिदेवताव्यपदिश्यतइत्यर्थः । यदुक्तंनह्यचेतनकंकिंचित्फलदंस्यादिति । तदयुक्तं । पयसोऽचेतनस्यापिदध्याकारेणपरिणामदर्शनात् । अचेतनस्यैवांबुनोगतिदर्शनात् । कूलस्यपतनदर्शनात् । तद्वदचेतनस्यापिदर्भादेःफलदानादौप्रवृत्तिःकिंनस्यादित्याक्षिप्यसमादधत्सूत्रमेवोपन्यस्यति ॥ पयोंबुवदिति ॥ नपयोंब्वादिनिदर्शनादचेतनस्यापिफलदानादौप्रवृत्तिःकल्प्या । तत्रापिपयोंब्वादिप्रवृत्तावपिईश्वरनिमित्तत्वाभिधायकश्रुतेरित्यर्थः । साचैतस्यवाऽक्षरस्यप्रशासनेगार्गिप्राच्योन्यानद्यःस्यंदंतेइत्यादिका । दर्भचर्मादयइत्युक्तार्थेऽभिमानीतिसामान्यसूत्रंपठितं । विशिष्यतत्परमेवदेवतामीमांसासूत्रंपठति ॥ देवेष्विति ॥ अचेतनंअयोग्यंचेत्युक्तार्थेपितत्सूत्रमेवपठति ॥ अचेतनेति ॥ अचेतनमसत्यमयोग्यंचनोपास्यंफलाभावात् । विपरीतफलप्राप्तेश्चेतिसूत्रार्थः । देवेष्वितिसूत्रविषयवाक्यंदर्शयति ॥ ओषधयइति ॥ राज्ञासोमेनलतारूपेणसहौषधयःसंवदंतेसंवादंकुर्वंतीत्यर्थः । हेग्रावाणोवोयुष्मान्सवि

भा० । तस्मादचेतनोपासांनकुर्यात्क्वापिकश्चन । नचासत्यांनचायोग्यांयदीच्छेदुत्तमंफलं । यदिनेच्छेत्तमोगंतुंयदिवेच्छेद्धरेःप्रियं । अथकर्तव्यकारीचमुमुक्षुरथवाभवेत् । सोपीच्छेतद्धरेःप्रीतिंनात्रकार्याविचारणेत्युपासनालक्षणे । ॐअभिमानिव्यपदेशस्तुविशेषानुगतिभ्यां । ॐपयोंबुवच्चेत्तत्रापीतिभगवद्वचनं । देवेषुचर्मादिनामानिसंवादादेरितिच देवतामीमांसायां । अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्यामितिसंकर्षणसूत्रं । ओषधयःसंवदंतेसोमेनसहराज्ञा । प्रवोग्रावाणःसवितादेवःसुवतुधर्मणा ।

॥२१३॥

तादेवोधर्मेणप्रसुवत्वित्यर्थः । चर्मादेःफलदत्वश्रुतिरप्युदाहर्तव्या । तथाचौषधिचर्मदर्भग्रावादिनामानि । तदभिमानिदेवेष्वेव वर्तंते नाचेतनेषु । ओषधीनांसंवादश्रुतेः । चर्मदर्भानांफलदत्वश्रुतेः । ग्राव्णांसवितृसुतत्वश्रुतेः । तच्चदेवेष्वेवसंभवति । नाचेतनेष्वितिसूत्रार्थः । नकेवलंजडेसंवादकर्तृत्वफलदातृत्वाद्यसंभवः । किंतुसर्वप्रवृत्तीनांईश्वरनिमित्तत्वस्यश्रुतिसिद्धत्वाच्चकिंचिदपिनस्वतंत्रमित्याआह ॥ नक्तइति ॥ ननुचेतनदेवताग्रहेणसंवादोपपत्तावपिफलदातृत्वंकथमुपपन्नं । देवानांयजमानफलदानेच्छायामप्यन्येनविघातकरणसंभवादितिचेत् । न । किमन्योमनुष्यः । उतदेवः । नाद्यः । तत्रतस्याऽसमर्थत्वादितिभावेनश्रुतिमाह ॥ नेति ॥ देवानांव्रतंसंकल्पमतिक्रम्यशतायुरपिनजीवति । किम्वल्पायुरित्यर्थः । नद्वितीयः । अन्यदेवकृतविघ्नसद्भावेदेवानांफलदानेच्छायाएवाभावात् । देवानाममोघेच्छत्वादितिभावेनश्रुतिमाह ॥ अनेहसइति ॥ हेदेवाःवःऊतयः इच्छाः । अनेहसोनिष्पापाःअमोघाइतियावत् । अतएववोयुष्माकमूतयःइच्छाः । सुऊतयःसम्यग्रक्षकाइत्यर्थः । श्रूयतेचाब्देवतानांफलदातृत्वादिसामर्थ्यमितिभावेनश्रुतिमाह ॥ द्यावापृथिवीति ॥ आपोम्नामानोदेवासोदेवाःद्यावापृथिवीव्रतानियज्ञादिकर्माणिवनिनानिवन्यानियज्ञियानियज्ञयोग्यानिओषधीश्चाभिजनयन्नभ्यजनयंत । अंतरिक्षंस्वश्चोतयेरक्षायैआपप्रुरापूरयन् । तत्रवशंयथेच्छंतन्वीःतनूःयोग्यंशरीराणिनिमेमृजुः । शुद्धान्यकुर्वन्नित्यर्थः । ननुनर्तेत्वत्क्रियतेकिंचनारइतिश्रुतिबलादीश्वरव्य

भा० । नक्तेत्वत्क्रियतेकिंचनारेमहामर्कमघवञ्चित्रमर्च । नदेवानामतिव्रतंशतात्माचनजीवति । अनेहसोवऊतयःसुऊतयोवऊतयः । द्यावापृथिवीजनयन्नभिव्रतापओषधीर्वनिनानियज्ञिया । अंतरिक्षंस्वा१रापप्रुरूतयेवशंदेवासस्तन्वी३इनिमामृजुः ।

तिरेकेणाचेतनप्रवृत्त्यभावेपिदेवताव्यतिरेकेणकिंनस्यादित्याशंकांपरिहर्तुंस्मृतिमाह ॥ अचेतनमिति ॥ अचेतनादिकंचेतना
दिभ्यएवस्वभावादिकंप्राप्नोतीत्येतद्व्यतिरेकेणोपपादयति ॥ कश्चिदिति ॥ एतच्चेतनादिकमृतेतेषामचेतनादीनांकदाचनकोपि
भावोनस्यादितियोजना । नन्वचेतनंचेतनेभ्यइत्ययुक्तं । चेतनंविहायाचेतनस्यैवप्रवृत्तिसंभवादितिचेत् न । तत्रप्रमाणाभावा
त् । नतावत्तत्रप्रत्यक्षं । नाप्यनुमानं । दृष्टांताभावेनाचेतनप्रवृत्तेरनुमातुमशक्यत्वादित्याह ॥ अचेतनेति ॥ तुशब्दःस्वत
इतिविशेषार्थः । एवमचेतनस्यस्वतःप्रवृत्तिरित्येतत् । प्रमाणाभावेननिराकृत्यचेतनेभ्यएवप्रवृत्तिरित्यत्रप्रमाणंचाह ॥ चेतना
नामिति ॥ विप्रतिपन्नंकार्यंचेतनेच्छाधीनंकार्यत्वात्पटादिवदित्यनुमानसत्त्वादचेतनस्यचेतनेभ्यएवप्रवृत्तिः । नचपटादिसृष्ट्या
दावपिनचेतनव्यापारइतिवाच्यं । अहंकरोमीतिचेतनस्यप्रवृत्तिदर्शनादितिभावः । नचेदंव्यवहारमात्रं । बाधकाभावात् । अ
न्यथाविशिष्टज्ञानमात्रलोपप्रसंगइति । नन्वचेतनप्रवृत्तौनदृष्टांतोस्तीत्ययुक्तं । अदृष्टकर्तृककूलपतनादिदर्शनेनतस्यैवदृष्टांतत्वो
पपत्तेरित्यतआह ॥ अदृष्टमिति ॥ विप्रतिपन्नंकूलपतनंसकर्तृकंपतनत्वात्देवदत्तकृतपतनवदितिवा । कार्यत्वाद्घटवदितिवा ।
दृष्टकर्तृकवददृष्टकर्तृकमपिसकर्तृकमनुमेयमित्यर्थः । नन्वदृष्टकर्तृकंकूलपतनादिकमचेतनाधीनमेवकिंनस्यात् । तद्वद्दृष्टकर्तृक

---

भा० । अचेतनंचेतनेभ्योदैवतेभ्यश्चचेतनाः । देवाःप्राणाश्चसप्राणोविष्णोरेवसदैवतु । स्वभावंचप्रवृत्तिंचविकारंचसमाप्नुयुः । कश्चिद्भावकृतेतेषांनैतत्स्याच्चकदाचन । अचेतनप्रवृत्तौतुनदृष्टांतोऽस्तिकश्चन । चेतनानांप्रवृत्तेश्चदृष्टत्वादेवसर्वशः । अदृष्टंदृष्टवज्ज्ञेयंयथाऽदृष्टप्रणेतृकं । विसर्पत्तंडुलंदृष्ट्वाकल्प्यातत्रपिपीलिका । नतदृष्ट्वैवदृष्टानामपिपीलिकसर्पणं । एवंदृष्ट्यनुसारेणचिदधीनमचेतनं ।

स्याप्यचेतनाधीनत्वोपपत्तेरित्याशंकांपरिहरति ॥ यथेति ॥ अदृष्टप्रणेतृकंविसर्पत्तंडुलंदृष्ट्वातत्रयथापिपीलिकाकल्प्या । विप्रतिपन्नंतण्डुलंपिपीलिकाधीनविसर्पणवत् । अनुपलभ्यमानप्रणेत्रंतरत्वेसतिविसर्पत्तंडुलत्वात् । संप्रतिपन्नवदित्यनुमेयं । नतुतद्दृष्टप्रणेतृकंतंडुलंदृष्ट्वैव दृष्टप्रणेतृकानामपिपीलिकसर्पणंकल्प्यं । प्रत्यक्षबाधात् । एवंदृष्टकर्तृकाचेतनानुसारेणादृष्टकर्तृकमचेतनंचिदधीनं । नत्वदृष्टवद्दृष्टमित्यर्थः । इदमुक्तंभवति । यद्यदृष्टकर्तृकंकूलपतनमचेतनाधीनंस्यात् । तर्हिअदृष्टकर्तृकंतंडुलविसर्पणमप्यचेतनाधीनंस्यात् । अविशेषात् । नचतदस्तिदूरतः । पिपीलिकानुपलंभेपिसमीपेतदुपलंभात् । यदिचादृष्टपतनवद्दृष्टमपिनचेतनाधीनंतर्हिदृष्टपिपीलिकाविसर्पणमपिनचेतनाधीनंस्यात् । अविशेषादिति । नन्वथापिदैवतेभ्यश्चेतनाइत्याद्यनुपपन्नं । अदृष्टानामेवदेवतेश्वरादीनांकल्पनेकल्पनागौरवापातात् । ततोवरंचेतनानामेवस्वतःप्रवृत्तिरितिलाघवादित्यतआह ॥ दुर्घटेति ॥ नदेवतानामीश्वरस्यवाकर्तृत्वांगीकारेकल्पनागौरवं । श्रुत्यादिसिद्धत्वात् । नचानुपलब्धिविरोधः । तेषांदुर्घटशक्तियोगेनानुपलब्ध्युपपत्तेः । नचसापिकुतः । लोकेपिशाचादीनांअनीश्वराणांतादृशशक्तिमत्त्वेसर्वेश्वराणांसुतरांतत्सिद्धेरिति भावः । एवंनामब्रह्मेत्युपास्वेत्यादौनामादिशब्दादेवतापराएव । नाचेतनपराइतिसंक्षेपविस्तराभ्यांव्याख्यायेदानीमादितःप्रकरणशुध्याव्याख्यास्यन्वाग्भूयस्त्वखण्डेहृदयज्ञशब्दंमनोज्ञत्वप्रतीतिंनिवारयन्व्याचष्टे ॥ हृदयज्ञइति ॥ ननुहृदयशब्दस्यमनसिरूढत्वात्कथंभगवत्परत्वमित्यतस्तत्रयोगंदर्शयति ॥ हृदीति ॥ अयनाद्गमनात्प्रवर्तनादित्यर्थः । तथापिमुख्यरूढिपरित्यागेना

---

भा० । दुर्घटाशक्तिरपिहिपिशाचानांचदृश्यते । देवानांकिमुकिम्वेवपरमस्यहरेःप्रभोरित्यादिब्रह्मतर्के । हृदयज्ञोभगवत्तत्वज्ञः । हृद्ययनाद्धृदयं ।

मुख्ययोगांगीकारोनयुक्तइतिचेत् । हृदयशब्दस्यब्रह्मण्येवविद्वद्रूढिसद्भावेनमुख्यत्वादितिभावेनश्रुतिमाह ॥ **उदरमिति** ॥ हृदयंब्रह्मेत्यस्यैवप्रकृतोपयोगेपीतिशब्दान्वयप्रतीत्यर्थंप्राचीनवाक्योदाहरणं । ब्रह्मप्रकरणमेतदितिज्ञापयितुंवा । मनोभूयस्त्वखंडेद्वेवावकोलेबदरफलेइत्यन्यथाप्रतीतिनिरासायकोलशब्दार्थमभिधानेनाह ॥ **कोलमिति** ॥ संकल्पभूयस्त्वखंडेसंकल्पनामकस्यमित्रस्यसमक्लृपतांद्यावापृथिवीत्यादिनासर्वसंकल्प्यतइत्यंतेनभूतभौतिकादिसर्वसंकल्पकत्वमुच्यते। तत्रविशेषंप्रमाणेनैवाह॥ **भूतानामिति** ॥ भूतानांद्यादिषण्णांभौतिकानांवर्षान्नप्राणानां । आहुतिगणेतिकर्मशब्दव्याख्यानं । चशब्दाल्लोकसर्वयोर्ग्रहणं । भूतानामित्याद्यनुवादेनाचेतनगणस्येतिव्याख्यानं । नन्वेतेषांचिदचित्त्वविभागेसत्येवंव्याख्यासंयुक्तं । सएवकुतः । अचेतनगणकल्पकोमित्रश्चेच्चेतनगणकल्पकःकइत्यतआह ॥ **प्राणाइति**॥ क्रमोनविवक्षितः । उभयकार्यस्यापिदर्शनादितिभावः । चितांवाय्वादयइत्यनेनबलभूयस्त्वखण्डेबलेनैवपृथिवीतिष्ठतिबलेनांतरिक्षमित्यादिकंव्याख्यातं। ननुसर्वंसंकल्प्यतइत्युपसंहारेसर्वशब्दश्रवणात्कथमचितांकल्पकइतिव्याख्यातमित्यतोविशेषवचनानुसारेणसामान्यसर्वशब्दःसंकोचनीयइतिभावेनाह॥ **सर्वमिति** ॥ ननुचित्तशब्दस्यस्मरणार्थत्वात्स्मरशब्देनैकार्थतेत्याशंकांतयोरर्थभेदकथनेनपरिहरति ॥**अस्थिरेति**॥ यदयंवेदयद्वाअयंविद्वानि

भा० । उदरंब्रह्मेतिशार्कराक्ष्याउपासतेहृदयंब्रह्मेत्यारुणयइतिश्रुतिः । कोलंपूगफलंप्रोक्तंकलंतांबूलपत्रकमित्यभिधानं । भूतानांभौतिकानांचमंत्राहुतिगणस्यच । अचेतनगणस्यास्यकल्पकोमित्रनामकः । प्राणाभूतानिमंत्राद्याश्चिदचित्त्वविभेदिनः । अचितांकल्पकोमित्रश्चितांवाय्वादयःस्मृताइतिवस्तुतत्वे । सर्वमचेतनंसंकल्प्यते । अस्थिरस्मरणंचित्तंस्थिरसंस्मरणंस्मरइतिशब्दनिर्णये ।



त्यत्रपुनरुक्तिंपरिहरति॥ **वेदनमिति**॥ चित्तंह्येषामेकायनंचित्तं । प्रतिष्ठेत्यत्रायतनप्रतिष्ठाशब्दयोरेकार्थत्वप्रतीतिंनिवारयति॥ **मोक्षइति** ॥ उपचारतोमुख्यतोवस्थानमायतनमित्यर्थः। ध्यानभूयस्त्वप्रकरणेध्यायंतीवदेवमनुष्याइत्युच्यते । तत्रमनुष्याश्चदेवाश्चेतिवा। मनुष्याएवदेवसमादेवमनुष्याइतिवान्यथाप्रतीतिनिरासायप्रमाणेनैवव्याचष्टे॥ **देवाइति** ॥ ततश्चकर्मधारयएवाश्रयणीयइतिभावः। ध्यायंतीव। नवस्तुतोध्यायंतीतिप्रतीतिनिरासायतद्व्याचष्टे॥ **ध्यानमिति**॥ युधिष्ठिरादीनामपिबहुभाषित्वात्कथमेदित्यतस्तदेवविवृणोति॥ **ब्रूयुरिति**॥तेषामपिद्यूतहेतुवचनदर्शनात्प्रायशइत्युक्तं। ननुविज्ञानाद्बलस्यभूयस्त्वंकथमुच्यते। अज्ञानिनोपिशारीरबलदर्शनादित्यतआह॥ **बलमिति**॥ बलशब्देनद्विविधमपिबलंविवक्षितं। तत्रबाह्यबलस्यज्ञानाद्भूयस्त्वाभावेपिमुक्तिज्ञतालक्षणज्ञानबलस्यज्ञानमात्राद्भूयस्त्वेनविज्ञानाद्बलस्यभूयस्त्वोक्तिरितिभावः । एवंतर्ह्यन्नस्यबलाद्भूयस्त्वोक्तिरनुपपन्ना। बाह्यबलंप्रत्येवान्नस्यकारणत्वेनभूयस्त्वसंभवेपिज्ञानफलंप्रत्यनुपपत्तेरित्यतआह॥ **अन्नमिति** ॥ तर्ह्यपांकथमन्नाद्भूयस्त्वमुच्यते। द्विविधान्नादपांभूयस्त्वाभावादित्यतआह ॥ **आपश्चेति** ॥ द्विविधाःप्रोक्ताः। आंतराबाह्याश्चेतिशेषः। उभयंक्रमेणलक्षयति ॥

भा० । वेदनंज्ञानमात्रंस्याद्विद्वत्त्वंतुविशेषतइतिच । मोक्षेयस्मिप्रवेशःस्यात्साप्रतिष्ठाहिमुख्यतः । उपचारतस्त्ववस्थानमितिशब्दविदोविदुरितिच । देवामनुष्यतांप्राप्ताविज्ञेयादेवमानुषाः । ध्यानंकुर्वंतइवतेनैवस्युर्बहुभाषिणः । ब्रूयुरर्थवतींवाचंनानार्थांप्रायशोहितइतिपाद्मे । बलंज्ञानबलंचैवबाह्यंचेतिद्विधामतं । युक्तिज्ञताज्ञानबलंस्वाज्ञानादधिकामतेतितत्वसारे । अन्नंज्ञानरसान्नंचबाह्यमन्नमितिद्विधा । ज्ञानान्नंज्ञानबलतःश्रेष्ठंज्ञानरतिर्हितत् । यद्बाह्यंतुबलंतस्माद्बाह्यमन्नंविशिष्यते । आपश्चद्विविधाःप्रोक्ताः

**तृप्तिरिति** ॥ द्रवरूपकाःस्वाभाविकद्रवत्वोपेताः। तर्हितेजसःकथमद्भ्योभूयस्त्वोक्तिरित्युक्तशंकानिरासायाह ॥ **एवमिति** ॥ परमित्यतोबाह्याद्भ्योबाह्यंतेजःपरमितिशेषः । एवंसत्याकाशस्यतेजसोभूयस्त्वोक्तिंघटयति ॥ **आकाशइति** ॥ आकाशश्चद्विधैवअंतस्थोबाह्यगश्चेतिशेषः। उभयंक्रमेणदर्शयति ॥ **स्थिरेति** ॥ किंततइत्यतआह ॥ **स्थिरेति** । चंचलायाःप्रतिभायाः चंचलप्रतिभज्ञानात्स्थिराप्रतिभाश्रेष्ठा । एवंबाह्यतेजसोबाह्याकाशश्चपरइतिज्ञातव्यं। स्मरोवावाकाशाद्भूयानितिवाक्यंयोजयति ॥ **स्मराभिधेति** ॥ अकारप्रश्लेषेणाचंचलायाइत्यत्रापिसंबध्यते । अचंचलायाःस्थिरप्रतिभायाः स्मराभिधैकधैवस्मृतिर्ध्यानरूपाश्रेष्ठेत्यर्थः । आशावावस्मराद्भूयसीत्यस्यार्थमाह ॥ **आशेति** ॥ एकधैवस्मृतेराशाख्यमपरोक्षदृगात्मकंसुखंश्रेष्ठं । दृगात्मकमित्यभेदोपचारः । प्राणोवाआशायाभूयानितिवाक्यंयोजयति ॥ **ततइति** ॥ ततोपरोक्षदृगात्मकसुखान्मोक्षेप्राप्यंप्राणाख्यंपरमंसुखंश्रेष्ठं । स्मराशाप्राणानांकेवलांतःपदार्थत्वेनद्वैविध्याभावात्तदनुक्तिः । नन्वेवमन्नादिशब्दैर्बाह्यांतर्भिन्नंजडमेवगृहीतंनदेवता । अतःपूर्वोत्तरव्याघातइत्यतआह ॥ **उत्तरोत्तरमिति** ॥ एतदन्नमारभ्यप्राणपर्यंतंबाह्यबलान्नाप्तेजोभ्योबाह्यान्नाप्तेजआकाशाःश्रेष्ठाइत्यत्रयुक्तिमाह ॥ **बाह्याद्भ्यइति** ॥ चशब्दाद्बाह्यंबलंबाह्यान्नाज्जायतइत्यादेःसंग्रहः । कार्यकारणयोःकारणंश्रेष्ठं ।

---

भा० । तृप्तिर्याज्ञानतोरतेः । ताज्ञेयाआंतराआपोबाह्यास्तुद्रवरूपकाः । आंतरान्नादांतरापोबाह्याद्बाह्यास्तथावराः । एवंतेजःप्रातिभाख्यंबाह्यंचेतिद्विधामतं । प्रातिभंज्ञानतृप्तेश्चपरमाकाशएवच । स्थिरातुप्रतिभांतस्थाछिद्रमेवतुबाह्यगः । स्थिराहिप्रतिभाश्रेष्ठाचंचलायास्मराभिधा । एकधैवस्मृतिःश्रेष्ठाऽऽशापरोक्षदृगात्मकं । श्रेष्ठंसुखंततोमोक्षेप्राणाख्यंपरमंसुखं । उत्तरोत्तरमेतद्विवाग्वंताभिमतंसदा । बाह्याद्भ्योबाह्यमन्नंचजायतन्यत्तदन्यथा ।

पितुस्तद्दर्शनादितिभावः । अन्यत् आंतरान्नादिकं । तदन्यथेत्युक्तंविशदमाह ॥ व्यक्तिरिति ॥ ज्ञानबलात्ज्ञानरतिःरतेस्तृ प्तिस्तृप्तेश्चलप्रतिभा । चलप्रतिभायाःस्थिरप्रतिभेत्यादिबाह्यबलान्नादिकार्यकारणाभावक्रमापेक्षयाविपरीतक्रमेणकार्यकारण भावोभवेदित्यर्थः । वृत्तिरूपाणांजननेपिस्वरूपभूतानांरत्यादीनांज्ञानबलादितोव्यक्तिरेवभवतीत्यभिप्रेत्यव्यक्तिरित्युक्तं । पूर्व पूर्वदेवादुत्तरोत्तरदेवाभिव्यक्तिरित्यप्याहुः । नन्वेवंरत्यादिमोक्षांतानामुक्तरीत्याकार्यत्वेनोत्तमत्वंनस्यात् । कारणस्यैवोत्तमत्वे नाभिप्रेतत्वादित्यतआह ॥ तथापीति ॥ यद्यप्युक्तरीत्यारत्यादिव्यंग्योमोक्षस्तथापिप्राणजोगुणःपरमसुखरूपःसर्वस्माद्वरि ष्ठइत्युपरिसंबंधः । तत्कथमित्यतोमोक्षादेरपिकयाचिद्विवक्षयापूर्वपूर्वकारणत्वादित्याशयेनतदुपपादयति ॥ मोक्षगमित्यादि ना ॥ यस्मान्मोक्षगंसुखंस्वभावस्तस्मान्नित्यएव । यतोनित्योतस्तस्मान्मोक्षगसुखात्तद्योग्यतायांसत्यामितियावत् । आपरोक्ष्यं जायते । अंतःकरणविकारत्वेनापरोक्षज्ञानस्यकादाचित्कत्वादित्यर्थः । मोक्षयोग्यताधीनत्वमपरोक्षज्ञानोत्पत्तेरत्रोच्यतइतिन कश्चिद्विरोधः । इयमेकधास्मृतिश्चदृष्ट्यधीनादृष्टियोग्यताधीनेत्यर्थः । स्थिराप्रतिभाचस्मृतियोग्यतासंभवेत्यर्थः । प्रतिभास्थैर्य मालंब्यनिमित्तीकृत्यचलंप्रतिभंस्थिरप्रतिभायोग्यस्यैवचलप्रतिभा । अन्यथातद्योग्यताभावेनैवतिष्ठतीत्यर्थः । प्रतिभातश्चलप्र तिभायोग्यतायाएवतृप्तिःस्यात् । अतृप्तस्यतृप्त्ययोग्यस्यकाज्ञानरतिःनकापीत्यर्थः । किंततइत्यतआह ॥ ततइति ॥ उक्तरी

---

भा० । व्यक्तिरंतर्गतानांतुविपरीतक्रमाद्भवेत् । तथापिमोक्षगंयस्मात्स्वभावोनित्यएवतु । अतस्तस्मादापरोक्ष्यंकादाचित्कंहिजायते । दृष्ट्यधीनास्मृतिश्चेयंप्रतिभास्मृतिसं भवा । स्थैर्यमालंब्यतुचलमन्यथानैवतिष्ठति । प्रतिभातश्चतृप्तिःस्यादतृप्तस्यतुकारतिः । ततएवंक्रमादेववरिष्ठःप्राणजोगुणइतिच ॥ खं०४-१४ ॥

त्यामोक्षस्यापरोक्षज्ञानाद्युत्पत्तौकारणत्वादित्यर्थः । एवंक्रमादेवरतेस्तृप्तिर्वरिष्ठेत्यादिक्रमादेव ॥ खं० ४-१४ ॥ ततश्चेयंख
ण्डचतुर्दशकस्याक्षरयोजना ॥ नारदोदेवर्षिःसनत्कुमारंस्वापेक्षयाब्रह्मवित्तममधीहिमामध्यापय । भगवोभगवन्नितिहोप
ससाद । नारदंप्रत्युवाचसनत्कुमारः । त्वंयद्वेत्थतेनतदुक्त्वामामुपसीद । ततऊर्ध्वंतदनंतरंतेतववक्ष्यामि । अज्ञातस्यैवोपदेष्ट
व्यत्वात् ॥ १ ॥ एवमुक्तःसःनारदोहोवाचऋग्वेदमित्यादि । इतिहासश्चपुराणंचेतिद्वंद्वैकवद्भावः । इतिहासपुराणं वेदंग्रंथं ।
वेदानामृगादीनांपंचमंपंचत्वसंख्यापूरणं । वेदमध्येमीत्यर्थः । अत्रसामान्योक्तावपिप्रमाणांतरबलाद्वेदानुकूलयोरेवेतिहासपुरा
णयोर्ग्रहणं । इतरत्पूर्वमेवस्पष्टं ॥ २ ॥ हेभगवःसोहमेवंसर्वविद्यावेत्तापिमंत्रविदेवआत्मनामविदेवास्मि । तन्निर्णयाज्ञानान्ना
त्मवित् । अलमात्मप्रतिपादकज्ञानेनाकिंतत्प्रतिपाद्यज्ञानेनेत्यतआह ॥ **श्रुतमिति** ॥ अस्त्वात्मज्ञानस्यशोकतरणलक्षणमुक्ति
साधनत्वं । त्वंतीर्णशोकश्चेद्व्यर्थउपदेशइत्यतआह ॥ **सोहमिति** ॥ हेभगवःसोहंशोचामि । विद्यानामद्धानिर्णयाज्ञानेनात्मा
वित्त्वात् । तत्तस्मान्मामांभगवांच्छोकस्यशोकसागरस्यपारमंतंतारयत्वितिप्रार्थितः कुमारस्तंहोवाच । यद्वैयदेवकिमप्येतत्प्रागुक्त
मृगादिकमध्यगीष्ठाःअधीतवानसि । एतदात्मनोविष्णोर्नामैव ॥ ३ ॥ एकदेशस्यनामत्वात्सर्वस्यनामत्वोक्तिरुपचरितेत्याशंका

उप० । हरिः ॐ ॥ अधीहिभगवइतिहोपससादसनत्कुमारंनारदस्त ँहोवाचयद्वेत्थतेनमोपसीदततस्तऊर्ध्वंवक्ष्यामीति ॥ १ ॥ सहोवाचऋग्वेदंभगवोध्येमियजुर्वेदंसामवेद
माथर्वणंचतुर्थमितिहासपुराणंपंचमंवेदानांवेदंपित्र्य ँराशिंदैवंनिधिंवाकोवाक्यमेकायनंदेवविद्यांब्रह्मविद्यांभूतविद्यांक्षत्रविद्यांनक्षत्रविद्या ँसर्पदेवजनविद्यामेतद्भगवोध्येमि ॥ २ ॥
सोहंभगवोमंत्रविदेवास्मिनात्मविच्छ्रुत ँह्येवमेभगवद्दृशेभ्यस्तरतिशोकमात्मविदितिसोहंभगवःशोचामितन्माभगवांच्छोकस्यपारंतारयत्वितित ँहोवाचयद्वैकिंचैतदध्यगीष्ठानामै
वैतत् ॥ ३ ॥



परिहारायोक्तंविवृणोति ॥ **नामवाइत्यादिना** ॥ इतिहासपुराणइत्यत्रद्वंद्वैकवद्भावप्रयुक्तंनपुंसकत्वंनाश्रितं । पुराणशब्दस्यविशे
ष्यलिंगत्वात्ग्रंथविशेषणत्वेनपुल्लिंगत्वमेवाश्रितं । नामैवैतदितिनिगमनं । प्रकृतसर्वविद्यारूपनामावांतराभिमानिन्यामुषोनामिका
यामश्विभार्यायांब्रह्मसन्निहितमित्युपास्तिःकार्येत्याह॥**नामोपास्वेतीति**॥द्वितीयासप्तम्यर्थे।ब्रह्मपदंपूरणीयं॥४॥नाम्निब्रह्मोपास
कस्यफलमाह॥**सयइति**॥सःप्रसिद्धोयोधिकारीनाम्निब्रह्मेत्युपास्तेनामवतोहसलोकानभिसिध्यतीतिग्राह्यं । उत्तरत्रतथाश्रवणात् ।
फलांतरमाह॥**यावदिति**॥योनामब्रह्मेत्युपास्ते । अस्योपासकस्यनाम्नोयावद्गतंगमनमस्तितत्रलोकेयथायोग्यताऽनतिक्रमेणकाम
चारोभवति । एवंनामाभिमानिन्यांब्रह्मोपास्तावुक्तायांकिंनाम्नोभूयोस्तिनवा।आद्येतत्रैवब्रह्मोपास्तिर्विधेया। द्वितीयेमानांतरविरो
धइत्याशंकायांपृच्छति ॥ **अस्तीति** ॥किंशब्दोध्याहार्यः । परिहारमाह ॥ **नाम्नइति** ॥ हेभगवोनाम्नोभूयोधिकमस्तिकिमितिपृष्टः
कुमारोनाम्नोभूयोस्त्येवेतिपरिहारमाह । उपासकविशेषंप्रत्येवनामाख्यप्रतीकोक्तिरितिभावः । तन्नामाधिकंवस्तुमेभगवान्ब्रवी
त्वितिनारदः ॥ ५ ॥ **प्रथमःखंडः** ॥ १ ॥ सनत्कुमारआह ॥ **वागिति** ॥ वाक्वागिंद्रियाभिमानिनीस्वाहैवनाम्नोभूयसी ।
तत्कथमित्यतआह ॥ **वाग्वेति** ॥ अयमृग्वेदइत्यादिरूपेणवागेवर्ग्वेदादिकंविज्ञापयतियतोतोभूयसीत्यर्थः । ज्ञाप्यज्ञापकयो

उप० । नामवाऋग्वेदोयजुर्वेदःसामवेदआथर्वणश्चतुर्थइतिहासपुराणःपंचमोवेदानांवेदःपित्र्योराशिर्दैवोनिधिर्वाकोवाक्यमेकायनंदेवविद्याब्रह्मविद्याभूतविद्याक्षत्रविद्यानक्षत्र
विद्यासर्पदेवजनविद्यानामैवैतन्नामोपास्स्वेति ॥ ४ ॥ सयोनामब्रह्मेत्युपास्तेयावन्नाम्नोगतंतत्रास्ययथाकामचारोभवतियोनामब्रह्मेत्युपास्तेस्तिभगवोनाम्नोभूयइतिनाम्नोवावभूयो
स्तीतितन्मेभगवान्ब्रवीत्विति ॥ ५ ॥ खं० ॥ १ ॥ वाग्वावनाम्नोभूयसीवाग्वाऋग्वेदंविज्ञापयतियजुर्वेद ँसामवेदमाथर्वणंचतुर्थमितिहासपुराणंपंचमंवेदानांवेदंपित्र्यंराशिं

ज्ञापकस्यप्राधान्यादितिभावः । नकेवलंनामात्मप्रपंचज्ञापकत्वंवाचः किंतुरूपात्मकप्रपंचज्ञापकत्वमप्यस्तीत्याह ॥ दिवंचेत्यादिना ॥ हृदयज्ञंभगवत्तत्वज्ञंअहृदयज्ञंभगवत्तत्वाज्ञंविज्ञापयतीतिपूर्वेणसंबंधः । ननुधर्माधर्मयोःसत्यानृतादेर्वाऋग्वेदादिज्ञापकत्वोपपत्तेःकिंवाचस्तद्ग्रहणेनेत्यतआह ॥ यद्वाइति ॥ यदिवाङ्नाभविष्यन्नतर्हिंधर्मादिकमृग्वेदादिकंव्यज्ञापयिष्यत् । वागभावेऽध्ययनाभावेनज्ञानस्यदूरोत्सारितत्वादितिभावः । उपसंहरति ॥ वागेवेति ॥ १ ॥ अन्यत्समानं ॥ २ ॥ द्वितीयः खंडः ॥ २ ॥ मनइति ॥ मनोमनोनामकस्तदभिमानीपर्जन्यएववाचोभूयः । तत्सामर्थ्यंसदृष्टांतमाह ॥ यथेति ॥ यथावा द्वेवाऽऽमलकेआमलकफलेद्वेवाकोलेपूगफलेद्वौवाक्षौद्यूतसाधनेफलविशेषौवामुष्टिरनुभवति । आमलकादिकंयथामुष्टावंतर्भवत्येवंवाचंचनामचमनोनुभवति । तदेवविशदयति ॥ सइति ॥ सपुरुषोयदामनसामंत्रानधीयेयेतिमनस्यतिअथतदाअधीते । कर्माणिकुर्वीयेतियदामनस्यतीत्यन्वयः । एवमुत्तरत्रापि । मनोह्यात्मास्वामीमनोहिलोकःसर्वाश्रयोमनोहिब्रह्म । प्रथमासप्तम्य

---

उप० । दैवंनिधिंवाकोवाक्यमेकायनंदेवविद्यांब्रह्मविद्यांभूतविद्यांक्षत्रविद्यांनक्षत्रविद्याꣳसर्पदेवजनविद्यांदिवंचपृथिवींचवायुंचाकाशंचापश्चतेजश्चदेवाꣳश्चमनुष्याꣳश्च पशूꣳश्चवयाꣳसिचतृणवनस्पतीञ्छ्वापदान्याकीटपतंगपिपीलिकंधर्मंचाधर्मंचसत्यंचानृतंचसाधुचासाधुचहृदयज्ञंचाहृदयज्ञंचयद्वैवाङ्नाभविष्यन्नधर्मोनाधर्मोव्यज्ञापयिष्यन्नसत्यंनानृतं नसाधुनासाधुनहृदयज्ञोनाहृदयज्ञोवागेवैतत्सर्वंविज्ञापयतिवाचमुपास्स्वेति ॥ १ ॥ सयोवाचंब्रह्मेत्युपास्तेयावद्वाचोगतंतत्रास्ययथाकामचारोभवतियोवाचंब्रह्मेत्युपास्तेस्तिभगवो वाचोभूयइतिवाचोवावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति ॥ २ ॥ खं० ॥ २ ॥ मनोवाववाचोभूयोयथावैद्वेवाऽऽमलकेद्वेवाकोलेद्वौवाऽक्षौमुष्टिरनुभवत्येवंवाचंचनामचमनो नुभवतिसयदामनसामनस्यतिमंत्रानधीयीयेत्यथाधीतेकर्माणिकुर्वीयेत्यथकुरुतेपुत्राꣳश्चपशूꣳश्चेच्छेयेत्यथेच्छतेइमंचलोकममुंचेच्छेयेत्यथेच्छतेमनोह्यात्मामनोहिलोकोमनोहिब्रह्म मनउपास्स्वेति ॥ १ ॥

र्थे । मनसिब्रह्म । अतोमनसिब्रह्मेत्युपास्व ॥ १ ॥ २ ॥ तृतीयःखंडः ॥ ३ ॥ संकल्पाभिमानीमित्रएवमनसोभूयान् । तन्महिमानमाह ॥ यदेति ॥ यदावैपुरुषःसंकल्पयतेइदमहंकरोमीति । अथतदामनस्यतिमनःप्रेरयति । अथमनोव्यापारानंतरमेववाचमीरयति । किंविषयइत्यतआह ॥ तामिति ॥ यद्वानकेवलंलौकिकशब्दविषयेवाचमीरयति । किंतुतांनाम्निऋग्वेदादिरूपेपीरयति । नाम्निसर्वविद्यायांमंत्राएकंभवंतिअंतर्भवंति । सामान्येविशेषांतर्भावात् । मन्त्रेषुकर्माण्यंतर्भवंति । तत्प्रकाश्यत्वात् । अतस्तान्येतानिमनआदिकर्मांतानि । संकल्पैकाश्रयाण्यमुक्तौ । संकल्पस्वामिकानि । मुक्तौसंकल्पेप्रतिष्ठितानि । द्यावापृथिव्याद्यचेतनकल्पकत्वरूपंमहिमांतरमाह ॥ समक्लृपतामित्यादिना ॥ द्यौश्चपृथिवीचेतिद्यावापृथिव्यौसमक्लृपतां संकल्पोत्पन्नेइत्यर्थः । तेषांद्व्यादितेजोंतानांसंक्लृप्त्यैस्थित्यैवर्षंसंकल्पयतेमित्रः । एवमन्यत् । लोकानांसंक्लृप्त्यैसर्वमचेतनंसंकल्पयते । निगमयति ॥ सएषइति ॥ २ ॥ ध्रुवान्नित्यान् । प्रतिष्ठितान्सदैकप्रकारेणस्थितान् । अव्यथमानान्दुःखरहितान् ।

---

उप० । सयोमनोब्रह्मेत्युपास्तेयावन्मनसोगतंतत्रास्ययथाकामचारोभवतियोमनोब्रह्मेत्युपास्तेस्तिभगवोमनसोभूयइतिमनसोवावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति ॥२॥ खं० ॥ ३ ॥ संकल्पोवावमनसोभूयान्यदावैसंकल्पयतेथमनस्यत्यथवाचमीरयतितामुनाम्नीरयतिनाम्निमंत्राएकंभवंतिमंत्रेषुकर्माणि ॥ १ ॥ तानिहवाएतानिसंकल्पैकायनानिसंकल्पात्मकानिसंकल्पेप्रतिष्ठितानिसमक्लृपतांद्यावापृथिवीसमकल्पेतांवायुश्चाकाशश्चसमकल्पंतामापश्चतेजश्चतेषांसंक्लृप्त्यैवर्षꣳसंकल्पतेवर्षस्यसंक्लृप्त्याअन्नꣳसंकल्पतेऽन्नस्यसंक्लृप्त्यैप्राणाःसंकल्पंतेप्राणानाꣳसंक्लृप्त्यैमंत्राःसंकल्पंतेमंत्राणांसंक्लृप्त्यैकर्माणिसंकल्पंतेकर्मणाꣳसंक्लृप्त्यैलोकाःसंकल्पंतेलोकानांसंक्लृप्त्यैसर्वंसंकल्पतेसएषसंकल्पःसंकल्पमुपास्स्वेति ॥ २ ॥ सयःसंकल्पंब्रह्मेत्युपास्तेक्लृप्तान्वैसलोकान्ध्रुवान्ध्रुवःप्रतिष्ठितान्प्रतिष्ठितोऽव्यथमानानव्यथमानोभिसिद्ध्यतियावत्संकल्पस्यगतंतत्रास्ययथाकामचारोभवतियःसंकल्पंब्रह्मेत्युपास्तेस्तिभगवःसंकल्पाद्भूयइतिसंकल्पाद्वावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति ॥ ३ ॥ खं० ॥ ४ ॥

लोकान्स्वयंतादृशोभिसिध्यतिप्राप्नोति ॥ ३॥ चतुर्थःखंडः ॥ ४ ॥ चित्तमस्थिरस्मरणाख्यचित्ताभिमान्यग्निःसंकल्पाद्भूयः । यदावैचेतयतेस्मरतिअथसंकल्पयतइत्यादिपूर्ववत् ॥ १ ॥ अन्वयव्यतिरेकाभ्यांचित्तस्यैवप्रेक्षावत्त्वप्रयोजकत्वमाह ॥ तस्मादिति ॥ तस्मात्चित्तस्योत्तमत्वादेव । हियदिबहुविदप्यचित्तोभवतिनायमस्तीत्येवैनमाहुः । नायंविद्वानित्येवैनमाहुः । तदेवविशदमाह ॥ यदयमिति ॥ यद्यदिअयंवेदसामान्येनजानीयात् । यद्वाअयंविद्वान्विशेषतोजानीयात्तर्ह्यपिनेत्थमचित्तःस्यादतोऽज्ञानीत्यर्थः । यतोयमचित्तोजातइत्याहुः । व्यतिरेकमुक्त्वान्वयमाह ॥ यद्यल्पविदिति ॥ शुश्रूषंतेसेवकाः ॥ २ ॥ चितान्चित्तक्लृप्तान् ॥ ३ ॥ पंचमःखंडः ॥ ५ ॥ ध्यानंध्यानाभिमानीवरुणश्चित्ताद्भूयः । तस्यसर्वगतत्वरूपंमहिमानमाह ॥ ध्यायतीवेति ॥ पृथिव्यादिशब्दास्तदभिमानिदेवतापराः । ध्यायतीवनबहुभाषिणीत्यर्थः । देवाएवमनुष्यत्वंप्राप्तादेवमनुष्याः । तस्माद्ध्यानस्यश्रेष्ठत्वादिहलोकेयेमनुष्याणांमध्येधनैर्विद्ययागुणैर्वामहत्तांप्राप्नुवंतितेध्यानापादंशाइवैवभवंति । ध्यान

उप० । चित्तंवावसंकल्पाद्भूयोयदावैचेतयतेऽथसंकल्पयतेऽथमनस्यत्यथवाचमीरयतितामुनाम्नीरयतिनाम्निमंत्राएकंभवंतिमंत्रेषुकर्माणि ॥ १ ॥ तानिहवाएतानिचित्तैकायनानिचित्तात्मकानिचित्तेप्रतिष्ठितानितस्माद्यदपिबहुविदचित्तोभवतिनायमस्तीत्येवैनमाहुर्यदयंवेदयद्वाअयंविद्वान्नेत्थमचित्तःस्यादित्यथयद्यल्पविच्चित्तवान्भवतितस्मादेतच्छुश्रूषंतेचित्तꣳह्येवैकायनंचित्तमात्माचित्तंप्रतिष्ठाचित्तमुपास्स्वेति ॥ २ ॥ सयश्चित्तंब्रह्मेत्युपास्तेचित्तान्वैसलोकान्ध्रुवान्ध्रुवःप्रतिष्ठितान्प्रतिष्ठितोऽव्यथमानानव्यथमानोभिसिद्ध्यतियावच्चित्तस्यगतंतत्रास्ययथाकामचारोभवतियश्चित्तंब्रह्मेत्युपास्तेस्तिभगवश्चित्ताद्भूयइतिचित्ताद्वावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति ॥ ३ ॥ खं० ॥ ५ ॥ ध्यानंवावचित्ताद्भूयोध्यायतीवपृथिवीध्यायतीवद्यौर्ध्यायतीवांतरिक्षंध्यायंतीवापोध्यायंतीवपर्वताध्यायंतीवदेवमनुष्यास्तस्माद्यइहमनुष्याणांमहत्तांप्राप्नुवंतिध्यानापादꣳशाइवैवतेभवंत्यथयेऽल्पाःकलहिनःपिशुनाउपवादिनस्तेथयेप्रभवोध्यानापादꣳशाइवैवतेभवंतिध्यानमुपास्स्वेति ॥ १ ॥



स्यापादनंध्यानापात् । ध्यानलाभइतियावत् । तस्यांशोयेषांतेतथोक्ताः । ध्यानलाभैकदेशवंतइवैव । नतुपूर्णध्यानवंतइव । अतोध्यानमेवश्रेष्ठमित्यर्थः । किंचयेल्पाःक्षुद्राःकलहिनःकलहशीलाः । पिशुनाःपरदोषोद्भासकाः । उपवादिनःपरदोषसामीप्ययुक्तवदनशीलास्तेथयेप्रभवःप्राप्तमहत्त्वास्तेचध्यानाऽपादंशाइवैवभवंति ॥ १ ॥ ध्यानंब्रह्मेत्युपास्ते । सःध्यानवतोहलोकानभिसिध्यतीतिग्राह्यं ॥ २ ॥ षष्ठःखंडः ॥ ६ ॥ विज्ञानंविज्ञानाभिमानीसोमएवध्यानाद्भूयः । तत्सामर्थ्यमाह ॥ विज्ञानेनेति ॥ विज्ञानाभिमानिदेवताप्रसादेनैवऋग्वेदंविजानातिपुरुषः । यजुर्वेदादिकंपरलोकांतंचविज्ञानेनैवविजानाति ॥ १ ॥ विज्ञानवतोज्ञानवतश्चसामान्यविशेषज्ञानवतोलोकान्प्राप्नोतीत्यर्थः ॥ २ ॥ सप्तमःखंडः ॥ बलंबाह्यांतर्बलाभिमानीप्रवहएवविज्ञानाद्भूयः । तदेवोपपादयति ॥ अपीति ॥ इहलोकेविज्ञानवतांशतमप्येकएवबलवानाकंपयतेतस्माद्विज्ञानात्बलंभूयःयुक्तिज्ञतालक्षणांतर्बलस्यविज्ञानाद्भूयस्त्वोपपत्तिः । बलस्यसर्वव्यापारहेतुत्वमाह ॥ सयदेति ॥ सःप्रसिद्धःपुरुषोयदाबलीभवत्यथ

उप० । सयोध्यानंब्रह्मेत्युपास्तेयावद्ध्यानस्यगतंतत्रास्ययथाकामचारोभवतियोध्यानंब्रह्मेत्युपास्तेस्तिभगवोध्यानाद्भूयइतिध्यानाद्वावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति ॥ २ ॥ खं० ॥ ६ ॥ विज्ञानंवावध्यानाद्भूयोविज्ञानेनवाऋग्वेदंविजानातियजुर्वेदंसामवेदमाथर्वणंचतुर्थमितिहासपुराणंपंचमंवेदानांवेदंपित्र्यꣳराशिंदैवंनिधिंवाकोवाक्यमेकायनंदेवविद्यांब्रह्मविद्यांभूतविद्यांक्षत्रविद्यांनक्षत्रविद्याꣳसर्पदेवजनविद्यांदिवंचपृथिवींचवायुंचाकाशंचापश्चतेजश्चदेवाꣳश्चमनुष्याꣳश्चपशूꣳश्चवयांसिचतृणवनस्पतीञ्छ्वापदान्याकीटपतंगपिपीलिकंधर्मंचाधर्मंचसत्यंचानृतंचसाधुचासाधुचहृदयज्ञंचाहृदयज्ञंचान्नंचरसंचेमंचलोकममुंचविज्ञानेनैवविजानातिविज्ञानमुपास्स्वेति ॥ १ ॥ सयोविज्ञानंब्रह्मेत्युपास्तेविज्ञानवतोवैसलोकान्ज्ञानवतोऽभिसिद्ध्यतियावद्विज्ञानस्यगतंतत्रास्ययथाकामचारोभवतियोविज्ञानंब्रह्मेत्युपास्तेऽस्तिभगवोविज्ञानाद्भूयइतिविज्ञानाद्वावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति ॥ २ ॥ खं० ॥ ७ ॥ बलंवावविज्ञानाद्भूयोपीहशतंविज्ञानवतामेकोबलवानाकंपयतेसयदाबलीभवत्यथोत्थाताभवत्युत्तिष्ठन्परिचरिताभवतिपरिचरन्नुपसत्ताभवत्युपसीदन्द्रष्टाभवति

तदोत्थातोत्थानस्यकर्ताभवति । उत्तिष्ठन्गुर्वादीनांपरिचरिताशुश्रूषकोभवति । परिचरंश्चोपसत्तातेषांसमीपगोंऽतरंगःप्रियोभवति । उपसीदन्नुपदेष्टुरेकाग्रतयाद्रष्टाभवति । ततस्तदुक्तस्यश्रोताभवति । श्रुतस्यैवमंताभवति । मतस्यैवबोद्धाभवत्येवमेवेदमिति । यद्वाबोद्धाध्याताभवति । नकेवलमेतावत् । तदुक्तार्थस्यकर्ताअनुष्ठाताभवति । विज्ञातानुष्ठानफलस्यानुभविताभवतीत्यर्थः । महिमांतरमाह ॥ बलेनैवेति ॥ अत्रपृथिव्यादिशब्दाश्चेतनपराः ॥ १ ॥ बलंब्रह्मेत्युपास्ते । बलवतोहसलोकानभिसिध्यतीतिग्राह्यं ॥ २ ॥ अष्टमःखंडः ॥ ८ ॥ अन्नंबाह्यांतरान्नाभिमान्यनिरुद्धएवबलाद्भूयः । तस्मादन्नस्यभूयस्त्वाद्यदिदशरात्रीरपिनाश्नीयात्तदायदुहयद्यपिजीवेत् । अथाप्यद्रष्टृत्वाश्रोतृत्वादिमान्भवति । यदान्नमश्नीयात्तदाद्रष्टृत्वादिमान्भवतीत्यन्नमेवभूयइत्यर्थः ॥ १ ॥ २ ॥ नवमःखंडः ॥ ९ ॥ आपःउभयविधाबभिमानीतैजसःप्राणोन्नाद्भूयान् । तस्मादपामन्नकारणत्वादेवहियदासुवृष्टिःसस्यहितावृष्टिर्नभवति । तदाप्राणाःप्राणिनःव्याधीयंतेदुःखिनोभवंति । किंन्निमित्तं । कनीयोन्नंभवि

---

उप० । श्रोताभवतिमंताभवतिबोद्धाभवतिकर्ताभवतिविज्ञाताभवतिबलेनवैपृथिवीतिष्ठतिबलेनांतरिक्षंबलेनद्यौर्बलेनापोबलेनपर्वताबलेनदेवमनुष्याबलेनपशवश्चवयांसिचतृणवनस्पतयःश्वापदान्याकीटपतंगपिपीलिकंबलेनवैलोकस्तिष्ठतिबलमुपास्स्वेति ॥ १ ॥ सयोबलंब्रह्मेत्युपास्तेयावद्बलस्यगततंत्रास्ययथाकामचारोभवतियोबलंब्रह्मेत्युपास्तेस्तिभगवोबलाद्भूयइतिबलाद्वावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति ॥२॥ खं०॥८॥ अन्नंवावबलाद्भूयस्तस्माद्यद्यपिदशरात्रीर्नाश्नीयाद्यद्युहजीवेदथवाऽद्रष्टाऽश्रोताऽमंताबोद्धाऽकर्ताऽविज्ञाताभवत्यथान्नस्याशीद्रष्टाभवतिश्रोताभवतिमंताभवतिबोद्धाभवतिकर्ताभवतिविज्ञाताभवत्यन्नमुपास्स्वेति ॥ १ ॥ सयोन्नंब्रह्मेत्युपास्तेऽन्नवतोवैसलोकान्पानवतोभिसिध्यतियावदन्नस्यगतंतत्रास्ययथाकामचारोभवतियोन्नंब्रह्मेत्युपास्तेस्तिभगवोन्नाद्भूयदत्यन्नाद्वावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति ॥ २ ॥ खं० ॥ ९ ॥ आपोवावान्नाद्भूयस्यस्तस्माद्यदासुवृष्टिर्नभवतिव्याधीयंतेप्राणाअन्नंकनीयोभविष्यतीत्यथयदासुवृष्टिर्भवत्यानंदिनःप्राणाभवंत्यन्नंबहुभविष्यतीत्यापएवेमामूर्तायेयंपृथिवीयदंतरिक्षंयद्द्यौर्यत्पर्वतायद्देवमनु-

ष्यतीति । एवमन्यत् । आपएवेत्युक्तंविशदमाह ॥ येयमिति ॥ पृथिव्यादिपिपीलिकांतंयत् । इमाःमूर्ताःआपएवेतियोजना ॥ १ ॥ २ ॥ दशमःखंडः ॥ १० ॥ तेजःद्विविधतेजोभिमानीइंद्रएवाद्भ्योभूयः ।' तत्तस्मादेतस्मिन्कालेयदावायुमागृह्यावष्टभ्याकाशमभितपत्यादित्यस्तदाहुर्लौकिकाःआदित्योनिशोचतिनितपति । नितरांप्राणिनःशोचयति । यतोयंनितरांतपति । अतोवर्षयिष्यतिवाइति । अतोपूसृष्टेःपूर्वंतेजएवदर्शयित्वाथापःसृजते । किंचतस्मादेवैतस्मिन्कालेऊर्ध्वाभिश्चतिरश्चीभिश्चविद्युद्भिःसहाह्रादाःस्तनयित्नुशब्दाश्चरंतिप्रवर्तंते । तस्मादाहुर्लौकिकाः । द्योततेस्तनयतिवर्षयिष्यतिवाइति । शिष्टंपूर्ववत् ॥ १ ॥ ॥ २ ॥ एकादशःखंडः ॥ ११ ॥ आकाशोबाह्यांतराकाशाभिमानिन्युमातेजसोभूयान् । तस्यसर्वदेवताधारत्वमाह ॥ आकाशइति ॥ सूर्याद्यग्न्यंतान्याकाशेस्थितानीतिशेषः । आकाशेनतत्प्रेरणयैवदेवताद्याह्वानंकरोतिपुरुषः । आकाशइतिनिमित्तसप्तमी । नरमतेव्यथतइत्यर्थः । आकाशेजायतइत्यौपचारिकंनेत्याह ॥ आकाशमभिजायतइति ॥ १ ॥ असंबाधान्

---

उप० । ष्यायत्पशवश्चवया ᳒सिचतृणवनस्पतयःश्वापदान्याकीटपतंगपिपीलिकमापएवेमामूर्ताअपउपास्स्वेति ॥ १ ॥ सयोपोब्रह्मेत्युपास्तआप्नोतिसर्वान्कामा᳒स्तृप्तिमान्भवतियावदपांगतंतत्रास्ययथाकामचारोभवतियोपोब्रह्मेत्युपास्तेस्तिभगवोद्भ्योभूयइत्यद्भ्योवावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति ॥ २ ॥ खं० ॥ १० ॥ तेजोवावाद्भ्योभूयस्तद्वाएतद्वायुमागृह्याकाशमभितपतितदाहुर्निशोचतिनितपतिवर्षिष्यतिवाइतितेजएवतत्पूर्वंदर्शयित्वाथापःसृजतेतदेतदूर्ध्वाभिश्चतिरश्चीभिश्चविद्युद्भिराह्रादाश्चरंतितस्मादाहुर्विद्योततेस्तनयतिवर्षिष्यतिवाइतितेजएवतत्पूर्वंदर्शयित्वाथापःसृजतेतेजउपास्स्वेति ॥१॥ सयस्तेजोब्रह्मेत्युपास्तेतेजस्वीवैसतेजस्वतोलोकान्भास्वतोपहततमस्कानभिसिध्यतियावत्तेजसोगतंतत्रास्ययथाकामचारोभवतियस्तेजोब्रह्मेत्युपास्तेऽस्तिभगवस्तेजसोभूयइतितेजसोवावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति ॥२॥ खं० ॥११॥ आकाशोवावतेजसोभूयानाकाशेवैसूर्याचंद्रमसावुभौविद्युन्नक्षत्राण्यग्निराकाशेनाह्वयत्याकाशेनशृणोत्याकाशेनप्रतिशृणोत्याकाशेरमतआकाशेनरमतआकाशेजायतआकाशमभिजायतआकाशमुपास्स्वेति ॥ १ ॥

व्यथारहितान् । उरुगायवतोभगवद्वतःभगवतोह्युरुगायनामप्रसिद्धं ॥ २ ॥ **द्वादशःखंडः** ॥ १२ ॥ स्मरःस्थिरस्मृत्यभिमानीरुद्रएवाकाशाद्भूयान् । तस्मात्स्मरस्यभूयस्त्वादेवयद्यपिलोकेबहवःपुरुषाआसीरंस्तेयदिनस्मरंतस्तदानैवतेकंचनशृणुयुर्नमन्वीरन्नविजानीरन् । यदावैतेस्मरेयुरथश्रवणादिव्यापारवंतोभवेयुः । किंचस्मरेणैवपुत्रादिकंविजानातिउपास्ते । सस्मरवतोहलोकानभिसिध्यतीतिग्राह्यं ॥ १ ॥ २ ॥ **त्रयोदशःखंडः** ॥ १३ ॥ आशातदभिमानिनीसरस्वतीस्मराद्भूयसीकृतः । आशयेद्धोऽभिवृद्धोवैस्मरोरुद्रोमंत्रानधीते । कर्माणिकुरुते । पुत्रादिकंचेच्छतेइच्छति । अस्योपासकस्यसर्वेकामाःकाम्याःआशयासमृध्यंति ॥ १ ॥ २ ॥ **चतुर्दशःखंडः** ॥ १४ ॥ **अथभाष्यार्थः** ॥ प्राणभूयस्त्वखण्डेप्राणःप्राणेनस्वशक्त्यैवयातिप्राणःप्राणंस्वात्मानमेवददातीतिप्रतीतिनिरासायप्राणःप्राणेनयातीत्यादिव्याचष्टे ॥ **योसाविति** ॥ आद्यःप्रथमांतःप्राणशब्दःआशोत्त

उप० । सयआकाशंब्रह्मेत्युपास्तआकाशवतोवैसलोकान्प्रकाशवतोसंबाधानुरुगायवतोभिसिध्यतियावदाकाशस्यगतंतत्रास्ययथाकामचारोभवतियआकाशंब्रह्मेत्युपास्तेऽस्तिभगवआकाशाद्भूयइत्याकाशाद्वावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति ॥ २ ॥ खं० ॥ १२ ॥ स्मरोवाआकाशाद्भूयाᳫंस्तस्माद्यद्यपिबहवआसीरन्नस्मरंतोनैवतेकंचनशृणुयुर्नमन्वीरन्नविजानीरन्यदावावतेस्मरेयुरथशृणुयुरथमन्वीरन्नथविजानीरन्स्मरेणवैपुत्रान्विजानातिस्मरेणपशूᳫंस्मरमुपास्स्वेति ॥ १ ॥ सयःस्मरंब्रह्मेत्युपास्तेयावत्स्मरस्यगतंतत्रास्ययथाकामचारोभवतियःस्मरंब्रह्मेत्युपास्तेऽस्तिभगवःस्मराद्भूयइतिस्मराद्वावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति ॥ २ ॥ खं० ॥ १३ ॥ आशावावस्मराद्भूयस्याशेद्धोवैस्मरोमंत्रानधीतेकर्माणिकुरुतेपुत्राᳫंश्चपशूᳫंश्चेच्छतइमंचलोकममुंचेच्छतआशामुपास्स्वेति ॥ १ ॥ सयआशांब्रह्मेत्युपास्तेआशयास्यसर्वेकामाःसमृध्यंत्यमोघाह्यस्याशिषोभवंतियावदाशायागतंतत्रास्ययथाकामचारोभवतियआशांब्रह्मेत्युपास्तेऽस्तिभगवआशायाभूयइत्याशायावावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति ॥ २ ॥ खं० ॥ १४ ॥

भा० । योसौप्राणःसप्राणेनपरब्रह्मणायाति । सएवभगवान्प्राणंप्रत्यभीष्टंददाति



मतयाप्रकृतप्राणपरः । द्वितीयःपरब्रह्मपरः । तृतीयोप्यव्यवधानेनप्रकृतपरब्रह्मपरइतिभावः । नचप्राणशब्दस्यपरब्रह्मपरत्वेऽप्रकृतस्वीकारः । प्राणोवाआशायाभूयानित्युक्तप्राणस्यांतर्यामितयाविष्णुत्वस्यभूमाधिकरणेसमर्थितत्वात् । प्राणशब्दस्यपरब्रह्मपरत्वेश्रुतिमाह ॥ **प्राणस्येति** ॥ यद्वाउक्तार्थेश्रुतिमाह ॥ **प्राणस्येति** ॥ प्राणस्यप्राणत्वप्रदंअभीष्टदंचेतिश्रुत्यर्थः । प्राणायददातीत्येतद्व्याचष्टे ॥ **प्राणइति** ॥ पूर्ववाक्यात्प्राणइत्येतदनुवर्ततइतिभावेनप्राणोवायुरित्युक्तं । प्राणायेतिचतुर्थीद्वितीयार्थेतिभावेनोक्तंपरमात्मानमिति । चशब्दोपिशब्दार्थः । असंभववारणायोक्तंज्ञानेनेति । ददातिशिष्येभ्यइतियोज्यं । अतिवादीवाचालइत्यन्यथाप्रतीतिनिरासायतद्व्याचष्टे ॥ **सर्वस्मादिति** ॥ सर्वस्मान्नामादेःउत्तमंप्राणं । एषतुवाअतिवदतियःसत्येनातिवदतीत्यत्रप्रकृतप्राणादिवाद्येवसत्यादिवादित्वेनोच्यते । ततश्चप्राणएवसत्यइतितस्यैवभूमादित्वप्राप्तौभूमाद्यधिकरणविरोधःस्यादित्याशंकानिरासायप्रकरणभेदकंदर्शयति ॥ **एषतुवेति** ॥ प्राणवादिनोतिवादित्वमुक्त्वासत्यवादिनोप्यतिवादित्वमुच्यते । तत्रप्राणातिवादिनःसत्यातिवादीतुशब्देनविशेष्यते । तेनज्ञायतेऽन्योसावन्योयमितीतिभावः । अर्थांतरवाचीप्रकरणांतरज्ञापकइत्यर्थः । ननुयदिप्राणादुत्तमःसत्योन्यस्तर्हिनामादिप्रकरणवदस्तिभगवःप्राणाद्भूयइतिप्राणाद्वावभूयोस्तीतितन्मेभगवान्ब्रवीत्वितिसत्यंवावप्राणाद्भूयइतिप्रश्नप्रतिवचनेस्यातामित्यतआह ॥ **अस्तीति** ॥ प्रश्नइत्युपलक्षणं । प्राणाद्वावभूयोस्तीत्युत्तरम

भा० । प्राणस्यप्राणमितिश्रुतेः । प्राणोवायुःपरमात्मानंचज्ञानेनदर्शयन्ददाति । सर्वस्मादतीतमुत्तमेवदतीत्यतिवादी । एषतुवाअतिवदतीतितुशब्दोऽर्थांतरवाची । अस्तिभगवःप्राणाद्भूयइतिप्रश्नोव्यतिहार्यः ।

पिग्राह्यं । व्यतिहार्योऽध्याहार्यः । अध्याहारज्ञापकस्तुप्रकरणभेदकल्पकस्तुशब्दएवेतिभावः । ननुयदिप्रश्नाद्यध्याहारःतर्ह्यस्ति
भगवःप्राणाद्भूयइतिप्रश्नेनास्तिप्राणाद्भूयइतिप्रतिवचनाध्याहारःकिंनस्यात् । अध्याहारस्यनिरंकुशत्वादित्यतआह ॥ यत्रेति ॥
यत्रवाक्येयत्पदंविनान्यत्रार्थांतरेऽनवसरोर्थांतरस्याघटनातत्रवाक्येतदेवपदंप्रतिष्ठितं । यत्रमहावाक्येयत्प्रमाणंवाक्यंवाविनान्य
त्रानवसरोर्थांतरस्याघटनातत्रमहावाक्येतत्प्रमाणंवाक्यंवाप्रतिहार्यमितिवचनादत्रोक्तरीत्यैवप्रश्नाद्यध्याहारः । अन्यथातुशब्दा
ननुगुण्यादितिभावः । अस्मिन्प्रकरणेप्रश्नाद्यध्याहारःकार्यइत्यत्रसूत्रंचपठति ॥ व्यतिहारइति ॥ प्रश्नाद्यध्याहारःकर्तव्यः ।
एषतुवाअतिवदतीतितुशब्देनविशिंषंतिहीत्यर्थः । उक्तमर्थंप्रमाणेनद्रढयन्सत्याद्यात्मांतप्रकरणानितेनैवव्याचष्टे ॥ अतिवा
दीति ॥ श्रुतौसत्यवादिनःश्रवणात्कथंविष्णुवादीत्युक्तमित्यतआह ॥ सइति ॥ कुतइत्यतआह ॥ यदिति ॥ यद्यस्मान्निर्दो
षोनियामकस्तस्मात्सत्यः । ननुसत्योनविष्णुःतदुपर्यपिविज्ञानमतिश्रद्धानिष्ठाकृतिसुखभूमाहंकारात्मनामुक्तत्वादित्यतस्तान्यपि
प्रकरणानिविष्णुपरतयैवयोजयन्विज्ञानमतिशब्दयोरर्थभेदमाह ॥ विशिष्टेति ॥ श्रद्धानिष्ठाकृतिसुखभूमशब्दार्थान्क्रमेणाह ॥
नित्यश्रद्धेत्यादिना ॥ सुखशब्देनसुखमात्रग्रहणप्रतीतिनिरासायोक्तंसुपूर्णेति । सर्वगुणैःपूर्णोयतोतोभूमेत्युच्चार्यते । यत्रभू

---

भा० । यत्रानवसरोन्यत्रपदंतत्रप्रतिष्ठितं । यत्रप्रमाणंवाक्यंवाप्रतिहार्यंनसंशयः । ॐव्यतिहारोविशिंषंतिहीतरवदिह्निभगवद्वचनं । अतिवादीप्राणवादीविष्णुवादी
विशेषतः । ससत्योभगवान्विष्णुर्यन्निर्दोषोनियामकः । विशिष्टज्ञानरूपश्चसामान्यज्ञानरूपकः । नित्यश्रद्धास्वरूपश्चतथैवस्थैर्यरूपकः । सएवसर्वकर्ताचसुपूर्णानंदरूपकः ।
सचसर्वगुणैःपूर्णोभूमेत्युच्चार्यतेततः ।

मतत्वेऽन्यद्द्रष्टव्यंनपश्यत्यभावादितिप्रतीतिनिरासाययत्रनान्यत्पश्यतीत्यादिसभूमेत्यंतवाक्यतात्पर्यमाह ॥ **यदधीनमिति** ॥ अतिपूर्णत्वादित्युक्तानुवादः । यत्रान्यत्पश्यतीत्यादितदल्पमित्यंतवाक्यतात्पर्यमाह ॥ **अन्यदिति** ॥ भगवतोन्यत् । सएवाधस्तादित्यादिवाक्यंव्याचष्टे ॥ **सइति** ॥ सइत्यनुवादेनसर्वगुणसंपूर्णइतिपरामृश्यकथनं । तस्यैवभूमशब्दार्थत्वात् । सएवेदंसर्वमितिवाक्यंभूम्नःसर्वाभेदपरमितिप्रतीतिनिरासायतात्पर्यतोव्याचष्टे ॥ **स्वतंत्रइति** ॥ यदावैविजानात्यथसत्यंवदतिनाविजानन्सत्यंवदतीत्यादिनाविज्ञानादीनांसत्याद्यविनाभावोक्त्यालब्धमुत्तरोत्तरस्यपूर्वपूर्वत्रहेतुत्वमेववैपरीत्येनाह ॥ **पूर्णत्वादित्यादिना** ॥ आस्तिकइतिश्रद्धाशब्दार्थकथनं । निर्दोषःसर्वस्यापिनियामकइतिसत्यशब्दार्थः । भूमप्रकरणेयोवैभूमेतिपूर्ववैलक्षण्येनोपदेशेतात्पर्यमाह ॥ **भूमेति** ॥ प्राचीनंतुभूमगुणनिरूपणमेव । नपृथङ्मूर्तिंनिरूपणमितिभावः । अथातोहंकारइत्यादिनाप्रसिद्धाहंकारएवचिदचित्संवलनात्मकःकथ्यतइत्यसदितिभावेनाह ॥ **सएवेति** ॥ अहंकारशब्दंभगवतिनिर्वक्ति ॥ **आकार्यइति** ॥ नन्वहमित्याकार्यत्वंजीवस्यैवप्रसिद्धमित्यतआह ॥ **जीवस्थइति** ॥ अनेनाथातइतिपूर्वविलक्षणोपदेशाभिप्रायोपिसूचितः । ननुजीवस्याणुत्वेनतदंतर्गतस्यापिभगवतोणुत्वात्कथमहमेवाधस्तादित्यादिनाव्याप्तत्वमुच्यतइत्यतआह ॥

---

भा० । यदधीनंविनानान्यत्किंचिदस्तिकुतश्चन । सभूमोक्तोतिपूर्णत्वादन्यदल्पमुदीर्यते । ससर्वगुणसंपूर्णःसर्वदेशेषुसर्वदा । स्वतंत्रःसर्ववस्तूनितदधीनानिसर्वशः । पूर्णत्वात्सुखरूपोसौसर्वकर्तासुखत्वतः । कर्तृत्वात्सुस्थिरश्चासौस्थिरत्वादास्तिकस्तथा । आस्तिकत्वाच्चमंतासौविज्ञाताचततोहरिः । ज्ञातृत्वाच्चसनिर्दोषःसर्वस्यापिनियामकः । भूमानारायणाख्यःस्यात्सएवाहंकृतिःस्मृतः । आकार्योहमितिह्येषततोहंकारउच्यते । जीवस्थस्त्वनिरुद्धोयःसोहंकारइतीरितः ।

**सोपीति** ॥ नन्वस्तुपरमैश्वर्यघटकं । तथापिभगवत्यणुत्वमहत्त्वसमावेशेकिंमानं । अन्यथाशशविषाणादिकल्पनापत्तेरित्यतो
मार्कंडेयप्रत्यक्षमाह ॥ **यथेति** ॥ अणुरूपोपीतिपूर्वत्रान्वेति । अथातआत्मादेशइतिजीवोपदेशइत्यसदितिभावेनतत्तात्पर्यमा
ह ॥ **भगवानिति** ॥ आत्मैवाधस्तादित्यादिव्याचष्टे ॥ **सचेति** ॥ तर्हिभूमाहंकारात्मलक्षणानांपरस्परातिव्याप्तिःस्यादित्य
तआह ॥ **नचेति** ॥ ननुयोवैभूमातत्सुखमित्यत्रभूम्नःसुखस्वरूपंलक्षणमुक्त्वानाल्पेसुखमस्तीत्यतिव्याप्तिपरिहारोभिहितःसोनु
पपन्नः । अन्यस्यापिमुक्तस्यसुखस्वरूपत्वादित्यतस्तद्वाक्यंव्याचष्टे ॥ **भूमप्रसादमिति** ॥ अल्पेमुक्तजाते । तथाचानन्या
धीनसुखरूपत्वंप्राग्लक्षणत्वेनाभिप्रेत्यातिव्याप्तिपरिहारोयमितिभावः । अथयोवैभूमातदमृतमितिभूम्नोऽमृतत्वंलक्षणमुक्त्वाथय
दल्पंतन्मर्त्यमित्यतिव्याप्तिःपरिह्रियते । तदनुपपन्नं । मुक्तत्वापरपर्यायस्यामृतत्वस्यमुक्तेपिसत्त्वादित्यतआह ॥ **मर्त्यंचेति** ॥
विभक्तिविपरिणामेनाल्पमित्यनुवर्तते । अल्पंमुक्तजातं । तदानीममृतमपिपूर्वंमर्त्यंच । तथाचनित्यमुक्तत्वंप्राग्लक्षणत्वेनविव
क्षितत्वातस्यायमतिव्याप्तिपरिहारइतिभावः । तर्हिरमायामतिव्याप्तिरित्यतआह॥ **अल्पापिहीति** ॥ अमृतानित्यमुक्तादेवीश्री
रल्पापिपूर्णा । भगवतोतिप्रियत्वात् । तथाचतस्यापिभूमकोटिनिक्षेपेणलक्ष्यत्वान्नातिव्याप्तिरितिभावः । ननुभूमप्रसादंविनाना
ल्पेसुखमस्तीत्ययुक्तं । एवंविजानन्नात्मरतिरितिभगवदपरोक्षज्ञानिनोमुक्तौस्वेनैवसुखोक्तेरित्यतस्तद्यथावद्व्याचष्टे ॥ **आत्मर**

भा० । सोप्यणुत्वेपिसंव्यापीपरमैश्वर्ययोगतः । यथाबालतनौविष्णौमार्कंडेयेनधीमता । प्रविश्यनांतोधिगतएवंव्याप्तोहरिःपरः । अणुरूपोपिभगवान्वासुदेवःपरोविभुः ।
आत्मेत्युक्तःसचव्यापीनचभेदोहरौक्वचिदितिपरमसारेभूमप्रसादंविनानाल्पेसुखमस्ति । मर्त्यंचपूर्वं । अल्पापिह्यमृतादेवीश्रीःपूर्णातिप्रियत्वतइतिच । आत्मरतिर्भगवद्रतिः ।



**तिरिति** ॥ भगवतारतिर्यस्यासौभगवद्रतिः । सःस्वराट्स्वतंत्रःइत्यन्यथाप्रतीतिवारणायादौस्वशब्दार्थमाह॥ **स्वइति** ॥ स्वतं
त्रत्वादितिभावः । स्वराट्शब्दंव्याचष्टे ॥ **सइति** ॥ स्वःपरमात्माराट्आज्ञापिताआज्ञापयितायस्यसःस्वराट् । नन्विदंसंसारि
साधारणंकथंफलमित्यतउक्तं ॥ **प्रत्यक्षतइति** ॥ तस्यहवाएतस्यैवंपश्यतएवंमन्वानस्यैवंविजानतआत्मतःप्राणइत्यादिनामुक्त
स्वरूपात्प्राणादिसृष्टिरुच्यतइत्यन्यथाप्रतीतिनिवारयत्तदनूद्यव्याचष्टे ॥ **आत्मतइति**॥ इत्यादिवाक्यस्येतिशेषः । द्वितीयादिश
ब्देनस्थित्यादिसप्तकस्यापिसंग्रहः । तस्यमुक्तस्यपश्यतःसतआत्मतःप्राणादिर्जायतेस्थीयतइत्याद्युक्तौमुक्तस्तत्पश्यतीतिलभ्यते ।
यथाचैत्रस्यपश्यतोमैत्रइदंकरोतीत्युक्तेचैत्रस्तत्पश्यतीतिलभ्यतइतिभावः । स्वकृतव्याख्यानेनियामकमाह ॥ **सर्वंहीति** ॥
सर्वंभगवत्कर्तृकंप्राणसृष्ट्यादिकमित्यर्थः । अप्रतीतेःपश्यतइतिपदंव्याचष्टे ॥ **पश्यइतीति** ॥ पश्यतीतिव्युत्पत्तेरितिभावः ।
पश्यतइतिपदेनद्रष्टाजीवउच्यतइत्यत्रश्रुतिमाह ॥ **यदेति** ॥ भूमोपास्तौयःकोपिअधिकारीतस्यसर्वस्याप्यात्मरतिरित्याद्युक्तंफ
लंभवतीतिप्रतीतिवारणायफलप्रकरणंप्रमाणेनैवव्याचष्टे ॥ **भूमेति** ॥आत्मक्रीडइत्यस्यार्थःतेनैवेति । आत्ममिथुनइत्यस्या
र्थोमिथुनीभवेदिति । तेनैवेत्यनुवर्तते । चतुर्मुखस्यपुरुषस्यकथंपरमपुरुषेणमिथुनीभावइत्यतउक्तं ॥ **स्त्रीरूपइति** ॥ तेनानं

भा० । स्वोभगवान् । सोस्यप्रत्यक्षतआज्ञापयिताभवतीतिस्वराट् । आत्मतःप्राणआत्मतआशेत्यादिमुक्तस्सन्प्राणादीनांसृष्ट्यादिकंपश्यतीत्यर्थः । सर्वंहिपश्यःपश्यती
तिवाक्यशेषात् । पश्यइतिद्रष्टा । यदापश्यःपश्यतेरुक्मवर्णमितिश्रुतेः । भूमोपासनयोग्यस्तुसाक्षाद्ब्रह्मैवमुख्यतः । सतद्विद्याबलेनैवविष्णुनारतिमाप्नुयात् । तेनैवक्रीडतेनित्यं
स्त्रीरूपोमिथुनीभवेत् । तदानंदःसएवास्यराजाभवतिनापरः ।

दोयस्यासौतदानंदइत्यात्मानंदइत्यर्थः । स्वराडित्यस्यात्यर्थःसएवेति । आत्मतःप्राणइत्यादेरर्थमाह ॥ पश्येच्चेति ॥ अथातो हंकारादेशइतिप्रकरणंजीवांतस्थानिरुद्धपरमितिव्याख्यातं । तत्परिशुद्धयेयेकेचिदत्राविद्याकार्याहंकारग्रंथिर्निरूप्यतइतिवदंति तद्दूषयति ॥ नचेति ॥ यद्यहंकारोभगवतोन्यःस्यात्तर्हिसएवाधस्तादित्यादिनायद्भूम्नःपूर्णत्वंलक्षणमुक्तंतस्यैवाहमेवाधस्तादि त्यादिनाहंकारोपदेशोनयुज्यते । अतिव्याप्तिप्रसंगात् । नचसएवाधस्तादित्यादिकमप्यन्यस्यैवलक्षणमितिवाच्यं । भूमानंभग वोविजिज्ञासइतिप्रश्नोत्तरत्वादित्यर्थः । नकेवलमतिव्याप्तेरिदंनयुज्यतेकिंत्वहंकारस्यभगवदन्यत्वेऽसंभविचेत्याह ॥ नचेति ॥ पूर्णत्वंसर्वगतत्वं । नवयंमुख्यतोहंकारंपूर्णंब्रूमः । येनासंभवःस्यात् । किंतुदेहादिविषयत्वेनपूर्णइत्युपचर्यतइत्यतआह ॥ नचे ति ॥ अहंकारस्यभगवद्रूपत्वांगीकारेणमुख्येपूर्णत्वेयुज्यमानेतत्परित्यागेनोपचरितंपूर्णत्वमंगीकर्तुंनयुज्यते । मुख्यार्थबाधएवा मुख्यस्यप्राप्तत्वादित्यर्थः । अथातइत्यस्याहंकारविषयत्वेदूषणांतरमाह ॥ नचेति ॥ भूमाख्यस्यभगवतोनिरूपणेतस्यैवरूपांतर ज्ञापनायाथातइत्युपदेशइत्यस्मन्मतेऽस्तिप्रस्तुतिः । नचाहंकारस्यकाचित्प्रस्तुतिरस्ति । येनात्रतन्निरूपणंस्यादित्यर्थः । नन्वहं कारस्यपूर्वमप्रस्तुतत्वेपीदानीमेवारंभःक्रियते । पूर्वप्रकरणविच्छेदकस्यप्रकरणांतरारंभार्थस्याथातःशब्दस्यसत्त्वात् । नचपूर्वोत्त रप्रकरणयोर्भगवत्परत्वेतदुपपद्यतइत्यतआह ॥ अथशब्दइति ॥ भूमप्रकरणेनारायणाख्यंभगवद्रूपंनिरूप्यतस्यैवानिरुद्धाख्य

भा० । पश्येच्चप्राणसृष्ट्याद्यंयेतदन्यउपासकाः । तेयथायोग्यमाप्स्यंतिफलंमुक्तौनसंशयइतिपरमतत्वे । नचभूमानंभगवोविजिज्ञासइतिपृष्टःसन्भूम्नोलक्षणंसएवाधस्ता त्सउपरिष्टादित्यादिनापूर्णत्वंभगवतोन्यस्याहंकारस्योपदिशतीतियुज्यते । नचाहंकारस्यपूर्णत्वमस्ति । नचमुख्येपूर्णत्वेयुज्यमानेउपचरितंयुज्यते । नचाहंकारस्यकाचित्प्रस्तुतिः । अथशब्दस्तुरूपांतरापेक्षयायुज्यते ।

रूपांतरापेक्षयाप्रकरणांतरारंभार्थाथशब्दोपपत्तिरित्यर्थः । नन्वेवंतर्ह्यतःशब्दोऽव्यर्थःस्यात् । प्रकरणभेदस्याथशब्देनैवसिद्धेरित्यतस्तस्यार्थांतरपरतयोपपत्तिमाह ॥ अतइति ॥ इत्यर्थतयायुज्यतइतिसंबंधः । अशब्दःपरमात्मवाची । अःइतिब्रह्मेतिश्रुतेः । तस्मादितिपदार्थमभिप्रेत्यतत्प्रसादादितितात्पर्यकथनं । आत्मरतिर्भगवद्रतिः । स्वोभगवानित्यादिनाआत्मस्वशब्दौभगवत्परतयाव्याख्यातौ । तदुपपादयितुंतावदनुवदति ॥ आत्मरतिरिति ॥ उपपादयति ॥ योब्रह्माणमिति ॥ स्वयंभूरात्मभूरित्यादिषुविरिंचिवाचकप्रयोगेषुयथात्मशब्दःस्वयंशब्दश्चविष्णुवाचीतद्वदेवात्राप्यात्मरतिरित्यादावप्यात्मशब्दःस्वशब्दश्चविष्णुवाच्येव । नतुस्वात्मार्थः ।नचतत्राप्यात्मस्वयंशब्दौविष्णुपरौकुतइतिवाच्यं। स्वजन्यत्वस्यात्माश्रयग्रस्ततयादूषितत्वात् । तस्मादात्माचस्वयंचभगवांस्ततोभूतत्वादात्मभूःस्वयंभूरित्येवार्थोवर्णनीयः । चतुर्मुखेविष्णुजातत्वस्ययोब्रह्माणमित्यादिश्रुतिसिद्धत्वादित्यर्थः । आत्मतःप्राणइत्यादिकंमुक्तःसन्प्राणादीनांसृष्ट्यादिकंपश्यतीतिव्याख्यातं । तदयुक्तं । मुक्तात्मनःप्राणादिकमुत्पद्यतइत्येवार्थांगीकारेबाधकाभावादित्यतआह ॥ नचेति ॥ कुतोनेत्यतआह ॥ जगद्व्यापारेति ॥ बाधकांतरमाह ॥ आत्मतएवेति ॥ आत्मतएवप्राणोजायतइतिषट्प्रश्नोपनिषदिआत्मतएवेत्यवधारणाद्भगवतएवप्राणोजायतेनततोन्यस्मात् । तत

---

भा० । अतःशब्दस्तत्प्रसादादिति । आत्मरतिःस्वराडित्यादि । योब्रह्माणंविदधातिपूर्वमितिब्रह्मणउत्पत्तिप्रसिद्धेःस्वयंभूरात्मभूरित्यादिष्वात्मशब्दःस्वयंशब्दश्चयथाविष्णुवाचीतद्वदेवात्राप्यात्मशब्दोविष्णुवाच्येव । नचमुक्तेभ्यःप्राणादिकमुत्पद्यते । ॐ जगद्व्यापारवर्जमितिवर्णितत्वाद्भगवता । आत्मतएवप्राणोजायतइत्यवधारणान्नभगवतोऽन्यस्मात्प्राणोजायते ।

श्रात्मतःप्राणइत्यत्रनमुक्तजन्यत्वंप्राणस्यार्थइत्यर्थः । नन्वेवमपिजीवात्मनिस्वात्मनिचात्मस्वशब्दप्रयोगदर्शनादत्रतौविष्णुपरा
वितिकुतोनिर्णयइत्यतोमुख्यामुख्ययोर्मुख्येसंप्रत्ययइतिन्यायमनुसंदधत्स्वयंभूरित्याद्युक्तार्थेप्रमाणमाह ॥ आत्मेति ॥ तस्मात्
ततोभूतत्वात्सएवेदंसर्वमहमेवेदंसर्वमात्मैवेदंसर्वमितिभूमाहंकारात्मनांसर्वात्मकत्वमुच्यतइतिप्रतीतिवारणायप्रमाणेनैवप्रकारां
तरेणव्याचष्टे ॥ इदमिति ॥ भूमाहमात्मेतित्रिविधोपिहरिःसर्वदापिसामीप्यादिदंनामेत्यादियोजना । एतेनाहमात्मानौभूम्नो
भिन्नावित्यपास्तं । नन्विदंसर्वमित्यस्यसामीप्यपूर्णार्थत्वेसएवायंसर्वइत्यादिप्रयोगःस्यादितिचेन्न । लिंगव्यत्ययोपपत्तेः । नचा
तिप्रसंगः । नियामकविशेषसद्भावादितिभावेनप्रमाणमाह ॥ स्त्रीगुणाइति ॥ तत्रसर्वशःसर्वेषांलिंगानांव्यत्ययःस्यादितियोज
ना । लिंगव्यत्ययमेवविशदमाह ॥ कइति ॥ देवादयोदेवशब्दादयःततोभगवतिवर्ततइतियोज्यं । आहारशुद्धौसत्वशुद्धिरि
त्यादौयदिरस्याःस्निग्धाइत्यादिनानिरूपितएवाहारोभवेत्तदाहारशुध्यांतःकरणशुद्ध्युपपत्तावपितन्मात्रेणध्यानापरपर्यायस्मृति
स्थैर्यमुच्यमानमनुपपन्नंस्यादितिभावेनाहारशब्दार्थवदंस्तद्वाक्यंप्रमाणेनैवव्याचष्टे ॥ गुरोरिति ॥ विद्याहृतिःशास्त्रश्रवणं ।

---

भा० । आत्मेतिमुख्यतोविष्णुस्तदन्येतूपचारतः । तथैवस्वइतिप्रोक्तस्तस्माद्ब्रह्मात्मभूःस्वभूरितिस्कांदे । इदंनामातिसामीप्यात्सर्वपूर्णगुणत्वतः । भूमाहमात्मेतिहरिस्त्रिविधो
पिहिसर्वदेतिविश्वनिर्णये । स्त्रीगुणाःपुंगुणाश्चैवनपुंसकगुणाअपि । यदधीनाव्यत्ययःस्याल्लिंगानांतत्रसर्वशः । कःकिंकंतत्सर्वमात्माऽदितिर्देवादयस्ततइतिलिंगनिर्णये । गुरोर्वि
द्याहृतिर्यातुसआहारइतिस्मृतः । तच्छुद्धौज्ञानशुद्धिःस्याज्ज्ञानशुद्धौस्थिरास्मृतिः । स्मृतिस्थैर्येत्वापरोक्ष्यंहरेर्मोक्षस्ततोभवेदितिसाधननिर्णये ॥ खं०१५-२६ ॥ इतिश्रीम
दानंदतीर्थभगवत्पादाचार्यश्रीमच्छांदोग्यभाष्येसप्तमोध्यायः ॥ ७ ॥



ज्ञानशुद्धिःमनशुद्धिः । अनेनसत्त्वशब्दोज्ञानपरइत्युक्तंभवति । स्थिरास्मृतिर्ध्यानं ॥ खं० ॥ १५-२६ ॥ ततश्चप्राणोवा
आशायाइत्यारभ्याऽऽध्यायसमाप्तेरयमक्षरार्थः ॥ प्राणोमुख्यप्राणएवाशायाभूयान् । तत्सामर्थ्यसदृष्टांतमाह ॥ यथे
ति ॥ यथावारथचक्रस्यअराःरथनाभौसमर्पिताः । एवमस्मिन्प्राणेसर्वजगत्समर्पितं । नचैतावतातस्यैवनिरुपचरितसर्वाधारत्वं
मंतव्यमित्याशयेनाह ॥ प्राणइति ॥ योसावाशोत्तमःप्राणःसप्राणेनपरब्रह्मणायातिप्रवर्तते । प्राणस्यपराधीनप्रवृत्तिकत्वेनेष्ट
प्राप्तिःस्यादित्यतआह ॥ प्राणःप्राणमिति ॥ प्राणःपरमात्माप्राणंमुख्यप्राणंप्रत्यभीष्टंददातीत्यर्थः । अन्यस्येष्टंनियमे
नाप्रयच्छंस्तस्यैवकुतोददातीत्यतआह ॥ प्राणायेति ॥ प्राणइत्यनुवर्तते । चतुर्थीद्वितीयार्थे । यस्मात्
प्राणोवायुःप्राणंपरमात्मानंचज्ञानेनदशर्यञ्छिष्येभ्योददातितस्मात्प्राणंप्रत्येवाभीष्टंपरमात्माददातीतियोज्यं । प्राणस्यपित्रादि
पूज्यस्थानगतत्वरूपंमाहात्म्यमाह ॥ प्राणोहेत्यादिना ॥ १ ॥ तदेवान्वयव्यतिरेकाभ्यामुपपादयति ॥ सयदीति ॥ सः
यःकश्चित्यदिपित्रादिकंब्राह्मणांतंसतिमुख्यप्राणेकिंचिद्भृशमिव । त्वंकारादिनाप्रत्याह । तदात्वात्वांप्रतिधिगस्त्वित्यैवैनमाहु
र्लौकिकाः । कुतइत्यतआह ॥ पितृहेति ॥ २ ॥ अथयद्यप्येनान्पित्रादीनेवोत्क्रांतप्राणाञ्छूलेनसमासंसमस्यव्यतिषंदहेत्व्य

---

उप० । प्राणोवाआशायाभूयान्यथावाअरानाभौसमर्पिताएवमस्मिन्प्राणेसर्वꣳसमर्पितंप्राणःप्राणेनयातिप्राणःप्राणंददातिप्राणायददातिप्राणोहपिताप्राणोमाताप्राणोभ्राताप्राणः
स्वसाप्राणआचार्यःप्राणोब्राह्मणः ॥ १ ॥ सयदिपितरंवामातरंवाभ्रातरंवास्वसारंवाऽऽचार्यंवाब्राह्मणंवाकिंचिद्भृशमिवप्रत्याहधिक्त्वास्त्वित्येवैनमाहुःपितृहावैत्वमसिमातृहावैत्वमसि
भ्रातृहावैत्वमसिस्वसृहावैत्वमस्याचार्यहावैत्वमसिब्राह्मणहावैत्वमसीति॥२॥ अथयद्यप्येनानुत्क्रांतप्राणाञ्छूलेनसमासंव्यतिषंदहेन्नैवैनंब्रूयुःपितृहासीतिनमातृहासीतिनभ्रातृहासीति

त्यस्तंसंदहेत् । तथापिनैवैनंब्रूयुः । पितृहासीत्यादि ॥ ३ ॥ निगमयति ॥ **प्राणइति** ॥ तस्मात्प्राणएवैतेषुस्थितइत्यर्थः । वेत्तुः फलमाह ॥ **सवाइति** ॥ सएषोधिकारीएवंशृण्वन्नेवंमन्वानःएवंध्यायन्नेवंपश्यन्नतिवादीसर्वस्मादतीतमुत्तमंप्राणाख्यंवदतीत्य तिवादीभवतिवै । तंप्राणातिवादिनंप्रतियदित्वमतिवाद्यसीत्यन्येब्रूयुस्तदाहमतिवाद्यस्मीतिब्रूयात् । नापह्नुवीत । प्राणवादि नोभयाभावादित्यर्थः ॥ ४ ॥ **पंचदशःखंडः** ॥ १५ ॥ अत्रास्तिभगवःप्राणाद्भूयइति प्राणाद्वावभूयोस्तीति तन्मेभगवान्ब्रवी त्विति सत्यंवावप्राणाद्भूयइति प्रश्नप्रतिवचनेध्याहार्ये । सत्यवेत्तुःफलमाह ॥ **एषतुवेति** ॥ योधिकारीसन्निर्दोषश्चासौयोनि यामकश्चेतिसत्योविष्णुस्तेनातिवदति । तमतिवदतीतियावत् । एषएवतुप्राणातिवाद्यपेक्षयाविशेषेणातिवदति । अतीतमुत्तमं वस्तुवदतीत्यर्थः । तर्हिसोहंत्वांप्रपन्नोहंयथासत्येनातिवदानितथामांविनियोजयेतिनारदोक्तःकुमारआह ॥ **सत्यंत्वेवेति** ॥ तदतिवादित्वसिध्यर्थंतुविशेषेणसत्यमेवविजिज्ञासितव्यमित्युक्तोनारदःसत्यंभगवोविजिज्ञासइत्याह ॥ **षोडशःखंडः** ॥ १६ ॥ एवंसत्याख्यभगवतोगुणजिज्ञासायांगुणत्वेनतदविनाभूतंविज्ञानंवक्तुंविज्ञानस्यसत्याविनाभावमाह ॥ **यदेति** ॥ अन्वयमुक्त्वा व्यतिरेकमाह ॥ **नाविजानन्निति** ॥ **विजानन्नेवेतिनिगमनं** ॥ तस्मात्सत्यंविजिज्ञासतातदविनाभूतंविज्ञानमेवविशेषणवि

---

उप० । नस्वस्मद्धासीतिनाचार्यद्धासीतिनब्राह्मणद्धासीति ॥ ३ ॥ प्राणोह्येवैतानिसर्वाणिभवतिसवाएषएवंपश्यन्नेवंमन्वानएवंविजानन्नतिवादीभवतितंचेद्ब्रूयुरतिवाद्यसीत्यति वाद्यस्मीतिब्रूयान्नापह्नुवीत ॥ ४ ॥ खं० ॥ १५ ॥ एषतुवाअतिवदतियःसत्येनातिवदति सोहंभगवःसत्येनातिवदानीतिसत्यंत्वेवविजिज्ञासितव्यमितिसत्यंभगवोविजिज्ञासइ ति ॥ खं० ॥ १६ ॥ यदावैविजानात्यथसत्यंवदतिनाविजानन्सत्यंवदतिविजानन्नेवसत्यंवदतिविज्ञानंत्वेवविजिज्ञासितव्यमितिविज्ञानंभगवोविजिज्ञासइति ॥ खं० ॥ १७ ॥

जिज्ञासितव्यमित्युक्तेतर्हिविज्ञानंभगवोविजिज्ञासइत्याहनारदः ॥ सप्तदशःखंडः ॥ १७ ॥ एवमुत्तरखंडपंचकमपियोज्यं ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ सत्यादिगुणायस्याएवपरदेवतायाःस्वरूपभूतास्तंभूमाख्यंनारायणंलक्षयति ॥ योवा इति ॥ योवैभूमापूर्णोनारायणाख्यस्तत्सुखमनन्याधीनसुखरूपं । अस्यातिव्याप्तिंपरिहरति ॥ नाल्पइति ॥ भूमप्रसादंविनानाल्पेमुक्तजातेसुखमस्ति । एवमतिव्याप्तिंपरिहृत्यनिगमयति ॥ भूमैवेति ॥ नैतावतोपदेशसमाप्तिरितिभावेनाह ॥ भूमात्वेवेति ॥ एवमुक्तेनारदःपृच्छति ॥ भूमानमिति ॥ त्रयोविंशःखंडः ॥ २३ ॥ भूम्नोसद्दशत्वंलक्षणमाह ॥ यत्रेति ॥ यत्रयस्याधीनंविनान्यन्नपश्यत्यधिकारीसर्वमेतदधीनंपश्यतिशृणोतिविजानातिवासभूमेत्यर्थः । अस्यातिव्याप्तिंनिराह ॥ अथ यत्रेति ॥ अत्रापियत्रयस्याधीनंविनान्यत्पश्यति । अन्यद्यदधीनंपश्यतीतियावत् । तदल्पमित्यर्थः । भूम्नोनित्यमुक्तत्वंलक्ष

---

उप० । यदावैमनुतेथविजानातिनामत्वाविजानातिमत्वैवविजानातिमतिस्त्वेवविजिज्ञासितव्येतिमतिंभगवोविजिज्ञासइति ॥ खं० ॥१८॥ यदावैश्रद्दधात्यथमनुतेनाश्रद्दधन्मनुतेश्रद्दधदेवमनुतेश्रद्धात्वेवविजिज्ञासितव्येतिश्रद्धांभगवोविजिज्ञासइति ॥ खं० ॥ १९ ॥ यदावैनिस्तिष्ठत्यथश्रद्दधातिनानिस्तिष्ठञ्छ्रद्दधातिनिस्तिष्ठन्नेवश्रद्दधातिनिष्ठात्वेवविजिज्ञासितव्येतिनिष्ठांभगवोविजिज्ञासइति ॥ खं० ॥ २० ॥ यदावैकरोत्यथनिस्तिष्ठतिनाकृत्वानिस्तिष्ठतिकृत्वैवनिस्तिष्ठति कृतिस्त्वेवविजिज्ञासितव्येति कृतिंभगवोविजिज्ञासइति ॥ खं० ॥ २१ ॥ यदावैसुखंलभतेथकरोतिनासुखंलब्ध्वाकरोतिसुखमेवलब्ध्वाकरोतिसुखंत्वेवविजिज्ञासितव्यमितिसुखंभगवोविजिज्ञासइति ॥ खं० ॥ २२ ॥ योवैभूमातत्सुखंनाल्पेसुखमस्तिभूमैवसुखंभूमात्वेवविजिज्ञासितव्यइतिभूमानंभगवोविजिज्ञासइति ॥ खं० ॥ २३ ॥ यंत्रनान्यत्पश्यतिनान्यच्छृणोतिनान्यद्विजानातिसभूमाथयत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानातितदल्पंयोवैभूमातदमृतमथयदल्पंतन्मर्त्यंसभगवःकस्मिन्प्रतिष्ठितइतिस्वेमहिम्नियदिवानमहिम्नीति ॥ १ ॥

णांतरमाह ॥ **योवाइति** ॥ अतिव्याप्तिमुद्धरति ॥ **अथेति** ॥ यदल्पंमुक्तजातंतदपिपूर्वमर्त्यमेवातोनतस्यातिव्याप्तिरितिभा
वः । जानन्नपिनारदोविशेषार्थज्ञानायस्थापनायवाभूमाश्रयंपृच्छति ॥ **सइति** ॥ उत्तरमाह ॥ **स्वइति** ॥ आश्रयप्रश्नस्यप्रकां
रांतरेणाप्युत्तरमाह ॥ **यदिवेति** ॥ यद्वानमहिम्नयमाश्रितः ॥ १ ॥ ननुस्वमहिमाश्रयत्वेमहिमाश्रयत्वंप्राप्तमेवातोविरोधइत्य
तःपरिच्छिन्नमहिमानाश्रयत्वमभिप्रेतमितिभावेनोक्तंविशदयति ॥ **गोअश्वेति** ॥ यश्चैत्रोमहिम्निप्रतिष्ठितस्तंगोअश्वमहिमेतिग
वाश्वमहिमेत्याचक्षतेविद्वांसः । क्वचित्तुगोअश्वमिहमहिमेतिपाठः । तदेहजगतिगोअश्वंतथाहस्तिहिरण्यंदासभार्यंद्वंद्वैकवद्भावः ।
क्षेत्राण्यायतनानिगृहाण्यस्यमहिमेत्याचक्षते । किंततः । अहंभूमानमेवंचैत्रवत्परिच्छिन्नमहिमाश्रयंनब्रवीमीतिहोवाचकुमारः ।
स्वेमहिम्नीत्युक्तंनातिप्रसक्तमित्याह ॥ **अन्यइति** ॥ अयंतुस्वमहिम्नयेवेतितद्विलक्षणइत्यर्थः ॥ २ ॥ **चतुर्विंशःखंडः** ॥ २४ ॥
भूम्नःसर्वगतत्वाख्यंपूर्णत्वंचलक्षणमाह ॥ **सएवेति** ॥ सर्वगतत्वंसर्वसत्ताप्रदानायेतिभावेनोक्तं ॥ **सएवेदंसर्वमिति** ॥ स
एवस्वतंत्रःसर्वंतदधीनमित्यर्थः । यद्वेदंसर्वमित्यस्यलिंगव्यत्यासेनायंसर्वइत्यंगीकृत्यभूमासर्वत्रसन्निहितत्वादयंपूर्णत्वात्सर्वइत्यु
च्यतइत्यर्थोवर्णनीयः । भूमाख्यस्यैवनारायणस्यरूपांतरंवक्तुमारभते ॥ **अथेति** ॥ अथभूमनिरूपणानंतरंअतस्तत्प्रसादादहं
कारस्याऽहमित्याक्रियमाणस्यजीवस्थानिरुद्धस्यआदेशःउपदेशःक्रियतइत्यर्थः । कोसावहंकारइत्यतोभूमलक्षणमेवतल्लक्षणं । त

उप० । गोअश्वमिहमहिमेत्याचक्षतेहस्तिहिरण्यंदासभार्यंक्षेत्राण्यायतनानीतिनाहमेवंब्रवीमीतिहोवाचान्योह्यन्यस्मिन्प्रतिष्ठितइति ॥२॥ खं० ॥ २४ ॥ सएवाधस्तात्सउप
रिष्टात्सपश्चात्सपुरस्तात्सदक्षिणतःसउत्तरतःसएवेदꣳसर्वमित्यथातोहंकारादेशएवाहमेवाधस्तादहमुपरिष्टादहंपश्चादहंपुरस्तादहंदक्षिणतोहमुत्तरतोहमेवेदꣳसर्वमिति ॥ १ ॥



योरभेदादितिभावेनाह ॥ **अहमेवेति** ॥ १ ॥ तस्यैववासुदेवाख्यंरूपांतरमाह ॥ **अथातइत्यादिना** ॥ तस्यापितल्लक्षणमेव
लक्षणमितिभावेनाह ॥**आत्मैवेति**॥ नामादिप्राणांतदेवोत्तमत्वेनोक्तविशेषणविशिष्टत्वेनचभगवज्ज्ञानिनःफलमाह॥ **सइति**॥
सवाएषोधिकारीएवंश्रृण्वन्नेवंमन्वानएवंध्यायन्नेवंपश्यन्मुक्तःसन्नात्मरतिरात्मनापरमात्मनारतिरलंबुद्धिर्यस्यसतथोक्तः । आत्म
नाक्रीडतइत्यात्मक्रीडः । आत्मनास्वयंस्त्रीरूपःसन्मिथुनीभवतीत्यात्ममिथुनः । आत्मनैवानंदःस्वरूपभूतोयस्यासावात्मानंदः ।
समुक्तःस्वोभगवान्राट्आज्ञापयिताप्रत्यक्षतोभवतीतिस्वराट् । तस्यमुक्तस्यसर्वेषुलोकेषुकामचारोभवति । इदंचतुर्मुखस्यैवमु
ख्यमन्येषांयथायोग्यमितिविवेकः । एवंभगवज्ज्ञानिनःफलमुक्त्वा विपरीतज्ञानिनोनोक्तंफलंभवतीत्याह ॥ **अथयइति** ॥ अतः
पूर्वोक्तादन्यथायेविदुस्तेन्यराजानःस्वाधमनियामकवंतोभवंति । तथाक्षय्याःक्षेतुंशक्यालोकाःयेषांतेक्षय्यलोकाःभवंति । नके
वलमेतावत् । तमःप्राप्तिश्चेतिज्ञातव्यं ॥ २ ॥ **पंचविंशःखंडः** ॥ २५ ॥ मुक्तस्यैवमहिमांतरमाह ॥ **तस्येति** ॥ तस्यहवाए
तस्यैवंपश्यतएवंमन्वानस्यैवंविजानतोमुक्तस्यपश्यतःसतआत्मतःप्राणोमुख्यप्राणोजायतेस्थितःसंह्रियतेइत्यादियोज्यं । तथाच

उप० । अथातआत्मादेशएवात्मैवाधस्तादात्मोपरिष्टादात्मापश्चादात्मापुरस्तादात्मादक्षिणतआत्मोत्तरतआत्मैवेदꣳसर्वमिति सवाएषएवंपश्यन्नेवंमन्वानएवंविजानन्नात्मरति-
रात्मक्रीडआत्ममिथुनआत्मानंदःसस्वराड्भवति तस्यसर्वेषुलोकेषुकामचारोभवत्यथयेन्यथातोविदुरन्यराजानस्तेक्षय्यलोकाभवंतितेषाꣳसर्वेषुलोकेष्वकामचारोभवति ॥२॥ खं०
॥ २५ ॥ तस्यहवाएतस्यैवंपश्यतएवंमन्वानस्यैवंविजानतआत्मतःप्राणआत्मतआशाआत्मतःस्मरआत्मतआकाशआत्मतस्तेजआत्मतआपआत्मतआविर्भावतिरोभावावात्मतो
न्नमात्मतोबलमात्मतोविज्ञानमात्मतोध्यानमात्मतश्चित्तमात्मतःसंकल्पआत्मतोमनआत्मतोवागात्मतोनामात्मतोमंत्राआत्मतःकर्माण्यात्मतएवेदꣳसर्वमिति ॥१॥

भगवत्कर्तृकंप्राणादीनांसर्जनादिकंमुक्तःपश्यतीत्यर्थः । आपोबाह्याः । आविर्भावतिरोभावावित्यंतर्जलाभिप्रायेणमंत्राःकर्मणी
तिनामापेक्षयानीचकक्ष्योक्तिः । यद्यपिस्वाहावैमंत्रदेवतेत्यन्यत्रोक्तं । तथापितारतम्यप्रकरणात्तस्याश्चवाक्शब्देनगृहीतत्वाद-
न्यत्रग्राह्या । कर्मेतिपुष्करःप्रोक्तः । नकेवलमेतावत् । किंत्वात्मतएवेदंसर्वंजगज्जननादिप्राप्नोति ॥ १ ॥ मुक्तस्यमरणाद्यभावं
चश्लोकेनवदन्नुक्तार्थेतमाह ॥ तदिति ॥ तत्तत्र । मुक्तोभगवत्कर्तृकजगत्सर्जनादिपश्यतीत्यादावेषःवक्ष्यमाणःश्लोकोभवति ।
पश्यतीतिपश्योद्रष्टा । मुक्तोमृत्युरोगदुःखानिनपश्यति । पश्योद्रष्टासर्वंभगवत्कर्तृकंजगत्सर्जनादिपश्यति । सःमुक्तःसर्वशःस
र्वंसमाप्नोति । इतितस्यैवस्वेच्छानिबंधनमेकानेकरूपत्वंमाहात्म्यमाह ॥ सइति ॥ नवधास्थितएवपुनरेकादशोभवति । शतं
चदशचैकंचेत्येकःपक्षः । तेनैकधैकादशइत्युक्त्यानपुनरुक्तिः । प्रकृतमोक्षसाधनान्येवक्रमापन्नान्याह ॥ आहारेति ॥ गुरो
र्विद्याहरणस्यश्रवणस्यशुद्धौसत्त्वशुद्धिर्ज्ञानशुद्धिःमननशुद्धिः । तच्छुद्धौध्रुवास्मृतिर्ध्यानं । स्मृतिलंभेस्थिरस्मृतिलाभेत्वापरो
क्ष्यंहरेरितिग्राह्यं । ततोऽविद्यादिसर्वग्रंथीनांक्षिप्रंमोक्षोभवति । श्रुतिःस्वयमाह ॥ तस्माइति ॥ तस्मैमृदितकषायायोत्सारित
दुःखायदेवर्षयेभगवज्ज्ञानिनेनारदायतमसोज्ञानस्यपारमंतंइत्थंदर्शयति । दर्शितवान् । भगवान्सनत्कुमारः । कुमारस्येत्थंसा

उप० । तदेषश्लोकः॥ नपश्योमृत्युंपश्यतिनरोगंनोतदुःखंता ३सर्व ३ हपश्यःपश्यति । सर्वमाप्नोतिसर्वशइति ॥ सएकधाभवतित्रिधाभवतिपंचधासप्तधानवधाचैवपुनश्चैकादश
स्मृतः ॥ शतंचदशचैकश्चसहस्राणिचविं ३शतिः ॥ आहारशुद्धौसत्वशुद्धिःसत्वशुद्धौध्रुवास्मृतिः ॥ स्मृतिलंभेसर्वग्रंथीनांविप्रमोक्षस्तस्मैमृदितकषायायतमसःपारंदर्शयतिदेवर्षये
नारदायभगवान्सनत्कुमा(रोयस्तं)रस्त ३स्कंदइत्याचक्षतेत ३स्कंदइत्याचक्षते ॥ २ ॥ खं० ॥ २५ ॥

मर्थ्यंकथमित्यतआह ॥ तमिति ॥ द्विरुक्तिरवधारणार्था ॥ २ ॥ षड्विंशःखंडः ॥ २६ ॥ इतिश्रीमदानंदतीर्थभगवत्पादविरचितस्यश्रीमच्छंदोगोपनिषद्भाष्यस्यटीकायांश्रीमद्वेदव्यासतीर्थपूज्यपादशिष्येणवेदेशभिक्षुणाविरचितायांपदार्थकौमुद्यांसप्तमोध्यायःसमाप्तः ॥ ७ ॥

उप० । इति ॐमितिश्रीमच्छांदोग्योपनिषदिसप्तमोध्यायः ॥ ७ ॥

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ हृत्पुंडरीकगाकाशगतमाकाशनामकं । नानारूपंजाग्रदादिप्रवर्तकमहंभजे ॥ १ ॥ पूर्वाध्यायेषुबाह्याएवब्रह्मविद्यानिरूपिताः । इदानीमांतरींसर्वमुमुक्षुसाधारणींहृत्पुंडरीकविद्यांनिरूपयत्यनेनाध्यायेन । येषांबहिरुपासनेनमोक्षस्तेषामपिहृदुपासनंकिंचित्कार्यमेव । यदिदमस्मिन्ब्रह्मपुरइत्यत्रब्रह्मपुरशब्देनषष्ठीसमासात्शरीरमात्रंविवक्षितमितिप्रतीतिनिरासायतदनूद्यव्याचष्टे ॥ **यदिदमिति** ॥ एतत्सत्यंब्रह्मपुरमितिवाक्यस्थब्रह्मपुरशब्दव्यावर्तनायानुवादः । तत्रपरब्रह्मणएवविवक्षितत्वात् । ब्रह्मणःकथंपुरत्वंतदधिष्ठातुरभावादित्यतआह ॥ **पूर्णत्वादिति** ॥ इत्युभयंब्रह्मपुरशब्देनविवक्षितमित्यन्वयः । तंत्रन्यायेनकर्मधारयषष्ठीतत्पुरुषयोराश्रयणादितिभावः । किमुभयविवक्षाज्ञापकमित्यतोब्रह्मपुरशब्दस्यतावद्ब्रह्मविवक्षाज्ञापकौसमाख्योपसंहारावाह ॥ **प्राप्तइत्यादिना** ॥ तत्रनिवसामिनिवसाम्यहमितिभगवद्वचनाच्चेतियोज्यं । भगवद्वचनात्तत्समाख्यानादित्यर्थः । समाख्यारूपभगवद्वचनेपिब्रह्मपुरशब्दस्यावध्यत्वलिंगबलात्परब्रह्मपरत्वमितिद्रष्टव्यं । वाक्यशेषोक्तसर्वाश्रयत्वादिलिंगानामन्यत्रासंभवाद्ब्रह्मपुरशब्देनब्रह्मोच्यतइत्यवसीयतइत्यर्थः । शरीरंचब्रह्मपुरशब्देनविवक्षितमित्येतत्समाख्याभ्यामुपपादयति ॥ **यत्पुंडरीकमिति** ॥ यत्पुंडरीकमितितैत्तिरीयवाक्येपुंडरीकाश्रय

भा० । यदिदमस्मिन्ब्रह्मपुरइतिब्रह्मपुरशब्देनब्रह्माख्यंपुरं पूर्णत्वात्पुरमितिपरंब्रह्म ब्रह्मणःपुरमितिशरीरंचोभयंविवक्षितं । प्राप्तोवध्यंब्रह्मपुरंराजेवनिवसाम्यहं । अस्मिंश्चेयदिदंब्रह्मपुरेसर्वंसमाहितं । यदैतज्जरावाप्नोतिप्रध्वंसतेवार्कितंतोतिशिष्यतइतिसब्रूयान्नास्यजरयैतज्जीर्यतिनवधेनास्यहन्यतएतत्सत्यंब्रह्मपुरमास्मिन्कामाःसमाहिताएषआत्मापहतपाप्माविजरोविमृत्युरितिवाक्यशेषाद्भगवद्वचनाचब्रह्मपुरशब्देनपरंब्रह्मोच्यतइत्यवसीयते । यत्पुंडरीकंपुरमध्यसंस्थंयदिदंशरीरं तदेतदाद्यंदेवसदनमित्यादेःशरीरंच ।

॥२२९॥

त्वेनोक्तंपुरंतावच्छरीरमितिप्रसिद्धं । तथाचतत्समाख्यानादत्रापिब्रह्मपुरेदहरंपुंडरीकमितिपुंडरीकाश्रयत्वेनश्रूयमाणंब्रह्मपुरंशरीरमित्यवसीयते । यदिदमितिश्रुत्यंतरेशरीरस्यदेवसदनत्वोक्त्याब्रह्मपुरत्वंलब्धं । तथाचतत्समाख्यानादत्रापिब्रह्मपुरशब्देनशरीरमुच्यतइत्यवसीयतइतिभावः । ननुब्रह्मपुरशब्देनभगवानपिचेद्विवक्षितस्तर्हितस्यास्मिन्ब्रह्मपुरेदहरंपुंडरीकंवेश्मेत्युक्तंहृत्पुंडरीकाश्रयत्वंकथं । तस्यशरीरधर्मत्वात् । ब्रह्मणश्चहृत्पुंडरीकांतर्गतस्यतदाश्रयत्वायोगादित्यतोभगवतोपिहृत्पुंडरीकाश्रयत्वमुपपादयति ॥ **यद्वैतदिति** ॥ पुरुषाज्जीवाद्बहिर्द्धादेहव्यापीयोयमासमंतात्काशतइत्याकाशस्तदिदंसर्वगंब्रह्मेतिब्रह्मणःशरीरव्यापित्वमुच्यते । तथाचशरीरव्यापिभगवद्रूपविशेषस्यहृत्पुंडरीकाश्रयत्वमुपपद्यतएव । यस्त्वित्यनेनचपरब्रह्मणःसर्वाश्रयत्वोक्त्यासर्वांतःपातिहृदयंहृत्पुंडरीकमपितत्रस्थितंतदाश्रितमितिसिद्धमेवेतिभावः । दहरोस्मिन्नंतराकाशइतिवादानुवादयोराकाशशब्देनपरंब्रह्मविवक्षितमित्यसत् । तस्मिन्यदंतः किंतदत्रविद्यते इत्युत्तरवाक्यविरोधात् । नहिब्रह्मस्थमन्यदन्वेष्टव्यं । किंतुब्रह्मैव । नचकिंतदत्रविद्यतइत्यस्यकिंचननविद्यतइत्यभिप्रायः । यदिनामबदरमात्रंकिमपितत्रविद्यतेतर्हिकिंतस्यान्वेषणेनफलंस्यादतोयत्तत्रान्वेष्टव्यंविजिज्ञासितव्यंवानतेनप्रयोजनमित्याक्षेपार्थत्वाददोषइतिवाच्यं । तथापितस्मिन्यदंतरितिवाक्यविरोधापरिहारात् । आक्षेपार्थत्वेयदिनामबदरमात्रंविद्यतइत्यध्याहारप्रसंगात्प्रश्नार्थत्वमेववक्तव्यमतःकथमेतदित्यतस्तदनूद्यार्थमाह ॥ **दहरोस्मिन्निति** ॥ नन्वस्त्वाकाशशब्देनभूताकाशोविवक्षितइति तथापिकिंभूताकाशेविद्यतइतिप्रश्नस्यब्रह्मविद्यतइतिपरिहारंवि

भा० । यद्वैतद्ब्रह्मेतीदंवावतद्योयंबहिर्धापुरुषादाकाशः।यस्तुसर्वाणिभूतान्यात्मन्येवानुपश्यतीत्यादिनापरब्रह्मण्येवहृदयंस्थितं । दहरोस्मिन्नंतराआकाशस्तस्मिन्यदंतस्तदन्वेष्टव्यं ।

नायावाचाअयमाकाशइत्यस्यान्वयाभावइत्याशंकांपरिहरति ॥ किमिति ॥ अयमित्युक्तमेवविवृण्वन्यावान्वाअयमितिवाक्यं यथाप्रश्नोत्तरत्वेनान्वितंस्यात्तथातत्तात्पर्यमाह ॥ अस्मिन्निति ॥ अंतर्हृदयइत्यस्यार्थोऽस्मिन्भूताकाशइति । यावान्वाअयमाकाशइत्युक्ताकाशशब्दव्याख्यानंपरब्रह्माख्यइति । परब्रह्माख्याकाशेआकाशशब्दंत्रेधानिर्वक्ति ॥ आसमंतादित्यादिना ॥ कंसुखं । अस्मिन्कामाइत्युत्तरत्रसम्बध्यते । ननूक्तयोगेनाप्ययमाकाशइत्युक्ताकाशशब्दस्यनपरब्रह्मपरत्वंयुक्तं । तथासतितस्ययावान्वाअयमाकाशस्तावानेषइतिहृद्गताकाशस्थेनाभेदोक्त्ययोगात् । नहिहृद्गताकाशस्थस्यपरब्रह्मणोल्पपरिमाणस्यबाह्येनव्याप्तेनाकाशनाम्नाऽभेदोयुज्यतइत्याशंकांयावान्वाअयमाकाशइतिवाक्यार्थंविशदयन्परिहरति ॥ सचेत्यादिना ॥ पूर्णगुणत्वादुभयोरितिशेषः । विरुद्धपरिमाणयोरपिगुणतएवैक्यमितीदमभ्युपेत्यैवोक्तं । वस्तुतोल्पपरिमाणस्यापिमहत्परिमाणमस्त्येवेत्युपपादयितुमाह ॥ अल्पपरिमाणस्यापीति ॥ युज्यतेचेत्यन्वयः । विरुद्धंकथंयुज्यतइत्यतआह ॥ अचिंत्येति ॥ ननुयत्प्रमाणप्रसिद्धंलोकदृष्ट्याविरुद्धंचतदेवाचिंत्यशक्त्योपपाद्यतइतिहिसिद्धांतः । अन्यथातिप्रसंगात् । नचेश्वरस्ययुगपदणुत्वंमहत्त्वंचप्रामाणिकं । येनाचिंत्यशक्त्योपपादनीयंस्यादित्यतस्तत्रप्रमाणमप्याह ॥ यस्मिन्निति ॥ ननुयस्मिन्विरुद्धगतयो

---

भा० । दहरोस्मिन्नंतरआकाशःकिंतदत्रविद्यतइत्याकाशशब्देनभूताकाशोविवक्षितः । किंतदत्रविद्यतइत्यस्यायंपरिहारः । अस्मिन्भूताकाशेपरब्रह्माख्यआकाशोविद्यते । आसमंतात्काशनादाकाशः । आसमंतात्कमश्नातीतिवा अस्मिन्कामाःसमाहिताइतिवाक्यशेषात् । आसमंतात्कामानश्नातीतिवा । सचयावान्बहिःपरमात्माव्याप्तोस्तितावानेवविद्यतेगुणतः । पूर्णगुणत्वात् । अल्पपरिमाणस्यापिमहत्परिमाणत्वंचयुज्यते । अचिंत्यशक्तित्वात् । यस्मिन्विरुद्धगतयोप्यनिशंपतंतिविद्यादयोविविधशक्त्यआनुपूर्व्येति

विरुद्धाश्रयाअपिधर्माः । आनुपूर्व्याकालानुक्रमेणपतंतिवर्ततइतिकालभेदेनाणुत्वमहत्त्वादिरूपविरुद्धधर्मसमावेशःकथ्यते । नचेदमलौकिकंयेनाचिंत्यशक्त्योपपाद्यंस्यादित्यतआनुपूर्व्येतिपदमनूद्यव्याचष्टे ॥ आनुपूर्व्येति ॥ नन्वानुपूर्वीश्रुतिरितिकुतइत्यतस्तत्राभिधानमाह ॥ आनुपूर्वीति ॥ ननुभवत्वानुपूर्वीश्रुतिः । अत्रसाविवक्षितेतिकुतः । अनुक्रमएवकिंनस्यादित्यतस्तत्रबाधकमाह ॥ अन्यथेति ॥ आनुपूर्वीशब्दस्यकालानुक्रमार्थत्वांगीकारे अनिशंपतंतीत्युक्तिविरोधःस्यात् । अतोयंनतदर्थः । किंतूक्तार्थएवेत्यर्थः ॥ ततश्चायंश्लोकार्थः ॥ यस्मिन्विद्यादयोविविधशक्तयःपतंतिवर्तंते । नकेवलमेतावत् । किंतुविरुद्धगतयोप्यन्यत्रविभिन्नाश्रयाअप्यणुत्वमहत्त्वादयोवर्तंते । किंकालभेदेन नेत्याह ॥ अनिशमिति ॥ कुतःआनुपूर्व्याश्रुत्येत्यर्थः । तद्ब्रह्माहंप्रपद्यइत्युत्तरार्धेनान्वयः । भगवतियुगपदणुत्वमहत्त्वप्रतिपादिकांस्पष्टांश्रुतिंचाह ॥ एषइति ॥ ननुयदिश्रुतिबलाद्युगपदणुत्वमहत्त्वादयोविरुद्धाअपिधर्माभगवतिवर्ततइत्यंगीक्रियते । तदादोषाअपितत्रकुतोनांगीकार्यास्तेषामपिजनितोतविष्णोरित्यादौश्रुतत्वादित्याशंकांश्रुतिस्मृतिभ्यांपरिहरति ॥ गुणाइति ॥अश्रुताअपिसंति । अश्रुताअपिरमादिचिंत्यास्तदचिंत्याश्च । दोषाःश्रुताअपिनसंति । हियस्मादज्ञैःश्रुतितात्पर्यज्ञानशून्यैस्तथाप्रतीताइत्यर्थः । अनेनलोकदृष्ट्याविरुद्धाअपिधर्माभगवतिसं

---

भा० । वचनात् । श्रुतिप्रमाणादित्यर्थः । आनुपूर्वीश्रुतिर्वेदआम्नायश्चेतिकथ्यतइत्यभिधानात् । अन्यथाऽनिशमित्युक्तिविरोधात् । एषमआत्मांतर्हृदयेणीयान्व्रीहेर्वाएषमआत्मांतर्हृदयेज्यायान्पृथिव्याइतिहृदयस्थस्यैवाणुत्वमहत्त्वोक्तेश्च । गुणाःश्रुताःसुविरुद्धाश्चदेवेसंत्यश्रुताअपिनैवात्रशंका । चिंत्याअचिंत्याश्चतथैवदोषाःश्रुताश्चनाज्ञैर्हितथाप्रतीताइतिचश्रुतिः । सुविरुद्धाअश्रुताश्चगुणाःसंत्येवसर्वशः । दोषाःकपिनसंत्येवश्रुताअपितुसर्वशइतिगारुडे ।

तीत्येतदपिप्रमाणांतरेणोपपादितमितिद्रष्टव्यं । ननुतथाप्यंतर्हृदयइत्यस्यास्मिन्भूताकाशइतिव्याख्यानंकथं तद्बोधकपदाभावादित्यतआह ॥ **किमिति** ॥ नात्रभूताकाशबोधकपदाभावः । हृदयपदस्यैवसत्त्वात् । नचांतःकरणमेवहृदयंकिंन स्यादितिवाच्यं । किंतदत्रविद्यतइतिहृद्गताकाशस्थपरब्रह्मलक्षणप्रश्नेयावान्वाइत्यादिनातद्गतस्यैवलक्षणंवक्तव्यं । नत्वंतःकरणरूपहृदयगतस्य । वैयधिकरण्यप्रसंगात् । अतोहृदयपदंतत्स्थाकाशपरमेवेतिभावः । तर्हिलक्षणाप्रसंगइत्यतआह ॥ **हृद्ययनादिति** ॥ अतएवोच्यतइत्युक्तं । एवंपदार्थमुपपाद्येदानींवाक्यार्थंपूर्वोक्तमेवस्फुटमाह ॥ **तस्मिन्निति** ॥ ननुहृदयाख्याकाशांतःपरब्रह्माख्याकाशोविद्यतइतिकस्मादंगीकार्यं । अंतर्हृदयआकाशइत्याकाशपदंभूताकाशपरमेवकिंनस्यात् । तस्यतत्ररूढत्वादित्याशंकायांतत्रबाधकमाह ॥ **अन्यथेति** ॥ यदिरूढिबलादंतर्हृदयआकाशइत्याकाशशब्दस्यभूताकाशमेवार्थस्तर्हियावान्वाअयमाकाशस्तावानेषइत्युक्तंहृद्गताकाशस्यबहिराकाशेनपरिमाणसाम्यमयुक्तंस्यात् । अस्यदहरत्वात् । तस्यव्याप्तत्वात् । अतउक्तरीत्योभयाकाशशब्दंब्रह्मैव तत्रचयुगपदणुत्वमहत्वसमावेशउपपादितएवेतिभावः । नन्विदमयुक्तं । दहरोस्मिन्नंतराकाशइत्याकाशशब्देनभूताकाशोविवक्षितइत्युक्तत्वेनतस्मिन्च्छब्दवाच्यतयाबुद्धिस्थेयावान्वाइत्यादावप्याकाशशब्देनतस्यैवग्राह्यत्वात् । बाधकंविनाएकस्मिन्प्रकरणेश्रुतस्यशब्दस्यार्थद्वयकल्पनायोगादित्यतस्तत्रबाधकमाह ॥ **दहरइति** ॥



भा० । किंतदत्रविद्यतइतिपृष्टत्वाद्धृद्गतआकाशोहृदयशब्देनोच्यते । हृद्ययनात् । तस्मिन्हृदयाख्यआकाशेब्रह्माख्यआकाशोविद्यतइत्यर्थः । अन्यथाकथंभूताकाशस्यदहरस्य बहिराकाशसमत्वं । दहरोस्मिन्नंतराकाशइतिपूर्वोक्ताकाशस्यदहरत्वमुक्तं । उत्तरस्यतुयावान्वाअयमाकाशइत्यनंतपरिमाणत्वं । अतोब्रह्माकाशएवोत्तरः ।

दहरत्वमुक्तमतोभूताकाशएवसइतिशेषः । एवंतर्हिपूर्वोक्ताकाशोपिब्रह्माकाशएवकिंनस्यात् । दहरत्वस्यतस्मिन्नपिसंभवात् । किंवृथैकप्रकरणगताकाशशब्दार्थभेदकथनेनेत्यतआह ॥ **पूर्वोक्तस्येति** ॥ दहरोस्मिन्नंतराकाशइतिपूर्वोक्तस्याकाशशब्दस्य भूताकाशार्थत्वमनंगीकृत्यपरब्रह्मार्थत्वांगीकारेतस्मिन्नित्यादिवाक्यशेषः । दहरंविपापंपरवेश्मभूतंयत्पुंडरीकंपुरमध्यसंस्थंतत्रापीतिसमाख्यावाक्यंकथंयुज्यते । नकथमपीत्यर्थः । तत्रापिहृत्पुण्डरीकेपि दहरंगगनं तस्मिन्यदंतर्विशोकंब्रह्म तदुपासितव्यमितिसमाख्यावाक्यार्थः । समाख्यावाक्येपि तस्मिन्यदंतरित्युक्तंब्रह्मेतिकुतइतिचेत् । विशोकत्वलिंगात् । अन्यत्रस्पष्टंपरब्रह्मलिंगमाह ॥ **सहस्रेति** ॥ आदिपदेनविश्वाक्षमित्यादिलिंगानांनारायणश्रुतेश्चसंग्रहः । तस्मिन्नितिवाक्यशेषोनोपपद्यतइत्युक्तमुपपादयति ॥ **नहीति** ॥ यदिदहरोस्मिन्नंतराकाशइत्यत्राकाशंब्रह्मविवक्षितंस्यात्तर्हितस्मिन्यदंतरित्युक्तत्वेन भगवदंतःस्थितमेवान्यत्किंचित्विजिज्ञास्यंस्यात् । नचतत्संभवति । तमेवैकंजानथेत्यादिश्रुतिविरोधादितिभावः । बाधकांतरमप्याह ॥ **तद्वावेति** ॥ यद्यत्रभगवदतिरिक्तंकिंचिद्विजिज्ञास्यंविवक्षितंस्यात्तदातद्वावविजिज्ञासितव्यमित्यत्रतद्वावेत्यन्ययोगव्यवच्छेदपरावधारणमनुपपन्नंस्यात् । भगवतएवविजिज्ञास्यस्यासत्त्वादित्यर्थः । एवंपूर्वोक्ताकाशस्यभूताकाशत्वंसमर्थ्योत्तराकाशस्याब्रह्मत्वेबाधकांतरमाह ॥ **उत्तरस्येति** ॥ ननूत्तरस्यसर्वाधारत्वादिलिंगबलात्परब्रह्मत्वेपूर्वाकाशस्यापिपरब्रह्मत्वमे

भा० । पूर्वोक्तस्याभूताकाशत्वेतस्मिन्यदंतस्तदन्वेष्टव्यंतद्वावविजिज्ञासितव्यंतत्रापिदहरंगगनंविशोकस्तस्मिन्यदंतस्तदुपासितव्यं । सहस्रशीर्षेत्यादेवमित्यादिकथंयुज्यते । नहिभगवदंतस्थितमेवान्यत्किंचिद्विजिज्ञासितव्यं । तद्वावेत्यवधारणाच्च । उत्तरस्यापरब्रह्मत्वेचसर्वाधारत्वंनास्यजरयैतज्जीर्यतिनवधेनास्यहन्यतएतत्सत्यंब्रह्मपुरमस्मिन्कामाः

वास्तु । नभूताकाशत्वं । नचैवंतस्मिन्यदंतरितितदंतस्थमुपास्यमित्युक्तेकिंतत्रस्थमितिप्रश्नेतावानेषोंतर्हृदयआकाशइतिपरिहारा संगतिः । नहिब्रह्मस्थंब्रह्मैवोपास्यमितिसंभवतीतिवाच्यं । अंतर्हृदयआकाशइत्यस्यपरिहारत्वासंमतेः । उभेअस्मिन्द्यावापृथिवीइत्यादेरेवपरिहारत्वात् । तथाहि । किंतत्रस्थमितिप्रश्नेयावान्वाअयमाकाशइतिप्रागाधारत्वेनोक्ताकाशमेवद्यावापृथिव्याद्याश्रयत्वयोग्यत्वायबाह्याकाशतुल्यतयाविशिष्योभेअस्मिन्नित्यादिपरिहारसंश्लेषात् । तथाचतदंतर्गतंद्यादिकमेवोपास्यमितिपरिहाराभिप्रायः । नहिभगवदंतस्थितमेवान्यत्किंचिद्विजिज्ञासितव्यमित्युक्तमितिवाच्यं । प्रतिज्ञामात्रत्वात् । अन्यस्यैवजिज्ञास्यत्वेबाधकाभावेनावधारणविरोधाभावाच्चेत्यतआह ॥ किंतदत्रविद्यतइति ॥ तर्हितद्व्यर्थंस्यादित्यतआह ॥ तत्त्विवति ॥ ननुकुतउभेअस्मिन्नित्यादेःपरिहारत्वाभावइतिचेत् । तथासतिद्यावापृथिव्यादीनामेवविजिज्ञास्यत्वमित्युक्तंस्यात् । नचतदस्तीत्याह ॥ नहीति ॥ कुतोनेत्यतआह ॥ तमेवेति ॥ अनेनावधारणविरोधोप्युपपादितः । ननुउभेअस्मिन्द्यावापृथिवी उभावग्निश्चवायुश्चसूर्याचंद्रमसाउभावित्यत्रोभशब्दोव्यर्थः । द्वित्वस्यद्यावापृथिवीत्यादिनैवज्ञापितत्वादित्यतआह ॥ उभेइति ॥ इत्यादौविद्यमानउभशब्दइत्यर्थः । अनेनद्यावापृथिवीइत्यादिशब्दाश्चेतनपराइत्युक्तंभवति । नन्वमुक्तसर्वाधारत्वमेवात्रोच्यते । ननु

भा० । समाहिताएषआत्मापहतपाप्मेत्यादिनयुज्यते । किंतदत्रविद्यतेयदन्वेष्टव्यंयद्वावविजिज्ञासितव्यमित्यस्ययएषोंतर्हृदयआकाशइत्येवपरिहारः । नतूभेअस्मिन्द्यावापृथिवीइत्यादि । तत्तुविजिज्ञासितव्यत्वेहेतुत्वेनसामर्थ्यकथनमेव । नहिद्यावापृथिव्यादेरेवविजिज्ञास्यत्वं । तमेवैकंजानथआत्मनमन्यावाचोविमुंचथेतिहिश्रुतिः । उभेअस्मिन्द्यावापृथिवीइत्याद्युभशब्दोमुक्तामुक्तराशिव्यपेक्षया ।

मुक्ताधारत्वं । तज्ज्ञापकाभावात् । ततश्चोभशब्दवैयर्थ्यंतदवस्थमित्यतआह ॥ यच्चास्येति ॥ ननुयच्चास्येतिवाक्यशेषस्यापि मुक्तामुक्तपरताकुतइत्यतस्तद्दर्शयितुमस्येत्यस्यतावदर्थमाह ॥ अस्येतीति ॥ नन्वेवंसत्यस्यसंसारिणोयदस्तीत्यमुक्तोयच्चनास्तीति मुक्तःकथ्यतइत्यायातं । नचतत्संभवति । मुक्तानामपिसंसारिणंप्रत्येवसत्त्वेननास्तीतिवचनायोगादित्यतआह ॥ नहीति ॥ तथाचमुक्तराशिस्तदनुपकारित्वात्तंप्रतिनास्तीत्युच्यतइतिभावः । सतोप्यनुपकारित्वेनासत्त्वव्यपदेशःकुत्रदृष्टइत्यतआह ॥ यद्यस्येति ॥ यथाह्येवेहप्रजाअन्वाविशंतीत्येतत् । यथाशब्दस्योपमार्थत्वप्रतीतिंवारयन्व्याचष्टे ॥ यथायोग्यमिति ॥ अमुक्तपरतावारणायप्रजाशब्दमनूद्यव्याचष्टे ॥ प्रजाइति ॥ इहेत्यस्यार्थःएनंभगवंतमिति । अन्वाविशंतीत्यस्यकर्मसापेक्षत्वादेवं व्याख्यातं । यथानुशासनमित्यत्रयथाशब्दस्यार्थांतरपरत्वेऽसंगतिमालोच्यानतिक्रमार्थत्वमभिप्रेत्यतद्व्याचष्टे ॥ तच्छासनेति ॥ यंयमंतमभिकामाइत्यादिकंतंतमेवोपजीवंतीतिमुक्तानांतत्रस्वातंत्र्यप्रतीतिंवारयन्व्याचष्टे ॥ यंयमित्यादिना ॥ कामं काम्यतइतिकामोंतादिस्तं । अस्मादेवेत्यनेनयथानुशासनमित्येतदत्राप्यनुवर्तनीयमित्युक्तंभवति । तद्यथेहकर्मजितोलोकइत्यादिक्षीयतइत्यंतंवाक्यमपिप्रकृतमुक्तपरमेवेतिप्रतीतिंवारयन्व्याचष्टे ॥ तदविदुषामिति ॥ तदविदुषामित्यनेनेदंवाक्यंभगवत्परमित्युपपादितमितिज्ञातव्यं । यंयमंतमभिकामाभवंतीत्युक्ताएवसत्याःकामाएतांश्चसत्यान्कामानितिपरामृश्यंतइत्यसत् ।

---

भा०। यच्चास्येहास्तियच्चनास्तीतिवाक्यशेषात् । अस्येतिसंसारिणः । नहिसंसारिणोमुक्ताउपकारकाः । यद्यस्यनोपकारकंतत्तस्यनास्तीत्युच्यतेऽन्यस्यसत्त्वेपि । यथावित्तादि । यथायोग्यमेवैनंभगवंतंप्रजामुक्ताअन्वाविशंतितच्छासनानुसारेण । यंयंकामंकामयतेतंतमस्मादेवोपजीवंति । तदविदुषांपुण्यानिक्षयिष्णुफलान्येवभवंति ।

भगवदितरसत्यकामज्ञानाज्ञानयोर्वक्ष्यमाणफलान्वयव्यतिरेकाप्रयोजकत्वात् । अतःसत्यकामाइत्याद्युक्ताभगवद्धर्माएवात्रपरामृश्यंतइत्याशयेनाह ॥ एतानिति ॥ श्रुतौभाष्येचबहुवचनमाद्यर्थे । तेनपूर्वोक्तसकलधर्मपरामर्शसिद्धिः । एवंपरब्रह्मपरतयाशरीरपरतयाचब्रह्मपुरशब्दंसोपपत्तिकंव्याख्यायपुनस्तदेवदृढीकुर्वन्नादितआरभ्यखण्डषट्कमप्रतिपत्तिविप्रतिपत्तिनिरासायप्रमाणेनव्याचष्टे ॥ बृहत्त्वादित्यादिना ॥ तस्मिन्हृदयमास्थितमितिसबंधः । उक्तरीत्याशरीरव्यापिभगवन्मूर्तिविशेषस्यहृदयाश्रयत्वंज्ञातव्यं । तस्यविष्णोःपुरंदेहस्तस्मिन्हृदयमास्थितमितिब्रह्मपुरशब्दस्यव्याख्यानांतरं । हृदयाकाशगोविष्णुरित्यनेनदहरोस्मिन्नंतराकाशइत्यारभ्यतावानेषोंतर्हृदयआकाशइत्यंतंव्याख्यातं । विष्णुर्व्याप्तः । उभेअस्मिन्द्यावापृथिवीइत्यादिकंव्याचष्टे ॥ तस्मिन्निति ॥ सत्यकामाइत्येतदनूद्येच्छासत्यत्वस्यसर्वसाधारण्याद्व्याचष्टे ॥ सइत्यादिना ॥ एतत्साध्यतयाऽस्मिन्समाहिताःकामाःइत्येतद्योज्यमित्याशयेनाह ॥ तस्मिन्निति ॥ अतएवव्यत्यासेनव्याख्यातं । तेनयतःसत्यकामोऽतोस्मिन्सर्वेकामाःसमाहिताइतियोजनोक्ताभवति । यंयमंतमभिकामाभवंतीत्यादिव्याचष्टे ॥ सत्याइति ॥ पुंसांमुक्तानां ध्रुवमव्यभिचारेण । यदिमुक्तानामपिकामाःसत्यास्तदाकोविशेषोभगवतइत्यतआह ॥ तस्यैवेति ॥ भगवत्कामस्यैव । अनेनयथानुशासनमित्येतदत्राप्यनुवर्तनीयमित्युक्तंभवति ॥ प्रथमःखंडः ॥ १ ॥ सत्यत्वमुक्तंमुक्तकामस्य । अनेनैवसयदिपितृलोककामोभव

भा० । एतांश्चसत्यान्कामान्भगवदीयान् । बृहत्त्वात्पूर्णकामत्वाद्विष्णुर्ब्रह्मपुराभिधः । तस्मिंस्तस्यपुरंदेहस्तस्मिन्हृदयमास्थितं । हृदयाकाशगोविष्णुस्तस्मिन्त्सर्वमिदंस्थितं । ससत्यकामोभगवान्यदिष्टंतस्यतद्भवेत् । तस्मिन्त्समाहिताःकामाःसत्याःपुंसामपिध्रुवं । तस्यैवह्यनुसारेणसत्यत्वंनान्यथाक्वचित् ।



तीत्यादिखंडतात्पर्यमप्युक्तमितिज्ञातव्यं । तदेवदृष्टांतेनद्रढयति ॥ यथेति ॥ बिंबानुसारेणबिंबधर्मानुसारेण ॥ द्वितीयःखंडः ॥ २ ॥ यदिमुक्तौसत्यकामत्वंतर्हितत्पूर्वमपिस्यादेव । मुक्तधर्मणांतत्स्वभावत्वात् । तथाचानुपलंभबाधः । इत्याशंकापरिहारायप्रवृत्तंतइमेसत्याःकामाःअनृतापिधानाइतिवाक्यंव्याचष्टे ॥ तस्मादिति ॥ अनेनसर्वेषामपिकामाःसत्याइतियथाश्रुतप्रतीतिरप्यपास्ता । तदज्ञानाद्भगवदज्ञानादित्यनेनानृतशब्दोव्याख्यातः । क्वचित्सत्यादृश्यंतएवेत्यतउक्तं ॥ तथाखिलाइति ॥ यथामुक्तौतथेत्यर्थः । नन्वनृतापिधानाइतिमिथ्याभूतवस्त्वाच्छादितत्वोक्तेःकथमज्ञानान्नदृश्यंतइत्युक्तमित्यतआह ॥ अज्ञानमिति ॥ कुतइत्यतआह ॥ ऋगताविति ॥ गत्यर्थानांज्ञानार्थत्वान्निष्ठाप्रत्ययस्यचभावार्थत्वात् । ऋतंज्ञानंतद्विरुद्धमज्ञानमनृतमित्यर्थः । योयोह्यस्येतःप्रैतीत्यादिव्याचष्टे ॥ तस्मादिति ॥ सत्यकामत्वस्यपूर्वमज्ञानावृतत्वात् । सर्वंतदत्रेत्यादिव्याचष्टे ॥ हरेर्लोकमिति ॥ मुक्तःसन्हरेर्लोकंगत्वाद्रष्टुंयदिष्टंस्यात्तत्पश्यतीत्यन्वयः । इमाःसर्वाइत्यारभ्यप्रत्यूढाइत्यंतवाक्यस्यतात्पर्यमाह ॥ अज्ञत्वादेवेति ॥ सवाएषइत्यारभ्यहृदयमितीत्यंतस्यार्थमाह ॥ असाविति ॥ अहरहर्वाएवमितिफलप्रतिपादकंवाक्यंप्रसिद्धस्वर्गप्राप्तिपरताप्रतीतिवारणायव्याचष्टे ॥ एवमिति ॥ अहरहरित्यस्यार्थोनित्यशइति । स्वरूपभू

भा० । यथाबिंबानुसारेणप्रतिबिंबप्रकाशनं ॥ खं० ॥ २ ॥ तस्माद्येमुक्तियोग्याःस्युस्तेषांकामाःपुरापितु । सत्याःसंतस्तदज्ञानान्नदृश्यंतेतथाखिलाः । अज्ञानमनृतंप्रोक्तमृगतावितिधातुतः । तस्माद्द्रष्टुंयदिष्टंस्यात्तद्दृष्टिनियमोनतु । असुक्तस्यहरेर्लोकंमुक्तोगत्वाहिपश्यति । अज्ञत्वादेवसुप्तौतुनित्यंयांतोपिमाधवं । नैवपश्यंत्यसौविष्णुर्हृदयंनामहद्रतेः । एवंहृदयनामानंविष्णुंजानन्हिनित्यशः ।

तरमणज्ञानात्मकोविष्णुःस्वर्गस्तस्यलोकइतिपदार्थमभिप्रेत्योक्तं ॥ **विष्णुलोकेति** ॥ विष्णुलोकगतेरनंतरमितिशेषः । स्वर्गश्चासौलोकश्चेतिपदार्थमभिप्रेत्योक्तंविष्णुमिति । विष्णुलोकेस्थित्वायावत्स्वस्वरूपाविर्भावानुगुणंपुण्यंसंपाद्यब्रह्मणासहविष्णुंव्रजेदित्यर्थः । यएषसंप्रसादइत्यत्रसंप्रसादशब्दस्यसुप्तिपरत्वप्रतीतिवारणायप्रकृतोपयुक्तमर्थमाह ॥ **यस्येति** ॥ सएवेतिसंबंधः । वाक्यार्थमाह ॥ **सउत्थायेति** ॥ एषआत्मेत्यत्राविर्भूतस्वरूपस्यमुक्तस्यपरामर्शेएतदमृतमभयमित्यादिविरुद्धंस्यादतस्तत्परामृश्यंदर्शयंस्तद्वाक्यंव्याचष्टे ॥ **यंप्राप्येति** ॥ तथाचपरंज्योतिःशब्दोक्तःप्राप्यएवभगवानेषइत्यनेनपरामृश्यतइतिभावः । इतिहोवाचेत्यत्रकर्त्रप्रतीतेराह ॥ **इत्याहेति** ॥ उपनिषदोरमावाक्यत्वादितिभावः । तस्यहवाएतस्येत्यादिवाक्यंव्याचष्टे ॥ **सदिति** ॥ अमृतत्वंधर्मोयेषांतेतथोक्ताः । मुक्ताअपीतिसंबंधः ॥ **तृतीयःखंडः** ॥ ३ ॥ सेतुर्विधृतिरित्यस्यार्थमाह ॥ **सेतुरिति** ॥ अपिशब्देनविधृतिरितिसमुच्चीयते । विधारणात्विधृतिरित्यन्वयः । विधृतिशब्दागतार्थत्वेनसेतुशब्दंव्याचष्टे ॥ **सितमिति** ॥ सितंबद्धं । संबद्धमितियावत् । एतंसेतुंतीर्त्वेतिसेतुनामकपरमात्मातिक्रमानंतरंस्वरूपाविर्भावःकथ्यतइत्याशंकानिरासायापेक्षितंपूरयन्व्याचष्टे ॥ **एतंसेतुमिति** ॥ प्रति गंतुमितिशेषः । तद्यएवैतंब्रह्मलोकमित्यादिव्याचष्टे ॥ **सप्राप्य**

भा० । विष्णुलोकगतेःपुण्यमाहृत्वाविष्णुंव्रजेत्तथा । यस्यसम्यक्प्रसादोस्तिविष्णोरेवसउच्यते । संप्रसादःसउत्थायशरीरात्प्राप्यकेशवं । यथास्वरूपस्तुभवेद्यंप्राप्यासौस्वरूपतां । आप्नोतिसपरोह्यात्माभगवानिंदिरापतिः । इत्याहसारमादेवीपश्यंतीपरमंपदं । सदित्यमृतधर्माणोमुक्ताःश्रीरपिचेरिताः । तीत्युक्तामर्त्यधर्माणस्तेषांनियमनाद्धरिः । सत्यमित्युच्यतेसद्भिः ॥ खं० ३ ॥ सेतुश्चापिविधारणात् । सितमस्मिन्जगत्सर्वमितिसेतुरितीरितः । एतंसेतुंप्रतिपुमानन्यत्तीर्त्वाह्यदोषवान् ।

इति ॥ अनेनब्रह्मलोकशब्दोब्रह्मचासौलोकआश्रयश्चेतिव्याख्यातइत्यवगंतव्यं । ननुब्रह्मचर्यनामगुह्येंद्रियनियमनं । तेनकथंब्र ह्मप्राप्तिः । ज्ञानमात्रसाध्यत्वात्तस्याइत्यतोत्रविवक्षितंब्रह्मचर्यमाह ॥ मनइति ॥ चरणंज्ञानमपिभवति । किंततइत्यतउक्तंवाक्यार्थंवि शदमाह ॥ तेनैवेति ॥ नन्वेवंतर्हितेषामेवैषइतिवाक्यंव्यर्थमित्याशंकायांयथातन्नव्यर्थंतथातदनूद्यव्याचष्टे ॥ एतेषामिति ॥ लोकनात्अवलोकनकर्तृत्वादित्यर्थः । तथाचैतान्स्वलोकगान्ब्रह्मावलोकतइत्युक्तंभवति । प्रकारांतरेणापिब्रह्मलोकशब्दार्थ माह ॥ तस्येति ॥ तथाचैतेषामपिब्रह्मविषयकावलोकोभवतीत्युक्तंभवतीतिज्ञातव्यं । अथवा सप्राप्यइत्यनेनब्रह्मलोकशब्दः कर्मधारयाभिप्रायेणव्याख्यातः । इदानींतमेवषष्ठीतत्पुरुषत्वाभिप्रायेणापिव्याचष्टे ॥ तस्येति ॥ अत्रलोकोवैकुंठादिः ॥ च तुर्थःखंडः ॥ ४ ॥ अथयद्यज्ञइत्याचक्षतेब्रह्मचर्यमेवतदित्यारभ्यारश्चेत्यतःप्राक्तनग्रंथंव्याचष्टे ॥ यज्ञइति ॥ तथाशब्देनार ण्यायनमपिग्राह्यं । परस्यब्रह्मणोज्ञानमितिब्रह्मचर्यशब्दार्थः । यात्यपरोक्षतोजानातिज्ञमनेनेतियज्ञः । इच्छत्यनेनेतीष्टं । सत स्त्राणंयस्मात्तत्सत्रं । मनुतेऽपरोक्षतोवगच्छत्यनेनेतिमौनं । आनशंनीयतेपरोक्षतोज्ञायतेऽनेनेत्यनशनं । अरण्यावयतेनेनेत्यर ण्यायनमितिव्युत्पत्तिभ्यइतिभावः । अरश्चहवैण्यश्चार्णवावित्यादिब्रह्मलोकपदस्यसत्यलोकपरताप्रतीतिंवारयन्व्याचष्टे ॥ प रस्येति ॥ चिदानंदरसात्मकावित्यनेनतौसमुद्रौलक्ष्म्यात्मकावितिज्ञायते । ननुश्वेतद्वीपोब्रह्मलोकइत्ययुक्तं । तस्यतृतीयस्या

भा० । सप्राप्योब्रह्मचर्येणमनोवाक्कर्मभिस्तुयत् । चरणंब्रह्मणिपरेब्रह्मचर्यंहितत्स्मृतं । तेनैवब्रह्मचर्येणभवेयुर्ब्रह्मलोकगाः । एतेषांब्रह्मलोकःस्यात्परंब्रह्मैवलोकनात् । ब्रह्मलो कइतिप्रोक्तंतस्यलोकोपिकथ्यते ॥ खं० ॥ ४ ॥ यज्ञइष्टंचसत्रंचमौनंचानशनंतथा । परस्यब्रह्मणोज्ञानंसर्वमेतदुदीरितं । परस्यब्रह्मणोलोकेश्वेतद्वीपाभिधेपरे । अरण्यौचार्णवौ

मितोदिवीतिइंद्रसदनाख्यतृतीयद्युस्थत्वोक्तेः । श्वेतद्वीपश्चक्षीराब्धिगतोनतथाभवितुमर्हतीत्यतआह ॥ **यावानुचइति** ॥ दि
विष्ठःतृतीयदिविष्ठः । तदैरंमदीयंसरइतिवाक्यंव्याचष्टे ॥ **तत्रेति** ॥ तदश्वत्थइतिवाक्यमेकवचनादेकत्वप्रतीतिंवारयन्व्याच
ष्टे ॥ **तत्राश्वत्थाइति** ॥ **सोमसवनइत्यस्यार्थःसुधास्रवाइति** । तदपराजितापूरितिवाक्यंव्याचष्टे ॥ **तत्रेति** ॥ तदित्येतत्तंत्रे
णतत्रलोकेतस्यविष्णोरितिव्याख्यातं । प्रभुविमितमितिवाक्यंव्याचष्टे ॥ **विमिताख्यमिति** ॥ हिरण्मयमित्यस्यव्याख्या
चित्सुवर्णमयमिति । तत्कथमित्यतआह ॥ **लक्ष्मीरिति** ॥ ग्रंथांतराविरोधायश्वेतद्वीपस्थपर्यंकगतविष्णुनामाह ॥ **सइति** ॥
खं० ॥ ५॥ अथयाएताहृदयस्यनाड्यइत्यारभ्यलोहितस्येत्यंतवाक्यतात्पर्यमाह ॥ **सएषइति** ॥ ननुकथमिदंतात्पर्यं । श्रु
तावप्रतीतेरित्यतस्तांव्याचष्टे ॥ **विष्णोरिति** ॥ अनेनयाएताहृदयस्यनाड्यस्ताःपिंगलस्यशुक्लस्यनीलस्यपीतस्यलोहितस्या
णिम्नोधिष्ठानभूताइतियोजनोक्ताभवति । कस्यांनाड्यांकिंरूपमास्थितमितिजिज्ञासायामुक्तंविविच्यदर्शयति ॥ **नारायणाख्या
मित्यादिना** ॥ **सौषुम्नं** सुषुम्नागतं । मध्यस्थं नाडीचतुष्टयमध्यगसुषुम्नासंस्थमित्यर्थः । अग्रतःपूर्वभागेस्थितायांनादिन्या
मितिसंबंधः । यद्यपिनादिनीशब्देनसुषुम्नैवान्यत्रोक्ता तथापिपंचनाडीत्युक्तत्वादन्यत्रान्यैवतन्नाम्नीग्राह्या । परिशेषात्पिंगले

भा० । दिव्यौचिदानंदरसात्मकौ । यावानुच्चःस्वर्गलोकस्तावानुच्चतयासच । श्वेतद्वीपोदिविष्ठोतस्तत्रमयंसरोवरं । सर्वभोज्यात्मकंदिव्यंतत्राश्वत्थाःसुधास्रवाः ।
तत्रविष्णोःपुरंदिव्यमपराजितनामकं । विमिताख्यंचपर्यंकंविष्णोर्मानेनसंमितं । चित्सुवर्णमयंदिव्यंलक्ष्मीस्तत्तत्स्वरूपिणी । सश्वेतद्वीपगोविष्णुःपर्यंकब्रह्मनामकः ॥ खं०॥५॥
सएषहृदिनाडीषुपंचरूपःप्रतिष्ठितः । विष्णोरणिम्नोरूपाणिपंचनाडीस्थितानितु । नारायणाख्यंसौषुम्नंमध्यस्थंरक्तवर्णकं । शुक्लंतुवासुदेवाख्यंनादिन्यामग्रतःस्थितं । पिंगलायां
पिंगलंतुरूपंसंकर्षणाभिधं । पश्चिमेवज्रिकायांचपीतंप्रद्युम्ननामकं । इडायामनिरुद्धाख्यंनीलरूपंव्यवस्थितं ।

डानाड्योर्दक्षिणोत्तरभागसंस्थितत्वंज्ञातव्यं । असौवाआदित्यइतिवाक्यंप्रसिद्धादित्यपरमितिप्रतीतिवारणायव्याचष्टे ॥ **सूर्य
इति** ॥ अनेनश्रुतावादित्यशब्दस्तदंतर्गतभगवत्परइत्युक्तंभवति । तत्कथमित्यतस्तस्मिन्नादित्यशब्दंनिरुच्यदर्शयति ॥ **आदि
त्येति** ॥ अमुष्मादादित्यादित्यारभ्यतद्यत्रेत्यतःप्राक्तनवाक्यद्वयंव्याचष्टे ॥ **तद्व्याप्तमित्यादिना** ॥ अत्रसमस्ता नाडीस्थरश्म
यःतद्रश्मिभिःसूर्यांतर्गतभगवद्रश्मिभिर्व्याप्ताः । तथासूर्यमंडलमपितद्व्याप्तंसूर्यनामकभगवद्रश्मिभिर्व्याप्तमितिपूर्ववाक्यव्या
ख्यानं । तथासमस्ताःसूर्यरश्मयोपितद्रश्मिभिर्नाडीस्थभगवद्रश्मिभिर्व्याप्ताः । तस्मिन्नाडीस्थेभगवतिनाडीषुचप्रोताव्याप्ता
इतिद्वितीयवाक्यव्याख्यानमितिविवेकः । तद्यत्रैतत्सुप्तइतिवाक्येनाडीषुजीवस्यसुप्तिरुच्यते । तदयुक्तं । सतासोम्यतदासंप
न्नोभवतीत्युक्तिविरोधात् । नचोभयत्रापिपरमात्मनोन्यत्रसुप्त्यंगीकारेदुःखप्राप्तेरितिभावेनतद्वाक्यंव्याचष्टे ॥ **तन्नाडीसंस्थि
तमिति** ॥ तथाचोक्तं । तदभावोनाडीषुतच्छ्रुतेरात्मनिहेति । तेजसाहितदासंपन्नोभवतीतिवाक्यंव्याचष्टे ॥ **तत्तेजसेति** ॥
अप्रतीतेःसओमितिवाहोद्वानीयतइतिवाक्यंव्याख्यातुंओमितिवाड्शब्दंव्याचष्टे ॥ **ओमित्येवेति** ॥ इदानींतद्वाक्यार्थमा
ह ॥ **तेनेति** ॥ अनेनसउपासकःओमितिवाहावायुनोद्वामीयते । ऊर्ध्वगमनवेलायांवामत्वंप्राप्यतइतियोजनोक्ताभवति । वा

भा० । सूर्येप्येवंपंचरूपोभगवान्संव्यवस्थितः । आदित्यनामाचादित्वात्तद्व्याप्तंसूर्यमंडलं । तद्रश्मिभिस्तथाव्याप्ताःसमस्ताःसूर्यरश्मयः । तस्मिन्नाडिषुचप्रोतास्तथा-
नाडीस्थरश्मयः । तन्नाडीसंस्थितंविष्णुंमध्येजीवःप्रपद्यते । तत्तेजसाहिसंपन्नःसुप्तइत्यभिधीयते । ओमित्येववहन्नित्यंवायुरोंवाडितीरितः । तेनवामत्वमायातिमुक्तिका
लेह्युपासकः ।

मत्वमित्युक्तवामभावमेवविशदमाह ॥ दिव्येति ॥ सयावत्क्षिपेन्मनइतिवाक्यंव्याचष्टे ॥ यदेति ॥ विदुषांप्रपदमितिविद्व द्गम्यत्वस्यवक्ष्यमाणत्वात्स्वविद्ययेत्युक्तं ॥ खं० ॥ ६ ॥ ततश्चायंखंडषट्कार्थः ॥ अथेत्यारंभे। अस्मिन्ब्रह्मपुरेब्रह्मणःपुरेशरीरे यत्परंब्रह्मशरीरव्यापिअस्मिन्ब्रह्मपुरेपरेब्रह्मणिस्थितं इदंबुद्धिसन्निहितं । यत्दहरमल्पंपुंडरीकंहृत्पुंडरीकरूपंवेश्मा स्मिन्नंतःद हरःआकाशःभूताकाशोस्ति। किंततइत्यतआह ॥ तस्मिन्निति ॥ नघटादिवदस्यान्वेषणं अप्रत्यक्षत्वादित्यतस्तदेवविवृणोति ॥ तद्वावेति ॥ वावेत्यवधारणे। तदेवविजिज्ञासितव्यंमीमांसितव्यं। इतिगुरुणोक्तइतिशेषः ॥ १ ॥ तंगुरुंप्रतियदिशिष्याब्रूयुः पृच्छेयुः। यदिदमित्याद्युक्तानुवादः। यद्वावविजिज्ञासितव्यं। तदत्रहृत्पद्मगताकाशेकिंविद्यते ब्रह्मचनसंभवति । तस्यव्या प्तस्यदहराकाशस्थत्वायोगादितिभावः। इतिब्रूयुरितिसंबंधः ॥ २ ॥ तदासगुरुर्ब्रूयात्। किमिति। अंतःशरीरांतः हृदयेहृद्य यतइतिहृदयशब्दवाच्येहृत्पद्मगतेभूताकाशे आकाशःआकाशाख्यःपरमात्मास्ति । एषःयावान् अयंबहिर्विद्यमानःआकाशः आकाशाख्यःपरमात्मा तावान्वै गुणतःपरिमाणतश्चतावानेव। अनेनहृत्पद्मगतंब्रह्मतदण्वपिव्याप्तं । लोकदृष्ट्याविरुद्धयुगप दणुत्वमहत्त्वादीनांतस्मिन्समावेशस्यप्रमितत्वादित्युक्तंभवति । ननुतथाप्यन्यपरित्यागेनास्यैवविजिज्ञास्यत्वेकोहेतुरित्यतोऽस्य

भा० । दिव्यचिद्रूपभावोहिवामभावउदीरितः। यदैनंनेतुमन्विच्छन्मनःक्षिपतिमारुतः। आदित्याख्यंतदाविष्णुंयातिजीवःस्वविद्ययेतिपर्यंकोपासनायां ॥ खंड० ॥६॥

उप० । अथयदिदमस्मिन्ब्रह्मपुरेदहरंपुंडरीकंवेश्मदहरोस्मिन्नंतराकाशस्तस्मिन्यदंतस्तदन्वेष्टव्यंतद्वावविजिज्ञासितव्यमिति ॥ १ ॥ तंचेद्ब्रूयुर्यदिदमस्मिन्ब्रह्मपुरेदहरं पुंडरीकंवेश्मदहरोस्मिन्नंतराकाशः। किंतदत्रविद्यतेयदन्वेष्टव्यंयद्वावविजिज्ञासितव्यमिति ॥ २ ॥ सब्रूयाद्यावान्वाअयमाकशस्तावानेषोंतर्हृदयआकाशउभेअस्मिन्द्यावापृथिवी अंतरेवसमाहितेउभावग्निश्चवायुश्चसूर्याचंद्रमसावुभौविद्युन्नक्षत्राणियच्चास्येहास्तियच्चनास्तिसर्वंतदस्मिन्समाहितमिति ॥ ३ ॥

सामर्थ्यमाह ॥ उभेइत्यादिना ॥ अस्मिन्नंतरेवोभेमुक्तामुक्तेद्यावापृथिव्यौसमाहिते । उभौमुक्तामुक्तावग्निश्चवायुश्चेत्येतौसमाहितौ । उभौमुक्तामुक्तौसूर्याचंद्रमसौसमाहितौ । उभयविधानिविद्युन्नक्षत्राणिअनंततयाप्रत्येकंवक्तुमशक्यत्वात्क्रोडीकृत्याह ॥ यच्चेति ॥ अस्यसंसारिणःउपकारकतयायच्चास्ति । अमुक्तजातमितियावत् । यच्चनास्तिउपकारितयामुक्तजातमितियावत् । तत्सर्वमस्मिन्हृत्पद्मस्थाकाशगतेब्रह्मणिसमाहितमितिब्रूयादितिपूर्वेणसंबंधः ॥ ३ ॥ तंगुरुंप्रतियदिब्रूयुःशिष्याःकिमिति । अस्मिन्ब्रह्मपुरेशरीरांतर्गतेब्रह्मणिइदंप्रत्यक्षादिसिद्धंसर्वमित्यादिपूर्वोक्तानुवादः । यदैतत्शरीरंजरावाप्नोति प्रध्वंसतेवाशरीरं किंततस्तदाऽतिशिष्यते । नकिमपिस्वयमपिनश्यतीतियावत् । तथाचोक्तमाहात्म्यंनविजिज्ञास्यत्वसाधकं । जरानाशाख्यदोषेणतदभावस्यापिसाधयितुंशक्यत्वादित्युक्तंभवति । इतिब्रूयुरितिसंबंधः ॥ ४ ॥ तदासगुरुर्ब्रूयान्नास्यशरीरस्यजरयैतद्ब्रह्मजीर्यति । अस्यवधेननहन्यते । कुतः एतद्ब्रह्म पुरंपूर्णं परंब्रह्म सत्यंनित्यं अचिंत्यशक्तिच प्रमितंयतः । तथाचभवदीयोहेतुःस्वरूपासिद्धइत्युक्तंभवति । जिज्ञास्यत्वोपपादकतयातस्यैवमाहात्म्यांतरमाह ॥ अस्मिन्निति ॥ काम्यंतइतिकामाःअस्मिन्समाहिताः पूर्णकामइतियावत् । नास्यजरयैतज्जीर्यतइत्याद्युक्तमेवसहेतुकंविशदयति ॥ एषइति ॥ एषहृत्पद्मस्थाकाशस्थःपरमात्मानि

---

उप० । तंचेद्ब्रूयुरस्मिंश्चेदिदंब्रह्मपुरेसर्वंसमाहितंसर्वाणिचभूतानिसर्वेचकामायदैतज्जराऽवाप्नोतिप्रध्वंसतेवाकिंततोतिशिष्यतइति ॥ ४ ॥ सब्रूयान्नास्यजरयैतज्जीर्यतिनवधेनास्यहन्यतएतत्सत्यंब्रह्मपुरमस्मिन्कामाःसमाहिताएषआत्मापहतपाप्माविजरोविमृत्युर्विशोकोऽविजिघत्सोपिपासः सत्यकामःसत्यसंकल्पोयथाह्येवेहप्रजाअन्वाविशंतियथानुशासनंयंयमंतमभिकामाभवंतियंजनपदंयंक्षेत्रभागंतंतमेवोपजीवंति ॥ ५ ॥

त्यमेवस्वतोपहतपाप्मा । अतएवनतत्कार्यंजरादिकमस्येत्याह ॥ **विजरइत्यादि** ॥ अविजिघत्सोपिपासइत्यनेनबुभुक्षादिना पीडाभावउच्यते । तत्रापिहेतुमाह ॥ **सत्यकामइति** ॥ यदिष्टंतस्यतत्स्वतएवभवेदित्यर्थः । इदंचप्रागुक्तपूर्णकामत्वेचहेतु तयायोज्यं । तथाचानादितएवममपापादिकंमाभूदितितदीयकामनयैवैषोऽपहतपाप्मत्वादिरितिभावः । नचापहतपाप्मत्वादि कमेषनकामयतइतियुक्तं । प्रेक्षावतस्तदकामनायोगात् । सत्यकामत्वेपिहेतुःसत्यसंकल्पइति । अमोघसंकल्पइत्यर्थः । संक ल्पानुसारिणीइच्छेतिप्रसिद्धमितिभावः । महिमांतरमाह ॥ **यथेति** ॥ यथा यथायोग्यमेव । तारतम्येनेतियावत् । इहएनंभ गवंतंप्रजाःमुक्ताःसायुज्यभाजःयथानुशासनंतच्छासनमनतिक्रम्यतदाज्ञानुसारेणअन्वाविशंति । ननुसत्यकामत्वंकथंभगवल्ल क्षणं मुक्तानामपिसत्त्वादित्यतःपराधीनमेवसत्यकामत्वंतेषामित्याह ॥ **यंयमिति** ॥ प्रकृताःमुक्ताःयंयमंतंदेशंयंजनपदं राष्ट्रंयंक्षेत्रभागंअभिप्रतिकामाभवंति । अंतादिविषयकामनावंतोभवंतीत्यर्थः । तंतमेवोपजीवंति । यथानुशासनमि त्येतदत्रापिसंगमनीयं । तच्छासनानुसारेणैव । नस्वातंत्र्येणेत्यर्थः ॥ ५ ॥ महिमांतरमाह ॥ **तद्यथेति** ॥ तन्नि दर्शनंयथा । कर्मजितोलोकोदेहादिःक्षीयते । एवमेवामुत्रभगवदज्ञानिनिपुण्यजितोलोकःस्वर्गादिःक्षीयते । यंयमं तमभिकामाभवंतीतिसत्यकामत्वमुक्तं तत्केनभवतीतिजिज्ञासायामात्मज्ञानादित्याह ॥ **तद्यइहात्मानमिति** ॥ तत्त

उप० । तद्यथेहकर्मजितोलोकःक्षीयतएवमेवामुत्रपुण्यजितोलोकःक्षीयतेतद्यइहात्मानमनुविद्यव्रजंत्येताꣳश्चसत्यान्कामाꣳस्तेषाꣳसर्वेषुलोकेषुकामचारोभवत्यथयइहात्मानम ननुविद्यव्रजंत्येताꣳश्चसत्यान्कामाꣳस्तेषाꣳसर्वेषुलोकेष्वकामचारोभवति ॥ ६ ॥ **प्रथमःखंडः** ॥ १ ॥



स्माद्भगवदज्ञानिनांक्षयिफलकत्वाद्येइहाधिकार्यनधिकारिवर्गेआत्मानंपरमात्मानंएतान्पूर्वोक्तान्सत्यांश्चकामान्बहुवचनमाद्यर्थे । सत्यकामत्वादींस्तद्धर्मांश्चानुविद्यसम्यग्ज्ञात्वाव्रजंतितेषांसर्वेषुलोकेषुकामचारोभवति स्वेच्छानुसारेणैवचरणंभवतिसत्यकामा भवंतीतियावत् । एवंज्ञानस्यसत्यकामत्वसाधनत्वमुक्त्वातदभावेतद्व्यतिरेकमाह ॥ **अथयइहेति** ॥ क्वचित्तुतद्यइ हात्मानमननुविद्यव्रजंत्येतांश्चसत्यान्कामांस्तेषांसर्वेषुलोकेष्वकामचारोभवतिअथयइहात्मानमनुविद्यव्रजंत्येतांश्चसत्यान्कामांस्ते षांसर्वेषुलोकेषुकामचारोभवतीतिपाठोदृश्यते । तत्रेत्थंयोजना । भगवज्ज्ञानिनःफलंवक्तुंतदज्ञानिनोविपरीतंफलंसदृष्टांतमा ह ॥ **तद्यथेति** ॥ तत्तस्माद्येइहाधिकार्यनधिकारिवर्गे आत्मानंपरमात्मानं एतांश्चसत्यान्कामान्भगवदीयान्पूर्वोक्तधर्मान् अननुविद्यव्रजंति । तेषांयथाकर्मजितोलोकोदेहःक्षीयते एवंपुण्यजितोलोकःस्वर्गादिःक्षीयतएव । नकेवलमिष्टहानिः इष्टाप्राप्ति श्चेत्याह ॥ **तेषामिति** ॥ ज्ञानिनःफलमाह ॥ **अथेति** ॥ येआत्मानं तदीयान्सत्यान्कामांश्चानुविद्यव्रजंति । तेषांपुण्यान्य क्षयफलान्येवभवंतीतिग्राह्यं । तथासर्वेषुलोकेषुकामचारोभवतीति ॥ ६ ॥ **प्रथमःखंडः** ॥ १ ॥ यंयमंतमभिकामाभवंतीत्यु क्तंमुक्तस्यभगवत्प्रसादाधीनंसत्यकामत्वमेवविशदयति ॥ **सयदीत्यादिना** ॥ सःमुक्तोयदिपितॄणांविष्णुलोकोभवेत् । तदनंत रंतदेवलोकोपिममभवेदितिपितृलोककामोभवतितदास्यमुक्तस्यसंकल्पादेवास्यपितरःसमुत्तिष्ठंति । संसारान्मुक्ताःसंतःपुरतःस्थि ताभवंति । ततश्चतेनपितृलोकेनतदवलोकनेनलोकवद्भिःपितृभिरितियावत् । संपन्नोयुक्तःसन्महीयतेस्वावरैःपूज्यते ॥ १ ॥

उप० । सयदिपितृलोककामोभवतिसंकल्पादेवास्यपितरःसमुत्तिष्ठंतितेनपितृलोकेनसंपन्नोमहीयते ॥ १ ॥

एवमन्यत् । अत्रपित्रादयःस्वचरमजन्मकालीनाइतिसंप्रदायविदः । तेचयोग्याएवविवक्षिताः । अयोग्यत्वेकामनायोगात् । गंधमाल्यादयस्तुतत्कालीनाएवकामनयालभ्यंते । अत्रचलोकशब्देनदर्शनपर्यायेणभोगरूपएवार्थोविवक्षितः । नतुविष्णुलोको पीतिध्येयं ॥ २–९ ॥ एवंकुतूहलात्किंचिद्विशदमुक्त्वागौरवभयात्पुनरुपसंहरति ॥ **यंयमिति** ॥ १० ॥ **द्वितीयःखंडः**॥२॥ नन्विदंमुक्तस्यसत्यकामत्वंनतावदागंतुकं । मुक्तेरनागंतुकविशेषरूपत्वात् । नापिस्वाभाविकं । पूर्वमप्युपलब्धिप्रसंगादित्याशं कायामाह ॥ **तइमइति** ॥ मुक्तियोग्यस्यइमेपूर्वोक्ताःकामाःपुराविसत्याएवसंतोऽनृतापिधानाःनदृश्यंते । अनृतस्यापिधानमि तिप्रतीतिवारणायानृतापिधानाइत्युक्तमेवविशदयति ॥ **तेषामिति** ॥ तेषांसत्यानांसतांकामानांअनृतमज्ञानमपिधानमाच्छा दनमित्यर्थः । अतःसत्यकामत्वादेरनृतापिधानत्वादस्याऽमुक्तस्ययोग्यजीवस्ययोयःपित्रादिरितःप्रैतिलोकांतरंगच्छतितदातद्

उप० । अथयदिमातृलोककामोभवतिसंकल्पादेवास्यमातरःसमुत्तिष्ठंतितेनमातृलोकेनसंपन्नोमहीयते ॥ २ ॥ अथयदिभ्रातृलोककामोभवतिसंकल्पादेवास्यभ्रातरःसमुत्तिष्ठंतितेनभ्रातृलोकेनसंपन्नोमहीयते ॥ ३ ॥ अथयदिस्वसृलोककामोभवतिसंकल्पादेवास्यस्वसारःसमुत्तिष्ठंति तेनस्वसृलोकेनसंपन्नोमहीयते ॥ ४ ॥ अथयदिसखिलोककामोभवतिसंकल्पादेवास्यसखायःसमुत्तिष्ठंतितेनसखिलोकेनसंपन्नोमहीयते ॥ ५ ॥ अथयदिगंधमाल्यलोककामोभवतिसंकल्पादेवास्यगंधमाल्येसमुत्तिष्ठतस्तेनगंधमाल्यलोकेनसंपन्नोमहीयते ॥ ६ ॥ अथयद्यन्नपानलोककामोभवतिसंकल्पादेवास्यान्नपानेसमुत्तिष्ठतस्तेनान्नपानलोकेनसंपन्नोमहीयते ॥ ७ ॥ अथयदिगीतवादित्रलोककामोभवतिसंकल्पादेवास्यगीतवादित्रेसमुत्तिष्ठतस्तेनगीतवादित्रलोकेनसंपन्नोमहीयते ॥८॥ अथयदिस्त्रीलोककामोभवतिसंकल्पादेवास्यस्त्रियःसमुत्तिष्ठंतितेनस्त्रीलोकेनसंपन्नोमहीयते ॥ ९ ॥ यंयमंतमभिकामोभवतियंकामंकामयतेसोस्यसंकल्पादेवसमुत्तिष्ठतितेनसंपन्नोमहीयते ॥ १० ॥ **द्वितीयःखंडः** ॥ २ ॥ तइमेसत्याःकामाअनृताऽपिधानास्तेषाꣳसत्यानाꣳसतामनृतमपिधानंयोयोह्यस्येतःप्रैतिनतमिहदर्शनायलभते ॥ १ ॥

र्शनेच्छायामपितद्दर्शनायनलभते ॥ १ ॥ नकेवलमेतावत् । येचास्यामुक्तजीवस्यजीवाःजीवंतः येचप्रेताः यच्चान्यत् गंधमाल्यादिकं। तत्सर्वमिच्छन्नपिनियमेननलभते। अज्ञाननिवृत्तौत्वाह॥ **सर्वमिति**॥सर्वंतत्कामितं अत्रविष्णुलोके विंदतेलभते। कुतः॥ हियस्मादत्रलोकेस्यमुक्तस्यसत्याःकामाःस्वरूपभूताःआविर्भूताइतिशेषः। ननुहृत्पुंडरीकाकाशेपरमात्माचेत्तिष्ठति। तर्हिप्रतिदिनंतत्रगच्छद्भिरस्माभिःकुतोनोपलभ्यतेऽतःसतत्रनास्तीत्याशंकांसदृष्टांतंपरिहरति ॥ **तद्यथेति**॥तत्निदर्शनंयथा। हिरण्यनिधिंनिहितमप्यक्षेत्रज्ञाःनिधानक्षेत्रमजानंतःउपर्युपरिसंचरंतोनविंदेयुर्नजानीयुरेवमेवेमाःसर्वाःप्रजाःअहरहर्गच्छंत्यःएतंब्रह्मलोकंविष्णुलोकंहृत्पद्मंतत्रत्यंब्रह्मेतियावत्। नविंदंति। ब्रह्मैवसर्वाश्रयत्वाल्लोकपदोक्तमितिवा । अनुपलंभेनिमित्तमाह ॥ **अनृतेनेति** ॥ अनृतेनाज्ञानेनहियस्मात्प्रत्यूढाःआच्छादिताः ॥ २ ॥ एवमनुपलब्धेरज्ञाननिमित्तत्वान्नतद्बलाद्धृदितदभावःकल्प्यइत्याह॥ **सवाएषइति** ॥ सएषआत्मापरमात्माहृदितत्रत्याकाशेवर्ततेवैवर्ततएव । हृत्पुण्डरीकाकाशस्थस्याकाशइत्येकंनामोक्तं । तस्यनामांतरमपिनिर्वचनपूर्वकमाह ॥ **तस्येति** ॥ तस्यहृत्पद्मगतस्यभगवतस्तस्यवक्ष्यमाणस्यहृदयमितिनाम्नःएतदेवनिरुक्तंनिर्वचनंहृद्ययमिति। अयपयगतौ हृदिगतमितियस्मात्तस्मात्। हृदयंहृदयनामकं। एवंवेत्तुःफलमाह ॥ **अहरिति** ॥ अहरहर्वै नित्यशः एवमुक्तप्रकारेणहृदयनामकविष्णुवित्। स्वर्गलोकंविष्णुलोकमेति ॥ ३ ॥ हृदब्जगतस्यैवमाहात्म्यांतरमाह ॥ **अथेति** ॥

उप०। अथयेचास्येहजीवायेचप्रेतायच्चान्यदिच्छन्नलभतेसर्वंतदत्रगत्वाविंदतेत्रह्यस्यैतेसत्याःकामाअनृतापिधानास्तद्यथाऽपिहिरण्यनिधिंनिहितमक्षेत्रज्ञाउपर्युपरिसंचरंतोनविंदेयुरेवमेवेमाःसर्वाःप्रजाअहरहर्गच्छंत्यएतंब्रह्मलोकंनविंदंत्यनृतेनहिप्रत्यूढाः॥२॥सवाएषआत्माहृदितस्यैतदेवनिरुक्तंहृद्ययमितितस्माद्धृदयमहरहर्वाएवंवित्स्वर्गंलोकमेति ॥३॥

अन्येतुनज्ञानसामर्थ्यान्मुक्तोभवति। किंतुभगवत्प्रसादादेवेत्याह। अथेतीत्याहुः। योधिकारीसंप्रसादः सम्यक्विष्णुप्रसादवानेषो स्माच्छरीराच्चरमशरीरात्समुत्थायपरंज्योतिरुपसंपद्यप्राप्यस्वेनरूपेणाभिनिष्पद्यते। स्वस्वरूपाविर्भावंप्राप्नोति। ननुहृत्पद्मस्थात्म निरूपणावसरेकिंज्योतिःप्रसंगेनेत्यतआह ॥ एषइति ॥ यंप्राप्यासौस्वरूपतामाप्नोतिसएषः प्रागुक्तःआत्मेतिहोवाचरमा। उक्त मुक्तप्राप्यत्वमुपपादयितुमाह ॥ एतदमृतमित्यादि ॥ एतत्परंज्योतिः। अमृतंनित्यमुक्तं। अभयंकदापिभयास्पृष्टं। एतत् ब्रह्मपूर्णमिति। पश्यंतीरमोवाचेतिसंबंधः। तस्यैवनामांतरमाह ॥ तस्येति ॥ ४ ॥ तन्निर्वचनायतदक्षराण्याह ॥ सदिति॥ अत्रयद्यपिसदित्यक्षरद्वयंतथाचत्रीणीत्यनुपपन्नं। तथापितकारस्यव्यंजनमात्रत्वेनाविवक्षयैवमुक्तमित्यवसेयं। तन्निर्वक्ति ॥ तद्यदिति ॥ तत्प्रसिद्धंयत्सत्सच्छब्दवाच्यंतदमृतंमुक्तजातं। अथयत्तितन्मर्त्यसंसारिजातं। अथयद्यंतेनोभेमुक्तामुक्तजा तेयच्छतीत्यर्थोलभ्यते। यद्यस्मादनेनयमित्यक्षरेणोभेमुक्तामुक्तजातेयच्छतीत्यर्थोलभ्यते। तस्माद्यंयन्नामकं। एवंवेत्तुःफल माह ॥ अहरिति ॥ ५ ॥ तृतीयःखंडः ॥ ३ ॥ हृद्गतस्यैवमहिमांतरमाह ॥ अथेति ॥ यआत्माहृत्पद्मस्थत्वेनोक्तःसःएषां लोकानामसंभेदायामेलनायअविदारणायवा सेतुराश्रयः विधृतिर्विधारणसमर्थः। यदिभगवानाश्रयोनस्यात्तदालोकानिराधा

उप०।अथयएषसंप्रसादोस्माच्छरीरात्समुत्थायपरंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यतएषआत्मेतिहोवाचैतदमृतमभयमेतद्ब्रह्मेतितस्यहवाएतस्यब्रह्मणोनामसत्यमिति॥४॥ तानिहवाएतानित्रीण्यक्षराणि सत् ति यमिति तद्यत्सत्तदमृतमथयत्तितन्मर्त्यमथयद्यंतेनोभेयच्छतियदनेनोभेयच्छतितस्माद्यमहरहर्वाएवंवित्स्वर्गंलोकमेति ॥५॥ तृतीयःखंडः ॥ ३ ॥ अथयआत्मासंसेतुर्विधृतिरेषांलोकानामसंभेदायनैतꣳसेतुमहोरात्रेतरतोनजरानमृत्युर्नशोकोनसुकृतंनदुष्कृतं सर्वेपाप्मानोतोनिवर्ततेपहतपाप्माह्येषब्रह्मलोकः ॥ १ ॥



राएकत्रमिलिताविदारितावास्युरितिभावः। पूर्वोक्तमपहतपाप्मत्वंमुक्तवत्प्राप्तस्यपापादेर्ध्वंसरूपं किंतुनित्यनिवृत्त्यभिप्रायमि तिवक्तुमाह ॥ नैतंसेतुमित्यादिना ॥ एवंसेतुंभगवंतमहोरात्रेनतरतःएतमतीत्यनगच्छतः। एतस्मिन्नस्वकृतविकारापाद केइतियावत्। तदेवाह ॥ नजरानमृत्युरिति ॥ जरादिकंनतरतिनप्राप्नोतीत्यर्थः। किंबहुना। सर्वेपाप्मानोतोभगवतोनि वर्ततेनित्यनिवृत्ताभवंति। अतएवैषब्रह्मलोकः। ब्रह्मरूपसर्वाश्रयःअपहतपाप्माहिप्रसिद्धः ॥ १ ॥ नैवंमुक्तइत्याह ॥ तस्मा दिति ॥ तस्मादेतस्यापहतपाप्मत्वादेवैतंसेतुंप्रतिगंतुमन्यत्तीर्त्वापूर्वमंधःसन्अज्ञानावृतःसन्ननंधोभवतितदनावृतोभवति। वि द्धोदुरुक्तिबाणैः। उपतापीरोगी। उपलक्षणमेतत्। सर्वपापविनिर्मुक्तोभवतीत्यर्थः। तस्मादेवमस्यमुक्तस्यापिनिष्पापत्वादेव भगवत्प्रसादादेववा। एतंसेतुंप्रतिगंतुमन्यत्तीर्त्वाविद्यमानस्यनक्तमप्यहरेवनिष्पद्यते। तदेवविशदमाह ॥ असकृदिति ॥ एषब्रह्मलोकोविष्णुलोकोवाऽसकृद्विभातोहिनमुक्तवदित्यर्थः ॥ २ ॥ एवंभगवत्सरूपवेत्तुःफलंज्ञानसाधनप्रदर्शनपूर्वकमाह ॥ तद्यइति ॥ तत्त्राधिकारिषुयएवाधिकारिणः एतंब्रह्मलोकं पूर्णसर्वाश्रयंविष्णुं तल्लोकंवा ब्रह्मचर्येणपरेब्रह्मणिमनोवाक्कर्मभि श्चरणेनानुविंदंतिप्राप्नुवंति। तेषामेवैषब्रह्मलोकःब्रह्मकर्तृककृपावलोकः तत्कर्मकावलोकोवाभवतीत्यर्थः। सर्वेषुलोकेषुस्वयोग्ये षु ॥ ३ ॥ चतुर्थःखंडः ॥ ४ ॥ ननुब्रह्मचर्यस्यनब्रह्मलोकप्राप्तिसाधनत्वंयुक्तं। अन्यत्रयज्ञादेरेवतत्साधनत्वेनोक्तत्वादित्यतो

उप०। तस्माद्वाएतꣳसेतुंतीर्त्वांधःसन्ननंधोभवतिविद्धःसन्नविद्धोभवत्युपतापीसन्ननुपतापीभवतितस्माद्वाएतंसेतुंतीर्त्वाऽपिनक्तमहरेवाभिनिष्पद्यतेऽसकृद्विभातोह्येवैषब्रह्म लोकः ॥ २ ॥ तद्यएवैतंब्रह्मलोकंब्रह्मचर्येणानुविंदंतितेषामेवैषब्रह्मलोकस्तेषाꣳसर्वेषुलोकेषुकामचारोभवति॥ ३ ॥ चतुर्थःखंडः ॥ ४ ॥

यज्ञादिकमपिब्रह्मचर्यमेवेत्याह ॥ अथेति ॥ अथज्ञानस्यैवमोक्षसाधनत्वेनप्रमितत्वादित्यर्थः। यत्यज्ञइत्याचक्षतेविद्वांसस्तद्ब्रह्म चर्यमेवज्ञानमेव। एवमग्रेपि। नन्वस्तुयज्ञादिशब्दवाच्यस्यज्ञानस्यमानसब्रह्मचर्याभेदः कायिकवाचिकब्रह्मचर्ययोस्तुकथंयज्ञा दिशब्दोदितज्ञानाभेदइत्याशंकायांयज्ञादिशब्दनिर्वचनलभ्यस्यमोक्षहेतुज्ञानस्यस्वकार्यजननेकायिकवाचिकब्रह्मचर्यसापेक्षत्वा दुपचारेणतत्राप्यभेदव्यपदेशोपपत्तिरित्यभिप्रेत्यमानसब्रह्मचर्यरूपेज्ञानेयज्ञादिशब्दनिर्वचनमुक्ताभेदोपपादनायदर्शयन्तस्यस्व कार्यकरणेस्वेतरब्रह्मचर्यसापेक्षत्वंचोपपादयति॥ब्रह्मचर्येणह्येवेत्यादिना॥कायिकेनवाचिकेनवाब्रह्मचर्येणेत्यर्थः। एवमग्रेपि।हि शब्देनज्ञानमेतादृशब्रह्मचर्यसहकृतमेवमोक्षहेतुरितिप्रसिद्धमितिदर्शयति।योज्ञातासःतंविंदतेइत्यनेनयात्यनेनज्ञमितियज्ञशब्दनि र्वचनंज्ञानेसूचयति। तेनब्रह्मचर्यमेवतदित्युक्तमुपपादितमितिध्येयं। एवमग्रेपिइष्टमित्यत्रापिइच्छत्यनेनेतीष्टमितिनिरुक्तिमभिप्रेत्य अनयाचनिरुक्त्याइच्छासाधनमेवप्राप्तंनमोक्षसाधनंज्ञानमित्यतस्तत्तात्पर्यंदर्शयति॥इष्ट्वात्मानमनुविंदतइति॥ इच्छानंतरंभ गवंतमपिप्राप्नोतीत्यतोमोक्षहेतुज्ञानमुक्तनिरुक्तिलभ्यमेवेतिभावः ॥१॥ सतइत्यनूद्यात्मनइतिव्याख्यानं। अनेनसतोभगवतस्त्रा णमयतेऽनेनेतिसत्त्रायणमितिनिरुक्तिःसूचिता। आत्मानंभगवंतं। अनुविद्यश्रवणादिनाज्ञात्वामनुतेपरोक्षतोजानाति। अनुविद्याप रोक्षतोज्ञात्वामनुतेमोक्षेध्यायतीतिवार्थः। अनेनमनुतेनेनेतिमौनमितिनिर्वचनंसूचितंभवति॥२॥ यमात्मानंब्रह्मचर्येणानुविंदतेस

उप०। अथयद्यज्ञइत्याचक्षतेब्रह्मचर्यमेवतद्ब्रह्मचर्येणह्येवयोज्ञातातंविंदतेथयदिष्टमित्याचक्षतेब्रह्मचर्यमेवतद्ब्रह्मचर्येणह्येवेष्ट्वात्मानमनुविंदते ॥ १ ॥ अथयत्सत्त्रायणमित्या चक्षतेब्रह्मचर्यमेवतद्ब्रह्मचर्येणह्येवसतथात्मनस्त्राणंविंदतेथयन्मौनमित्याचक्षतेब्रह्मचर्यमेवतद्ब्रह्मचर्येणह्येवात्मानमनुविद्यमनुते ॥ २ ॥

एषआत्मामोक्षेतस्यननश्यतिहिनतंपरित्यजतीतिप्रसिद्धमित्यर्थः । अनेनाप्यनाशकंनाशशून्यंब्रह्मायतेनेनेत्यनाशकायनमितिनि
र्वचनंप्रदर्शितं । एवमरण्यावयतेनेनेत्यरण्यायनमितिनिर्वचनसूचकंवाक्यंप्रकरणादूह्यं । एवंचात्रयन्मानसंब्रह्मचर्यंतस्ययज्ञाद्य
भेदएवविवक्षितः । यज्ञादिशब्दैरपिज्ञानलाभात् । यच्चकायिकंवाचिकंचब्रह्मचर्यंतद्यज्ञादिशब्दवाच्यज्ञानसहकारित्वात्तदभि
न्नमितिव्यपदिश्यतइत्युक्तंभवति । अरण्याविति कौ कुत्रत्यौ यत्प्राप्तिसाधनंब्रह्मचर्यमित्यपेक्षायामाह ॥ अरश्चेत्यादिना ॥
यद्वा अरण्यायनमितिप्रसिद्धारण्यप्राप्तिसाधनंब्रह्मचर्यमित्यन्यथाप्रतीतिनिरासायारण्यशब्दार्थमाह ॥ अरश्चेति ॥ इतोमेर्व
पेक्षयातृतीयस्यांदिविविद्यमानेब्रह्मलोकेश्वेतद्वीपेरश्चण्यश्चेत्येवंनामानौहवैप्रसिद्धौ । अर्णवौसमुद्रौसमुद्रोपमेवा । सरसीतिष्ठ
तः । एतत्प्रसंगात्पुनःपरब्रह्मलोकमाहात्म्यमेवाह ॥ तदित्यादिना ॥ तत्तत्रैरमीराख्यवृक्षसंबंधिसुरापूर्णं । इराऽन्नं तन्मयऐ
रोमण्डस्तेनपूर्णमैरमित्यपिकश्चित् । वस्तुतस्तुऐरंलक्ष्म्यात्मकं । ऐरंश्रीश्चेतिगीतातात्पर्यवचनात् । उपपादितंचैतट्टीकाकारैः ।
तदैरंमदीयंसरइतिश्रुतेरैरंश्रीरितिमदीयंमदकारि । सरःसरोवरंवर्तते । तत्राश्वत्थोऽश्वत्थसमूहःसोमसवनःसुधास्रवोस्ति । त
त्तत्रलोके तस्यब्रह्मणो पराजिताऽपराजितनामकं पूःपुरमस्ति । तत्रापिप्रभुणाब्रह्मणाविमितंसंमितंहिरण्मयंचित्सुवर्णमयंपर्यंक
मस्ति ॥ २ ॥ एवमरण्यौनिरूप्येदानींब्रह्मचर्यस्यतत्प्राप्तिसाधनतारूपंतदयनत्वंदर्शयन्अन्यदपिफलमाह ॥ तद्यइति ॥ त

---

उप० । अथयदनाशकायनमित्याचक्षतेब्रह्मचर्यमेवतदेषह्यात्माननश्यतियंब्रह्मचर्येणानुविंदतेथयदरण्यायनमित्याचक्षतेब्रह्मचर्यमेवतदरश्चहवैण्यश्चार्णवौब्रह्मलोके तृतीयस्या
मितोदिवितदैरंमदीयꣳसरस्तदश्वत्थःसोमसवनस्तदपराजितापूर्ब्रह्मणःप्रभुविमितꣳहिरण्मयं ॥ ३ ॥ तद्यएवैतावरंचवैण्यंचार्णवौब्रह्मलोके ब्रह्मचर्येणानुविंदंतितेषामेवैषब्रह्मलो

त्तस्मात्यएवाधिकारिणःएतावरंचण्यंचार्णवौब्रह्मलोकेविद्यमानौब्रह्मचर्येणानुविंदंतिप्राप्नुवंति । तेषामेवैषब्रह्मलोकः । व्याख्यातमेतत् ॥ ४ ॥ **पंचमःखंडः** ॥५॥ हृदयस्थोपास्तिप्रकारमेवविविच्याह ॥ **अथेति** ॥ अथयाएताहृदयस्यनाड्यः पिंगलानंदिनीडावज्रिकासुषुम्नाख्यास्ताः अणिम्नःसूक्ष्मस्य पिंगलस्यसंकर्षणस्य शुक्लस्यवासुदेवस्य नीलस्यानिरुद्धस्य पीतस्यप्रद्युम्नस्य लोहितस्यनारायणस्या धिष्ठानभूतास्तिष्ठंति । विष्णोरूपाणिपंचनाडीस्थितानीतियावत् । इतिउपासीतेतिशेषः । प्रसंगाद्भावनार्थमेवादित्येप्येवंपंचरूपोभगवानस्तीत्याह ॥ **असाविति** ॥ असावादित्यःआदानादादित्यनामाभगवान् । पिंगलःसंकर्षणः । एषःआदित्यस्थःशुक्लोवासुदेवः । एवमन्यत् । अत्रनाडीस्थानीयंसूर्यमंडलं । अत्रमूर्तिविवेकोमधुविद्योक्तरीत्याद्रष्टव्यः ॥ १ ॥ नकेवलंहृदयस्थस्यसूर्यस्थेनरूपसादृश्यमपितुपरस्परंरश्मिसंसृप्तत्वंचेत्याह ॥ **तद्यथेत्यादिना** ॥ तत्निदर्शनंयथा । महापथोमहामार्गः । आततोविस्तृतः । उभौग्रामौगच्छति । कौतौ । इमंचामुंच । एवमेवादित्यस्यरश्मयःइमंचामुंचेत्युभौलोकौगच्छंति । उभौलोकौगच्छंतीत्युक्तमेवप्रकारंविशदमाह ॥ **अमुष्मादिति** ॥ अमुष्मादादित्यात्तदंतर्गतभगवद्रूपेभ्योयारश्मयःप्रतायंतेव्याप्ताभवंति ताःआसुनाडीषुसृप्ताःगताः। आभ्योनाडीभ्यस्तदंतर्गतभगवद्रूपेभ्यः येनाडिस्थारश्मयःप्रतायंतेव्याप्ताभवं

उप० । कस्तेषाꣳसर्वेषुलोकेषुकामचारोभवति ॥ ४ ॥ **पंचमःखंडः** ॥ ५ ॥ अथयाएताहृदयस्यनाड्यस्ताःपिंगलस्याणिम्नस्तिष्ठंतिशुक्लस्यनीलस्यपीतस्यलोहितस्येत्यसौवाआदित्यःपिंगलएषशुक्लएषनीलएषपीतएषलोहितः ॥ १ ॥ तद्यथामहापथआततउभौग्रामौगच्छतीमंचामुंचैवमेवैताआदित्यस्यरश्मयउभौलोकौगच्छंतीमंचामुंचामुष्मादादित्यात्प्रतायंतेताआसुनाडीषुसृप्ताआभ्योनाडीभ्यःप्रतायंतेतेऽमुष्मिन्नादित्येसृप्ताः ॥ २ ॥



ति । तेऽमुष्मिन्नादित्येसृप्ताःगताः । रश्मिशब्दस्योभयलिंगत्वात्तइत्युक्तं ॥ २ ॥ प्रकृतनाडीस्थस्यैवसुप्तव्याप्तत्वमाह ॥ **तदिति** ॥ तत्तत्रैवंसति यत्रयदा एतत्एषः सुप्तोजीवः समस्तःउपसंहृतेंद्रियः संप्रसन्नःस्वरूपसुखानुभववान् स्वप्नंनविजानाति तदाऽसुनाडीषुतदंतर्गतविष्णुमध्येसृप्तोगतोभवति । तंसुप्तंजीवं नकश्चनपाप्मास्पृशति । कुतः । भगवत्तेजसाहितदासंपन्नःसंगतोभवति ॥ ३ ॥ एवमुपासनयाअपरोक्षीकृतभगवद्रूपस्याधिकारिणःउत्क्रांत्यादिकंफलमाह ॥ **अथेति** ॥ यत्रयदा एतत्एषः ज्ञानी । अबलिमानंरोगादिनादेहस्याबलभावं नीतःप्राप्तो भवति । वैराग्यार्थंदौर्बल्यावस्थामेवविशदमाह ॥ **तमिति** ॥ तंउपतापिनंज्ञानिनमभितआसीनाज्ञातयःआहुः । किमिति । जानासिमांजानासिमामिति । सयावदस्माच्छरीरादनुत्क्रांतोभवति । तावज्जानाति ॥ ४ ॥ अथयत्रयदा एतत्येषो स्माच्छरीरादुत्क्रामति अथतदा एतैरेवरश्मिभिर्नाडीस्थसौररश्मिभिःप्रकाशितनाडीद्वारः ऊर्ध्वःऊर्ध्वलोकानुसारी आक्रमतेगंतुमभिमुखोभवति । सःज्ञानी ओमितिवहतीतिओमितिवाङ्वायुस्तेनतत्प्रसादेनोद्वामीयते । दिव्यचिद्रूपाख्यवामभावंप्राप्नोति । सःवायुर्यावत्यदा एनंनेतुंमनःक्षिपेत् । तावत्तदाऽदित्यंतत्स्थंविष्णुंगच्छति । ब्रह्मज्ञानिनाब्रह्मलोकस्यैवगंतव्यत्वात्किमादित्यस्थप्राप्त्येत्यतस्तद्वारमेतदित्याह ॥ **एतदिति** ॥ एतद्वैआदिस्थंब्रह्मैव ख

उप० । तद्यत्रैतत्सुप्तःसमस्तःसंप्रसन्नःस्वप्नंनविजानात्यासुतदानाडीषुसृप्तोभवतितंनकश्चनपाप्मास्पृशतितेजसाहितदासंपन्नोभवति ॥ ३ ॥ अथयत्रैतदबलिमानंनीतोभवतितमभितआसीनाआहुर्जानासिमांजानासिमामितिसयावदस्माच्छरीरादनुत्क्रांतोभवतितावज्जानाति ॥ ४ ॥ अथैयत्रतदस्माच्छरीरादुत्क्रामत्यथैतैरेवरश्मिभिरूर्ध्वआक्रमतेसओमितिवाहोद्वामीयतेसयावत्क्षिपेन्मनस्तावदादित्यंगच्छत्येतद्वैखलुलोकद्वारंविदुषांप्रपदनंनिरोधोऽविदुषां ॥ ५ ॥

लुब्रह्मलोकस्यद्वारं । अतएवविदुषांप्रपदंप्राप्यं । अविदुषांतुकथमित्यतआह ॥ **निरोधोऽविदुषामिति** ॥ निरोधनंनिरोधः स्वप्राप्तिहेतुभूतमार्गप्रतिबंधकइत्यर्थः ॥ ५ ॥ हृदयस्थनाडीरश्मिभिःऊर्ध्वआक्रमतइत्युक्तं तत्रपंचभिरपिनाडीभिरुत्क्रमणेमोक्षोभवतिकिमित्यतोमोक्षहेतुनाडीविशेषंप्रमाणेनवाहै ॥ **तदिति** ॥ तत्तत्रमोक्षनाडीविशेषसद्भावे । एषःवक्ष्यमाणःश्लोकोभवति । तंपठति ॥ **शतमिति** ॥ हृद्ययनाद्धृदयस्यभगवतोधिष्ठानभूतानाड्यः । तयासुषुम्नाख्यया । विष्वगुत्क्रमणेलोकांतरगमनार्थं द्विरुक्तिर्विद्यावधारणार्थेत्युक्तं ॥ ६ ॥ षष्ठःखंडः ॥ ६ ॥ पूर्वंब्रह्मचर्यंमोक्षसाधनमित्युक्तं । तत्किमनुष्ठितमनुतिष्ठतांसर्वेषांमोक्षमापादयतिकेषांचिदेववेतिजिज्ञासायांयोग्यानामेवेत्येतमर्थंप्रस्ताव्याख्यायिकामाह ॥ **यआत्मेत्याद्युत्तरखंडषट्केन** ॥ तत्राप्रतिपत्तिविप्रतिपत्तिनिरासायखंडषट्कंप्रमाणेनैवव्याचष्टे ॥ **इंद्रइत्यादिना** ॥ आपतुरित्यंतेनाद्यखंडद्वयतात्पर्यमुक्तं । आनंदरूपमित्यात्मशब्दव्याख्यानं । आदेयंमातीतिव्युत्पत्तेः । नन्विंद्रःसम्यक्ज्ञानमवापचेदक्षिगंश्रुत्वायोयमप्सुपरिख्यायतेकतमएषइतिकथंपप्रच्छ प्रतिबिंबेपरमात्मत्वाभावस्यनिर्णीतत्वादित्यतआह ॥ **तत्रेति** ॥ तत्वंजानन्तस्यमोहस्यानुरूपाणिवाक्यान्युवाच । तस्यविरोचनस्येतिवा । नन्वेवंतर्हिब्रह्मावाकथमेषउएवैषुसर्वेष्वंतेषुपरिख्यायतइतिहोवाच । विद्यार्थिनं

उप० । तदेषश्लोकः । शतंचैकाचहृदयस्यनाड्यस्तासांमूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेतिविष्वगन्याउत्क्रमणेभवंति ॥ ६ ॥ **इतिषष्ठःखंडः** ॥ ६ ॥

भा० । इंद्रोविरोचनश्चैवश्रुत्वातुब्रह्मणोक्षिगं । विष्णुमानंदरूपंतंसम्यक्ज्ञानविपर्ययौ । आपतुस्तत्रदेवेंद्रोजानन्नपिविरोचनं । मोहयन्ननुरूपाणितस्यवाक्यान्युवाचह ।

प्रतिविशिष्यैववक्तव्यत्वेनसमुग्धोक्तेःप्रयोजनाभावादित्यतआह ॥ यथेति ॥ विरोचनोपिविष्णुंजानातु । स्ववाक्यंचानृतंभवतु । कोदोषइत्यतआह ॥ अयोग्याइति ॥ हिशब्दोयस्मादित्यर्थे । अतइतिवक्ष्यमाणेनसंबध्यते । ननुप्रह्लादादिरसुरोज्ञानी दृष्टः तत्कथमयोग्याअसुराज्ञानइत्युक्तिरित्यतआह ॥ मच्छापादिति ॥ आसुरएव स्वतइतिवर्तते। तेनैवशब्दसंबंधः। अस्यविरोचनस्यज्ञानाप्राप्तिःस्ववाक्यानृतत्वाभावश्चेत्युभयंयथास्यात्तथावक्ष्यामीत्यर्थः। तर्हींद्रस्यापिविपरीतज्ञानमेवस्यात्। उपदेशस्य संमुग्धत्वादित्यतआह॥इंद्रस्त्विति॥हरिःप्रोक्तःसंमुग्धतया । यदिब्रह्मणाक्षिगतोहरिरेवोक्तस्तर्हिंकथंविरोचनोथयोयंभगवोप्सु परिख्यायतेयश्चायमादर्शेकतमएषइतिपप्रच्छेत्यतस्तदभिप्रायमाह॥अयोग्यत्वादिति॥तुशब्दोवधारणार्थः ।तच्छ्रुत्वायएषोंतरक्षणीत्युक्तंश्रुत्वा प्रतिरूपंब्रह्मेतिमत्त्वा भूयोदर्शनायाऽप्स्वादर्शकेचकतमइत्येवपप्रच्छ।एषउएवसर्वेष्वंतेष्वितिपरिहाराभिप्रायमाह ॥तत्रापीति॥हरेरव्यक्तत्वात् दृश्यतइतिकथमुक्तमित्यतआह॥तत्ववेदीति॥आहेतिवक्ष्यमाणेनान्वयः॥सप्तमःखंडः॥७॥ उदशरावआत्मानमित्यादिखंडतात्पर्यमाह॥तथापीति॥शरीरानलंकृतावनलंकृतस्य तदलंकृतावलंकृतस्यप्रतिबिंबस्य यद्यप्यब्रह्मत्वं शक्यंस्फुटंज्ञातुं शक्यं तथापितेनतन्नज्ञातमतोयोग्यतैवबलीयसीतिदर्शयन्नित्यर्थः। प्रतिरूपाद्ब्रह्मविवेचयन्प्रजापतिःप्रतिरूपस्य

---

भा० । यथाविरोचनोनैवजानीयाद्विष्णुमंजसा । स्ववाक्यंचानृतंनस्यात्तथाब्रह्माप्युवाचह । अयोग्याह्यसुराज्ञानेवक्तव्यंचैवनानृतं । मच्छापादासुरोभावःप्रह्लादादेर्नतुस्वतः । अयंत्वासुरएवातोवक्ष्याम्यस्योभयंयथा । इंद्रस्तुशुद्धभावत्वात्पुनरायास्यतिध्रुवं । इत्यभिप्रायतःप्रोक्तोब्रह्मणाक्षिगतोहरिः । अयोग्यत्वात्तुतच्छ्रुत्वाप्रतिरूपंविरोचनः । मत्वाप्स्वादर्शकेचैवपप्रच्छकतमस्त्विति । तत्रापितुहरेर्भावंहृदिकृत्वाचतुर्मुखः । दृश्यतेह्येषएवेतितत्ववेदिविवक्षया ॥ खं० ॥ ७ ॥ तथापियोग्यतैवात्रभूयसीतिनिवेदितुं । दर्शयन्प्रतिरूपस्यदोषानाहप्रजापतिः । अलंकारादिभिर्युक्तःपश्यस्वेतिविवेचयन् ।

दोषान्दर्शयन्सूचयन्अलंकारादिभिर्युक्तःपश्यस्वपश्येत्याह। अलंकारादिभिर्युक्तःपश्येत्युक्त्याकथंदोषसूचनंजातमित्यतस्तस्याभिप्रायमाह ॥ यथेति ॥ गौण्यंगुणयुक्तत्वं। इतिदोषान्दर्शन्निति संबंधः। न्यायसाम्येनदोषस्यापिप्रेक्षावताज्ञातुंशक्यत्वादितिभावः। नन्वेवंब्रह्मणादोषेसूचितेपिकथंसशांतहृदयएवप्रवव्राजेत्यतआह ॥ तथापीति ॥ यद्यप्येवंब्रह्माप्राहतथापीत्यर्थः। तद्गुणान्तावद्गुणान्। अनुपलभ्यात्मानमित्यारभ्यपराभविष्यंतीत्यंतस्यप्रजापतिवचनस्याभिप्रायमाह ॥ असुराणामिति ॥ एवंस्फुटोक्त्याविरोचननिवृत्तौतस्यतत्वंवक्तव्यंस्यादित्यतआह ॥ जानन्निति ॥ वैरोचनंमनःननिवर्ततइतिजानन्। सशांतहृदयएवेतिवाक्यंव्याचष्टे ॥ तथापीति ॥ यद्यप्येवमाहब्रह्मातथापीत्यर्थः। तेभ्योहैतामुपनिषदंप्रोवाचेत्यादिवाक्यंव्याचष्टे ॥ गत्वाचेति ॥ प्रतिरूपात्मकमेवेतिसंबधः। दिदेशोपदिदेश। अलंकृतिंप्रतिरूपस्य। पुरुषोदृश्यतइत्युपदेशानुसारेणाह ॥ ब्रह्मणइति ॥ उपलंभितांचेतिसंबंधः। तस्मादप्यद्येहाददानमित्यादिवाक्यंव्याचष्टे ॥ अतइति ॥ प्रेतस्यशरीरमित्यादिव्याचष्टे ॥ स्वभोगेनेति ॥ तदभिप्रायसिद्धमर्थंदर्शयति ॥ तत्संस्कारेति ॥ शरीरालंकृतौप्रतिरूपालंकृतत्वस्यसंस्कारवशेनेत्यर्थः। ब्र

भा०। यथादेहगुणेगौण्यंदोषेदोषास्तथैवतु। तथाप्यशुद्धभावत्वात्प्रतिरूपस्यतद्गुणान्। परस्यब्रह्मणोजानन्ययौतुष्टमनाःस्वयं। असुराणामविश्वासनिवृत्त्यर्थंपितामहः। माध्यस्थ्यंज्ञापयानश्चजानन्वैरोचनंमनः। प्राहाज्ञानांपराभावइत्युच्चैश्चपुनःपुनः। तथाप्यशुद्धभावत्वादजानन्नेवनिर्ययौ। गत्वाचैवपरंब्रह्मप्रतिरूपात्मकंसदा। दिदेशसर्वासुराणांशरीरालंकृतेरपि। अलंकृतिंब्रह्मणश्चप्रत्यक्षेणोपलंभितां। अतोसुरानदास्यंतिनयजंत्यात्मनःपरं। स्वभोगेनैवतृप्तिःस्यादितिसर्वेपिमेनिरे। तत्संस्कारवशेनैवस्वयंब्रह्मेतिवेदिनः। अभवन्नपतंश्चैवतमोंधेनित्यदुःखिताः ॥ खं० ॥ ८ ॥



ह्मणाजीवाभिमतशरीरालंकृतौप्रतिरूपालंकृत्युपदर्शनेनबिंबप्रतिबिंबभूतयोस्तयोरभेदएवोपदर्शितः। सचप्रतिरूपभूतब्रह्माभेदोजीवच्छरीरेबिंबभूतेबोध्यमानोजीवाभेदमादायैवपर्यवस्यति। शरीरस्यमरणशीलत्वेनतत्रामृतब्रह्माभेदस्यबाधितत्वात्। अतःशरीराभिमानिनोजीवस्यैवब्रह्माभेदउपदिष्टइतिमत्त्वास्वयंब्रह्मेतिवादिनइत्यर्थः। तमसांधयतीतितमोंधं ॥ अष्टमःखंडः ॥ ८ ॥ अथहेंद्रोप्राप्यैवदेवानितिखंडतात्पर्यमाह ॥ इंद्रश्चेति ॥ पश्चात्सदोषतांपश्यन्निव। सम्यगुपदेशमलब्ध्वापुनःपुनर्गत्वानिवर्तनेप्रयोजनमाह ॥ पुनःपुनरिति ॥ मोहायेत्युक्तंविशदयति ॥ कथंचिदेवेति ॥ नवमःखंडः ॥ ९ ॥ नन्वयोग्यस्यविरोचनस्यापगतत्वादिंद्रस्यचयोग्यत्वात्तंप्रत्यपियएषस्वप्नेमहीयमानश्चरतीतिकिमर्थंसमुग्धतयाब्रह्मोपदेशइत्यतआह ॥ तद्योग्यान्येवेति ॥ मोहयोग्यान्येव। दोषदर्शनेयोग्यतैवगरीयसी। यएषस्वप्नेमहीयमानइत्युपदेशाभिप्रायमाह ॥ स्वप्नमिति ॥ सहाप्राप्यैवदेवानित्यादिवाक्यतात्पर्यमाह ॥ तत्रापीति ॥ स्वप्नदृश्यविवक्षयास्वप्नेप्रतीयमानजीवशरीरविवक्षयेत्यर्थः ॥ दशमःखंडः ॥ १० ॥ तद्यत्रैतत्सुप्तःसमस्तइतिखंडतात्पर्यमाह ॥ ब्रह्मैनमिति ॥ सुप्तिस्थइत्युक्तमेवविवृणोति ॥ यत्रेति ॥ यत्रभगवतिनाहंखल्वेवंसंप्रत्यात्मानंजानातीतिवाक्यंजानातीत्यस्यपुरुषव्यत्यासाश्रयणेनव्याचष्टे ॥ नाहमिति ॥ अनेनाह

भा०। इंद्रश्चजानन्नपितुमोहयन्नसुरंतदा। गत्वानिववृतेपश्चादिवपश्यन्सदोषतां। पुनःपुनश्चमोहायगत्वागत्वानिवर्तते। कथंचिदेवविज्ञातंमयेत्यज्ञान्विमोहितुं ॥ खं० ॥ ९ ॥ तद्योग्यान्येववाक्यानिब्रह्माप्याहपुनःपुनः। गरीयसीयोग्यतेतिज्ञापयन्पूर्ववत्पुनः। संदिग्धान्येववाक्यानिप्रोवाचेंद्रायचात्मभूः। स्वप्नप्रदर्शयन्यस्तुपूज्यतेसर्वदैवतैः। सएवविष्णुरित्याहतत्राप्याहपुरंदरः। दर्शयन्नासुरींबुद्धिंस्वप्नदृश्यविवक्षया। भ्रंतीवैनमदंतीवतथानस्यात्परोहरिः ॥ खं० ॥ १० ॥ इत्युक्तआहब्रह्मैनंसुप्तिस्थोभगवानिति। यत्रसुप्तोह्ययंजीवइत्युक्तःप्राहवासवः। नाहंजानामिमत्तोन्यंसुप्तौनान्योपिदर्शयेत्।

मेतदाश्रितः अयंतुमदाश्रयः इतिमत्तोन्यमात्मानंपरमात्मानंसंप्रतिसुषुप्तौनजानातिनजानामीतियोजनोक्ताभवति । ननुसुषुप्तौजीवस्यस्वाश्रयपरमात्मज्ञानाभावेपिपरमात्मास्वात्मानंतदाश्रयत्वेनप्रदर्शयतीतिकिंनस्यादित्याशंकानिवर्तकतयाऽयमहमस्मीत्येतदपेक्षितंपूरयन्व्याचष्टे ॥ नान्योपीति ॥ अन्यःपरमात्मा । सुप्तावितिवर्तते । स्वात्मानमितिशेषः । अन्योपिभगवानपि । तेनायंजीवाश्रयोहमस्मीत्ययमन्योभगवानपिनस्वात्मानंजानातिदर्शयतीतियोजनीयमितिभावः । नन्वेकेनजीवेनस्वाश्रयस्यभगवतःसुप्तावदृष्टत्वेपिनतदभावः । इतरेषांतज्ज्ञानसंभवादित्याशंकायांप्राप्तस्यनोएवेमानिभूतानीत्यस्यव्याख्यानं ॥ भूतानीति ॥ भूतानिचेतिसंबंधः । पश्यंतीत्यनेनजानातीत्येतत्वचनव्यत्ययेनानुवर्ततइत्युक्तंभवति । तथाचकेषामप्यनुपलंभान्नसोस्तीतिभावः । यदुक्तमनुपलंभान्नजीवाश्रयःपरमात्मासुप्तावस्तीतितदयुक्तं । जीवपरमात्मनोःसुप्तावन्यतरस्यान्यतरस्मिन्प्रविष्टत्वेनाश्रयाश्रयिभावानुपलंभोपपत्तेरित्यतस्तत्रबाधकतयाविनाशमेवापीतोभवतीतिवाक्यंनाशार्थत्वप्रतीतिंवारयन्व्याचष्टे ॥ यदीति ॥ अपीततांप्रविष्टतां । अयंभावः । यदिजीवःपरमात्मन्यपीतस्तदाशंविनैवभवेत् । सुखरहितःस्यात् । सुखानुभववान्नस्यादितियावत् । अन्यगेहगतस्यलोकेसुखादर्शनात् । तथाचसुखमहमस्वाप्समित्युत्तरकालीनपरामर्शविरोधः । यदिवापरमात्माजीवेऽपीतस्तदासोप्युक्तरीत्याशंविनैवभवेत् । तथाचश्रुत्यादिविरोधइति । एतेनविनाशमितिवाक्यावष्टंभेनसुप्तावहंकारादिसकलकार्यविलयांगीकारवंतोनिरस्ताः ॥ एकादशःखंडः ॥ ११ ॥ मघवन्मर्त्यंवावेत्याद्युपदेशस्यपूर्वोपदेशसाधारण्यं

भा० । अहमस्मीतिभूतानिनचपश्यंतिकानिचित् । यदिजीवःपरात्मावाप्यन्योन्यस्मिन्नपीततां । गतौतदाप्यपीतस्तुशंविनैवभवेदिति ॥ खं० ॥ ११ ॥

परिहरंस्तात्पर्यमाह ॥ **इत्युक्तइति** ॥ अंजसासंमुग्धोक्तिंविनास्पष्टवचनेन । मघवन्मर्त्यंवावेत्यत्रेदंशरीरमित्येतद्व्याचष्टे ॥ **योयमिति** ॥ योयंजीवःसःशरीरसंबंधीत्यवधार्यतां । अनेनेदंश्रुतिजातंशरीरंशरीरसंबंधीतिव्याख्यातंभवति । अशरीरस्येत्युक्तमशरीरत्वंकथंपरमात्मलक्षणंमुक्तेऽतिव्याप्तेरित्यतआह ॥ **भूतेति** ॥ स्वतइतिशेषः । तेनरमाव्यावृत्तिः । विष्णुर्व्याप्तइत्यात्मशब्दव्याख्यानं । अमृतस्येत्युक्तममृतत्वमपिमुक्तेगतमतआह ॥ **अमृतइति** ॥ कालत्रयेपिस्वतएवाविर्भूतमूर्तिमानित्यर्थः । तदस्यात्मनोधिष्ठानमित्येतद्व्याचष्टे ॥ **अधिष्ठायेति** ॥ तथापिअशरीरादित्वेपीत्यर्थः । यद्यपिपूर्वंशरीरशब्दस्तत्संबधिलक्षकइत्युक्तं । तथाप्यत्रशरीरमेवतदितिपरामृश्यतइतिभावेनोक्तं ॥ **देहमिति** ॥ शरीराधिष्ठातृत्वोक्त्याजीववज्जरादिपरीतत्वंस्यादित्याशंकांपरिहरति ॥ **सईश्वरइति** ॥ यतोतोजरादिदोषरहितइतिशेषः । तर्हिंजरादिपरीतःकइत्याशंकायांमर्त्यमित्युक्तमर्त्यत्वोपपादनायप्राप्तस्यात्तंमृत्युनेतिवाक्यस्योपलक्षणत्वाभिप्रायेणतात्पर्यमाह ॥ **जरेति** ॥ अयंजीवात्मेत्यनेनेदमित्येतदत्राप्यन्वितमितिसूचयति । देहसंगतेर्देहाभिमानादित्यनेनशरीरपदोक्तंशरीरसंबंधित्वमत्रहेतुतयाविवक्षितमित्युक्तंभवति । प्रियाप्रियात्तत्वानात्तत्वाभ्यांजीवपरमात्मवैलक्षण्यंवक्तुमात्तोवाइत्यादिप्रवृत्तं । तद्व्याख्यातुंतावत्प्रियाप्रियशब्दार्थावाह ॥ **परेणेति** ॥ परेणान्येनेयंप्राप्यंपरमात्माधीनमितियावत् । अत्रप्रियशब्देनरूढ्यामुखमात्रग्रहणेप्रियापहतिराहित्यंपरमात्मन्यप्यस्तीतिन

---

भा० । उक्तोब्रह्माब्रवीच्छक्रंज्ञापयंस्तत्वमंजसा । योयंशरीरसंबंधीजीवइत्यवधार्यतां । भूतैष्यद्वर्तमानेषुयस्यनोदेहसंगतिः । सोशरीरःपरोविष्णुरमृतोनित्यमूर्तिमान् । अधिष्ठायतथापीमंदेहमास्तेसईश्वरः । जरामृत्युपरीतोयंजीवात्मादेहसंगतेः । परेणेयंसुखंप्रोक्तंप्रियमित्येवपंडितैः । परेणेयमभद्रंयदाप्रियंतदुदीरितं ।

जीवस्यायंविशेषःस्यात् । अतोयोगाश्रयणेनपरेणेयमित्युक्तमितिज्ञातव्यं । अकारलोपश्छांदसइतिभावः । अशब्दःप्रतिषेधार्थ कोभद्रवाची प्रियमित्यस्यचपरनिपातःइतिभावेनोक्तंपरेणेयमभद्रमिति । अप्रियापहतिशून्यत्वंस्वातंत्र्येणजीवेनसभवतीतिदर्श यितुमत्रापियोगाश्रयणमित्यवधेयं । इदानींनहवाइतिवाक्यार्थमाह ॥ **नेति** ॥ मुक्तेष्वप्युक्तंप्रियमस्त्येवेतिभावः । अशरीरंवा वेतिवाक्यंव्याचष्टे ॥ **अशरीरमिति** ॥ तेप्रियाप्रिये । वावेत्यस्यार्थःएवेति । अशरीरोवायुरितिवाक्यंस्पष्टमित्यव्याख्यायअभ्रं विद्युत्स्तनयित्नुरशरीराण्येतानीतिवाक्यंव्याख्यातुंप्रसिद्धाभ्राादिभ्रमवारणायाभ्राादिशब्दार्थानाह ॥ **अभ्रामित्यादिना** ॥ यद्य पिश्रुतिभिःस्तनितत्वात्तुस्तनयित्नुर्हरिस्मृतः । अभ्रंभूताभिभरणाच्छ्रीर्वायुर्भरतःस्मृतः । विद्युत्तुभारतीप्रोक्ताएतएवाशरीरिणइ त्यन्यत्रोक्तं । तथापि व्यत्यासेनापिनामस्यादेतेषांमहतांसदेतितत्रैवोक्तत्वान्नविरोधः । एवंपदार्थानभिधायननुवायुब्रह्मणोःसपत्नी कयोःसशरीरत्वादशरीरत्वंकथमित्याशंकामपाकुर्वन्निदानींवाक्यार्थमाह ॥ **एतेषामिति** ॥ अतोशरीरत्वोक्तिरितिशेषः । अल्पस्वे निस्वशब्दोक्तिरिवेतिभावः । अशरीरोवायुरित्यादिवाक्यस्यसंगतिमाह ॥ **अतइति** ॥ अशरीरत्वात् । ब्रह्मणःपरब्रह्मणः । तथा ऽशरीरत्वेनयत्परब्रह्मणःप्रियाप्रियास्पृष्टत्वमुक्तंतत्कैमुत्येनसाधयितुमिदंवाक्यमितिसंगतिरुक्ताभवतीतिज्ञातव्यं । ननुदेहाभिमा नशून्यानांतेषामप्रियाभावेपिनिरुक्तंप्रियमस्त्येव । वायुब्रह्मणोर्विष्ण्वधीनसुखस्यतत्पत्न्योश्चस्वभर्त्रधीनस्यापिसुखस्यसद्भावादि ॥२४५॥

भा० । नजीवस्यतयोर्हानिःकदाचिद्विद्यतेक्वचित् । अशरीरंपरंब्रह्मनैवतेस्पृशतःक्वचित् । अभ्रामाभगवान्विष्णुर्व्याप्तत्वात्परमेश्वरः । तेनैवभ्रियमाणत्वाद्ब्रह्माऽभ्रमितिकीर्तितः । वायोःपत्नीविद्युदुक्ताविशेषद्युतिहेतुतः । ब्रह्माणीस्तनयित्नुःस्यात्सर्वशब्दात्मिकायतः । एतेषांज्ञानवैशेष्यान्नातिदेहेनसंगतिः । अतःप्रियाप्रियेतेषामपिनब्रह्मणःकिमु ।

त्यतआह ॥ **विष्णवीयमिति** ॥ स्वभर्त्रीयमपीतिसंबंधः । तत्पत्न्योरितिशेषः । विष्णुस्वभर्त्रतिरिक्ताधीनंसुखमत्रप्रियंविवक्षितं । विष्णोःस्वभर्त्रोश्चस्वकोटिनिविष्टत्वेनपरत्वाभावात् । तादृशसुखराहित्यात्तेपिप्रियवर्जिताइत्यर्थः । तद्यथेत्यारभ्यनिष्पद्यंतइत्यं तवाक्यमाकाशशब्दस्यप्रसिद्धाकाशपरताप्रतीतिंवारयन्व्याचष्टे ॥ **यथेति** ॥ तेवाय्वादयः । विष्णोःप्रसादादितिशेषः । समुत्थिताः शरीरात् । एवमेवैषसंप्रसादइतिवाक्यंव्याचष्टे ॥ **एवमिति** ॥ संप्रसादशब्दव्याख्यानंविष्णोःसम्यक्प्रसादेनेति । योपरोमुक्तः सोपिविष्णोःप्रसादेनशरीरात्समुत्थितस्तमेवप्राप्यनैजमानंदंसंयातीतियोज्यं । ननुसउत्तमःपुरुषइत्यस्यप्रकृतमुक्तपरामर्शपरत्वेद हराधिकरणविरोधइत्यतआह ॥ **यमिति** ॥ तेमुक्ताः । केशवइतिपुरुषस्योत्तमत्वोपपादनार्थं । ब्रह्मरुद्रप्रवर्तकत्वंहितदर्थः । तथाच सूत्रमन्यार्थश्चपरामर्शइति । सतत्रपर्येतीत्यत्रप्रकृतभगवत्परामर्शेविहारोपदेशादितिसूत्रविरोधइत्यतआह ॥ **तंप्राप्येति** ॥ सय थाप्रायोग्यमित्यादिवाक्यंव्याचष्टे ॥ **यथैवेति** ॥ प्राणशब्देनविष्णुरपिविवक्षितइत्याशयेनतत्रापेक्षितंपूरयन्एवमेवायमित्यादि व्याचष्टे ॥ **यथारथीति** ॥ प्राणशब्दस्यलक्षणयातद्वज्जीवपरत्वमपीत्याशयेनापेक्षितंदर्शयन्व्याचष्टे ॥ **जीवइति** ॥ यथान्याधि ष्ठितरथगःकश्चित्पुमांस्तथाजीवोभगवदधिष्ठितशरीरगइत्यर्थः । इदमुपलक्षणं । इंद्रियाणिहयाययथेत्यपिग्राह्यं । अथयत्रैतदाकाश

भा० । विष्णवीयंहिसुखंतेषांस्वभर्त्रीयमथापिच । नह्यन्येयंसुखंतेषामतस्तेप्रियवर्जिताः । यथातेपरमाकाशाद्विष्णोरेवसमुत्थिताः । तमेवप्राप्यसंयांतिनैजमानंदमूर्जितं । एवंसम्यक्प्रसादेनविष्णोर्मुक्तोपियोपरः । यंप्राप्यतेनिजानंदमाप्नुवंतिसकेशवः । तंप्राप्यरमतेमुक्तःस्त्रीभिर्यानैश्चबंधुभिः । यथैवसारथिर्यानेएवंदेहेचमारुतः । यथारथीतथा विष्णुर्जीवोन्यरथगोयथा ।

मित्यारभ्यदैवंचक्षुरित्यंतवाक्यस्यतात्पर्यमाह॥ **यदाश्रितानीत्यादिना** ॥ इंद्रियाणिचेतिसंबधः।प्राणश्चापियदाश्रयः। यदाश्र योप्ययंजीवइत्यनेनचाक्षुषःयोवेदेदंजिघ्राणीत्यादिवाक्यंप्राणजीवपरमपिभवतीतिसूचितंभवति। एषांप्राणजीवेंद्रियाणांप्रवर्तनंप्रा णजीवयोर्यथायोग्यंभोक्तृत्वादिरूपमिंद्रियाणांतुतत्तद्विषयकज्ञानजनकत्वरूपंयोवेदेत्यर्थः। नन्विंद्रियतद्विषयाज्ञानेकथमिंद्रिया णांतत्तद्विषयकज्ञानजनकत्वंवेत्तुंशक्यमित्याशंकायांतत्सर्वंवेदेत्याह॥ **दर्शनमित्यादिना** ॥ अनेनयच्चक्षुर्यद्घ्राणमित्यादितद्वे दयेचाकाशगंधादिपदोक्तारूपप्रभृतयोविषयास्तांश्चवेदेतियोजनासूचिता। अंजसैवेत्येवान्वयः। परमोज्ञेयइत्यनेनेदंवाक्यजातं सउत्तमःपुरुषइत्युक्तमुत्तमत्वमुपपादयितुंप्रवृत्तमितिसंगतिःसूचितेतिज्ञातव्यं। अत्रचक्षुर्घ्राणादिशब्दैस्तदभिमानिदेवताअपिवि वक्षिताइतिदर्शयन्नुक्तंविशदयति॥ **देवताइति** ॥ योवेदेत्यन्वयः। दर्शनायचक्षुर्गंधायघ्राणमित्यादेरर्थांतरमाह॥ **सइति** ॥ अनेनगंधादिशब्दैस्तत्साध्योभोगोलक्ष्यतइत्युक्तंभवति। जीवेंद्रियाणिविहायविष्णुर्भोगाननुभवितुमशक्तःकिं नेत्याह॥ **स्वरूपेणै वेति** ॥ लीलयैवेतिभावः। नन्वेवंस्वयमिंद्रियशून्यइत्यापन्नं। तथाचसहस्राक्षःसहस्रपादित्यादिविरोधइत्याशंकापरिहारायप्रा प्तस्यास्यदैवंचक्षुरित्यादेस्तात्पर्यमाह॥ **छुरितैरिति** ॥ स्वकैरिंद्रियैश्छुरितैःव्याप्तैः। तथाचदैवंचक्षुरित्येतदुपलक्षणमित्युक्तंभ वति। नन्वेवंदुष्टविषयभोगोपिभगवतःस्यादित्याशंकामुक्तंविशदयन्परिहरति॥ **जीवमिति** ॥ स्वकैरिंद्रियैरितिवर्तते। स्व

भा०। यदाश्रितानींद्रियाणिप्राणश्चापियदाश्रयः। यदाश्रयोप्ययंजीवोयोवेदैषांप्रवर्तनं। दर्शनंश्रवणंघ्राणंजिह्वांस्पर्शंमनस्तथा। तदीयान्विषयांश्चैवयोवेदाखिलमंजसा। सवि ष्णुःपरमोज्ञेयोदेवताःकरणानिच। सएतैरिंद्रियैर्विष्णुर्भोगाननुभवत्यजः। स्वरूपेणैवशक्तोपिजीवदेहस्थितोहरिः। भुंक्तेतदिंद्रियैर्भोगाञ्छुरितैरिंद्रियैःस्वकैः। जीवंतादिंद्रियाण्येवं

रूपेणेतिच । तथाचजीवंप्राणंचस्वरूपेणतत्तदिंद्रियाणिस्वकैरिंद्रियैरेवमुक्तरीत्याव्याप्येतियोज्यं । गुणान्शुभविषयान् । दोषान्दुष्टानशुभविषयानितियावत् । तंवाएतंदेवाइतिवाक्यंव्याचष्टे ॥ **तमेतमिति** ॥ वाय्वाद्याइत्यनेनदेवपदमशरीरोवायुरित्यादिवाक्यंप्रकृतदेवपरमितिसूचयति । तस्मात्तेषांसर्वेचलोकाइत्यादिफलवाक्यंव्याचष्टे ॥ **तस्मादिति** ॥ सजीवकाइत्यनेनलोकशब्दोजीवपरोपीतिसूचयति । ससर्वांश्चलोकानाप्नोतीत्यादिव्याचष्टे ॥ **तमेतमिति** ॥ यथेत्यस्ययथावदितिवायथायोग्यमितिवार्थः । अनुविद्यविजानातीत्यनयोरर्थभेदमाह ॥ **ज्ञात्वापश्येदिति** ॥ सर्वकामांश्चेत्यादावपियथेतियोज्यं । यथायोग्यमित्यर्थः । एवंब्रह्मोपदेशाद्देहप्रतिबिंबमेवब्रह्म बिंबप्रतिबिंबयोश्चैक्यं तच्चोक्तरीत्यादेहाभिमानिजीवैक्येपर्यवस्यति अतोजीवात्मापिब्रह्मैव अतःसएवमहय्य इत्यभिप्रायोब्रह्मणइतिमायावादएवविरोचनेनावबुद्धः । मायावादिभिरपिजीवात्मनोर्ब्रह्माभेदांगीकारात् । सएवचासुरेभ्यउपदिष्टः । इंद्रेणतुजीवस्यजाग्रदाद्यवस्थाप्रवर्तकः शरीराभिमानरहितः प्रियाप्रियास्पृष्टो मुक्तगम्यो देहरथो जीवप्राणेंद्रियाद्याश्रयः सकलशुभभोक्ता वाय्वाद्युपास्य आत्मा । जीवस्त्वनेवंविधः । इतिभेदवादएवावबुद्धः । सएवोपदिष्टःसुरेभ्यइतिप्रमाणेनव्याख्यायतत्परिशुद्धये आत्मादेहएवमहय्यःदेहातिरिक्तात्मनोऽभावादितिलोकायतमतमवबुद्धमुपदिष्टंचविरोचनेनेतिकेचित् । तत्रानुपपत्त्युक्त्यातन्नेतिवदन्नुक्तरीत्यामायावादएवावबुद्धउपदिष्टश्चेत्याह ॥ **उभाविति** ॥ नात्र

---

भा० । प्राणंचव्याप्यकृत्स्नशः । भुंक्तेतत्तद्गुणान्विष्णुर्नैवदोषान्कदाचन । तमेतंदेवताःसर्वावाय्वाद्याःसमुपासते । तस्माद्देववशाल्लोकाःसर्वकामाःसजीवकाः । तमेतंयो यथाज्ञात्वापश्येद्विष्णुंसनातनं । आप्नोतिसर्वकामांश्चसर्वलोकांश्चकामतइतिसामसंहितायां । उभौलोकाववाप्नोतीतिवचनान्नलोकायतिकमतंविरोचनोक्तं ।

विरोचनेनलोकायतमतमवबुद्धमुक्तंचासुरेभ्यइतिवक्तुंयुक्तं । उभौलोकाववाप्नोतीमंचामुंचेतितदीयफलवाक्यविरोधात् । न हिलोकायतपक्षेपरलोकोस्ति । तर्हिकिमवबुद्धमुक्तंचतेनेतिपृच्छति ॥ किंत्विति ॥ उत्तरमाह ॥ बिंबेति ॥ बिंबप्रतिबिंबयो र्यदैक्यंतदुक्तरीत्याबिंबभूतदेहाभिमानिजीवैक्येपर्यवस्यतीत्यभिप्रायेणेत्यर्थः । किंचयद्यत्रविरोचनेनावबुद्धआत्मालोकायतरी त्यादेहःस्यात्तर्हींद्रावबुद्धःसदेहातिरिक्तोजीवएवेतिवाच्यं । ओमितिचेत्तत्राह ॥ नचात्रेति ॥ अत्रेंद्रंप्रतिब्रह्मोपदेशे । कुतोने तिचेत् । इंद्रंप्रतिब्रह्मोपदिष्टस्यात्मनोऽमृतत्वाशरीरत्वजीवदेहाधिष्ठातृत्वप्रियाप्रियास्पृष्टत्वादिजीवव्यावृत्तधर्मवत्त्वेनजीवस्य चाताहृशत्वेनोक्ततयाजीवविलक्षणत्वादित्याह ॥ तदस्यामृतस्येत्यादिना ॥ लिंगबाहुल्यात्सतात्पर्यमित्युक्तं । भेदाभिधाना त्जीववैलक्षण्याभिधानात् । नन्वत्रोक्तंप्रियाप्रियास्पृष्टत्वंतदनुभवरूपंजीवस्यैवकिंनस्यात् । नस्यात् । तथात्वेप्रियाप्रियानुभवि तृत्वंजीवादन्यस्यशरीरस्यवाच्यंस्यात् । नचतत्संभवतीत्याह ॥ नहीति ॥ नवयंजीवस्यप्रियाद्यस्पृष्टत्वेतदतिरिक्तस्यशरीरस्य तत्स्पृष्टत्वंब्रूमोयेनासंभवःस्यात् । किंतुजीवस्यैवसंसारदशायांप्रियाद्यनुभवो मुक्तौतुनेति । अतःकथमिदंजीवव्यावृत्तमित्यत आह ॥ नचमुक्तस्यापीति ॥ एवंचमुक्तस्यापिप्रियसद्भावान्नतदस्पृष्टत्वंजीवेसावकाशमितिभावः । नन्वेवंप्रियाद्यस्पृष्टत्वंवि

भा० । किंतुबिंबप्रतिबिंबयोरभिमान्यैक्याभिप्रायेणजीवात्मैवमहय्यइतिमायावादएव । नचात्रजीवआत्मशब्दोक्तः । तदस्यामृतस्याशरीरस्यात्मनोधिष्ठानमात्तोवैसशरीरः प्रियाप्रियाभ्यांनहवैसशरीरस्यसतःप्रियाप्रिययोरपहतिरस्त्यशरीरंवावसंतंनप्रियाप्रियेस्पृशतइतीशजीवयोःसतात्पर्यंभेदाभिधानात् । नहिजीवादन्यस्यप्रियाप्रियानुभवोस्ति । नचमुक्तस्यापिप्रियापहतिरस्ति ।



ष्णावप्यनवकाशं तस्यापिप्रियसद्भावादित्यतआह ॥ नचेति ॥ तदुपपादयति ॥ पराधीनेति ॥ मुक्तेतत्स्पृष्टत्वमुक्तमुपपाद यति ॥ मुक्तानांत्विति ॥ प्रियाद्यस्पृष्टत्वंनजीवेसावकाशंकिंतुभगवन्मात्रनिष्ठमित्यत्रप्रमाणमाह ॥ जीवामुक्ताइत्यादिना ॥ मुक्ताअमुक्ताश्चजीवाःप्रियवंतःकुतः । पराधीनरतित्वतः । एवंचतेषांनप्रियापहतिःक्वापीत्यर्थः । स्वातंत्र्यादपराधीनरत्वात् । नन्वथापिप्रियाद्यस्पृष्टत्वंनविष्णुमात्रनिष्ठं । जीवविशेषेषुवाय्वादिष्वशरीरत्वस्योक्तत्वेनतत्प्रयुक्तप्रियाद्यस्पृष्टत्वस्यापिसंभवादि त्याशंकायांतेष्वपिनमुख्यंप्रियाद्यस्पृष्टत्वमपितुगौणमेवेत्येतदृष्टांतैराह ॥ हरेरित्यादिना ॥ ब्रह्मवायुवोःसुखस्येतिशेषः । अ त्रोवङादेशश्छांदसः । अप्रियताप्रियास्पृष्टता । अमुख्येतिशेषः । एवमग्रेपि । एवंप्रियास्पृष्टत्वस्यभगवन्मात्रनिष्ठत्वात्तथात्वे नेंद्रंप्रत्युक्तोभगवानेवेत्युक्तं । इतश्चैवमेवेत्याह ॥ सएषइत्यादिना ॥ सएषसंप्रसादइत्यादिनास्वप्राप्यामुक्तजीवस्वभावानंदा नुभवप्रदत्वमुच्यते । नचेदंजीवेसंभावितमपीत्यर्थः । किंचेंद्रंप्रत्युक्तआत्मासउत्तमःपुरुषइतिजीवादुत्तमतयोच्यतेऽतोनजीवइ त्याह ॥ सउत्तमइति ॥ ननुसउत्तमःपुरुषइत्युक्तमुत्तमत्वंजीवेपिसंभवति । नचसउत्तमत्वावधिरेवनस्वयमुत्तमइतिवाच्यं ।

भा० । नचविष्णोरत्रविवक्षितंप्रियं । पराधीनरतिप्राप्तिर्हिप्रियमत्रविवक्षितंनहितद्भगवतः । मुक्तानांतुभगवदधीनरतित्वात्प्रियमस्त्येव । जीवामुक्ताअमुक्ताश्चपराधीनरतित्वतः । नप्रियापहतिःक्वापिस्वातंत्र्यान्नहरेःप्रियं । पराधीनरतिर्यस्मात्प्रियमित्युच्यतेबुधैः । हरेरधीनतातुस्याद्यद्यपिब्रह्मवायुवोः । तदन्यवशताभावादप्रियाविवितितौश्रुतौ । यथाराज्ञःस्वराट्शब्दोरुद्रस्येश्वरतातथा । यथाशक्रस्यचेंद्रत्वंतद्वदप्रियतातयोः । यथाराज्याश्चराज्ञीत्वंयथाचोमेश्वरीस्मृता । विद्युतःस्तनयित्नोश्चतथैवाप्रियताश्रुतेतिचपरमश्रुतौ । सएषसंप्रसादोस्माच्छरीरात्समुत्थायपरंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यतइतिमुक्तस्यतत्प्रसादात्तत्प्राप्त्यानिजानंदानुभवश्रुतेश्च ।सउत्तमःपुरुषइतितस्यजीवादुत्तमत्वश्रुतेश्च ।

जडस्यैवतदवधित्वसंभवादित्यतआह ॥ अपरेति ॥ तथाचपुरुषशब्दसमभिव्याहारबलेनापरपुरुषस्यैवावधित्वंनजडस्य । तथात्वेपुरुषशब्दवैयर्थ्यादितिभावः । नकेवलमुत्तमत्वावधित्वेनपुरुषएववक्तव्यइतिन्यायप्राप्तं अपितुगीतायामभिहितंचेत्याह ॥ उत्तमइति ॥ अन्यःपूर्वोक्ताभ्यांक्षराक्षरपुरुषाभ्यां । एवंचात्रक्षराक्षरपुरुषयोरुत्तमत्वावधित्वंस्पष्टमितिभावः । नन्विदमुत्तमत्वंयद्यप्यस्मदादिस्वसंभवि तथापिब्रह्मादिषुजीवविशेषेषुसंभावितंभविष्यति । तथाचास्मदादयएवोत्तमत्वावधयइतिनपुरुषशब्दवैयर्थ्यमित्याशंकायांनोत्तमपुरुषत्वमन्यत्रकुत्रापिसावकाशमित्यागमाभ्यामाह ॥ ब्रह्मेशानादिभिरित्यादिना ॥ यत्कैवल्यंसर्वोत्तमत्वंब्रह्मेशानादिभिःप्राप्तुंनैवशक्यतेतत्कैवल्यंयस्यस्वभावःसभवान्केवलःसर्वोत्तमइत्यर्थः । महित्वंसर्वोत्तमत्वादिकं । ननुयदुक्तमपरपुरुषावधिकमेवोत्तमत्वमत्रोच्यतइतितदयुक्तं । मुक्त्यवस्थायांहीदमुच्यते । नचमुक्तावपरपुरुषसद्भावःप्रामाणिकः । प्रत्युतपरेऽव्यये सर्वएकीभवंतीत्यादिनैक्यस्यैवतदावगमादित्याशंकायांमोक्षेप्यपरपुरुषसद्भावेप्रमाणान्युदाहरति ॥ इदंज्ञानमित्यादिना ॥ इत्यादेश्चापरपुरुषसद्भावोमोक्षेप्यवगम्यतइतिशेषः । अत्रार्थेएतदुपनिषद्गतवाक्येअपिउदाहरति ॥ सतत्रेत्यादिना ॥ भेदेनावस्थानश्रुतेः । मोक्षेपुरुषाणामितिशेषः । किंचसउत्तमःपुरुषइतिवाक्यंयत्रश्रूयतेतत्रैवमुक्तावपरपुरुषसद्भा

भा० । अपरपुरुषापेक्षयाह्युत्तमपुरुषशब्दोभवति । अन्यथोत्तमशब्दएवस्यात् । उत्तमःपुरुषस्त्वन्यःपरमात्मेत्युदाहृतइतिच । ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुंनैवशक्यते । तद्यत्स्वभावःकैवल्यंसभवान्केवलोहरे । परोमात्रयातन्वावृधाननतेमहित्वमन्वश्नुवंति । इदंज्ञानमुपाश्रित्यममसाधर्म्यमागताः । सोश्नुतेसर्वान्कामान्त्सहब्रह्मणाविपश्चितेति । एतमानंदमयमात्मानमुपसंक्रम्येमाँल्लोकान्कामान्नीकामरूप्यनुसंचरन् । नयत्रमायाकिमुतापरेहरेरनुव्रतायत्रसुरासुरार्चिताः।कृष्णोमुक्तैरिज्यतेवीतमोहैरित्यादेश्च । सतत्रपर्येतिजक्षन्क्रीड

वज्ञापकमस्तीत्याह ॥ उपशब्दादिति ॥ अंतरशब्दाच्चेतिशाखांतरपाठमनुसृत्योक्तं । तथाचबहुप्रमाणविरोधादैक्यप्रतिपादकंवाक्यंस्थानैक्यादिविषयतयासावकाशमितिभावः । इतोपिनेंद्रंप्रत्युपदिष्टोजीवात्मेत्याह ॥ नचेति ॥ अत्रहितंवाएतंदेवाआत्मानमुपासतइतिदेवोपास्यत्वंप्रतीयतेनचतज्जीवेसंभवतीतिभावः । ननुजीवानामपिप्रतीकत्वादिनादेवोपास्यत्वमस्त्येवेत्यतउक्तंमात्रमिति । भगवंतंविनेत्यर्थः । कुतोनेतिचेत् । विष्णोरेवतदुपास्यत्वश्रुतेरित्याह ॥ ऊर्जमिति ॥ पूर्वार्धगतंदेवैरित्येतत्विभक्तिविपरिणामेनात्रानुवर्तते । तथाचदेवाःपृथिव्याऊर्जमन्नंभक्त्वायभोक्तुमुरुगायमुपासतइतियोजना। उरुगायश्चविष्णुरितिप्रसिद्धमेव । इतिश्रुतिर्विष्णोर्देवोपास्यत्वमाहेतिशेषः । किंचचतुर्मुखोपास्यत्वेतदितरसर्वदेवोपास्यत्वंकैमुत्येनैवसिद्धमित्याशयेनदेवोत्तमचतुर्मुखोपास्यत्वंभागवतेभिहितमित्याह ॥ भेदृष्ट्येति ॥ भेददृष्ट्याजीवादिभिन्नत्वेनभगवदुपासनया । अभिमानेनपूर्णज्ञानेन । कर्तृत्वात्सगुणंब्रह्मपुरुषंपुरुषर्षभं । ससंगत्येत्युत्तरेणान्वयः । यद्वा सउत्तमःपुरुषइत्युक्तमुक्तगम्यस्यसकलपुरुषोत्तमत्वंभागवतसंमत्याद्रढयति ॥ भेदृष्ट्येति ॥ अत्रह्युत्तरार्धेपुरुषर्षभमित्यनेनमुक्तगम्यस्यपुरुषोत्तमत्वंस्पष्टमुच्यते । नन्वत्रदर्शनायचक्षुर्गंधायघ्राणमित्यादिनेंद्रियैर्विषयभोक्तृत्वमिंद्रंप्रत्युपदिष्टस्यात्मनउच्यते। नचतज्जीवभिन्नस्यसंभवति।भगवतःपूर्णत्वेनविषयभोगासंभवात् । अतोजीवएवेंद्रंप्रत्युपदिष्टआत्मेतिशंकायांभगवतःपूर्णत्वेपिलीलयामुख्यंविषयभोक्तृत्वमप्यस्तीत्याश

---

भा० । त्रममाणःस्त्रीभिर्वायानैर्वाज्ञातिभिर्वानोपजनंस्मरन्निदंशरीरमित्यत्रापिभेदेनावस्थानश्रुतेः । उपशब्दादंतरशब्दाच्चमुक्तस्यपरंज्योतिःसमीपावस्थानावगतेश्च । नचजीवमात्रंदेवाउपासते । ऊर्जंपृथिव्याभक्त्वायोरुगायमुपासतइतिहिश्रुतिः । भेददृष्ट्याभिमानेननिःसंगेनापिकर्मणेत्यादेश्च ।

येनतत्रभागवतवाक्यंपठति ॥ **भूतैरित्यादिना** ॥ यत्यस्मात् अमूषुपूर्षुशेतेअतःपुरुषःचक्षुरादिदशेंद्रियाणांमनआदिपंचानां साक्षिणश्चषोडशगुणान्विषयान्षोडशात्मकःउक्तषोडशव्यापीसन्भुंक्ते । अत्रश्रुतिमप्याह ॥ **ऋतंपिबंताविति** ॥ यौसुकृत निर्मितशरीरेहृदयगुहांप्रविष्टौतत्रापिसर्वजीवोत्तमेऽतिपूर्णेवायौप्रविष्टौसुकृतफलंभुंजानौतौब्रह्मविदःच्छायातपौवदंतीतिसंबंधः । नन्वस्याःश्रुतेरयमर्थःकुतइत्यपेक्षायांसूत्रकृतातथानिर्णीतत्वादित्याशयेनैतच्छुत्यर्थनिर्णायकंसूत्रंपठति ॥ **गुहांप्रविष्टाविति**॥ गुहांप्रविष्टौपिबंतौविष्णुरूपेएव । घर्मासमंतेतितद्दर्शनादितिसूत्रार्थः । ननुयोवेदेदंजिघ्राणीत्यादिनाविषयभोक्तृत्वानुसंधातृत्वंजी वलिंगंप्रतीयते । अतोविषयभोक्तृत्वमपिजीवस्यैववाच्यमित्यतस्तदनुसंधातृत्वमपिनमुख्यतोजीवगतमपितुभगवन्निष्ठमेवेतिप्र माणेनैवाह ॥ **इदमिति** ॥ पश्यामीत्यनेनचाक्षुषइत्यस्यतात्पर्यमुक्तमित्यवगंतव्यं । विदुःमुख्यतः । सउत्तमःपुरुषइत्येतन्नजी वपरमित्युक्तंतदयुक्तं । स्वरूपेणाभिनिष्पद्यतइतिनिरंतरप्रकृतमुक्तजीवस्यैवपरामर्शप्रतीतेरित्यतआह ॥ **सउत्तमःपुरुषइति**॥ कुतइत्यतःसूत्रकृतातथोक्तत्वादित्याह ॥ **अन्यार्थइति** ॥ परमात्मार्थश्चसइतिपरामर्शइत्यर्थः । गीतासमाख्ययाप्युत्तमपुरुषो भगवानेवेत्याह ॥ **उत्तमःपुरुषइति** ॥ पूर्वमुत्तमत्वमपरपुरुषावधिकमित्यर्थइदमुदाहृतं । इदानींतुभगवतएवोत्तमत्वे । अतो

---

भा० । भूतैर्महद्भिर्यइमाःपुरोविभुर्निर्मायशेतेयदमूषुपूरुषः । भुंक्तेगुणान्षोडशषोडशात्मकःसोलंकृषीष्टभगवान्वचांसिमइत्यादौभगवतएवेंद्रियैर्भोगोक्तेश्च । ऋतंपिबंतौसुकृ तस्यलोकेगुहांप्रविष्टौपरमेपरार्धे । ॐगुहांप्रविष्टावात्मानौहितद्दर्शनादितिभगवद्वचनंच । इदंपश्यामिजिघ्राणीत्यपिजीवानवैविदुः । द्रव्याणामपरिज्ञानाद्भेदासौपुरुषोत्तमइतिच । सउत्तमःपुरुषइतिभगवतएवायंपरामर्शः । ॐअन्यार्थश्चपरामर्शइतिभगवद्वचनात् । उत्तमःपुरुषस्त्वन्यःपरमात्मेत्युदाहृतइतिच ।



नपौनरुक्त्यं । नन्वेवमपिभगवानेवोत्तमपुरुषोत्राभिमतइतिकथंनिर्णयः । जीवप्रापकनिरंतरप्रकृतेरपिसद्भावेनजीवस्यापितथा त्वप्राप्तेरित्यतस्तत्रबाधकमाह ॥ **जगद्व्यापारवर्जमिति** ॥ अल्पैश्वर्यस्यचोत्तमपुरुषत्वंनयुक्तमितिभावः । एवंपरामर्शस्यजी वान्यविषयत्वंप्रसाध्येदानींउपसंहारव्याजेनतद्वाक्यार्थमाह ॥ **अतइति** ॥ परामर्शःपरामर्शवाक्यार्थः ॥ किंच नेंद्रंप्रत्युपदि ष्टआत्माजीवः तस्यस्वप्नेमहीयमानइतिस्वप्नावस्थायांपूज्यतयाचरणाभिधानात् । यत्रैतत्सुप्तइतिसुप्तजीवाश्रयत्वोक्तेश्चेत्याशये नाह ॥ **स्वप्नेमहीयमानइत्यादिना** ॥ भेदोक्तेर्भेदकधर्मोक्तेर्नजीवआत्मेतिशेषः । स्वप्नेमहीयमानत्वंनजीवगमित्युपपादयति ॥ **नहीति** ॥ दुःखानुभवस्यापिसद्भावादितिभावः । अत्रमहीयमानएवचरतीत्यवधारणमभिप्रेतं । संमुग्धोक्तित्वादवधारणो क्त्यभावइतिज्ञातव्यं । सुप्ताश्रयत्वंचभगवन्मात्रनिष्ठमितिसतासोम्यतदासंपन्नोभवतीत्युपपादितमितिभावः । सयथाप्रायोग्य इत्यादिकंयथैवसारथिरितिप्रमाणेनव्याख्यातं । तदुपपादयितुमनुवदति ॥ **प्रायोग्यःसारथिरिति** ॥ एतेनप्रमाणेसारथिपद व्याख्येयपदमपिदर्शितंभवति । सारथिःकयावृत्त्याप्रायोग्यपदप्रतिपाद्यइतिजिज्ञासायांयोगेनरूढ्याचेतिक्रमेणाह ॥ **प्रयोगेने त्यादिना** ॥ अनेनप्रयुज्यतइतिप्रयोग्योऽश्वोबलीवर्दोवेत्यपव्याख्यानमित्युक्तंभवति । अस्यदैवंचक्षुरित्येतत् दैवशब्दार्थाप्रती त्याव्याचष्टे ॥ **अन्येभ्यइति** ॥ मनोग्रहणेनचक्षुरित्येतदुपलक्षणमितिसूचयति । इदमपिसर्वेंद्रियोपलक्षणमितिज्ञातव्यं । य

---

भा० । ॐजगद्व्यापारवर्जमित्यल्पैश्वर्यत्वंमुक्तस्यभगवताभिहितं । अतोयंप्राप्यजीवःस्वेनरूपेणाभिनिष्पद्यतेसभगवानुत्तमःपुरुषइतिपरामर्शः । स्वप्नेमहीयमानश्चरतियत्रैत त्सुप्तइतिपुरस्तादपिभेदोक्तेः । नहिमहीयमानएवजीवश्चरति । प्रायोग्यःसारथिः । प्रयोगेनयानस्य । यंतासारथिरानेताप्रायोग्यइतिकीर्तितइत्यभिधानात् । अन्येभ्योदीप्यमान

एतेब्रह्मलोकेइत्यस्यान्वयाप्रतीतेस्तंदर्शयति ॥ यएतइति ॥ अनुविद्यविजानातीत्येतत् यथाज्ञात्वापश्येद्विष्णुमितिप्रमाणेन व्याख्यातमुपपादयितुंविशदयन्ननुवदति ॥ अनुविद्येति ॥ अभिधानोक्त्यातदुपपादयति ॥ वेदनमिति ॥ खं० ॥ १२ ॥ ततश्चायंखंडषट्कार्थः ॥ आख्यायिकांवक्तुंभूमिकामारचयतिश्रुतिः ॥ यआत्मेत्यादिना ॥ व्याख्यातमेतत् । योधिकारी तमुक्तगुणमात्मानंअनुविद्यशास्त्राचार्याद्यनुसारेणपरोक्षतोज्ञात्वाविजानात्यापरोक्ष्येणससर्वान्लोकान्विष्णुलोकादीन्सर्वान् कामान्इच्छाविषयांश्चयोग्यतानुसारेणाप्नोतीतिप्रजापतिरुवाच । कदाचिद्दैवासुरसमक्षमितिशेषः ॥ १ ॥ तदनुतदनंतरं । तत् आत्मज्ञानंसर्वलोकादिसाधनमित्येतत् । उभये केते देवासुराः । बुबुधिरेबोद्धुमारेभिरेहकिल । कथं । यमात्मानमन्विष्यपरोक्षापरोक्षज्ञानेसंपाद्य सर्वान्लोकान्कामांश्चयथायोग्यमाप्नोति तमात्मानंवयमन्विष्यामोमीमांसयातत्परोक्षज्ञानादिकंसंपादयिष्यामः । हंतेत्यास्वादने । एतादृशफलसाधनमात्मज्ञानंकोनसंपादयेदिति । इत्यूचुर्हकिल । इंद्रविरोचनौप्रतीतिशेषः । अत एवेंद्रोदेवानामर्थेतेषामुपदेशायेतियावत् । स्वयंतमात्मानंश्रोतुंप्रजापतिमभिप्रतिप्रवव्राज प्रजापतिसकाशंजगाम । हवैप्रसिद्ध

---

भा० । त्वाद्दैवंचक्षुर्मनःस्मृतमितिच । यएतेब्रह्मलोकेतेषुरमते । अनुविद्यशास्त्राचार्यानुसारेणविदित्वाविजानात्यापरोक्ष्येण । वेदनंशास्त्रतोज्ञानंविज्ञानंब्रह्मदर्शनमितिच । खं०१२

उप० । यआत्मापहतपाप्माविजरोविमृत्युर्विशोकोऽविजिघत्सोऽपिपासःसत्यकामःसत्यसंकल्पःसोन्वेष्टव्यःसविजिज्ञासितव्यःससर्वाꣳश्चलोकानाप्नोतिससर्वाꣳश्चकामान्यस्तमात्मानमनुविद्यविजानातीतिहप्रजापतिरुवाच ॥ १ ॥ तद्धोभयेदेवासुराअनुबुबुधिरेतेहोचुर्हंततआत्मानमन्विष्यामोयमात्मानमन्विष्यसर्वाꣳश्चलोकानाप्नोतिसर्वाꣳश्चकामानितींद्रोहवैदेवानामभिप्रवव्राजविरोचनोसुराणांतौहासंविदानावेवसमित्पाणीप्रजापतिसकाशमाजग्मतुः ॥ २ ॥

मेतदित्यर्थः । एवमेवविरोचनोप्यसुराणामर्थेप्रजापतिमभिप्रवव्राज । एकगुरुकुलवासार्थिनोस्तयोर्गमनकालेपरस्परंप्रीतिरभूत्किं नेत्याह ॥ **ताविति** ॥ ताविंद्रविरोचनौअसंविदानावेवसंप्रीतिरहितावेवअन्योन्यंसंविदमकुर्वाणाविितिवा । हआश्चर्यं । तस्मिन्नपिसमयेतयोःप्रीतिर्नाभूदिति । विद्यार्थिताज्ञापनायसमित्पाणीसंतौआजग्मतुरागतवंतौ ॥ २ ॥ गत्वाचतावुक्तगुणकात्मश्रवणायद्वात्रिंशतंद्वात्रिंशत्संख्याकानिवर्षाणिब्रह्मचर्यंगुह्येंद्रियनियमनादिव्रतंचरंतावूषतुर्हकिल ।तत्रैवेतिशेषः । तौएवंनियमेनस्वसमीपवासिनौप्रजापतिरुवाच ॥ **किमिति** ॥ किमिच्छंतौयुवामत्रावास्तमिति । तावेवंपृष्टावूचतुर्ह । यआत्मेत्यादिःपूर्वोक्तप्रजापतिवाक्यानुवादः । इतिएवंरूपं भगवतःपूज्यस्यतव वचोवाक्यंतदर्थभूतंआत्मानं वेदयंते वेत्तुमिच्छंति देवासुराइतिशेषः। अतस्तमात्मानंतेभ्यउपदेष्टुंत्वत्तोज्ञातुमिच्छंतावावामवास्तमवात्स्व । गुरुभयात्पुरुषव्यत्यासेनोक्तिः । इतिहोचतुरित्यन्वयः ॥ ३ ॥ तावेवंप्रकटिताभिप्रायौप्रजापतिरुवाच । स्वस्यानृतवक्तृतापरिहारायविरोचनस्यसम्यग्ज्ञानाप्राप्तयेचेंद्रस्यशुद्धभावेनपुनरागमनंजानन्संमुग्धमेवोपदिदेश । हेत्याश्चर्ये । अयोग्यानांमहांतोनसम्यगुपदिशंतीति । किमिति । यएषःजागृदवस्थाप्रेरको

---

उप० । तौहद्वात्रिꣳशतंवर्षाणिब्रह्मचर्यमूषतुस्तौहप्रजापतिरुवाचकिमिच्छंताववास्तमितितौहोचतुर्यआत्मापहतपाप्माविजरोविमृत्युर्विशोकोऽविजिघत्सोपिपासःसत्यकामःसत्यसंकल्पःसोन्वेष्टव्यःसविजिज्ञासितव्यःससर्वाꣳश्चलोकानाप्नोतिसर्वाꣳश्चकामान्यस्तमात्मानमनुविद्यविजानातीतिहभगवतोवचोवेदयंतेतमिच्छंताववास्तमिति ॥ ३ ॥ तौहप्रजापतिरुवाच यएषोंतरक्षणिपुरुषोदृश्यतेएषआत्मेतिहोवाचैतदमृतमभयमेतद्ब्रह्मेत्यथयोयंभगवोप्सुपरिख्यायतेयश्चायमादर्शेकतमएषइत्येषउएवैषुसर्वेष्वंतेषुपरिख्यायतइतिहोवाच ॥ ४ ॥ खं० ॥ ७ ॥

क्षणिअंतःपुरुषःपूर्णषड्गुणोविश्वनाभाद्दृश्यतेदिव्यदृष्ट्यासएषआत्मासर्वलोकादिसाधनज्ञानविषयत्वेनमयोक्तोपहतपाप्मत्वादिगु
णकआत्माइतिहोवाचेतिपूर्वेणान्वयः। ननुकुतोस्यचक्षुरंतःस्थस्यपरमात्मत्वमित्यतआह॥ **होवाचेत्यादि** ॥ एतत्चक्षुरंतस्थंअमृ
तंनित्यमुक्तंअभयंकुतोपिभयशून्यंब्रह्मपूर्णगुणं । इतिहोवाचेतिचार्थे । एवंसोपपत्तिकमक्षिस्थभगवदभिप्रायेणब्रह्मणोक्तेविरोच
नोयोऽग्यत्वाद्यएषोंतरक्षणिपुरुषोदेहप्रतिबिंबोदृश्यतेऽस्माभिरेषआत्माप्रागुक्तापहतपाप्मत्वादिगुणकआत्मेतिब्रह्मणोभिप्रायः
इतिमत्वेममभिप्रायंभूयोदर्शनेननिश्चेतुंइंद्रसहितएवपुनरपिपृच्छति ॥ **अथेति** ॥ इंद्रोपितस्यविपरीतज्ञानायतदनुसारेणैवपप्र
च्छेतिज्ञातव्यं । अथेतिप्रश्ने । भोभगवःपूज्य योयंपुरुषोदेहप्रतिबिंबोऽप्सुपरिख्यायते । यश्चायमादर्शेएषदेहप्रतिबिंबःकतमः
किमुक्तरीत्यापहतपाप्मत्वादिगुणकात्मैवोततदन्यःइतिविरोचनाभिप्रायः। इंद्रस्यतुयोयमबादिषुपुरुषःप्रतिबिंबादिप्रवर्तकोदिव्य
दृष्ट्यापरिख्यायतेएषकतमःकिमक्षिस्थतयाप्रकृतोहरिरेवोतान्यइत्यभिप्रायः । इत्यूचतुरितिशेषः । संमुग्धमेवोत्तरमाह ॥ ए
षइति ॥ एषःजाग्रदवस्थाप्रेरकतयाप्रकृतोक्षिस्थःउएवउत्कृष्टोहरिरेवैषुपूर्वोक्तेष्वबादिष्वंतेषुस्थानेषुप्रतिबिंबादिप्रेरकतयापरि
ख्यायतेसमंतात्ज्ञायतेदिव्यदृष्ट्येत्यभिप्रायेणोवाचप्रजापतिः । एवंहर्यभिप्रायेणोक्तेप्ययोग्यत्वाद्विरोचनःएषएवदेहप्रतिबिंब
एवैषुसर्वेष्वंतेषुअबादिष्वपहतपाप्मत्वादिगुणकात्मतयापरिख्यायतइतिमत्वादेहप्रतिबिंबएवसर्वत्रापहतपाप्मत्वादिगुणकआत्मे ॥२५१॥
तिब्रह्माभिप्रायइतिनिश्चितवान् ॥४॥ **सप्तमःखंडः** ॥७॥ अनंतरंप्रजापतिर्नेदंदृश्यमानंदेहप्रतिबिंबंब्रह्म । तस्यदेहगुणेनगुण

वत्त्वमिवदेहदोषेणदुष्टत्वमपिभविष्यति न्यायसाम्यादित्यभिप्रायेणप्रतिबिंबेदोषान्सूचयितुमाह ॥ **उदशरावइत्यादिना** ॥
उदपूर्णशरावेआत्मानमात्मावच्छिन्नंदेहमवेक्ष्यावलोक्ययदात्मनोविद्यमानंअंगादिकंनविजानीथःतदज्ञातमंगादिकंमेप्रब्रूतमित्यु
वाच । तौचोदपूर्णशरावेआत्मानमवेक्षांचक्राते इतिश्रुतेः स्ववाक्यं । भोभगवःइमावावांसर्वमेवात्मानंपश्यावः । सर्वमित्युक्त
मेवविशदमाहतुः ॥ **आलोमभ्यइत्यादि** ॥ लोमपर्यंतंनखपर्यंतंयत्देहप्रतिबिंबंतत्पश्यावइत्यूचतुरितिसंबंधः ॥ १ ॥ परि
ष्कृतावनुलेपनादिमंतौ । नखलोमादिरहिताविल्यपिकश्चित् ॥ २ ॥ यथैवेदंपूर्वोक्तं । किंतदित्यतःस्तदेवविशदयतः ॥ **आवां
भगवइत्यादि** ॥ इत्यूचतुः । अनंतरंएषएवबिंबानुरूपप्रतिबिंबस्रष्टाआत्मेत्याद्युवाचप्रजापतिः । एवंहर्यभिप्रायेणप्रतिबिंब
स्याब्रह्मतायांन्यायसाम्येनदोषसूचनायोक्तेप्ययोग्यत्वात्विरोचनःप्रतिरूपमेवब्रह्मतत्पूजायैस्वात्मपूजैवकार्येतिमत्वाप्रजापतिसू
चितमपिदोषमपश्यन्निंद्रेणसहजगामेत्याहश्रुतिः ॥ ३ ॥ **तौहेति** ॥ शांतहृदयौसम्यग्ब्रह्मणाआत्मतत्वमुपदिष्टमित्यभिप्रायवं
तौतौगच्छंतावन्वीक्ष्यप्रजापतिःस्वमाध्यस्थ्यज्ञापनायोवाच ॥ **किमिति** ॥ आत्मानमपहतपाप्मत्वादिगुणकमुपलभ्यसम्यक्

उप० । उदशरावआत्मानमवेक्ष्ययदात्मनोनविजानीथस्तन्मेप्रब्रूतमिति तौहोदशरावेवेक्षांचक्रातेतौहप्रजापतिरुवाच किंपश्यथइतितौहोचतुःसर्वमेवेदमावांभगवआत्मा-
नंपश्यावआलोमभ्यआनखेभ्यःप्रतिरूपमिति ॥१॥ तौहप्रजापतिरुवाचसाध्वलंकृतौसुवसनौपरिष्कृतौभूत्वोदशरावेवेक्ष्येथामितितौहसाध्वलंकृतौसुवसनौपरिष्कृतौभूत्वोदशरावेवे
क्षांचक्रातेतौहप्रजापतिरुवाचकिंपश्यथइति॥२॥तौहोचतुर्यथैवेदमावांभगवःसाध्वलंकृतौसुवसनौपरिष्कृतौस्वएवमेवेमौभगवः साध्वलंकृतौसुवसनौपरिष्कृताविति एषआत्मेतिहोवा
चैतदमृतमभयमेतद्ब्रह्मेतितौहशांतहृदयौप्रवव्रजतुः ॥३॥ तौहान्वीक्ष्यप्रजापतिरुवाचानुपलभ्यात्मानमननुविद्यव्रजतोयतरएतदुपनिषदोभविष्यंतिदेवावासुरावातेपराभविष्यंतीति

श्रवणादितोऽननुविद्यापरोक्षतःयतोव्रजतोतःयतरेयेकेचित् । एतदेवाह देवावाअसुरावाएतदुपनिषदःएतदुपनिषदापातप्रती
तार्थवेत्तारोभविष्यंतितेपराभविष्यंति । मदभिप्रेतार्थस्यदुरवगाहत्वात् । इत्युवाचेतिसंबंधः । एवमुक्तोपिसविरोचनःशांतहृद
यएवकिमत्रगहनमित्यभिप्रायएवाऽसुरान्प्रतिजगाम । हेत्याश्चर्ये । एवंबलीयसीयोग्यतेति ॥ एतांयएषोंतरक्षणीत्येवंरूपंदेहप्र
तिबिंबमेवब्रह्म । बिंबप्रतिबिंबयोश्चैक्यं । तच्चोक्तरीत्यादेहाभिमानिजीवैक्येपर्यवस्यति । अतोजीवात्मापिब्रह्मैव
अतःसएवमहय्यःइतिस्वाभिप्रेतमर्थंदर्शयति ॥ आत्मैवेति ॥ इहजगति । आत्माजीवएवमहय्यःपूज्योऽलंकारा
दिना । आत्माजीवःपरिचर्यःसेव्यः । परब्रह्मपूजाद्यर्थिभिरितिशेषः । उक्तरीत्याजीवस्यब्रह्मत्वात् । एवंजीवपूजादिकर
णेफलमाह ॥ आत्मानमेवेत्यादिना ॥ इमंचामुंचेत्युभावित्यन्वयः । ब्रह्मपूजादिकमेवोभयलोकसाधनत्वेनश्रुत्या
दिसिद्धं । जीवश्चोक्तरीत्याब्रह्मेतिभावः । अनेनससर्वांश्चलोकानाप्नोतीत्यादिब्रह्मोक्तमेवफलमुक्तमितिज्ञातव्यं ॥ ४ ॥
इदंविरोचनेनावबुद्धमसुरमतमित्युपपादयतिश्रुतिः ॥ तस्मादपीति ॥ तस्मादसुरपक्षेजीवस्यैवब्रह्मतयापूज्यत्वा
दद्यापिइदानीमप्यददानंजीवातिरिक्तेश्वरप्रीतिमुद्दिश्यदानशून्यंअश्रद्दधानंजीवातिरिक्तेश्वरोस्तीतिश्रद्धारहितमयजमानंजी
वातिरिक्तेश्वरप्रीतिमुद्दिश्ययज्ञाकारिणंचकेवलंस्वात्मपूजादिरतमितियावत् । दृष्ट्वासज्जनाःएतेआसुराबतआश्चर्यं हरिंसर्वो

उप० ।सहशांतहृदयएवविरोचनोसुरान्जगामतेभ्योहैतामुपनिषदंप्रोवाचात्मैवेहमहय्यआत्मापरिचर्यआत्मानमेवेहमहयन्नात्मानंपरिचरन्नुभौलोकाववाप्नोतीमंचामुंचेति ॥४॥
तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुरासुरोबतेत्यसुराणाꣳह्येषोपनिषत्प्रेतस्यशरीरंभिक्षयावसनेनालंकारेणेतिसꣳस्कुर्वंत्येतेनह्यमुंलोकंजेष्यंतोमन्यंते ॥५॥ खं०॥८॥

त्तमंनजानंतीत्याहुः । कुतः हियस्मादेषोपनिषत्एवमुपनिषदर्थज्ञानमसुराणांप्रसिद्धं अतइत्यर्थः । एतदेवविशदयति ॥ प्रेत स्येति ॥ प्रेतस्यत्यक्तदेहस्यापिजीवस्यसंबंधिशरीरंशवमपिभिक्षयायथाकथंचित्भिक्षादिनाप्राप्तेनवसनेनालंकारेणच इतिउक्त रीत्याप्रतिरूपभूतब्रह्मभिन्नजीवसंबंधिशरीरालंकृत्याब्रह्मणोपितृप्तिःस्यादित्यभिप्रायेणसंस्कुर्वंतिपूजयंत्यसुराः । किमुजीवच्छरी रमितिभावः । एतेनबिंबभूतजीवच्छरीरपूजादिनाअमुंलोकं । उपलक्षणमेतत् । इमंचेत्यपिग्राह्यं ॥ ५ ॥ अष्टमःखंडः ॥८॥

एवंजाग्रदवस्थाप्रेरकंअक्षिस्थंप्रतिबिंबादिबाह्यपदार्थस्रष्टारंअपहतपाप्मत्वादिगुणकात्मतयावगत्यविरोचनावगतंप्रतिबिंबंतुनाप हतपाप्मत्वादिगुणकमित्युपपादयति ॥ अथेति ॥ अत्रेंद्रस्यविरोचनेनसहगमनादिकंब्रह्मणोपितदनुसारेणवचनमसुरमोहाद्य र्थमितिभाष्येस्पष्टं । अथविरोचनगमनानंतरंइंद्रोदेवानप्राप्यमध्यएवैतत्वक्ष्यमाणंभयंभयंकरंन्यायसाम्येनब्रह्माभिप्रेतंदोषंदद र्श । हेत्यास्वादने । महदभिप्रायोयोग्यानामेवस्फुरतिनायोग्यानामिति । न्यायसाम्यंदर्शयन्भयंददर्शेत्युक्तमेवविशदयति ॥ यथैवेत्यादिना ॥ अयंप्रतिबिंबभूतोदेहःअस्मिन्बिंबभूतेदेहेस्रामेचक्षुर्नासिकावायस्यसदास्रवतिसस्रामस्तस्मिन्सतीत्यर्थः । प रिवृक्णेहस्तादिच्छेदवति । अत्रैतज्ज्ञानेसतिभोग्यमुपादेयंयन्मोक्षादिनपश्यामि । नहीदृशवस्तुज्ञानेनमोक्षादि तस्यनिरवयव ज्ञानसाध्यत्वादितिभावः । उपलक्षणमेतत् । एतदमृतमभयमेतद्ब्रह्मेत्युक्त्वाऽमृतत्वादीनांप्रतिबिंबेअनुपपत्तिश्चद्रष्टव्या । इति

---

उप० । अथहेंद्रोप्राप्यैवदेवानेतद्भयंददर्शयथैवखल्वयमस्मिंच्छरीरेसाध्वलंकृतेसाध्वलंकृतोभवतिसुवसनेसुवसनःपरिष्कृतेपरिष्कृतएवमेवायमस्मिन्नंधेंधोभवतिस्रामेस्रामः परिवृक्णेपरिवृक्णोस्यैवशरीरस्यनाशमन्वेषनश्यतिनाहमत्रभोग्यंपश्यामीति ॥ १ ॥

भयंददर्शेत्यन्वयः ॥ १ ॥ अतोनविरोचनावगतंप्रतिबिंबंब्रह्म किंतुमदवगतमेवेतिनिश्चित्येममर्थंब्रह्मणेनिवेद्यतन्मुखेनापिप्रति बिंबस्याब्रह्मतांदृढीकर्तुंस्वप्नावस्थाप्रवर्तकत्वरूपमुक्तात्मनोमाहात्म्यांतरंश्रोतुंचपुनराजगामेंद्रइत्याह ॥ **ससमित्पाणिरित्यादिना** ॥ शिष्टंस्पष्टं ॥ २ ॥ हेमघवन्यशस्विन्निंद्र एषप्रतिबिंबः एवमेवत्वदुक्तप्रकारेणदोषवानेव अतोनायंमदभिप्रेतःकिंतुय स्त्वयावबुद्धःसएव । एतंजाग्रदवस्थाप्रेरकत्वादिनोक्तंआत्मानमेवतुविशेषेण स्वप्नाद्यवस्थाप्रेरकत्वादिरूपेणानुत्वद्योग्यतानुसारेण । शिष्टंसमानं ॥ ३ ॥ **नवमःखंडः** ॥ ९ ॥ एषःकंठदेशस्थः स्वप्नेजीवस्यस्वप्नावस्थायां महीयमानःइंद्रियदेवैःप्राणादिभिः पूज्यमानएव चरतिचारयत्यवगमयतिस्वसृष्टान्गजतुरगादीन्जीवेन स्वयंचावगच्छति । एषःएवंविधमाहात्म्यः आत्मामदुक्तः एतदमृतमित्यादिपूर्ववत् । एवंब्रह्मोपदेशेनस्वप्नावस्थाप्रेरकंब्रह्माभिप्रेतमात्मानंसम्यक्ज्ञात्वाआपाततःप्रतीयमानंस्वाप्नशरीरावच्छिन्नस्यापहतपाप्मत्वादिगुणकात्मत्वंनयुक्तमित्युपपादयति ॥ **सहाप्राप्येत्यादिना** ॥ तदिदंशरीरंस्वाप्नपदार्थद्रष्टृजीवशरीरं बाह्यंयदपियद्यपि सःस्वप्नेप्रतीयमानोवासनामयदेहोऽनंधादिर्भवति । यतोऽतोनैवैषोऽस्येत्यादीतिहेतुहेतुमद्भावेनयोज्यं

---

उप० । ससमित्पाणिःपुनरेयायतꣳहप्रजापतिरुवाचमघवन्यच्छांतहृदयःप्राव्राजीःसार्धंविरोचनेनकिमिच्छन्पुनरागमइतिसहोवाचयथैवखल्वयंभगवोस्मिञ्छरीरेसाध्वलंकृते साध्वलंकृतोभवतिसुवसनेसुवसनःपरिष्कृतेपरिष्कृतएवमेवायमस्मिन्नंधेंधोभवतिस्रामेस्रामःपरिवृक्णेपरिवृक्णोस्यैवशरीरस्यनाशमन्वेषनश्यतिनाहमत्रभोग्यंपश्यामीति ॥ २ ॥ एवमेवैषमघवन्निितिहोवाचैतंत्वेवतेभूयोनुव्याख्यास्यामिवसापराणिद्वात्रिꣳशतंवर्षाणीतिसहापराणिद्वात्रिꣳशतंवर्षाण्युवासतस्मैसहोवाच ॥ ३ ॥ खं० ॥ ९ ॥ यएषस्वप्नेमहीयमानश्चरत्येषआत्मेतिहोवाचैतदमृतमभयमेतद्ब्रह्मेतिसहशांतहृदयःप्रवव्राज सहाप्राप्यैवदेवानेतद्भयंददर्शतद्यदपीदꣳशरीरमंधंभवत्यनंधःसभवतियदिस्राममस्रामोनैवैषोस्य दोषेणदुष्यति ॥ १ ॥



॥ १ ॥ अनेनप्रतिबिंबस्यब्रह्मतापक्षेयोदोषोभिहितःसोत्रयद्यपिनास्तीत्युक्तंभवति । अस्यद्रष्टृजीवशरीरस्यदोषेणहस्तादिच्छेदरूपेण । तथापिदोषांतरमस्तीत्याह ॥ घ्नंतीति ॥ अस्यादौतथापीतिग्राह्यं । एनंस्वप्नेप्रतीयमानदेहावच्छिन्नमेव । अन्येचोराः । तुविशेषेण । एवशब्दइवार्थे । घ्नंतीवविच्छादयंतीवविशेषेणच्छादयंतिगर्तादौ । विच्छाययंतीतिपाठेविगतच्छायंकुर्वंतीत्यर्थः । अप्रियवेत्तादुःखजनकविषयभोक्ता । अपिदोषांतरमपि । अत्रसर्वत्रबाह्यवैलक्ष्यण्यादिवशब्दः । इतिभयंददर्शेत्यन्वयः ॥ २ ॥ अतोनस्वप्नेप्रतीयमानवासनामयदेहावच्छिन्नस्यापहतपाप्मत्वादिगुणकात्मत्वंब्रह्माभिप्रेतं । किंतुस्वाप्नानेकपदार्थनिर्मातुःप्राणादिपूज्यस्यतैजसस्यैवेतिनिश्चित्येममर्थंब्रह्मणेनिवेद्यतन्मुखेनाप्यापातप्रतीतार्थोनमदभिप्रेतइतिदृढीकर्तुंसुषुप्त्यवस्थाप्रेरकत्वरूपमाहात्म्यांतरंश्रोतुंचेंद्रःपुनरागतइत्याह ॥ **ससमित्पाणिरित्यादिना** ॥ शिष्टंसमानं । अत्रयद्यपींद्रेणब्रह्मसमीपएवस्थित्वाऽऽपातप्रतीतार्थदूषणादिकंकर्तुंशक्यंतथापिकिंचिद्दूरंगत्वातत्रदोषदर्शनेनपुनरागतइत्यादिकथनमिंद्रेणकथंचिदेवेदंज्ञातमित्यसुरमोहनायेतिभाष्येस्पष्टं ॥ ३-४ ॥ **दशमःखंडः** ॥ १० ॥ तत्तस्यामवस्थायां यत्रयस्मिन्प्राज्ञे एतत्एषः सुप्तः समस्तःसंकुचि

---

उप० । नवधेनास्यहन्यतेनास्यस्रामेणस्रामोघ्नंतित्वेवैनंविच्छादयंतीवाप्रियवेत्तेवभवत्यपिरोदितीवनाहमत्रभोग्यंपश्यामीति ॥ २ ॥ ससमित्पाणिःपुनरेयायतꣳहप्रजापतिरुवाचमघवन्यच्छांतहृदयःप्राव्राजीःकिमिच्छन्पुनरागमइति सहोवाचतद्यदपीदंभगवःशरीरमंधंभवत्यनंधःसभवति यदिस्राममस्रामोनैवैषोस्यदोषेणदुष्यति ॥ ३ ॥ नवधेनास्यहन्यतेनास्यस्रामेणस्रामोघ्नंतित्वेवैनंविच्छादयंतीवाप्रियवेत्तेवभवत्यपिरोदितीवनाहमत्रभोग्यंपश्यामीत्येवमेवैषमघवन्निितिहोवाचैतंत्वेवतेभूयोनुव्याख्यास्यामिवसापराणिद्वात्रिꣳशतंवर्षाणीति सहापराणिद्वात्रिंशतंवर्षाण्युवासतस्मैसहोवाच ॥ ४ ॥ खं० ॥ १० ॥

तेंद्रियव्यापारः संप्रसन्नःस्वरूपसुखवान् तदनुभववानितियावत् । स्वप्नंनविजानाति । किमुजाग्रत्पदार्थमितिभावः । एषःसु
प्ताधारःप्राज्ञ आत्मा । एवंसुप्तजीवाश्रयेपरमात्मनिनिरूपितेतंजीववैलक्षण्येनसम्यक्ज्ञातुमासुरमतमवलंब्यसुप्त्यवस्थायांजीवा
श्रयेश्वराभावंतावद्युक्त्यासाधयति ॥ नाहंखल्वित्यादिना ॥ संप्रतिसुप्त्यवस्थायांअहंखलुतावत्आत्मानंपरमात्मानंअयंप
रमात्माएवंसुप्तस्यममाश्रयः अहंत्वेतदाश्रितइतिमत्तोन्यंनजानातिनजानामि । ननुसुषुप्तौजीवस्यस्वाश्रयपरमात्मज्ञानाभावेपि
परमात्मास्वात्मानंतदाश्रयत्वेनप्रदर्शयतीतितिकिंनस्यादित्यतआह ॥ अयमहमस्मीति ॥ अयंजीवाश्रयोहमस्मीत्ययमन्योभ
गवानपिआत्मानंस्वात्मानंनजानातिनज्ञापयतीति । नन्वेकेनजीवेनस्वाश्रयस्यभगवतःसुप्तावदृष्टत्वेपिनतदभावः । इतरेषांत
ज्ज्ञानसंभवादित्याशंकायामाह ॥ नोएवेमानीति ॥ इमानिभूतान्यपिसुप्त्यवस्थायांस्वाश्रयंनोएवजानंति । अतोनुपलंभात्स
नास्तीतिभावः। ननुतदाजीवईश्वरेईश्वरोवाजीवेप्रविष्टइतिनाश्रयाश्रयिभावोपलब्धिरित्यतआह॥विनाशमेवेति॥ यदिजीवई
श्वरेऽपीतःप्रविष्टःतर्हिशंविनैवभवतिभवेत् । स्वरूपसुखानुसंधातानस्यात् । नहिपरगृहंगतस्यसुखभोगोस्ति । तथाचतस्यसुख
महमस्वाप्समित्युत्तरकालीनपरामर्शायोगः । यदिवाईश्वरोजीवेप्रविष्टस्तर्हिशंविनैवभवेत् । तथाचतस्यसदासुखभोक्तृत्वप्रतिपा
दकश्रुत्यादिविरोधइत्यर्थः । तथाचजीवेश्वरौनान्योन्यस्मिन्नप्ययवंतौभेदेनचनोपलभ्येते । सुखमहमस्वाप्समित्युत्तरकालीन

उप० । तद्यत्रैतत्सुप्तःसंप्रसन्नःस्वप्नंनविजानात्येषआत्मेतिहोवाचैतदमृतमभयमेतद्ब्रह्मेतिसहशांतहृदयःप्रवव्राजसहाप्राप्यैवदेवानेतद्भयंददर्शनाहंखल्वयमेवꣳसंप्रत्यात्मानं
जानात्ययमहमस्मीतिनोएवेमानिभूतानिविनाशमेवापीतोभवतिनाहमत्रभोग्यंपश्यामीति ॥ १ ॥

परामर्शबलेनचजीवएवोपलभ्यतेऽतोजीवातिरिक्तेश्वरोऽनुपलंभान्नास्तीतिभयंभयहेतुंपूर्वपक्षंददर्श ॥ १ ॥ इमंचपूर्वपक्षंब्रह्मणे निवेद्यसम्यक्वैलक्षण्येनपरमात्मानंज्ञातुंपुनरागतइत्याह ॥ **ससमित्पाणिरित्यादिना** ॥ २ ॥ हेमघवन्एषःपरमात्माएवमे वसुप्त्यादौजीवविलक्षणतयाप्रत्यक्षेणनोपलभ्यतएव । किंतुजीववैलक्ष्यण्यंजीवव्यावृत्तधर्मैरनुमेयमेवातस्तेएतंजीवव्यावृत्तधर्म वंतंव्याख्यास्यामि । एतस्मात्पुनःकिंचित्कालंब्रह्मचर्याचरणरूपाद्व्रतादन्यत्रतस्माद्व्रतइतियावत् । नोएवनैवव्याख्यास्यामिय तोतोवसापराणिपंचवर्षाणीत्युवाचप्रजापतिः । सएवमादिष्टइंद्रोपराणिपंचवर्षाण्युवासह । एवमिंद्रस्यचतुर्वारंगुरुकुलवासेकि यंतिवर्षाणिसंपन्नानीत्यपेक्षायांश्रुतिःस्वयमेवाह ॥ **तानीति** ॥ तानींद्रेणोषितानिवर्षाणिएकशतंएकेनाधिकंशतमेकाधिकशत संख्याकानिसंपेदुःसंपन्नानिबभूवुः । अयमर्थःप्रसिद्धइत्याह ॥ **एतत्तदिति** ॥ यदाहुर्ज्ञानिनःएकशतंवर्षाणिमघवान्प्रजापतौ ब्रह्मचर्यमुवासेतितदेतत्द्वात्रिंशतमित्यादिनादर्शितमित्याख्यायिकांतेउपसंहृत्यश्रुत्योच्यते । तस्मैअनुष्ठितब्रह्मचर्यायसःप्रजाप तिरुवाचोपदिदेश । जीवव्यावृत्तधर्मजातंजीववैलक्षण्यानुमापकमितिशेषः ॥ २-३ ॥ **एकादशःखंडः** ॥ ११ ॥ तत्रताव ज्जरामृत्युपरीतत्वशरीरित्वाभावरूपंभगवतोजीवव्यावृत्तधर्मंवक्तुंजीवेजरामृत्युपरीतत्वशरीरित्वेतावदाह । मघवन्नित्यादिना ।

---

उप० । ससमित्पाणिःपुनरेयायतꣳहप्रजापतिरुवाचमघवन्यच्छांतहृदयःप्राव्राजीःकिमिच्छन्पुनरागमइतिसहोवाचनाहंखल्वयंभगवएवꣳसंप्रत्यात्मानंजानात्ययमहमस्मीति नोएवेमानिभूतानिविनाशमेवापीतोभवतिनाहमत्रभोग्यंपश्यामीति ॥ २ ॥ एवमेवैषमघवन्नितिहोवाचैतंत्वेवतेभूयोनुव्याख्यास्यामिनोवान्यत्रैतस्माद्वसापराणिपंचवर्षाणीतिस हापराणिपंचवर्षाण्युवासतान्येकशतंसंपेदुरेतत्तद्यदाहुरेकशतꣳहवैवर्षाणिमघवान्प्रजापतौब्रह्मचर्यमुवासतस्मैसहोवाच ॥ ३ ॥ खं० ॥ ११ ॥

हेमघवन् इदंजीवजातं मर्त्यंवाव मरणशीलमेव उपलक्षणमेतत् । जराग्रस्तंच । शरीरंशरीरसंबंधि तदभिमानीतियावत् । मर्त्यत्वमुपपादयति ॥ आत्तमिति ॥ इदानींभगवतस्तदभावंवदन्शरीराधिष्ठातृत्वमप्यसाधारणंधर्मांतरमाह ॥ तदस्येति ॥ तज्जीवाभिमतंशरीरं अमृतस्यजरामृत्युरहितनित्यशरीरस्य अशरीरस्यशरीराभिमानशून्यस्य अस्यपूर्वोक्तगुणस्य आत्मनःपरमात्मनोऽधिष्ठानं । एवंभूतोपिलीलयामर्त्यशरीरमधितिष्ठतीतियावत् । जीवस्तुनतदधितिष्ठतीतिवक्ष्यति । प्रियाप्रियास्पृष्टत्वरूपंजीवव्यावृत्तधर्मांतरंवक्तुंजीवेतावत्तदभावमाह ॥ आत्तइत्यादिना ॥ यःसशरीरोजीवःसःप्रियप्रियाभ्यामात्तःसंबधः । एतदुपपादयति ॥ नहवाइति ॥ अपहतिरपगमोनास्तिहवैनास्त्येवखलु । मुक्तानामपिप्रियसद्भावादितिभावः । अत्रप्रियंनामपरेणेयंप्राप्यंसुखं अप्रियंतुपरेणेयमभद्रं अकारस्यनिषेधार्थत्वेनाभद्रवाचित्वात् । प्रियशब्दस्यचपरेणेयत्ववाचित्वात् । तथाचपरेणेयंअअप्रियमितिपरनिपातइतिज्ञेयं । इदानींभगवतितदस्पृष्टत्वमाह ॥ अशरीरमिति ॥ अशरीरंसदाशरीराभिमानशून्यंपरमात्मानं प्रियाप्रिये नवाव नैव स्पृशतः । अभद्रंभगवतिनास्त्येव । सुखमपिनपरप्राप्यमस्तीतिभावः ॥ १ ॥ भगवतःप्रियाद्यस्पृष्टत्वंकैमुत्येनसाधयितुमाह ॥ अशरीरइत्यादिना ॥ वायुर्मुख्यः अशरीरः ज्ञानवैशेष्येणनात्यंतंदेहेनसंगतः । अभ्रंब्रह्मा । व्याप्तत्वादभ्रनामाविष्णुस्तेनैवभ्रियमाणत्वात् । विद्युत्वायुपत्नी । विशेषेणद्योतनात् । स्तनयित्नुर्ब्रह्माणी । सर्वशब्दात्म

उद० । मघवन्मर्त्यंवाइदꣳशरीरमात्तंमृत्युनातदस्यामृतस्याशरीरस्यात्मनोधिष्ठानमात्तोवैसशरीरःप्रियाप्रियाभ्यांनहवैसशरीरस्यसतःप्रियाप्रिययोरपहतिरस्त्यशरीरंवावसंतंनप्रियाप्रियेस्पृशतः ॥ १ ॥ अशरीरोवायुरभ्रंविद्युत्स्तनयित्नुरशरीराण्येतानितद्यथैतान्यमुष्मादाकाशात्समुत्थायपरंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यंते ॥ २ ॥



कत्वात्तस्याः । एतानिअभ्रादीनि अशरीराणिज्ञानवैशेष्येणशरीरेणात्यंतंनसंबद्धानि । अतएवनप्रियाप्रियवंति । एतच्चभाष्येस्पष्टं । एवंचयदाकदाचित्कथंचिदशरीराणांप्रियाद्यस्पर्शस्तदाकिमुवाच्यंसर्वथासर्वदाशरीरेणासंबद्धस्येत्युक्तंभवति । मुक्तप्राप्यत्वाच्चभगवान्जीवविलक्षणइत्याशयेनाह ॥ तद्यथैतानीत्यादिना ॥ तत्वक्ष्यमाणंनिदर्शनंयथा । एतानिवाय्वादीन्यमुष्मादाकाशादासमंतात्काशमानात्परमात्मनस्तत्प्रसादादितियावत् । समुत्थायशरीरादितिशेषः । परंज्योतिःपरंब्रह्म उपसंपद्यतत्समीपंगत्वा स्वेनरूपेणस्वस्वरूपानंदादिनाऽभिनिष्पद्यंतेसम्यक्संपन्नानिभवंति ॥ २ ॥ एवमेवैषोपरोपिमुक्तः संप्रसादःसम्यक्विष्णुप्रसादवान् अस्मात्चरमात्शरीरात् समुत्यायपरंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यते सउत्तमःपुरुषः । अनेनोत्तमपुरुषत्वेनापिजीववैलक्षण्यमुक्तमितिज्ञातव्यं। केचित्तुवैलक्षण्यसिद्धार्थप्रदर्शनायेदमित्याहुः। मुक्तभोगप्रदत्वेनापिजीववैलक्षण्यमित्याशयेनाह ॥ सतत्रेति ॥ सःप्राप्तनिजानंदाविर्भावस्तत्रभगवल्लोकेतदनुग्रहेणैवपर्येतिपरितोगच्छति । जक्षन्भक्षयन्हसन्वाज्ञातिभिः सहमुक्तैः अज्ञातिभिःपूर्वमुक्तैः । रमणातिशयप्रकारमाह ॥ नोपजनमिति ॥ उपजनंस्वसमीपवर्तिजनं । स्वस्येदंशरीरंचनस्मरन्रममाणःपर्येतीत्यन्वयः । केवलंहर्यनुसंधानेनैवपरमसुखभोक्तॄणांतेषामुपजनदर्शनादिकमपिनास्तीतिभावः । तदमृतस्याशरीरस्यात्मनोऽधिष्ठानमित्यनेनोक्तंशरीराधिष्ठातृत्वंकथंजीवव्यावर्तकमित्याशंकापरिहारायशरीराधिष्ठातृत्वंविशद

उप० । एवमेवैषसंप्रसादोस्माच्छरीरात्समुत्थायपरंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यतेसउत्तमःपुरुषःसतत्रपर्येतिजक्षन्क्रीडन्रममाणःस्त्रीभिर्वायानैर्वाज्ञातिभिर्वाज्ञातिभिर्वानोपजनꣳस्मरन्निदꣳशरीरꣳसयथाप्रायोग्यआचरणेयुक्तएवमेवायमस्मिन्शरीरेप्राणोयुक्तः ॥ ३ ॥

यन्भावनार्थमीश्वरस्यरथिकसाम्यमप्याह ॥ सयथेत्यादिना ॥ सःवक्ष्यमाणोदृष्टांतोयथा । यानप्रयोक्तृत्वात्प्रयोग्यःसारथिः। आचरत्यनेनेत्याचरणेरथेआचरणेतत्प्रवृत्त्यर्थं युक्तोनियुक्तःस्वामिना एवमेवायंप्राणोस्मिन्शरीराख्येरथे तदाचरणार्थंयुक्तोनियुक्त ईश्वरेण । शरीररथेप्राणःसारथिस्थानीयइत्यर्थः । उपलक्षणमेतत् । यथारथीयथान्यरथगइत्यादिग्राह्यं । तथाचयथा रथीएवमेवायमस्मिन्शरीरेप्राणः प्रकृष्टानंदरूपत्वात्तन्नामाविष्णुःरथाधिष्ठाता । यथान्यरथगःअन्यस्वामिकरथगःकश्चित्पुमान् एवमेवायमस्मिन्शरीरेप्राणस्तद्वान्जीवः । इतियोजना॥ इंद्रियाणिहयस्थानीयानीत्यपिग्राह्यं । एवंचजीवस्यान्यरथगोपमत्वान्नशरीराधिष्ठातृत्वमितितज्जीवव्यावर्तकंभवत्येवेतिभावः ॥ ३ ॥ प्रकृतप्राणेंद्रियविषयजीवाश्रयत्वंसर्वैंद्रियैस्तत्तद्विषयभोक्तृत्वरूपंजीवव्यावृत्तधर्मांतरंवदन्नुक्तमुत्तमपुरुषत्वमुपपादयति ॥ अथयत्रेत्यादिना॥ अथशब्दोसाधारणधर्मांतरकथनप्रारंभार्थः। एवमुत्तरत्रापि । यत्रविष्णौ एतत्आकाशंप्रकाशमानंरूपमनुविषण्णंतत्संबद्धंचक्षुः । स्वविषयेणसहचक्षुरिंद्रियंयत्राश्रितमित्यर्थः। यस्यचदर्शनायभोगायचक्षुः । यश्चचाक्षुषःचक्षुषेदंपश्यामीतिस्वातंत्र्येणवेदनान्यः । इदंचतद्दर्शनायचक्षुःकुतइत्याशंकायांतस्यैवतद्भोक्तृत्वानुसंधानवत्त्वादित्युपपादनार्थमुक्तमितिज्ञातव्यं । एवमग्रेपि । घ्राणादींद्रियंतद्भोगायकुतइत्याशंकायांतस्यैवतत्तद्विषयभोक्तृत्वानुसंधानवत्त्वादित्युपपादनाययोवेदेदंजिघ्राणीत्यादिकमितिद्रष्टव्यं । यश्चक्षुरिंद्रियंतद्विषयादिकंचवेदेत्यपिग्राह्यं ।

---

उप० । अथयत्रैतदाकाशमनुविषण्णंचक्षुःसचाक्षुषःपुरुषोदर्शनायचक्षुरथयोवेदेदंजिघ्राणीतिसआत्मागंधायघ्राणमथयोवेदेदमभिव्याहराणीतिसआत्माभिव्याहारायवागथयोवेदेदꣳशृणवानीतिसआत्माश्रवणायश्रोत्रं ॥ ४ ॥

सउत्तमःपुरुषइतिसंबंधः । एवंयत्रगंधादिसहितंघ्राणादिआश्रितं यस्यचगंधादिभोगायघ्राणादि यश्चेदंपुष्पादिकंजिघ्राणीत्यादि वेदनान्यः यश्चघ्राणादींद्रियंतद्विषयादिकंचसम्यक्वेद सआत्माउत्तमपुरुषः । इतिमननायमनइत्यंतंयोज्यं । एवंयत्रप्राणेजीवे वास्वस्वविषयसंबद्धंचक्षुरादींद्रियं यस्यचप्राणस्यजीवस्यवाभोगायचक्षुरादिकं यश्चप्राणोजीवोवाइदंपश्यामीत्याद्यनुसंधानवान् सआत्माप्राणोजीवोवायत्रसउत्तमपुरुषः । इतिप्राणजीवपरतयापीदंवाक्यजातंयोज्यं । तयोरपियथाक्रममुख्यतयाविषयभो क्तृत्वात् । अत्रचक्षुरादिशब्दास्तदभिमानिदेवतापराअपीतिद्रष्टव्यं । नन्वेवंजीवेंद्रियैर्भगवतोविषयभोगेस्वयमिंद्रियशून्यइत्या पन्नं । तथाचसहस्राक्षइत्यादिश्रुतिविरोधइत्यतआह ॥ अस्यदैवंचक्षुरिति ॥ अस्यभगवतश्चक्षुश्चक्षुरादिकंइंद्रियंअन्येभ्यो दीप्यमानत्वाद्दैवंस्वरूपात्मकमस्तीत्यर्थः । किंततइत्यतःतैर्विषयभोगप्रकारमाह ॥ सवाइति ॥ सएषपरमात्माएतेनस्वस्वरू पात्मकेनदैवेनदीप्यमानेनचक्षुषामनसेत्याद्यंतग्रहणेनसर्वेंद्रियैरितिसूचितं । जीवेंद्रियनिविष्टेनेतिशेषः । तथाचस्वकीयेंद्रियव्या प्तौजीवेंद्रियैरेतान्पुरोवस्थितान्कामान्विषयान्पश्यन्नित्युपलक्षणं । जिघ्रन्नित्यादिद्रष्टव्यं । रमतेस्वेच्छया ॥ ४-५ ॥ नन्वे वमशुभविषयभोगोपिभगवतःस्यादित्यतआह ॥ यएतइति ॥ यएतेकामाःब्रह्मलोकेशुभविषयोपलक्षणमेतत् । तेषुरमतइत्यर्थः । तथाचशुभमात्रभोक्तेतिभावः । अथवास्वस्वरूपेंद्रियैर्जीवेंद्रियानधिष्ठितैर्विषयभोगःकुत्रेत्यपेक्षायामाह ॥ यएतइति ॥ यएते

उप० । अथयोवेदेदंमन्वानीतिसआत्मामनोस्यदैवंचक्षुःसवाएषएतेनदैवेनचक्षुषामनसैतान्कामान्पश्यन्रमते ॥ ५ ॥ यएतेब्रह्मलोकेतंवाएतंदेवाआत्मानमुपासतेतस्मा त्तेषाꣳसर्वेचलोकाआत्ताःसर्वेचकामाःसर्वाꣳश्चलोकानाप्नोतिसर्वाꣳश्चकामान्यस्तमात्मानमनुविद्यविजानातीतिहप्रजापतिरुवाचप्रजापतिरुवाच ॥ ६ ॥ खं० ॥ १२ ॥

ब्रह्मलोकेवैकुंठादौकामाःविषयाःसंतितेषुदैवेनचक्षुषामनसेतरैरिंद्रियैश्चस्वरूपभूतैरेवरमतइत्यर्थः । वाय्वादिदेवतोपास्यत्वरूपमपि जीवव्यावर्तकंधर्मांतरंवदन्नुक्तोपासनायाःफलंपरकृतिरूपार्थवादपूर्वकमाह ॥ **तंवाएतमिति** ॥ तमपहतपाप्मत्वादिनोक्तमेतं सर्वभोक्तृत्वेनप्रकृतमात्मानंपरमात्मानंदेवाःपूर्वोक्तावाय्वाद्याःउपासते । तस्मादुपासनासाध्यभगवत्प्रसादात्तेषांवाय्वादीनांदेवा नांसर्वेचलोकाःजनाःभुवनानिचसर्वेकामाश्चआत्ताःअधीनाः । तस्माद्यतनोपियस्तमुक्तगुणमात्मानंश्रवणादिनानुविद्यापरोक्ष तोविजानातिसोपिसर्वान्लोकान्सर्वान्कामांश्चयोग्यतानुसारेणाप्नोति । एवंप्रजापतिनोक्तमात्मोपदेशमुपसंहरतिवेदपुरुषः ॥ **इतीति** ॥ द्विरुक्तिरवधारणार्था ॥ ६ ॥ **द्वादशःखंडः** ॥ १२ ॥ हृदयादिस्थस्यभगवतोरूपविशेषवत्त्वेनोपास्तिमाहानेन खंडेन । तत्रश्यामादेरधिष्ठानविशेषाप्रतीतेस्तद्दर्शयन्व्याचष्टे ॥ **श्यामइति** ॥ हृदिस्थितोविष्णुरित्यस्यपूर्वेणोत्तरेणचसंबंधः । श्यामःश्यामरूपवान् । शबलइत्यनूद्यविश्वरूपवानितिव्याख्यानं । नानारूपसमाहारवानित्यर्थः । एवंचश्यामशबलरूपवंतौभ गवन्मूर्तिविशेषौहृदिस्थितौतयोश्चोपासनायांनक्रमः । किंतुश्यामात्तदुपासनात् । अनंतरंशबलंप्रपद्ये । अथवाशबलात्तदुपा सनानंतरंश्यामंप्रपद्यइत्यनियमएवेत्याहवेदपुरुषइत्युक्तंभवति । इदमुपलक्षणमित्याशयेनाह ॥ **जीववर्णइति** ॥ जीववर्णः जीवोयादृशवर्णस्तादृशरूपवानित्यर्थः । अनेनगायत्रीविद्यायांयज्जीवव्यापिभगवत्स्वरूपमुक्तंतज्जीववर्णमित्युपास्यमित्युक्तंभव ति । यएषोंतरक्षणीत्युक्तश्चक्षुषिस्थितोभगवान्लोहितोलोहितरूपवानुपास्यइत्यर्थः । एवंहृदयादिगतमूर्तीनांरूपविशेषवत्त्वेन

भा० । श्यामोहृदिस्थितोविष्णुःशबलोविश्वरूपवान् । जीववर्णोजीवगतोलोहितश्चक्षुषिस्थितइतिमानसे ।



प्रतिपत्तिमभिधायतत्प्रतिपत्तिकालेकर्तव्यमनुसंधानप्रकारमाहवेदपुरुषः ॥ **अश्वइत्यादिना** ॥ अश्वोरोमाणीवपापमप्रारब्धं अनायासेनैवविधूयचंद्रइवराहोर्मुखात्प्रारब्धपापात्शनैर्भोगेनक्षीयमाणात्प्रमुच्यशरीरंस्थूलंसूक्ष्मंचधूत्वाविहायकृतात्माआवि र्भूतस्वरूपोहमकृतंनित्यंब्रह्मलोकमभिसंभवामिगंतास्मीत्यनेनाभिप्रायेणप्रपद्येइत्याहवेदपुरुषः । नन्विदमयुक्तं । हयग्रीवस्यर मायावाएतदुपनिषद्द्रष्टृत्वादुभयोश्चनित्यमुक्तत्वेनैतादृशाभिप्रायासंभवादतःकथमेतदित्यतोत्रोपपत्तिंप्रमाणेनैवाह ॥ **हयग्री वेति** ॥ नारदइत्युपलक्षणं । सोमोपिग्राह्यः । सोमःसाम्नामित्यन्यत्रोक्तत्वात् । उत्तरेषां नारदादीनां । भविष्याणीत्युपलक्षणं । एवंचहयग्रीवादयः अश्वइवरोमाणीत्यादिप्रार्थनाभिप्रायकाणिवाक्यान्यतीतकल्पेनारदादयःप्रावोचन्।उत्तरत्रवक्ष्यंतिचेत्येवप श्यंति।नतुस्ववाक्यतयाऽतोनानुपपत्तिरित्यर्थः।यावाक्यसंहतिस्तैर्दृष्टासेत्यर्थः ॥खं०१३॥ पूर्वोक्तहृत्पुंडरीकगताकाशनामकब्रह्मो पास्तिमेवप्रकारांतरेणाह॥**आकाशोहवाइत्यादिनाखंडेन** ॥ तत्राप्रतिपत्तिविप्रतिपत्तिनिरासायखंडंप्रमाणेनैवव्याचष्टे ॥ **आ काशइत्यादिना** ॥ अतिप्रेत्याङोर्थः । तेइत्यस्यार्थोनामरूपइति ॥ अंतरेत्यस्यार्थोऽकृतइति ॥ तद्ब्रह्मेत्येतन्नचतुर्मुखपर मित्याह ॥ **ब्रह्माख्यइति** ॥ प्रजापतेःसभामित्यादिव्याचष्टे ॥ **तद्वेश्मेति** ॥ अनेनप्रजापतिशब्दोविष्णुपरइत्युक्तंभ

भा० । हयग्रीवमुखोत्थानियानिवाक्यानितानितु । रमाददर्शतान्येवब्रह्मातान्येवनारदः । यानिविष्णोरयोग्यानिप्रार्थनाद्यात्मकानितु । तान्युत्तरेषांवाक्यानिभविष्या- ण्यवदद्धरिः । एवंरमातथाब्रह्माछांदोग्योपनिषद्विसेतिसामसंहितायां ॥ खं० ॥ १३ ॥ आकाशोतिप्रकाशत्वान्नामरूपेऽकृतेस्थितः । ब्रह्माख्योभगवान्विष्णुस्तद्वेश्मप्राप्नुयामहं ।

वति । यशोहंभवानिब्राह्मणानामित्यादिव्याचष्टे ॥ **यशोहमिति** ॥ सर्ववर्णानांमध्येहंयशोयशस्वीभवानीत्यर्थः । सहा
हंयशसांयशइत्येतद्व्याचष्टे ॥ **मत्तोन्येषामिति** ॥ अनेनसोहंयशसांयशस्विनामन्येषांयशःयशःप्रदइतिव्याख्यातंभवति । य
शसांयशइत्येतत्प्रकारांतरेणव्याकुर्वन्यशोहमनुप्रापत्सीत्येतद्व्याचष्टे ॥ **सोहमिति** ॥ अनेनसहाहमित्यत्रत्यस्यसइत्यस्यावृत्ति
रित्युक्तंभवति । एवंचसोहंयशसांयशःउत्तमयशोरूपंयद्ब्रह्मतदनुग्रहेणयशःप्रापत्सिप्राप्नुयामितियोजनोक्ताभवति । श्वेतमित्या
दिव्याचष्टे ॥ **श्वेतमित्यादिना** ॥ अतःश्वेतमित्यर्थः । अदत्कमित्येतदनूद्यतेनाद्यमानंकंकीदृशमित्यपेक्षायांतद्दर्शयति ॥ अ
**दत्कमित्यादिना** ॥ लिंदुमित्येतदप्रतीतेर्व्याचष्टे ॥ **लिंद्विति** ॥ तत्परंब्रह्मयस्माद्रतिदंतस्माल्लिंद्वित्युच्यते । रोलइतिभावः ।
आभिगामित्येतत्तात्पर्यमाह ॥ **तदहमिति** ॥ सदेत्याङोर्थः ॥ **खंडः १४** ॥ **ततश्चायंखंडार्थः** ॥ आकाशःआसमंता
त्काशनादाकाशनामाहृत्पुंडरीकस्थोविष्णुर्नामरूपयोःनामरूपात्मकप्रपंचयोर्निर्वहिताकर्तावैनामेतिनिपातसमुदायोऽयमर्थःप्रसि
द्धइत्याह । तेनामरूपे अनामासोप्रसिद्धत्वादरूपोभूतवर्जनात्इत्युक्तदिशा अंतराविनायदस्तितद्ब्रह्मतदमृतंनित्यमुक्तंसआत्मा

भा० । यशोहंसर्ववर्णानांमत्तोन्येषांयशोभवेत् । सोहंममयशोदातृयशसांयशउत्तमं । विष्ण्वाख्यपरमंब्रह्मश्वेतंश्वसनगंयतः । अदत्कमदमानंकंस्वानंदानुभवात्मकं । लिंदुत
द्रतिदंयस्मात्तदहंप्राप्नुयांसदा ॥ खं० ॥ १४ ॥

उप० । श्यामाच्छबलंप्रपद्येशबलाच्छयामंप्रपद्येऽश्वइवरोमाणिविधूयपापंचंद्रइवराहोर्मुखात्प्रमुच्यधूत्वाशरीरमकृतंकृतात्माब्रह्मलोकमभिसंभवामीत्यभिसंभवामीति ॥ १३ ॥
आकाशोवैनामनामरूपयोर्निर्वहितातेयदंतरातद्ब्रह्मतदमृतꣳसआत्माप्रजापतेःसभांवेश्मप्रपद्येयशोहंभवामिब्राह्मणानांयशोराज्ञांयशोविशांयशोहमनुप्रापत्सिसहाहंयशसांयशःश्वेतम
दत्कमदत्कंश्वेतंलिंदुमाऽभिगांलिंदुमाऽभिगां ॥ खं० ॥ १४ ॥

आदानादिकर्ता । तात्पर्यद्योतनायपृथक्‌योगकरणं । उपासनाकरणकालेकर्तव्यमभिसंधिमाह ॥ **प्रजापतेरिति** ॥ प्रजापतेः विष्णोः सभांसमितिं वेश्मगृहंप्रपद्ये प्राप्नुयां । ब्राह्मणानांमध्येयशस्वीभवामीत्यर्थः । एवंयशोराज्ञामित्यादियोज्यं । सइत्येत द्वक्ष्यमाणमत्रापिसंबध्यते । यशसांयशस्विनां यशःयशःप्रदः सोहं यद्यशसांयशः उत्तमयशोरूपं श्वेतंश्वसनगं कंस्वानंदानुभ वात्मकं अत्तीत्यदत्कंपरब्रह्म तदनुग्रहेण यशःप्रापत्सिप्राप्तवानस्मि । सहाहमित्यस्योत्तरवाक्येऽन्वयः । सोहंहेत्यास्वादने । य न्ममयशोदातृतदेवादत्कंश्वेतंलिंदुंरतिदं आसदा अभिगांप्राप्नुयामितिवेदपुरुषस्यब्रह्मणोवाक्यं । पुनरुक्तिःपूर्ववत् ॥ चतुर्द शःखंडः ॥ १४ ॥ एषामुमुक्षुभिरवश्यमादरणीयेत्याशयेनवेदपुरुषएतदुपनिषत्प्रवर्तकान्वदन्नेतदुपनिषदुक्तगुणोपासकानांअ वश्यापेक्षितान्यमनियमान्प्रदर्शयन्नपुनरावृत्तिरूपंफलंचाह ॥ **तद्धैतदित्यादिना** ॥ तत्रादिवाक्यंब्राह्मणादीनांसर्वेषांयशःप्रा प्नुयामित्यादेःसर्वोपासकविषयत्वानुपपत्तेरेवंवक्ताकइतिजिज्ञासामपनुदन्व्याचष्टे ॥ **उपदिष्टइति** ॥ **परेणैवविष्णुनैव** । अने नब्रह्मशब्दोविष्णुपरइत्युक्तंभवति । आचार्यकुलाद्वेदमधीत्येत्यादिनायमनियममात्रेणब्रह्मलोकप्राप्तिरुच्यतइत्यन्यथाप्रतीतिवा रणायापेक्षितंपूरयंस्तद्व्याचष्टे ॥ **तस्मादिति** ॥ तस्मादेवमस्याउपनिषदःपरंपरागतत्वेनतदुक्तार्थस्यात्यंतंविश्वसनीयत्वात् । पुरु षोत्तमेईशेइत्यनेनैतदुपनिषदुक्तगुणवतीतिसूचयति ॥ तंपरमंविष्णुंदृष्ट्वेतिशेषोक्तिः । नचपुनरावर्ततइत्यत्रचशब्दोवधारणार्थइ

---

भा० । उपदिष्टःपरेणैवत्वेवमाहचतुर्मुखः । उवाचचमनोर्विद्यांप्रजाभ्योमनुरेवच । तस्मात्सर्वेंद्रियाणीशेनिधायपुरुषोत्तमे । दृष्ट्वातंपरमंविष्णुंतल्लोकंप्रतिपद्यते । नावर्ततेपु नस्तस्मात्कदाचित्केनचित्कचिदिति च ॥ खं० ॥ १५ ॥

त्यभिप्रेत्योक्तं ॥ कदाचित्केनचित्क्वचिदिति ॥ खं० ॥ १५ ॥ ततश्चायंखंडार्थः ॥ तत्पूर्वोक्तं एतत्श्यामाच्छबलमि त्यादिकंउपनिषद्रूपंवाक्यजातं ब्रह्माविष्णुः प्रजापतयेचतुर्मुखायोवाचहोपदिदेशकिल मनवेस्वायंभुवाय यतएवमियमुपनिषत्प रंपरागता अतएतदुपनिषदुक्तार्थस्यावश्यमादरणीयत्वाद्यतनोपियःकश्चिन्मुमुक्षुः आचार्यकुलाद्वेदमधीत्ययथाविधानमित्ये तत्पूर्वोत्तराभ्यांसंबध्यते । गुरोःकर्मसेवारूपंगुरुदक्षिणारूपंवा अतिशेषेणअशेषेण कुटुंबीगृहस्थाश्रमवान् । क्वचित्कुटुंबेइति पाठस्तदावर्तमानइतिशेषः । इदमितराश्रमिणामुपलक्षणं । धार्मिकान्व्यापारान्विदधत्कुर्वाणः । आत्मनिएतदुपनिषदुक्तगु णवति सर्वेंद्रियाणिसंप्रतिष्ठाप्यनियम्य तीर्थेभ्योयज्ञेभ्योन्यत्रविनासर्वाणिभूतान्यहिंसन्हिंसामकुर्वाणःयावदायुषंवर्तयन्वर्तमा न स्तंपरमात्मानंदृष्ट्वाब्रह्मलोकमभिसंपद्यतेप्राप्नोति । स्वर्गलोकंप्राप्तइवपुनरावर्ततेकिं नेत्याह ॥ नचेति ॥ चशब्दोवधारणा र्थः । कदाचिदपि क्वचिदपि केनापिनिमित्तेन । नैवावर्ततइत्यर्थः । द्विरुक्तिरुक्ताशेषार्थावधारणार्था ॥ पंचदशःखंडः ॥१५॥ एवंसमापितभाष्योभगवानाचार्यौंतेप्येतदुपनिषदुक्तगुणविशिष्टभगवत्स्तुतिप्रीतिप्रार्थनेकृत्वानिबध्नाति ॥ पूर्णानंदेति ॥ पर



उप० । तद्धैतद्ब्रह्माप्रजापतयउवाचप्रजापतिर्मनवेमनुःप्रजाभ्यआचार्यकुलाद्वेदमधीत्ययथाविधानंगुरोःकर्मातिशेषेणाभिसमावृत्यकुटुंबी(बे)शुचौदेशेस्वाध्यायमधीयानोधार्मि कान्विदधदात्मनिसर्वेंद्रियाणिसंप्रतिष्ठाप्याहिꣳसन्सर्वाणिभूतान्यन्यत्रतीर्थेभ्यःसखल्वेवंवर्तयन्यावदायुषंब्रह्मलोकमभिसंपद्यतेनचपुनरावर्ततेनचपुनरावर्तते ॥ खं० ॥ १५ ॥
॥ इतिश्रीमच्छांदोग्योपनिषदिअष्टमोध्यायः ॥ ८ ॥

भा० । पूर्णानंदमहोदधिःपरतमोनित्यःपरस्मात्सदासर्वज्ञःसकलेशितागुणनिधिर्नित्योत्सवस्तद्विदां । सर्वस्मादधिकंममप्रियतमस्त्विष्टाद्पीष्टोत्तमस्सर्वस्माच्चहितात्सदा हित तमःप्रीतोभवेन्मेहरिः ।



स्मात्परतमः । गुणानांनिधिःनिधानमित्युक्ताएवगुणालेशतोदर्शिताःपूर्णानंदेत्यादिना । पूर्णोपरिच्छिन्नः । सदासकलेशितेत्य न्वयः । नित्यमुत्सवोयस्मादसौनित्योत्सवः । सर्वस्माद्रुद्रादेरधिकंयथास्यात्तथाममप्रियतमःपरमपुरुषार्थरूपः । कुतः । तुश ब्दोहेत्वर्थे । यस्मादिष्टादपीष्टोत्तमः । अतिशयेनेष्टमेवपरमपुरुषार्थरूपंभवतीतिभावः । हिततमःअतिशयेनाप्तःसुहृद्वा ॥ ७ ॥ अथस्वभाषितभाष्यस्याप्तिमूलत्वसमर्थनायश्रुतिसिद्धंस्वस्यपरमाप्तत्वंदर्शयन्नाह ॥ यस्येति ॥ यस्यवायोर्देवस्य बलित्थेत्यादिवे दवचने दिव्यानिक्रीडादिगुणविशिष्टानि त्रीणिरूपाण्युदितानि तस्यतृतीयंवपुस्तेनेदंभाष्यंहरौहरिविषयतयाकृतंहीत्यन्वयः । कीदृशंचास्यमूलरूपं कानिचत्रीणिरूपाणि कीदृशानिचतत्राह ॥ अलमिति ॥ तस्यवायोर्मूलरूपंबद्ब्रलात्मकंदर्शतंज्ञानपूर्णं । तत्इत्थमेवयादृशंमूलरूपंतादृशावतारायैव निहितंभगवताप्रेरितंअवतीर्णंच । भर्गोभरणगमनकर्तृ महच्छ्रेष्ठं । तत्रप्रथमं हनु मदाख्यंवपुः रामवचोनयं रामस्यवचांसिसीतांप्रतिनीतवत्रामविषयवचांसिमूलरामायणरूपाणिशिष्येषुनीतवद्वा । रामवच सियोनयोन्यायआज्ञारूपस्तद्युक्तंवा । द्वितीयंभीमनामकं । पृक्षःकुरुपृतनाक्षयकारि । तृतीयंवपुरानंदतीर्थापरपर्यायमध्वाभिध मिति । अतःपरमाप्तप्रणीतत्वादिदंभाष्यंसकलसुजनैरादरणीयमितिभावः ॥ ७ ॥ ननुबलित्थेत्यादिवेदवचनेवायोस्त्रीणिरूपा ण्युदितानीत्यसत् । तस्यसूक्तस्यत्रेताग्निपरत्वादित्यतस्तत्सूक्तंवायुरूपत्रयपरतयाप्रमाणेनव्याकुर्वन्यदीमुपह्वरतेसाधतेमतिरित्यु

भा० । यस्यत्रीण्युदितानिवेदवचनेरूपाणिदिव्यान्यलंबट्तद्दर्शतमित्थमेवनिहितंदेवस्यभर्गोमहत् । वायोरामवचोनयंप्रथमकंपृक्षोद्वितीयंवपुर्मध्वोयत्तुतृतीयकंकृतमिदंभाष्यं हरौतेनहि ।

क्तमतिशब्दंतावद्व्याचष्टे ॥ **हनशब्दइति** ॥ हनशब्दस्यगत्यर्थकधातुनिष्पन्नस्यज्ञानवाचित्वेनमतिशब्दसमानार्थत्वाद्धनुमान्
मतिशब्देनोच्यतइत्यर्थः । अत्रयद्यपिमतिमानितिवक्तव्यं । तथापिमतिमतोपिमतिस्वरूपताज्ञापनायमतिरित्येवोक्तमिति
ज्ञातव्यं । ऋतस्यधेनाअनयंतसस्रुतइत्येतद्व्याचष्टे ॥ **रामस्येति** ॥ ऋतस्येत्यस्यार्थःस्वृतरूपस्येति । सुष्टुसर्वदासर्वत्रच
सत्यरूपस्येत्यर्थः । यद्वापूर्वावगतवत्सदास्थितस्येत्यर्थः । यथोक्तं । ऋगतावितिधातोस्तुपूर्वावगतवत्सदा। स्थितेर्ब्रह्मर्तमित्युक्त
मिति । धेनाइत्यस्यार्थोवाचइति । वाचोयास्ताःनेतासीतांप्रतीतिशेषः । रामस्यवचोरामप्रतिपादकमूलरामायणरूपाःशिष्येषु
नेतेतिवा । यदीमुपह्वरतइत्यादेस्तात्पर्यंगुणोदधिरिति । सप्तशिवासुमातृष्वित्येतद्भीमशब्दार्थप्रतिपादकमितिभावेनतावद्भीम
शब्दार्थमाह ॥ **भृतमइति** ॥ भृताःधृताःमाःप्रमाःप्रमाणानियेनासौतथोक्तः । अस्त्वेवंभीमशब्दार्थः । किंततइत्यतोमातृष्वि
त्युक्तमातृशब्दार्थंतावदाह ॥ **वाचइति** ॥ माःप्रमाणभूताःवाचोमापकत्वान्मातरःस्मृताइत्यर्थः । सप्तशिवास्वित्युक्तसप्तशि
वाशब्दार्थमाह ॥ **ऋगाद्याइति** ॥ ऋगाद्याश्चत्वारः । अस्त्वेवंमातृसप्तशिवाशब्दार्थस्तथापिकिमित्यतआह ॥ **तत्रेति** ॥ य
तोभृतमोभीमइत्युक्तः । यतश्चमातृसप्तशिवाशब्दार्थउक्तरूपस्ततस्तत्रोक्तासुसप्तशिवासुमातृषुशयोनिष्णातोभीमःस्मृतइत्य
र्थः । तृतीयमस्येत्यादेरानंदतीर्थाख्यतृतीयावतारप्रतिपादकत्वसिद्ध्यर्थंप्रदिवोमध्वआधवइत्युक्तमध्वशब्दस्यानंदतीर्थसमानार्थ

---

भा० । हनेंचब्दोज्ञानवाचीहनूमान्मतिशब्दितः । रामस्यस्वृतरूपस्यवाचोनेतागुणोदधिः । भृतमोभीमइत्युक्तोवाचोमामातरस्मृताः । ऋगाद्याइतिहासश्चपुराणंपंचरात्रकं ।
प्रोक्ताःसप्तशिवास्तत्रशयोभीमस्ततःस्मृतः ।

त्वमाह ॥ **मध्वित्यानंदइति** ॥ मधुद्यौरस्तुनःपितेतिप्रयोगात् । वातेरवगत्यर्थात्करणेघञर्थेकविधानमितिकः । मधुआनंद करंवंतीर्थंशास्त्रंयस्येतिमध्वइत्यर्थः । स्वरित्यत्रेवोकारलोपः । आनंदकरंतीर्थंयस्यासावानंदतीर्थः । तृतीयमस्येत्यत्रवपुरित्येतद नुवर्ततइतिभावेनोक्तंतृतीयामारुतीतनुरिति । तृतीया मरुतीतनुर्मध्वःआनंदतीर्थःस्यादितिसंबंधः । तात्पर्यद्योतनायैतज्ज्ञानफ लमाह ॥ **इतीति** ॥ ७ ॥ **ततश्चायंतृचस्यार्थः** । सहसःसहोरूपस्य देवस्यक्रीडादिगुणसंपन्नस्य वायोर्मूलरूपं बट्बलात्मकं दर्शतंज्ञानरूपं । भर्गोजगद्भरणगमनगुणं ततूइत्थाइत्थंभूतमेव वपुषेरूपत्रयावताराय यतोयस्माद्भगवताऽधायिनिहितंभगवता प्रेरितमित्यर्थः । तस्मादजनि । यद्वायतोवायोर्भगवानजनिव्यक्तोभूत्तस्यवायोरितिसंबंधः । प्रथमावतारस्वरूपमाह ॥ **यदी मिति** ॥ यदींयदेवमतिर्हनुमदाख्यंप्रथमंरूपंउपह्वरतेरामस्यसमीपेतिष्ठति । साधतेरामकार्याणिसाधयति । तेनहनुमताऋतस्य सत्यरूपस्यपूर्वावगतवत्सदास्थितस्यवा रामस्यसस्रुतोऽमृतस्रावयुक्ताःधेनाःवाचोनयंतसीतांप्रतीतिशेषः । द्वितीयावतारस्वरूप माह ॥ **पृक्षइतिं** ॥ द्वितीयंवपुःपृक्षःपृतनाक्षयकारि पितुमान्अन्नवान्बहुभुगितियावत् । नित्यःनित्यंसप्तशिवासुसप्तसंख्या कासुपरममंगलरूपासुऋगादिलक्षणासुमातृषुमापयंतीतिमातारस्तासुआशयेशेते । मुहुर्मुहुर्विचारयतीत्यर्थः । अनेनभीमशब्दा र्थउक्तोभवति । तृतीयावतारस्वरूपमाह ॥ **तृतीयमिति** ॥ अस्यवृषभ्यस्यश्रेष्ठस्यवायोस्तृतीयंवपुः । दोहसेज्ञानदोहायदश प्रमतिंपूर्णप्रज्ञनामकंयोषणोनार्यः । गुरुत्वाद्बहुवचनं । जनयंतअजनयंत ॥ **निर्यदीमिति** ॥ बुध्नात्ज्ञानस्वरूपात् । यदीं

भा०। मध्वित्यानंदउद्दिष्टोवेतितीर्थमुदाहृतं । मध्वआनंदतीर्थःस्यात्तृतीयामारुतीतनुः । इतिसूक्तगतंरूपत्रयमेतन्महात्मनः । योवेदवेदवित्सस्यात्तत्त्ववित्तत्प्रसादतइतिसद्भावे ।

यस्मादेवमहिषस्यमहितषड्गुणस्यहरेर्वर्पसोवरणीयत्वात्पालकत्वाद्वर्पोनामकान्गुणान्ईशानासोरुद्राद्यादेवाः अन्येसूरयोज्ञानिनश्चशवसासुखेन । निराक्रंतज्ञातवंतः । तृतीयंवपुरितिपूर्वेणसंबंधः ॥ **यदीमिति** ॥ यदींयएवप्रदिवःप्रकृष्टप्रकाशरूपोमध्वःआनंदतीर्थाख्योमातरिश्वावायुर्गुहासंतंजीवेश्वरैक्यंवदद्भिर्गूहितंसंतंहरिंआधवेआसमंतात्पतित्वेमथायतिमथ्नातिशास्त्रेणविचार्यनिश्चाययतीतिभावः । शिष्टसूक्तव्याख्यानंग्रंथांतरादवगंतव्यं । तस्ययत्तृतीयंवपुस्तेनेदंभाष्यंकृतमित्युक्तं । तत्रभाष्यकर्तुस्तृतीयावतारस्यनामनतावन्मध्वशब्दसमानार्थकानंदतीर्थइति । दशप्रमतिंजनयंतयोषणइत्यनेनविरोधात् । नापिदशप्रमतिरिति । आनंदतीर्थनामकत्वप्रसिद्धिविरोधादित्याशंकामपाकुर्वन्स्वभाष्यंहरावर्पयति ॥ **आनंदेति** ॥ दशप्रमतिशब्दव्याख्यानंपूर्णप्रज्ञेति । दशेतिसर्वमुद्दिष्टंपूर्णंसर्वमिहोच्यते । प्रज्ञाप्रमतिरुद्दिष्टापूर्णप्रज्ञस्ततःस्मृतइत्यन्यत्रोक्तत्वात् । तथाचनामद्वयमपितृतीयावतारस्यास्तीतिनविरोधइतिभावः । हरेःप्रियमस्त्वितिशेषः । नस्वस्वरूपनिरूपणेनग्रंथःसमापनीयइतिभावेनांतेपिभक्त्युद्रेकात्प्रीतिप्रार्थननमनरूपंमंगलमाचरति ॥ **नित्यानंदेति** ॥ पूर्णोखिलगुणैः । नित्यदेत्यनेननममंगलाचरणंप्रयोजनोद्देशेनेतिसूचयति । तस्मैउपनिषदुक्तगुणायविष्णवेनमश्चास्तु । त्रिरुक्तिरादरार्थेत्यशेषमतिमंगलं ॥ ७ ॥ व्यासंपूर्णमतेर्विदोषहृदयांभोजेसदावासिनंश्रीशंकंजभवादिसर्वविबुधैर्नीचोच्चभावस्थितैः । उच्चैर्गेयमनंतसाममविभवैरोंकारवाच्यंपरंवंदेसुंदरविग्रहंकरुणया

भा० । आनंदतीर्थइतितुयस्यनामतृतीयकं । पूर्णप्रज्ञेनतेनेदंकृतंभाष्यंहरेःप्रियं । नित्यानंदोहरिःपूर्णोनित्यदाप्रीयतांमम । नमस्तस्मैनमस्तस्मैनमस्तस्मैचविष्णवे ॥
इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेछांदोग्योपनिषद्भाष्येऽष्टमोध्यायः ॥ ८ ॥



ज्ञानाभयेतंमुहुः ॥ १ ॥ अगाधेस्मिन्भाष्येसुरवरहरेंद्रादिविबुधैरलंव्याख्येयेमेकृतिरहहहासास्पदतमा । तथापिश्रीव्यासालवमतिपदासक्तिवशतोगुरूणांकारुण्यादपिभवतिभूषाकृतिरियं ॥ २ ॥ छांदोग्योपनिषद्भाष्यपंचिकाकरणेनयत् । पुण्यंभवेदवाप्नोतुसर्वंममगुरुःस्वयं ॥ ३ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्यच्छंदोगोपनिषद्भाष्यस्यटीकायांश्रीमद्वेदव्यासतीर्थपूज्यपादानांशिष्येणवेदेशभिक्षुणाविरचितायांपदार्थकौमुद्यांअष्टमोध्यायः ॥ ८ ॥

अयं ग्रंथः कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण मुंबय्यां निर्णयसागर-
मुद्रणालये मुद्रयित्वा प्रकाशितः. शके १८२६, सन १९०४.

